### ३. तस्य निमित्तपरीष्टिः

चोदनासूत्रे वेदार्थस्वरूपं तत्र प्रमाणं च प्रतिज्ञातम्। तत्र किं वेदार्थस्वरूपं भेदाभेदादिना आदौ परीक्ष्यतां उत प्रमाणमेव अनपेक्षत्वेन आदौ निरूप्यतां इति संशये प्रधानत्वात्स्वरूपस्य धर्म एव आदौ भेदाभेदाभ्यां विचारणीयः इति प्राप्ते, अनुष्ठानविवक्षायां वेदार्थस्य प्राधान्येऽपि प्रमाणप्रमेयभावे प्रमाणस्यैव मुख्यत्वं निरपेक्षत्वात्। वेदार्थस्तु प्रमाणाधीनः मानाधीना मेयसिद्धिरित्युक्तेः। अतः आदौ प्रमाणं परीक्ष्यते।

---

### ४. सत्संप्रयोगे

कार्येऽर्थे चोदनैव निमित्तं, उत प्रत्यक्षादेरपि निमित्तत्वमिति संशये धर्मस्यापि प्रमेयत्वात् तत्र प्रत्यक्षादीनामपि निमित्तत्वमिति प्राप्ते। उच्यते। न प्रत्यक्षस्य निमित्तत्वं तस्य वर्तमानग्राहित्वात्। धर्मस्य चापूर्वरूपस्याविद्यमानत्वात्। नाप्यनुमानादेर्निमित्तत्वं, तत्रापि लिङ्गवर्णादीनां प्रत्यक्षग्रहणापेक्षणात।

---

### ५. औत्पत्तिकस्तु

प्रत्यक्षाद्यवेद्यस्यापूर्वस्य वेदार्थत्वमस्ति नवेति सन्देहे अपूर्वस्य न वेदार्थता शब्दस्य यथा कार्यान्विते व्युत्पत्तिः तथा मानान्तरवेद्यत्वोपहिते स्वार्थ एव शक्तिः अव्यभिचारात इति प्राप्ते।

कार्यान्वितस्वार्थमात्रे स्वाभाविकसंबन्धव्युत्पत्तेः तत्र वेदार्थधीः। मानान्तरवेद्यता तु न व्युत्पत्तौ निविशते "इह प्रभिन्नकमलोदरे मधूनि मधुकरः पिबति" इत्यादौ मधुकरपदस्येव प्रसिद्धार्थकामिपदसमभिव्याहारात लोकव्युत्पत्त्यैव अपूर्वकार्यार्थता लिङादेः सिद्ध्यति। शब्दान्तराणां च तदन्वितस्वार्थे व्युत्पत्तेः मानान्तरानपेक्षार्थत्वं वेदवचसां युक्तमिति।

---

### ६. कर्मैके तत्र दर्शनात्।

पूर्वत्र शब्दस्यानपेक्षत्वं शब्दार्थसंबन्धस्य नित्यत्वं चोक्तम्। तत्र शब्दस्यैवानित्यत्वात शब्दार्थसम्बन्धोऽपि अनित्य एव न नित्यः इति तदाक्षिप्यते।

शब्दस्यानित्यता च पुरुषप्रयत्नजन्यत्वात् उत्पन्नः शब्दः विनष्टः शब्द इत्यनुभवात इति प्राप्ते। उच्यते—वर्णाः नित्या एव। प्रयत्नस्तु शब्दाभिव्यक्तौ न तदुत्पत्तौ, अष्टकृत्वः गोशब्द उच्चरित इति प्रत्ययात्।

---

### ७. उत्पत्तौ वाऽवचनाः

वैदिकवाक्यानि अग्निहोत्रं जुहुयात् स्वर्गकाम इत्यादीनि न मानं स्वार्थाबोधकत्वात लोके तादृशवाक्याभावात्। पदसमुदायादर्थबोधे पदसमुदाये शक्तिग्रहणस्यावश्यकत्वात्। तादृशसमुदायस्य च लोके अभावात वृद्धव्यवहारे तथैव व्युत्पत्तेः इति प्राप्ते। लोके आकाङ्क्षासन्निधानोपस्थितान्वययोग्यपदार्थान्तरान्वितस्वार्थाभिधायीनि पदानीति व्युत्पत्तिग्रहात् वेदे अग्निहोत्रादिवाक्यादन्विताभिधायिपदैः अपूर्वमभिधीयते ततश्च न शाब्दबोधानुपपत्तिः।

---

### ८. वेदांश्चैके सन्निकर्षम्।

वेदा अपौरुषेया इत्ययुक्तं काठकादिसमाख्यया वेदस्य पौरुषेयत्वावगमात्। प्रावाहणिः इत्यादितश्च प्रावाहणिजन्मनः पूर्वं नासीद्वेद इति गम्यते इति प्राप्ते, साक्षात्कर्तृस्मृतिः नास्ति मानान्तरावेद्येऽर्थे न कर्ता अनुमानार्हः समाख्या तु प्रवचनप्रकर्षादुपपद्यते। कठेन विशेषतः प्रोक्तमिति काठकम्। प्रावाहणिः इत्यादितु अन्यार्थे गुणवादः।

**इति प्रथमः पादः।**

---

## प्रथमाध्यायस्य द्वितीयः पादः

### १. आम्नायस्य

वायव्यं श्वेतमालभेत इति विधिवाक्यस्य "यतो वायुः क्षिप्रमेव फलप्रदः" अतः वायुदेवताकश्वेतपशुयागः कर्तव्यः इत्यर्थवादवाक्येन सहान्वयात तादृशार्थवादसापेक्षत्वेन निरपेक्षत्वहानात अप्रामाण्यं तत्प्रमाणमनपेक्षत्वादित्युक्तेः। ततश्च कृत्स्नवेदस्याप्यप्रामाण्यं इति पूर्वः पक्षः। यथा रक्तः पटो भवति इत्यादौ रक्तपदेनैव सहान्वयः पटो भवतीत्यस्य न पृथक्।

तथा वायव्यं श्वेतमालभेत इति विधेः वायुर्वै क्षेपिष्ठादेवता इत्याद्यर्थवादेन सहैवान्वयबोधो भवति एकवाक्यतया, एकवाक्यतयैव च कार्यं बुध्यते ननु पृथगन्वयबोधः। अतः सापेक्षत्वस्यैवासत्वात् प्रामाण्यमिति। अत्र अर्थवादमुखेन कृत्स्नवेदाप्रामाण्यमिति पूर्वः पक्षः प्रामाण्यमिति सिद्धान्तः।

---

## २. विधिर्वा स्यात्।

औदुंबरो यूपो भवति ऊर्ग्वा उदुंबरः ऊर्क्पशवः ऊर्जैवास्मा ऊर्जं पशूनाप्नोत्यूर्जोऽवरुध्यै इत्यत्र औदुंबरो यूपः कर्तव्यः इत्येका कार्यावगतिः उदुम्बरेण पशवः कर्तव्याः इत्यपरा। तत्र एकवाक्यत्वं चावगम्यते साध्यद्वयं च। एतच्च परस्परविरुद्धं वाक्यद्वयापत्तेः। अतः संशयहेतुत्वात् कृत्स्नस्य वेदस्य प्रामाण्यं दुर्लभं इति पूर्वः पक्षः। राद्धान्तस्तु वाक्ययोः परस्परेण संबन्धाङ्गीकारेण एकार्थावगतिः अङ्गीक्रियतां एकः साध्यः अन्यः सिद्धः। न च साध्यद्वयं प्रतीयते यस्मादौदुम्बरेण पशवो भवन्ति तस्मादौदुम्बरं यूपं कुर्यात् इति एकार्थस्य सिद्धत्वमेव। पशूनाप्नोति इति पशवो भवन्ति इति प्रमाणसिध्यर्थोऽयं न तु उत्पत्त्यर्थः। अतो न साध्यद्वयधीः।

---

## ३. हेतुर्वा स्यात्।

शूर्पेण जुहोति तेन ह्यन्नं क्रियते इत्यत्र शूर्पस्य होमकरणत्वे यस्मात् शूर्पः अन्नकरणसाधनं इति अन्नकरणसाधनत्वं हेतुरवगम्यते। स च यद्यदन्नकरणं तत्तद्धोमसाधनमिति अनुमानरूपप्रमाणान्तरमपेक्षते। ततः सापेक्षत्वादस्य वाक्यस्याप्रामाण्ये तन्न्यायेन कृत्स्नवेदाप्रामाण्यमिति पूर्वः पक्षः।

सिद्धान्तस्तु अत्रान्नकरणत्वं हेतुः प्रतीयते। सिद्धश्च हेतुर्भवति। न च येन येन अन्नं क्रियते तेन तेन होमः कार्य इति सिद्धोऽयमर्थः तस्मादसिद्धत्वान्न हेतुः। किञ्च शूर्पेण होमः कार्य इति वेदादवगम्यते। न च वैदिकार्थः हेतुं प्रति सापेक्षो भवति। तस्माद्धेतुवदेवार्थं, न हेतुः।

४. तदर्थशास्त्रात् ।

मन्त्राणां विवक्षितार्थत्वे तदर्थशास्त्राणां ब्राह्मणवाक्यरूपाणामविवक्षितार्थतापत्तिः । वाक्यानां विवक्षितार्थत्वे मन्त्राणामविवक्षितार्थतापत्तिः इति परस्परव्याघातादप्रामाण्यमिति पूर्वपक्षः । अविवक्षितार्थस्वाध्यायैकदेशमन्त्रद्वारा कृत्स्नवेदप्रामाण्याक्षेपः ।

अत्र मन्त्रलिङ्गादेव प्रथमं विनियोगः न तु पूर्वप्रवृत्तिमङ्गीकृत्य तदर्थशास्त्रेण विनियोगः । तदर्थशास्त्रं तु अनुवादः । य एवं विद्वान् पौर्णमासीं इतिवत् । वस्तुतस्तु तेऽपि गुणविधानेनार्थवन्तः ।

इति द्वितीयः पादः ।

---

तृतीयः पादः

१. धर्मस्य शब्दमूलत्वात् ।

यां जनाः प्रतिनन्दन्तीति मन्त्रः स्मार्ते अष्टकाकर्मणि रात्रिर्देवतेति तेनैव सम्बध्यते । अष्टकाः कर्तव्या इति तु पौरुषेयवचनं प्रमाणान्तरसापेक्षं कार्यप्रतिपादकम् । मन्त्रेणापि देवताभूतरात्रिप्रकाशनद्वारेण तदेव कार्यं स्मारणीयम् । ततश्च सापेक्षपौरुषेयवाक्यपरतन्त्रं वैदिकं मन्त्रवाक्यं सापेक्षत्वादप्रमाणम् । तत्सामान्यात सर्वो वेदः कार्याभिधायी नेत्यप्रमाणम् इति पूर्वः पक्षः । नाप्रमाणं वेदवाक्यम् । अष्टकाः कर्तव्या इत्येवमादिवाक्यप्रणेतॄणां वेदसंयोगसंभवात् —

य: कश्चित् कस्यचिद्धर्मो मनुना परिकीर्तितः ।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ॥ इति

मनुनैव वेदमूलकीर्तनात् , तत एव निरपेक्षात् कार्यावगमात यां जनाः इत्येवमादीनामपि कार्यार्थत्वं सिद्धम् । ततश्च सर्ववेदप्रामाण्यम् । न च स्मृतेः शब्दकारणकत्वे चैत्यवन्दनादिस्मृतेरपि वेदमूलतापत्तिः, तस्याः प्रत्यक्षमूलकत्वेन बौद्धैरेवोक्तत्वात् । तदुक्तं –पश्याम्यहं भिक्षवो दिव्येन चक्षुषा सुगतिं दुर्गतिं च इति । अत्र मनुस्मृतेः मूलं स्मृत्यन्तरं तस्यापि मूलं अन्यस्मृतिरिति नित्यानुमेयवेदमूलत्वमेव प्रकटितम् ।

२. विरोधे त्वनपेक्षं स्यात्।

पुनरपि वेदस्याप्रामाण्यमेव। यत्र श्रुतिस्मृत्योर्विरुद्धार्थता यथा औदुम्बरी सर्वा वेष्टयितव्येति स्मृतिः, औदुंबरीं स्पृष्ट्वोद्गायेत् इति श्रुतिः, तत्रापि स्मृत्या श्रुत्यनुमानात् प्रत्यक्षानुमितश्रुत्योः परस्परविरोधादप्रामाण्यम् इति पूर्वः पक्षः। सिद्धान्तस्तु स्मृत्या श्रुत्यनुमानं न जायते प्रत्यक्षश्रुत्या बाधात् वह्नेरिव शैत्यानुमानम्। स्मृतिस्तु न श्रुतिमूला अपि तु भ्रान्तिमूलेति निर्णयः। न च एकत्र भ्रान्तिमूलत्वे सर्वत्र तथात्वापत्तिरिति शङ्कनीयम्। यत्र हि वेदमूलत्वं नास्तीति बलवता प्रमाणेनावगम्यते तत्रैव तत्कल्पनात्।

---

३. शिष्टाकोपे विरुद्धमिति चेत्।

वेदं कृत्वा वेदिं करोति इति श्रुतिपरिच्छिन्नस्य क्रमस्य मध्ये क्षुतनिमित्तं स्मार्ते आचमने क्रियमाणे विरोधः। एवं दक्षिणहस्तेनैकेनानुष्ठाने अङ्गानां प्रधानकालता शास्त्रपरिच्छिन्ना विरुध्यते विलम्बापत्तेः इति पूर्वः पक्षः। सिद्धान्तस्तु अवगतेऽनुष्ठेयस्वरूपे श्रौतस्मार्तात्मके पश्चात्क्रमकल्पनेति न पदार्थैः सह क्रमस्य विरोधः। न च अध्वर्युर्गृहपतिं दीक्षयित्वेति क्रमः कार्यतयाऽवगम्यते अतो न क्रमस्य पदार्थगुणत्वमिति वाच्यम्। तत्रापि प्राप्त एव दीक्षास्वरूपे क्रमविधानमिति न क्रमस्य स्वातन्त्र्येण विधानम्।

---

४. तेष्वदर्शनात्।

यवादिशब्दानां वेदे प्रयुक्तानां शिष्टानां क्वचित्प्रयोगः अशिष्टानामन्यत्र प्रयोग इति विप्रतिपत्तौ सत्यां अनध्यवसायादप्रामाण्यं वेदस्येति पूर्वः पक्षः। नानध्यवसायः म्लेच्छप्रतिपत्तेः वेदविरोधेनाप्रामाण्यात् शिष्टप्रयोगानुसारिवाक्यशेषान्निर्णयः। अत्र कृष्णशकुनावेव वराहादिशब्दवाच्यं इति विपर्ययः निराक्रियते न संशयः। तेन सन्दिग्धेषु वाक्यशेषादित्यनेन न पौनरुक्त्यम्।

### ५. चोदितं तु प्रतीयेत

यद्येवं म्लेच्छप्रसिद्धेरनुपादेयता तर्हि ये शब्दाः आर्यव्यवहारे सनिमित्ततया न प्रसिद्धाः यथा पिकनेमादिशब्दाः तेषामनिमित्ततया पुनरपि वेदाप्रामाण्यम्। न च व्याकरणेन शब्दार्थव्युत्पादनं व्याकरणस्य प्रयोगमूलकत्वेन प्रयोगाभावे तदनुपपत्तेः। ततश्चार्थाबोधादप्रामाण्यं तदनुपपत्तेः इति पूर्वः पक्षः।

सिद्धान्तस्तु पूर्वपक्ष्यभिमतं सामान्यतो दृष्टं— पिकनेमादिविषयोऽनार्यव्यवहारः शब्दार्थव्यवस्थापको न भवति अनार्यव्यवहारत्वात् यवादिव्यवहारवदिति। तत्र अप्रतिपक्षम्लेच्छव्यवहारत्वं हेतुः क्रियते यवादिषु प्रतिपक्षः वैदिकव्यवहारो विद्यते। अत्र तु न प्रतिपक्षव्यवहारसद्भावः। अतः प्रमाणं पिकादिव्यवहारो म्लेच्छानाम् ततः पिकमालभेत इत्यादीनां प्रामाण्यम्।

---

### ६. प्रयोगशास्त्रमिति चेत्।

सर्वासु तिथिषु अमावास्या कर्तव्या पौर्णमासी कर्तव्या इति कल्पसूत्रवचनम्। अमावास्यायां अमावास्यया यजेत इति वेदवचनम्। इदं वेदवचनमप्रमाणं कल्पसूत्रवचनविरोधात् कल्पसूत्रं च वेद एव। माशंकं इत्यादिसमाख्यायाः पाठनिमित्तत्वात् काठकादिवत् न पौरुषेयत्वप्रसिद्धिः नानाशाखागतवाक्यानां अनुक्रमेण पठनात् इति पूर्वपक्षः।

कल्पसूत्राणां पुरुषकृतत्वमेव दृढतरपौरुषेयत्वस्मृतेः। प्रयोगशास्त्रवाक्यानां न केवलवैदिकत्वं स्वरविध्यर्थवादपरित्यागात् किन्तु शीघ्रप्रतिपत्तये प्रयोगाभ्यासाय शास्त्रमिदम्। अत एव कल्पशब्दाभिधेयता अवगतस्य क्लृप्तिकरणात्। ततश्च तेन विरोधात् न स्वतः प्रमाणवेदस्याप्रामाण्यम् वेदविरोधे कल्पसूत्रस्यैव पौरुषेयस्य त्याज्यत्वात्।

---

### ७. अनुमानव्यवस्थानात्।

होलाकादयः प्राच्यादिभिरेव व्यवस्थयाऽनुष्ठीयन्ते। ततश्च तत्तच्छाखागृह्यस्मृत्याचारगम्यहोलाकाद्यनुमितवेदोऽपि व्यवस्थितविषय एव न सर्वविषयः अनुमापकस्य व्यवस्थित-

विषयत्वात् । प्राच्यैः होलाका कर्तव्या इत्यादौ प्राच्यादिशब्दानामर्थो न बुध्यते । न हि जन्ममात्रादियं समाख्या, आगतादिष्वपि तुल्यत्वात । ततश्च होलाकादिप्रतिपादिका चोदना अयथाभूतार्थतया न प्रमाणं इति पूर्वपक्षः ।

सिद्धान्तस्तु प्राच्यादिपदरहितमेव वेदवाक्यमनुमीयते तत्र च सन्देहाभावात प्रामाण्यम् । न खलु अभिमानप्रभवं वैदिकं वचनं, अभिमानोऽयथार्थः न तु वचनम् । ततश्च अभिमानबोधिपदाभावात् प्रामाण्यम् ।

---

### ८. प्रयोगोत्पत्त्यशास्त्रत्वात् ।

अश्वादिशब्दो वेदे श्रूयते तत्र उपपदप्रकरणाद्यभावे प्रयोगसंशयः स्यात् । किं घोटकादिपरोऽयं उत निःस्वादिपर इति व्याकरणाप्रामाण्ये दन्त्यतालव्यानिर्णयात् सन्देहे अश्वमालभेत इति वेदाप्रामाण्यमिति पूर्वपक्षः व्याकरणप्रामाण्यात् तालव्यत्वनिर्णयात् वेद-प्रामण्यनिर्णयः ।

---

### ९. प्रयोगचोदनाभावात् ।

लौकिकानां वैदिकानां च शब्दानां अन्यत्वं, देवाः देवास इति व्यपदेशभेदात् । अर्थस्य च उत्ताना वै देवगवा वहन्ति इत्युक्तेर्भिन्नत्वम् इति पूर्वः पक्षः । अर्थप्रतिपत्तिहेतुत्वं पदत्वं तच्च किञ्चिद्विकृतेऽपि तदेवेदं पदमिति प्रत्यभिज्ञानात् एकमेव ।

अर्थान्यत्वात पदान्यमित्यपि न, उत्ताना वै देवगवा वहन्तीत्यस्यार्थस्यानुपलब्धेः । तेन अर्थान्यत्वमिच्छता उत्तानशब्दस्य लोकसिद्धोऽर्थोऽभ्युपेयः । एवं सति सर्वशब्दानामपि लोकवेदयोरभेदोऽस्तु ।

आकृत्यधिकरणम् । तद्भूतानां क्रियार्थेन समाम्नाय इत्यत्र आकृतौ भूतानां उत व्यक्तौ भूतानां क्रियार्थेन समाम्नाय इति संशयः । गवादिचोदना न प्रमाणं जातिर्वा

व्यक्तिर्वा गवादिपदार्थ इत्यनिर्णयात् इति पूर्वपक्षः । आनन्त्यव्यभिचाराभ्यां न व्यक्तिरर्थः । अपि तु जातिरिति निर्णयात् प्रमाणमिति सिद्धान्तः ।

इति तृतीयः पादः ।

---

अथ चतुर्थः पादः

### १. उक्तं समाम्नायैदमर्थ्यम् ।

उद्भिदा यजेत इत्यत्र न कर्मविधानसंभवः रक्तपटन्यायेन गुणविधौ सम्भवति कर्मविधानासंभवात् । गुणविधिपक्षे च लौकिकं कर्म मातृगणपूजादि आश्रयणीयं न च वैदिकं कर्मास्ति यत्रायं गुणः निविशेत सर्वत्रोपपदश्रवणात् । ततश्च सापेक्षत्वात् उद्भिदादिवाक्यस्य अप्रामाण्यम् । नामधेयपक्षे पुनः यजिनोपात्तत्वाद्विधेयस्य न नियोगार्थतासंभव इति वैयर्थ्यमेव इति पूर्वः पक्षः ।

सिद्धान्तस्तु यागनामत्वेन डित्थोऽयमितिवत् सामानाधिकरण्येनान्वये संभवति गुणविधिमाश्रित्य मत्वर्थलक्षणाङ्गीकारस्यायुक्तत्वात् निरपेक्षत्वलक्षणप्रामाण्योपपत्तिः । यागस्य हि विधिसंबन्धः साक्षात् । तन्नामधेयस्यापि अर्थद्वारकः सिद्धो नियोगसंस्पर्शः ।

---

### २. यस्मिन् गुणोपदेशः ।

उद्भिदादीनां यज्यर्थसामानाधिकरण्यान्नामत्वेऽपि पञ्चदशान्याज्यानि इत्यादौ यत्र भावार्थसामानाधिकरण्यं न प्रतीयते तत्र नामधेयावगतिर्नास्ति। चित्रया यजेत इत्यादौ तु यजिनैव फलोपबन्धसिद्धेः यागविशेषावगतेश्च नामधेये प्रयोजनाभावात् चित्रयेति भित्वा अग्नीषोमीयपशुयागे चित्रत्वगुणविधिः इति पूर्वपक्षः ।

चित्रत्वस्त्रीत्वयोर्विधानाद्वाक्यभेदः । वाक्यस्य इष्टिप्रकरणे श्रुतस्य पशावुत्कर्षोऽपरो वाक्यभेदः । तस्मान्नामधेयत्वं युक्तं, फलोपबन्धेन नाम्नोऽर्थवत्ता । पञ्चदशान्याज्यानीत्यत्रापि वाक्यभेदप्रसङ्गात् आज्यपदस्य नामता ।

### ३. तत्प्रख्यं चान्यशास्त्रम् ।

अग्निहोत्रं जुहोति, इति आघारमाघारयति इति च गुणविधी मत्वर्थलक्षणाभावात् आद्ये उपसर्जनीभूतो अग्निः देवता विधीयते । आघारमाघारयतीति तु उपांशुयाजाज्यरूपे आघार्यद्रव्ये आघारणसंस्कारो विधीयते । तच्च होमाघारादाघारणान्तरम् इति पूर्वः पक्षः । गुणानां प्राप्तत्वान्न गुणविधिः संभवति । अग्निस्तावत् यदग्नये च प्रजापतये च सायं जुहोति इति प्राप्तः । आघारणमपि सन्ततमाघारयति ऋजुमाघारयति इत्येवमादिभ्यः प्राप्तः । तस्मात्कर्मान्तरम् ।

---

### ४. तद्व्यपदेशं च ।

इह रूढिशब्दाः श्येनाज्यपृष्ठादय उदाहरणम् । तत्र श्येनेनाभिचरन् यजेत इत्यत्र श्येनशब्दः पक्षिविशेषरूपगुणपरोऽस्तु गुणपरत्वे श्रौतार्थस्यैव कर्मणाऽन्वयात् । गौणपक्षे तु श्रौतस्यार्थस्यान्वय एव नास्ति इति पूर्वपक्षः ।

सिद्धान्तस्तु वाक्यस्य कार्यमवगतिः भावार्थ एव । तत्र विशिष्टविध्याश्रयणे अनेकार्थत्वप्रसङ्गात् एकार्थता आश्रयणीया । सामानाधिकरण्यं च लाक्षणिकेष्विव गौणेष्वपि अबाधितं भवति वत्यर्थस्य विधेयत्वात् । तेन मतुब्लोपेऽनेकार्थविधानात् एकार्थावगम–विरोधात् वरं वतेर्लोपः इति ।

---

### ५. नामधेये गुणश्रुतेः

सर्वनामाक्षेपकमिदमधिकरणम् । तन्त्रेण यजिः फलगुणौ प्रति स्वार्थं समर्पयति । अतश्चानपेक्षत्वेन शब्दस्य । सकृदुच्चारण एव विधेयोद्देश्यत्वयोरवगतत्वात् न गुणविधावा-श्रयान्तरापेक्षास्ति इति न नामधेयता । वाजपेयोदाहरणं तूपलक्षणम् ।

सिद्धान्तस्तु फलगुणौ यागेन तन्त्रेण सम्बन्धुमक्षमौ । न हि फलं साध्यसाधनो–भयात्मकेन सम्बन्धुं क्षमम् । नापि गुणः फलस्य साधनमात्रसंबन्धित्वात् गुणस्य साध्यमात्र–संबन्धित्वात् । ततश्च परस्परसंबन्धावगतिस्त्यक्ता भवति । ततश्च सापेक्षत्वप्रसक्तिरिति ।

### ६. तद्गुणास्तु ।

यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति इति वाक्यं न गुण-विधिः गुणानां आश्रयीभूतभावार्थाश्रवणात् । अत एव न नामधेयता । अतः गत्यन्तराभावात् प्रसक्तमप्रामाण्यं तच्च शब्दस्य न स्वाभाविकं अपि तु पौरुषेयत्वकृतम् । अतश्च पौरुषेयत्वापत्तेः प्रसक्ता प्रमाणान्तरापेक्षता कृत्स्नस्य वेदराशेः इति पूर्वपक्षः । सिद्धान्तस्तु अग्निदेवतायाः अष्टाकपालत्वस्य च अप्राप्तत्वात् गुणविशिष्टकर्मविधानेन अनपेक्षतोपपत्तेः नाप्रामाण्यम् ।

---

### ७. बर्हिराज्ययोः ।

बर्हिराज्यादिशब्दाः संस्कारनिमित्ततया प्रयुज्यन्ते । असंस्कृतेऽप्याज्ये क्वचिद्देशे प्रयोगो दृश्यते । ततश्चानिर्णयात् शब्दार्थव्यवहारे को मुख्यः को गौण इत्यनध्यवसायः । ततश्च वेदेऽप्यनध्यवसायादप्रामाण्यमिति पूर्वपक्षः । सिद्धान्तस्तु आज्यत्वादिजातौ शक्त्यङ्गीकारे संस्कृते असंस्कृते च प्रयोगोपपत्तेः केवलजातिवचनत्वनिर्णयात् प्रामाण्यमिति ।

---

### ८. प्रोक्षणीषु ।

प्रोक्षणीशब्दः सर्वदेशेषु संस्कृते, केवले च क्वचित् प्रयुक्त इत्यर्थानिर्णयादप्रमाणमिति पूर्वपक्षः । संस्कृते असंस्कृते च उभयत्रापि योगार्थस्य संभवात् योगाविरोधी प्रयोग इति यौगिक इति निर्णयात् प्रामाण्यम् ।

---

### ९. तथा निर्मन्थ्ये ।

निर्मन्थ्येनेष्टकाः पचन्ति इत्यत्र निर्मन्थ्यशब्दः न यौगिकः अचिरनिर्मथितेऽपि प्रयोगदर्शनात् । यौगिकत्वे चिरनिर्मथितमात्रे प्रयोगः स्यात् । न जातिनिमित्तता अग्निमात्रे प्रयोगदर्शनात् । तस्मादर्थानिर्णयादप्रमाणमिति प्राप्ते, यौगिक एव निर्मन्थ्यशब्दः व्याकरणस्मृतेः चिरनिर्मन्थिताचिरनिर्मन्थितयोः अविशेषेण प्रवृत्तत्वात् । प्रयोगस्य

चिरनिर्मथितमात्रविषयत्वात् तत्रैव स्मृतेः पर्यवसानमङ्गीक्रियते । तस्माद्यौगिकः ततश्च प्रमाणमिति सिद्धान्तः ।

---

### १०. वैश्वदेवे विकल्प इति चेत् ।

चातुर्मास्येषु प्रथमे पर्वणि 'वैश्वदेवेन यजेत' इति श्रूयते । न तावदयं गुणविधिः प्रकृतानां आग्नेयादियागानामुत्पत्तिशिष्टाग्न्यादिदेवतावरुद्धतया तत्र विश्वेदेवदेवताविधानासम्भवात् । नापि कर्मान्तरं वैश्वदेव्यामिक्षायागस्य प्रकृतत्वेन तत्र नामधेयतयाऽन्वयसम्भवात । नापि नामधेयम् , गुणविधानेनापि सामानाधिकरण्योपपत्तेः । तस्मादनपेक्षत्वस्य वक्तुमशक्यत्वादप्रामाण्यमिति पूर्वः पक्षः ।

वैश्वदेवशब्दः दण्डिन्यायेन प्रकृतानां सप्तानां यागानां नामधेयम् । नामधेयत्वे अवैश्वदेवस्य वैश्वदेवाभिधानं स्यात् । प्रकृयागेषु गुणविधित्वे आमिक्षायागे विश्वेषां देवानां प्राप्तत्वात् तन्मात्रे अविधानं स्यात् । अत्र न विधेयस्याविधेयताभिधानं सम्भवति इति दण्डिनो गच्छन्तीतिवत् साहचर्येण प्रकृतानां सर्वेषां नामधेयं वैश्वदेवशब्दः । अतः प्रमाणमिति सिद्धान्तः ।

---

### ११. पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये ।

वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते इति जातेष्टिविधिसन्निधौ यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति इत्यादयः कपालविकल्पाः श्रूयन्ते । तेषां स्मारकत्वाभावान्न मन्त्रत्वम् , नापि नामधेयत्वं भावार्थसामानाधिकरण्याभावात् । नापि गुणविधायकत्वं उत्पत्तिशिष्टगुणान्तरावरोधात् । नापि अर्थवादता सङ्ख्यान्तरविधेः सङ्ख्यान्तरेण स्तुत्यसम्भवात् । ततः अनपेक्षत्वाभावादप्रामाण्यमिति पूर्वः पक्षः ।

सर्वस्यापि वाक्यस्य द्वादशकपालयागस्तुतिपरत्वेनान्वयसंभवात् प्रामाण्यमिति सिद्धान्तः । कथं भिन्नसङ्ख्यया स्तुतिः ? द्वादशसङ्ख्यायामष्टत्वादिसङ्ख्यान्तर्भावात् अष्टत्वादिक्रमवयुत्याभिधीयते । तथा च एकदेशस्तुत्या समुदायस्तुतिः 'आपो वै शान्ता' इतिवत् । ततश्च प्रामाण्यम् ।

### १२. तत्सिद्धिः।

उक्तं अवयुत्याभिधानतः स्तुतिः। यत्र पुनः सम्बन्धितैव नावगम्यते, न च गुणविधानं सम्भवति, तत्र यजमानः प्रस्तर इत्यादौ अप्रामाण्यमिति पूर्वः पक्षः। सिद्धान्तस्तु सत्यं गुणविधिर्न संभवति अर्थवादस्तु न निवारयितुं शक्यते। स्वार्थमभिधाय शब्दः तात्पर्यमवलम्बमानो गौणो भवति। परत्र परशब्दप्रयोगात्। तत्र यो गुणः प्रमाणान्तरेण दृश्यते तद्गुणयोगेन तत्र प्रयुक्त इति गम्यते। तेन गुणविशेषावगमसिद्धिः। खपुष्पं भवत्सिद्धान्तः इति तु ज्ञाननिर्देशपरः। खविषयज्ञानपुष्पविषयज्ञानयोः भेदाग्रहात् सम्बन्धप्रतिपत्तिव्यवहारः। तस्मात् प्रामाण्यम्।

---

### १३. जातिः

जात्यादावपि एवमेव योज्यम्। आग्नेयो वै ब्राह्मणः इत्यत्र एकस्थानप्रभवत्वं 'अपशवो वै' इत्यादौ प्रशंसा, सृष्टीः उपदधाति इत्यादौ बाहुल्यं, प्राणभृत उपदधाति इत्यादौ अल्पत्वं इत्यादिकं निमित्तं बोध्यम्। 'सृष्टीः' इत्यादौ लक्षणानामपि सृष्ट्यादीनां लक्ष्यत्वं न विरुद्धं एकक्रियान्वयात्।

---

### १४. सन्दिग्धेषु वाक्यशेषात्।

यववराहाधिकरणे यवादिपदानां वाक्यशेषात् अर्थनिर्णयः कृतः। इह तु वाक्य-वाक्यार्थयोः संशयः निर्णीयते। उपक्रमोपसंहारयोः विरोधात् वाक्यार्थसन्देहादप्रामाण्यमिति पूर्वः पक्षः। राद्धान्तैकदेशी उपक्रमानुसारस्य युक्तत्वात् उपक्रमे येन केनाप्यञ्जनस्य प्रतीतेः उपसंहारस्थं घृतपदं घृताघृतसाधारणं अञ्जनसाधनद्रव्यमात्रं लक्षयतीति। सिद्धान्तस्तु—स्यादे-तदेवं यदि वाक्यान्तरविहितं सामान्यं स्यात्! इह पुनः एकवाक्यत्वात् पदानां परस्परं वृत्तिमालोच्य वाक्यार्थो निर्णेयः। तत्राक्तपदस्य घृतविषयत्वमेवावगम्यते अन्यथा घृतपदे लक्षणा स्यात् अक्तपदे तु न कश्चिच्छब्दविरोधः। तस्मात् प्रामाण्यमिति।

१५. अर्थाद्वा कल्पनैकदेशत्वात् ।

यत्राप्यनुष्ठाने संशयः तत्रापि शास्त्रस्यैव सन्दिग्धत्वं अप्रामाण्यं च मन्यते पूर्वपक्षी । कथं अनुष्ठानसन्देहे शास्त्रसन्देहः ? शास्त्रार्थोनियोगः नियोगार्थस्त्वनुष्ठानं शास्त्रस्यानुष्ठान-पर्यन्तत्वात् । ततश्चानुष्ठानसन्देहे शास्त्रमपि सन्दिग्धं अप्रमाणमिति पूर्वपक्षः ।

सिद्धान्तस्तु नियोगार्थः सामर्थ्यतो निर्णेतव्यः सामर्थ्यसाध्यत्वादनुष्ठानस्य । ततश्च स्रुवादीनां आज्यादिषु व्यवस्था । ततश्च श्रुतिप्रामाण्यमिति सिद्धान्तः ।

तदेवं शास्त्रस्य विध्यर्थवादस्मृतिनामधेयानुष्ठानतः अनपेक्षत्वमाक्षिप्य चोदनायाः प्रामाण्यं स्थापितम् ।

इति चतुर्थः पादः ।

इति प्रथमोऽध्यायः ।

---

अथ द्वितीयाध्याये प्रथमः पादः ।

१. भावार्थाः कर्मशब्दाः ।

शास्त्रभेदोऽध्यायार्थः । साध्यभेदः अनुबन्धभेदश्च शास्त्रभेदहेतुत्वेन कथ्यते । साध्यं च शब्दैकसमधिगम्यं शब्दस्यानपेक्षत्वमपेक्षते । अनुबन्धभेदोऽपि कार्यभेदशब्दितं अपूर्व-भेदमपेक्षते । यदि हि यागादिसम्बन्धेनापूर्वं भिद्येत तदा यागादीनामनुबन्धभावो भिद्यते । भिन्नानुबन्धसमर्पकतया शास्त्रमपि भिद्यते ।

अत्र किं पदेन पदेनाभिहितस्य कार्ययोगिता उत परस्परसंबन्धसव्यपेक्षस्य ? यथा अरुणादिषु द्रव्यगुणयोः परस्परसंबन्धिनोरपि कार्यसंबन्धावगतिः । यद्यपि तयोः गुणगुणितया संबन्धोऽस्ति तथापि ऐदमर्थ्येन नास्ति । तथा क्रियाकारकयोः किं संबन्धनिरपेक्ष एव नियोग-संबन्धः उताजहत्क्रियाकारकसंबन्ध एवेति संशयः ।

अत्र नियोगार्थत्वादुच्चारणस्य सर्वपदानां साक्षान्नियोगसंबन्धो भवति । साक्षात्संबन्ध-संभवे च परम्पराश्रयणानुपपत्तेः सर्वेषां नियोगविषयत्वमिति पूर्वः पक्षः । सिद्धान्तस्तु सर्वेषां

नियोगविषयत्वे परस्परसंबन्धावगमविरोधात् प्रतिपदं नियोगभेदे भिन्ननियोगानुप्रवेशिनां संबन्धानुपपत्तेः यथाविनियोगं विषयभावो न्याय्य इति अन्यतरानुगृहीतस्यान्यतरस्य विषयत्वम् । परस्परसंबन्धाश्रयणे च विनियोगावगम एव प्रमाणम् ।

---

## २. भावार्थाधिकरणम् ( वर्णकान्तरम् ) ।

सिद्धः द्रव्यगुणादिः, साध्यः यागादिः भावार्थः । इत्थं अनन्विताबस्था संबन्धग्रहणोपायतां गच्छन्ती वाक्यार्थप्रतिपत्तौ निमित्तम् । अस्यामवस्थायां द्रव्यगुणयोः साध्यावस्था नास्ति आख्यातार्थः यागादिरेवाधिकारिणमपेक्षते इति स परं साध्यः । नैमित्तिकावस्था तु वाक्यार्थावस्था तस्यामवस्थायां नियोगस्य साध्यापेक्षित्वात् । भावार्थविषयो नियोगः संपद्यते । द्रव्यगुणादयोऽपि अस्यामवस्थायां नियोगेनैवान्वीयन्ते । किन्तु भावार्थनिष्पादकतया, ततश्च तेषामपि साध्यत्वमेव । तथा च नैमित्तिकावस्थायां सर्वेषामेव साध्यत्वात् साध्यार्थविषयत्वाच्च नियोगस्य सर्वेषामविशेषेण नियोगविषयसमर्पकत्वमिति पूर्वः पक्षः । सिद्धान्तस्तु द्रव्यगुणयोर्विधिविषयत्वे क्रियायाश्च तादर्थ्ये यथाप्रतीयमानक्रियाकारकभावावगमविरोध इति भावार्थविषय एव नियोगः न द्रव्यगुणविषय इति ।

---

### चोदना पुनरारम्भः ।

वाक्यार्थभूतं नियोगापरपर्यायमपूर्वं नास्ति । कुतः ? कार्यावगमात् प्रवृत्तिरुपलभ्यते कार्यं च गवानयनादिकमेव । तत्रैव च पुरुषो नियुज्यते । तेन कर्म कार्यतया लिङादिरवगमयन् कर्मण्येव पुरुषं नियुङ्क्ते नान्यत्र । न च कर्मणि नियुक्तौ यागादेः क्षणिकत्वात् फलसिद्धिः, तत एव यागस्य नित्यत्वं वा, आत्मनो वा कश्चित्संस्कारः देवताप्रसादो वा कल्प्यताम् नापूर्वसिद्धिरिति पूर्वः पक्षः ।

सिद्धान्तस्तु षष्ठाद्यबलेन बादर्यधिकरणसिद्धान्तबलेन च फलसिद्धिसमर्थे कार्ये कामी नियुज्यते न कर्मणि तस्य क्षणिकत्वेनासमर्थत्वात् । अतः नियोज्यान्वययोग्यं कालान्तरावस्थायि

अपूर्वं लिङादिभिः प्रत्याय्यते । कार्यभूतस्य विध्यर्थस्य विषयभावेन यागः अन्वेति इति व्युत्पत्तिसाधारण्यात् नित्याधिकारे निषेधाधिकारे च लिङादयः तदेवावबोधयन्ति अनेकार्थ–कल्पनाया अन्याय्यत्वात् । लोके तु क्रियाकार्यतां लक्षयन्ति ।

---

### ४. तानि द्वैधम् ।

'पिनष्टि' 'दोग्धि' 'विलापयति' इत्यादौ किं सर्वेषामेव नियोगान्वयः उत उत्पत्त्याद्यर्थ-तयापि केषांचित इति संशयः । साक्षान्नियोगान्वयसंभवे परम्परयाऽन्वयो न युक्त इति सर्वेषां साक्षान्नियोगान्वय इति पूर्वः पक्षः । राद्धान्तस्तु लोके तावत प्रमाणान्तरेण उत्पत्त्यादिसंबन्धिता गोदोहनादीनामवगता । घटते च तद्वारेण नियोगार्थत्वम् । न च दृष्ट-स्वभावानुसारेण नियोगार्थत्वे उपपद्यमाने अदृष्टाश्रयणं युक्तमिति चिकीर्षितोत्पत्त्याद्यर्थतैव एषाम् ।

---

### ५. धर्ममात्रे तु कर्म स्यात् ।

स्रुचः संमार्ष्टि इत्यादौ यत्र दृष्टः संस्कारो नोपलभ्यते द्वितीयाविभक्तिश्चास्ति तत्रापि किं संमार्गादेः नियोगान्वयः उत नेति संशयः । पूर्वपक्षस्तु दृष्टाभावान्नियोगसिद्धिरेवावशिष्यते । तस्मात् प्रयाजादिवन्नियोगार्थता सम्मार्गादेः । दृष्टं च सक्तून् जुहोति इति वेदेऽपि द्वितीयायाः चिकीर्षितार्थव्यभिचारित्वम् इति पूर्वः पक्षः । सिद्धान्तस्तु न सक्तुतुल्यता । प्रयाजादीनां नियोगैक्येन करणोपकारकत्वरूपा इतिकर्तव्यता भवति । सक्तुवाक्ये तु नियोगो भिन्नः सक्तूनां भावार्थत्वाभावेन अन्योत्पादकत्वस्वभावाभावात् तस्मात् न चिकीर्षितार्थत्वं सक्तूनाम् । संमार्गादीनां तु चिकीर्षितार्थत्वभङ्गे प्रमाणाभावात् अदृष्टकार्यत्वमेव ।

---

### ६. स्तुतशस्त्रयोस्तु ।

आज्यैः स्तुवते पृष्ठैः स्तुवते प्रउगं शंसति इत्यादौ स्तौतिशंसती प्रगीताप्रगीतमन्त्र-साध्यगुण्यवच्छिन्नगुणाभिधाने । अतो गुण एवतात्पर्यं गुणिनिष्ठगुणाभिधानात् गुणिनोऽपि

प्रतीतिः गुणिनश्च यागसाधनत्वं अतः चिकीर्षितार्थत्वं स्तौतिशंसत्योः इति पूर्वपक्षः। सिद्धान्तस्तु गुणभागित्वमेव मन्त्रात् प्रतीयते न हविर्भागित्वं तच्चान्यदेव। तस्मात् प्रत्यभिज्ञाभावात् न चिकीर्षितार्थत्वं स्तौतिशंसत्योः।

---

### ७. विधिमन्त्रयोरैकार्थ्यम्।

मन्त्रगतविधिशब्दः ब्राह्मणगतविधिशब्दवत् विधायकः मन्त्रब्राह्मणयोरेकार्थत्वात् इति पूर्वपक्षः। सिद्धान्तस्तु अभिधायकतया हि एकार्थत्वं मन्त्रस्य प्रतिपत्तव्यम्। अभिधायकत्वं च ब्राह्मणेन विहितस्य। ततश्च विहिताभिधाने न विधायकत्वं, विधाने च कर्मान्तरतापत्तिरिति मन्त्राणामविधायकत्वमेव।

---

### ८. तच्चोदकेषु मन्त्राख्या।

न मन्त्रलक्षणाभिधानपरं सूत्रम्। किन्तु मन्त्रशब्दार्थाभिधानपरमेव। अत एव प्रायिकमित्युक्तं भाष्ये।

---

### ९. शेषे ब्राह्मणशब्दः।

इदमपि ब्राह्मणशब्दार्थकथनपरम्।

---

### १०. अनाम्नातेष्वमन्त्रत्वम्।

उहप्रवरनामधेयैः क्रतुषु मन्त्रकार्यं क्रियते। न चामन्त्रैः मन्त्रकार्यं निष्पद्यत इति तेषां मन्त्रत्वं इति पूर्वपक्षः। सिद्धान्तस्तु एते अमन्त्रा अपि मन्त्रानुग्राहकाः प्रयत्नकरणादिवत्। तस्मात् तेषामिवामन्त्रत्वम्। यद्यपि ते अभिधायकाः तथापि प्रधानकार्ये प्रयाजादिवदनुग्राहकत्वमेव।

---

### ११. तेषामृक्।

वेदगतऋक्शब्दाभिधेयप्रदर्शनार्थं सूत्रम्।

### १२. गीतिषु ।

अन्वयव्यतिरेकाभ्यां गीतेरेव रथन्तरादिशब्दाभिधेयत्वम् । न केवलऋचः । नापि गीतिविशिष्टाया ऋचः । तथा च गीतिषु सामाख्येति सूक्तम् ।

---

### १३. शेषे यजुः शब्दः ।

ऋक्सामव्यतिरिक्तो मन्त्रो यजुश्शब्देनोच्यते इति शब्दार्थकथनम् ।

---

### १४. निगदो वा चतुर्थं स्यात् ।

निगदाः त्रिविधमन्त्रेभ्यो भिन्नाः 'निगदा वर्तन्ते न यजूंषि, यजूंषि वर्तन्ते न निगदा इति भेदव्यपदेशात् । उच्चैष्ट्वेन प्रयोगाच्च । यदि तेषां यजुष्ट्वं तदा उपांशुत्वेन यजुर्धर्मेण विरोधः । अतः अविरोधसिद्ध्यर्थं चतुर्थं मन्त्रजातमिष्यते । किञ्च यजुष्ट्वे उपांशु यजुषा उच्चैर्निगदेनेति विकल्पः स्यात् । अतः पृथगेवेति पूर्वः पक्षः । सिद्धान्तस्तु यजूंष्येव निगदाः अपादबद्धत्वात् त्रयीव्यपदेशोपपत्तेश्च । व्यपदेशश्च प्रकर्षाभिधानादुपपद्यते । उच्चैष्ट्वधर्मोपदेशश्च गोबलीवर्दन्यायेनोपपद्यते ।

---

### १५. अर्थैकत्वादेकं वाक्यम् ।

ऋचां छन्दोवशेन साम्नां चाभियुक्तोक्त्या परिमाणस्य ज्ञातत्वेन यजुः परिमाणपरिज्ञानार्थमधिकरणम् । कियदन्तं एकं यजुरिति ? ननु चेषेत्वेत्याच्छिनत्ति इति इतिशब्दान्तं एकं यजुरिति विनियोगात् ज्ञायते । मैवं, विनियोगेन तादर्थ्यमात्रं निश्चीयते न परिमाणम् । ज्ञातपरिमाणस्यैव विनियोगात् । इतिशब्दोऽपि वर्णस्य वा पदस्य वा वाक्यस्य वा करणत्वमाचष्टे इति दुर्निश्चयम् । मन्त्राणां चार्थप्रतिपादनं विनियोगानुसारेण । अतः अर्थवशादपि न यजुः परिमाणनिर्णयः इति पूर्वः पक्षः । सिद्धान्तस्तु—अर्थैकत्वात्साकाङ्क्षत्वाच्च एकं यजुः । यत्र विनियोगतत्प्रकाशने यावतामन्वयसामर्थ्यं विभज्यमानत्वे चानुष्ठेयान्तराप्रकाशनादवगतनियोगार्थत्वनिर्वाहाय साकाङ्क्षत्वं तावदेकप्रयोजनमेकं वाक्यं एकं यजुरिति ।

१६. समेषु वाक्यभेदः स्यात् ।

यत्र यजुष्षु अनुष्ठेयप्रकाशकपदं न श्रूयते यथा इषे त्वा इत्यादौ आयुर्यज्ञेन कल्पतामित्यादौ च, न तत्र विनियोगतः परिमाणं किन्तु प्रश्लिष्टपाठानुग्रहाय इषेत्वेत्येतस्य ऊर्जेत्वेति सहितस्य छेदने विनियोगः छेदनप्रकाशकपदं अनुमार्जनप्रकाशकपदं च मिलितयोः कल्प्यम् । अतो मिलितं यजुः । ननु त्वेति शाखावचनं, शाखा प्रधानं छेदनानुमार्जनयोः, प्रधानाभ्यासे च न मन्त्रभेदः । न । अत्र छेदने विनियोगात छेदनमेव प्रधानं शाखा तु तद्विशेषणमेव । तथा क्लृप्तिमन्त्रेष्वपि मिलितास्वेकमदृष्टं कल्प्यम् । क्लृप्तीर्वाचयतीति बहुत्वं तु कल्पतामित्यभ्यासापेक्षमिति पूर्वः पक्षः ।

सिद्धान्तस्तु इषेत्वेत्येतावन्मात्रस्य श्रुत्या विनियोगात एकप्रयोजनत्वात् एकवाक्यत्वं अन्यथा प्रतीके लक्षणा स्यात । गुणप्रधानकल्पनया विनियोगः च्छेदनानुमार्जनयोः स्यात । तथा क्लृप्तिबहुत्वनिष्पत्त्यर्थं क्लृप्तिसामान्यस्य प्राधान्यं नाद्रियते किन्तु विशेषस्यैव । ततश्च तद्भेदादर्थभेदे सति यजुर्भेदः ।

---

१७. अनुषङ्गो वाक्यसमाप्तिः ।

यत्र बहूनि वाक्यानि शेषापेक्षाणि एकश्च वाक्यशेषः स किं यस्यानन्तरं तेनैव संबध्यते उत यावद्भिराकाङ्क्ष्यत इति । पूर्वपक्षस्तु आकाङ्क्षा सन्निधिः योग्यत्वं च संबन्धहेतुः ततश्च येनैव सह सन्निधानं तेनैव संबन्धः अतो नानुषङ्गः । साकाङ्क्षाणां पूरणं तु अध्याहाराद्भवतु इति । सिद्धान्तस्तु, सत्यं सन्निधानमपेक्षते । सन्निधानं बुद्धिसन्निधानं नाव्यवधानापेक्षं किन्तु सजातीयाव्यवधानापेक्षम् सजातीयन्तु वाक्यशेषान्तरम् । तच्चात्र नास्ति । विजातीयं तु शेषि विद्यते तत्तु न व्यवधायकम् । न हि यो यमपेक्षते स तस्य व्यवधायको भवति, अन्यथा अरुणादीनां क्रयसंबन्धो न स्यात सोमपदव्यवधानात् । तथा च शेषस्य प्रतिशेषि संबन्धः ।

## १८. अनुषङ्गः

यत्र शेषीणि साकाङ्क्षाणि शेषश्च साकाङ्क्षः यथा चित्पतिस्त्वा पुनातु इत्यादौ अच्छिद्रेणे-त्यादेः एकस्य शेषस्य साकाङ्क्षता, तत्रापि असजातीयैः शेषिभिः व्यवधानात् सर्वैः संबन्धः, किमर्थमधिकरणान्तरम् ? प्रधानपदाभेदेऽपि निराकाङ्क्षेषु प्रधानपदेषु एकत्वाद्वाक्यशेषस्य एकेनैव संबन्धो युक्तः तावतैव शेषस्याकाङ्क्षानिवृत्तेः । न च तत्र अगृह्यमाणविशेषत्वात् सर्वैरेव संबन्धः । आनन्तर्यस्यैव नियामकत्वात् इति पूर्वपक्षः । सिद्धान्तस्तु सत्यं यत्रार्थभेदः तत्रैकेन संबन्धो ज्ञेयः यत्र तु अर्थ एव न भिद्यते तत्र तत्संबन्धस्य वाक्यशेषस्य पूर्ववदेवानुषङ्गः ।

---

## १९. व्यवायान्नानुषज्येत

यत्र पुनः सजातीयेन व्यवधानं तत्र नानुषङ्गः यथा संते वायुर्वातेन गच्छतामित्यादौ संयजत्रैरित्यत्र गच्छन्तामित्यध्याहारः न त्वनुषङ्गः ।

---

## द्वितीयः पादः

## १. शब्दान्तरे कर्मभेदः

शास्त्रभेदः अध्यायार्थः यागदानाद्यनुबन्धभेदात् अपूर्वभेदः अपूर्वभेदाच्छास्त्रभेदः । तदिह दर्शपूर्णमासयो राजसूये च एकशास्त्रावगम्यत्वं बहूनां यागानां पशुसोमेष्ट्याद्यनेकानु-बन्धावबोधकत्वं च दृश्यते । तन्न्यायेन यागदानहोमादीनां बहूनामपि अनुबन्धभेदेऽपि एकशास्त्रावगम्यत्वं ततश्च एकापूर्वबोधकत्वं च । प्रत्ययः एकः तदर्थश्चैकः तेन च सर्वेषां संबन्धात् सर्वानुबन्धः एको नियोगः । तस्मादनुबन्धरूपतया भेदाभावात् सिद्धमेकशास्त्राभिधेयत्वं सर्वेषां यागादीनामिति पूर्वपक्षः । सिद्धान्तस्तु न सर्वविषय एको नियोगार्थः प्रतिपत्तुं शक्यते । एकलिङ्बोध्यो हि नियोगार्थः स्वार्थमेव विषयत्वेन समर्थयति, भावार्थान्तरं तु विषयत्वेन न गृह्णाति । कार्यरूपो हि विध्यर्थः कार्यं च कृत्यवच्छिन्नम् । कृतिश्च पुरुषप्रयत्नरूपा । तदवच्छिन्नः कार्यात्मा तत्र प्रथमं भावार्थोऽवच्छेदकतयैव संबध्यते । तस्य विषयापत्तौ भावार्थान्तरापेक्षा नास्तीति नियोगभेदः । तद्भेदाच्च शास्त्रमपि भिन्नमिति ।

## २. एकस्यैवं पुनः श्रुतिः ।

समिधो यजति तनूनपातं यजतीत्यादौ प्रकृतिभागात् यागः अवगम्यते । स च एक एव । न चानर्थक्यं एकेनैव प्रतिपादितत्वादिति वाच्यम् । न तावत् अभिधेयशून्यत्वं तत् तस्यापि प्रतिपादकत्वात् नापि निष्प्रयोजनत्वं, नावश्यं सप्रयोजनेन भाव्यमिति निर्बन्धः । तथा च अपूर्वस्य अनुबन्धस्य चाभेदात् एकं शास्त्रम् इति पूर्वः पक्षः । सिद्धान्तस्तु विद्यत एवात्रापि अनुबन्धभेदः । लिङाद्यर्थो विधिः कार्यत्वेनावगम्यते । विधिश्च स्वभावतो विधेयं भिनत्ति विहितविधानानुपपत्तेः । ननु यद्येकत्वेपि यजिशब्दस्य विधिश्रवणेन विधेय-भूतभावार्थो भिन्नः तदा यागदानहोमादीनामपि तथैव भेदावगमसिद्धेः पूर्वाधिकरणं किमर्थं ? शब्दान्तरस्य अनुबन्धभेदकत्वं वक्तुं पूर्वाधिकरणं, पुनः श्रुतिरपि अनुबन्धभेदिकेति वक्तु-मिदमधिकरणमिति तद्भेदात । तस्मादविशेषादनुबन्धभेदः अनुबन्धभेदात शास्त्रभेदः । ततः कार्यभेदः ।

---

## ३. प्रकरणं तु पौर्णमास्यां रूपावचनात् ।

'य एवं विद्वान् पौर्णमासीं यजते' 'य एवं विद्वान् अमावास्यां यजते' इत्यत्र अनुबन्धभेदो विद्यते न वेति चिन्त्यते । पूर्वोक्तेन न्यायेनाविशेषादनुबन्धभेदः ततश्च शास्त्रभेद इति पूर्वपक्षः । सिद्धान्तस्तु य एवं विद्वानित्यादिकं आग्नेयादीनां पुनः श्रुतिरेव ; उभयत्र कालसंबन्धश्रवणात् । यदि कालसंबन्धो न गृह्यते तदा चोदनायामर्थस्य ग्रहणमेव नास्ति यदि गृह्यते तदा अनुवादत्वमेव । न च कालविशिष्टयागविधिः, द्वितीयासंयोगात् । न च कालाध्वनोरिति द्वितीया, उपपदविभक्तित्वप्रसङ्गात । ततश्चाग्नेयादिषु प्रवृत्तिनिमित्तसद्भावात् तन्नामतेति ।

---

## ४. पौर्णमासीवदुपांशुयाजः स्यात् ।

'जामिवा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजति' इत्यत्र उपांशु-याजपदं विष्णुरुपांशु यष्टव्य इत्यादिवाक्यप्राप्तयागत्रयस्यानुवादेन नामधेयं वा यागान्तरविधिर्वेति संशये पूर्वपक्षस्तु विष्णुरुपांशु यष्टव्य इत्यादिकं जामि वा इत्येतद्वाक्यशेषः सर्वसाधारणः, कुतः ?

उपांशुयाजवाक्ये रूपाश्रवणात् । न तावत काल: रूपं, प्रयोगाङ्गत्वात् नापि उपांशुत्वं याजयोगात तस्य गुणत्वेन विधाने उपांशुयाग इति स्यात । तस्मात् समुदायानुवाद इति । सिद्धान्तस्तु—नानुवाद: अनूद्यमानस्यासंभवात् विष्ण्वादिवाक्यं न यागविधायकं, कुत: ? अजामित्वाय इत्येकवाक्यत्वश्रवणेन विष्ण्वादिवाक्यस्यार्थवादत्वप्रतीते: । एकवाक्यत्वे संभवति तद्भेदस्यान्याय्यत्वात ।

---

## ५. आघाराग्निहोत्रमरूपत्वात् ।

अग्निहोत्रं जुहोति इति प्रकृत्य श्रुता: दध्ना जुहोति पयसा जुहोति इत्यादय: । तथा आघारमाघारयति इति प्रकृत्य श्रुता: ऊर्ध्वमाघारयति सन्ततमाघारयतीत्यादय: तत्तद्गुण-विशिष्टकर्मविधय: अग्निहोत्रपदं आघारपदं च समुदायानुवादौ, अथ वा अग्निहोत्रवाक्यमाघार-वाक्यं च कर्मविधायके इति संशये तत्र भावार्था: कर्मशब्दा इत्युक्तत्वात् दध्ना जुहोति इत्यादिकमपि कर्मविधायकं, ततश्चाग्निहोत्रं जुहोति इति समुदायसिद्ध्यर्थोऽनुवाद: दण्डिन्यायेना-ग्निहोत्रादिपदं नामधेयमिति पूर्व: पक्ष: । न समुदायानुवादौ अग्निहोत्रं जुहोति आघार-माघारयति इति । प्रकृतकर्मणामभावात् । दध्ना जुहोतीति दधिगुणविधानपरत्वात । कुत: कर्मप्राप्ति: ? इदमेव कर्म अग्निहोत्रं जुहोतीति सामान्यावगते: । कथं पुन: अभावार्थत्वात गुणविधि: अनुबन्धतया विधिविषयत्वोपपत्ते: तदेव चोपादेयत्वम् । दध्यादे: सिद्धतया अविधेयत्वेऽपि उपादानमात्रं संभवत्येव ।

---

## ६. द्रव्यसंयोगाच्चोदना पशुसोमयो:

अग्नीषोमीयं पशुमालभेत इति विधिसन्निधौ हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षस इत्यादि । तथा 'सोमेन यजेत' इति प्रकृत्य श्रूयते—ऐन्द्रवायवं गृह्णाति मैत्रावरुणं गृह्णाति इत्यादि । तत्र अवद्यतिवाक्यविहितानां यागानां समुदायानुवाद: आलभति: तथा ग्रहणवाक्यविहितानां यागानामनुवाद: यजति: इति पूर्व: पक्ष: कुत: ? इयमत्राधिकशङ्का—रसलतयो: पशुहृदययोश्च भिन्नत्वात् न तद्द्रव्यकयागयो: रसादिविधानसंभव: । हृदयस्याग्रे इति क्रमदर्शनात ऐन्द्र-वायवं इति समुच्चयदर्शनाच्च नेमे पूर्वयागयो: द्रव्यविधी । ततश्चानुवादपक्षे व्यवस्थिते

लक्षणयाऽनुवादो घटत इति पूर्वपक्षः। सोमपदेन रसः पशुपदेन हृदयादिच लक्ष्यत इत्यभिप्रायः। सिद्धान्तस्तु सोमेन यजेतेति सोमलताविशिष्टो यागो विधीयते। नात्र लक्षणा युक्ता, अनुवादे सति लक्षणा, लक्षणायां सत्यामनुवाद इतीतरेतराश्रयत्वात्। कर्मान्तरत्वे तु सोममभिषुणोति आप्लावयति इत्यादिसंस्कारविधिदर्शनेन रसस्यैव यागीयद्रव्यत्वावगमात् ऐन्द्रवायवादिवाक्यं संस्कारविधिरिति गम्यते।

---

## ७. पृथक्त्वनिवेशात् सङ्ख्यया कर्मभेदः स्यात्।

यद्यपि सप्तदश प्राजापत्यान् पशूनालभेत इत्यत्र प्रत्ययार्थबहुत्वं तद्धितान्तस्यैव। न केवलस्य। ततश्च प्राजापत्याः सप्तदशेत्येवावगम्यते। न पुनः सप्तदश प्राजापत्या इति, तथापि बहुत्वं प्रत्ययार्थभूतप्रधानद्रव्यमात्रेण सम्बध्यते न प्रकृत्यर्थगतं तस्य गुणत्वात्। संशयस्तु प्रधानार्थ एव किं भिन्नः सन् उपसर्जनेन युक्तः, उत सोपसर्जनो भिन्न इति। पूर्वपक्षस्तु भिन्नस्य पशोः उपसर्जनेन द्रव्यदेवतासंबन्धेन योगो युक्तः। ततश्च प्रधानस्य पशोरेव बहुत्वं, तथा च एकस्मिन् यागे बहवः पशव इत्येव युक्तम्। कथमस्मिन् पक्षे अनेकस्मात् एकादशावदान–गणप्राप्तिः? अर्थादावृत्तिः ग्रहणभेदाज्ज्योतिष्टोमस्येव। सिद्धान्तस्तु–प्रकृतिप्रत्ययसमुदायाद्विभक्त्युत्पत्तेः समुदायार्थमेव सोपसर्जनं प्रधानं देवतायुक्तद्रव्यं विभक्तिर्भिनत्ति। सोपसर्जनस्य प्रधानस्य विभक्तिश्रुतितः स्वतो भेदावगतेः तद्बलादुपसर्जनस्यापि एकशेषकल्पना च। तथा च प्रकृतियुक्तस्य विभक्त्यर्थेन योगः न विभक्त्यर्थेन युक्तस्य प्रकृत्यर्थयोगः। ततश्च द्रव्यदेवतासंबन्धस्य बहुत्वात् तत्कल्पिता यागा अपि सप्तदश। अत्र च सङ्ख्यया भावार्थमात्रभेदः न पुनः शास्त्रभेदः।

---

## ८. संज्ञा चोत्पत्तिसंयोगात्।

अथैष ज्योतिः इत्यादौ य एवं विद्वानेतेन यजेत इत्युपसंहारात् भावार्थसामानाधि–करण्यमस्ति। ततश्च नामत्वमुपपन्नम्। पूर्वपक्षस्तु दर्शपूर्णमासवत् प्रकृतानां कर्मणां नामधेयम्, साकं प्रस्थाय्यवद्वा, न पुनर्नामधेयबलेन यागभेद इति।

सिद्धान्तस्तु संज्ञाप्युत्पत्त्यैवार्थान्तरावबोधमुत्पादयति । शब्दान्तरोच्चारणे तावदर्थान्तरावगतेः तदनुरोधाद्यजिनामत्वेऽपि यज्यन्तरनामत्वं युक्तम् । निर्वहति च यागान्तरं सहस्रदक्षिणादिविशेषश्रुतेः ।

---

### ९. गुणश्चापूर्वसंयोगे

'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनं' इत्यत्र प्रकृतामिक्षाद्रव्यके यागे वाजिनगुणविधिः उत वाजिदेवताकं वाजिनद्रव्यकं कर्मान्तरं विधीयते इति सन्देहः । यद्यपि शब्ददेवतामते वाजिदेवता विश्वेदेवदेवतातो भिन्नैव अर्थैक्येपि सूर्यादित्यावित्र, इति कथं संशयः, तथापि यत्र शब्दादेव देवताऽवगम्यते तत्रैवं भवति यत्र तु प्रकृतोपलक्षणपरः शब्दः तत्र पूर्वशब्दाभिधेयैव देवता । प्रकृते वाजिशब्दः यौगिकस्सन् व्यक्तिविशेषे वर्तते व्यक्तिविशेषाश्च विश्वेदेवाः इति युक्तः संशयः ।

तत्र एकदेवतासंबद्धत्वाद्धविर्द्वयस्य गुणद्वयविशिष्टमेकं कर्मेति पूर्वः पक्षः । सिद्धान्तस्तु यद्यपि वाजिपदेन प्रकृतव्यक्त्यवगमो भवति तथापि विश्वेषां देवानां आमिक्षोपसर्जनतयाऽवगमात न वाजिनेन संबन्धो युक्तः अन्योपसर्जनस्यान्यसंबन्धायोगात राजपुरुषं पश्येतिवत् । न च युगपत्सम्बन्धो युक्तः । एकप्रमाणगम्ये हि तत । प्रकृते तु नानाप्रमाणगम्यत्वान्न युगपत्संबन्धः । विश्वेषां देवानां श्रुत्या आमिक्षासंबन्धः वाक्येन च वाजिनसंबन्धः इति ।

---

### १०. अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेत

दध्ना जुहोति पयसा जुहोति इत्यादयः अग्निहोत्रात् कर्मान्तरस्य विधायकाः न गुणविधयः इति पूर्वपक्षः । कुतः ? उपसर्जनस्येव प्रधानस्यापि होमस्य एकद्रव्येणोपसर्जनेन संबद्धस्य अन्योपसर्जनसंबन्धायोगात । राद्धान्तस्तु सत्यमेव यद्यसंबद्धस्य समर्पकं नास्ति वैश्वदेववत् । इह तु अग्निहोत्रं जुहोतीति सर्वानुबन्धसंबन्धितया अनुबन्धान्तरासंयुक्तहोम—प्रतिपादकं विद्यते । तत्र च युगपत् सेवेषां दध्यादीनां विकल्प इति युक्तम् ।

११. फलश्रुतेस्तु कर्म स्यात् फलस्य कर्मयोगित्वात्।

अग्निहोत्रं प्रकृत्य श्रुते — दध्नेन्द्रियकामस्य जुहुयादित्यत्र किं अग्निहोत्रात् होमान्तरं विधीयते उत फलाय गुणविधिरिति संशये, पूर्वपक्षः-होमादेव फलं न गुणात्। एवं च दधिसाध्यो होम एव फलं प्रति विधीयते एवं चेद्विशिष्टस्यैव कर्मणो विधीयमानत्वात् विहितविधानायोगात कर्मान्तरत्वम्। यत्रापि गुणविधिः तत्रापि गुणविभक्तरूपवतः कर्मण एव विधिविषयता उक्ता, न च विशिष्टविधौ मत्वर्थलक्षणा, प्रत्यभिज्ञाबाधश्च अतः प्रकृतमेव कर्म फले विधीयतामिति वाच्यम्। गुणसंबन्धफलसंबन्धयोर्विधाने वाक्यभेदापत्तेः। अतः कर्मभेदः शास्त्रभेदश्चेति पूर्वः पक्षः। सिद्धान्तस्तु विधिगौरवप्रत्यभिज्ञाहानिमत्वर्थलक्षणादोषाश्चानन्यगतिकत्वे युक्ताः अस्ति चात्र गतिः दधिविभक्तरूपस्य प्रकृतकर्मणः फलाय विधानात तादृशरूपसिद्धये नियमेन दध्युपादानसंभवात।

---

१२. समेषु कर्मयुक्तं स्यात्।

अस्मिन्नधिकरणे फलाय गुणविधिरिति पूर्वपक्षः कर्मान्तरमिति सिद्धान्तः। यद्यपि फलाय गुणविधावपि साध्यभेदात शास्त्रभेदोऽस्त्येव तथापि पूर्वपक्षे गुणफलसंबन्धात् प्रयोक्तृत्वा-भेदात् अस्फुटः शास्त्रभेदः। सिद्धान्ते धात्वर्थानुबन्धभेदात प्रयोक्तृत्वभेदाच्च शास्त्रभेदः स्फुटतर इति विशेषं वक्तुं विषयो निरूप्यते। पूर्वपक्षः—रेवत्याधारं वारवन्तीयं फलाय विधीयत इति। सिद्धान्तस्तु— अत्र प्रयुक्तिरपि भिन्ना शास्त्रमपि भिन्नम्। यस्मात् पूर्ववाक्ये प्रकृतं अग्निष्टोमसामरूपकार्यं वायव्यानुबन्धम्। अत्र तु रेवत्याधारं वारवन्तीयं अनुबन्धः तयोः एककार्यकत्वे विरोधात भिन्नं कर्मेति।

---

१३. सौभरे पुरुषश्रुतेर्निधने कामसंयोगः।

'यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीत' इति सौभराधिकारः एकः वृष्ट्यादिफलः सिद्धः। यदाश्रितो गुणः तत्रैव चाधिकारान्तरं वाच्यम्। निधनाश्रितं हीषादि। तत्रैव चाधिकारान्तरं हीषिति वृष्टिकामाय निधनं कुर्यात्' इति। कुतः? यथा सौभरेण

स्तुवीत इत्यधिकार: तथा निधनादप्यधिकारान्तरं स्वीकार्यम् । विशेषादर्शनादिति पूर्वपक्ष: । सिद्धान्तस्तु— सत्यं यदाश्रितो गुण: तत्राधिकारान्तरं, किन्तु यत्र प्रकृताधिकारो न प्राप्त: तत्र, प्राप्तौ पुन: अभिधेये प्रत्यभिज्ञानमेव । हीषिति वृष्टिकामस्य निधनं कुर्यादिति वृष्टिकामशब्देन सौभरसंबन्ध्येव वृष्टिकाम: प्रत्यभिज्ञायते तस्यैव हीषिति विधीयते । स च निधनत्वेनैव प्राप्त: तस्मात् व्यवस्थार्थं श्रवणमिति ।

इति द्वितीय: पाद:

---

अथ तृतीय: पाद:

१. गुणस्तु क्रतुसंयोगात् ।

ज्योतिष्टोमे 'यदि रथन्तरसामा सोम: स्यात् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्' इत्यादि श्रूयते । तत्र यदिशब्दश्रवणात् रथन्तरस्य साम्नो निमित्तत्वेनाभिधानं अतश्चोपसर्जनपरमभिधानं, उत, स्वक्रियाभिधानसामर्थ्यात् क्रत्वन्तराभिधानमिति संशये अभिधानसामर्थ्यमन्तरङ्गम् । यत: परिपूर्णं पदं पदान्तरमाकाङ्क्षति । अन्तरङ्गं च बहिरङ्गात् बलवत् । यदिशब्दश्च अव्ययत्वात् केवलमन्वयानुवादी इति प्राप्ते, उच्यते—रथन्तरसामशब्देन यदिशब्दान्वयेऽपि प्रकृतक्रतोरेवाभिधानम् । ननु सामान्तरसम्बन्धेन ज्योतिष्टोमस्य क्रतोरभिधानं न प्राप्नोति । मैवम् । रथन्तरं साम यस्येति विग्रहे रथन्तरविशेषणं स्वविरोधिनो बृहत एव व्यवच्छेदकं नाविरोधिन: सामान्तरस्य । तथा च रथन्तरयुक्तक्रतोरेव निमित्तत्वं तस्य कादाचित्कत्वात् ।

---

२. अवेष्टौ ।

राजसूये क्षत्रियकर्तृके "यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वाऽभिघारयेत् । यदि राजन्य: ऐन्द्रं, यदि वैश्यो वैश्वदेवं" इति श्रूयते । तत्र ब्राह्मणवैश्यश्रवणं निमित्तार्थं उत कर्मान्तरविधिरिति संशय: । यदि राजसूये ब्राह्मणादीनां प्राप्ति: तदा पूर्वाधिकरणवत् अभिधानाविरोधात् निमित्तार्थानि श्रवणानि । अथ न प्राप्ति:, तदा कर्मान्तरविधानं यदि शब्दश्चानर्थक: । राजशब्दार्थानवधारणात् प्राप्त्यप्राप्त्यनवधारणम् । यदि राजशब्द:

कर्मयोगात् तदा प्राप्तिः। यदि कर्तृयोगात् तदा न प्राप्तिः। पूर्वपक्षस्तु राज्ययोगात् राजेति व्यवहारः आर्याणां तथा प्रयोगात्। तथा च त्रयाणामपि प्राप्तेः ब्राह्मणादिश्रवणं निमित्तार्थमिति। सिद्धान्तस्तु प्रापकाण्येवैतानि वचनानि। कुतः? व्याकरणस्मृतौ राज्ञः कर्म राज्यमिति व्युत्पादनात्। इयं च स्मृतिः प्रमाणम्। अन्ध्रप्रयोगश्च म्लेच्छप्रयोगत्वेऽपि स्मृत्युपष्टम्भत्वात् प्रमाणम्। ततश्च राजशब्देन क्षत्रियाभिधानात् ब्राह्मणादेरप्राप्तत्वात् बहिः-क्रतु प्रयोगान्तरविधानमेतदिति।

---

### ३. आधाने।

'वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यः शरदि वैश्यः' इत्यत्र 'य एवं विद्वानग्निमाधत्ते' इति विहितम्। अग्निहोत्रादिविधिभिः अर्थप्राप्तं च यदाधानं तदपेक्षया भिन्नमिदमाधानं उताभिन्नं तत्रैव च ब्राह्मणकर्तृकत्वे निमित्ते वसन्तादिकालविधिः इति संशये पूर्वपक्षस्तु अभिन्नमिति। तथा च सर्वाधिकारिके आधाने ब्राह्मणादिकर्तृकत्वे निमित्ते कालविधिरिति। सिद्धान्तस्तु—तत्तत्कालकर्तृविशिष्टमाधानान्तरमत्र विधीयते। वस्तुतस्तु य एवं विद्वानग्निमाधत्ते इति तु संभारशेषभूतम्। तथा च शूद्रादीनामाधाननिवृत्तिः। अर्थाक्षेपश्च न संभवति आहवनीयादीनामलौकिकत्वात् तत्साधनत्वेनाधनस्याप्राप्तेः।

---

### ४. अयनेषु चोदनान्तरम्।

संज्ञाधिकरणन्यायेन दाक्षायणयज्ञेन यजेत इत्यत्र दाक्षायणयज्ञः दर्शपूर्णमासाद्भिन्न इति पूर्वपक्षः। सिद्धान्तस्तु यत्र संज्ञायाः कर्मभेदापादकत्वं तत्र संज्ञाकल्पितभेदनिर्वाहकगुणान्तरमस्ति यथा ज्योतिष्टोमे द्वादशशतदक्षिणा। अत्र तु यद्यपि दाक्षायणादिसंज्ञा भेदमापादयति तथापि भेदनिर्वाहकं गुणान्तरं नास्ति। तेन प्रकृतस्यैव कर्मणो नामधेयमिदमपीति निश्चयः।

### ५. संस्कारश्चाप्रकरणे

'वायव्यं श्वेतमालभेत' 'सौर्यं चरुं निर्वपेदिति श्वेतचर्वोर्विधानं 'ईषामालभेत' चतुरो मुष्टीन्निर्वपति' इति विहितयोरालम्भनिर्वापयोः। परस्परस्वरूपानन्वितत्वात् वायव्यादिवाक्यगत—पदार्थानामिति प्रथमः पक्षः। ततश्च शास्त्रभेदः। यावदुक्तौ आलम्भनिर्वापौ विधीयेते इति द्वितीयः। सिद्धान्तस्तु स्यादेतदेवं यदि समस्तपदान्वयो न संभवति संभवति त्वसौ। द्रव्य-देवतासंबन्धेन उभयत्र यागानुमानात्। ततश्च वायव्यं श्वेतमालभेत इत्येकं शास्त्रम्। विध्याक्षिप्तस्यापि विधिसंस्पर्शात् अन्वयः संभवति।

---

### ६. विशये प्रायदर्शनात्।

आलभतिः प्राणिद्रव्यसंयुक्तो यजिमान् दृष्ट इति वत्समालभेत इत्यत्रापि यागानुमानात् तस्य विधेयता। तस्य चाव्यक्तस्य सोमधर्मप्राप्तेः निर्वाह इति पूर्वः पक्षः। प्राणियुक्त-मालभतित्वं यागेऽप्रयोजकं अन्यथापि घटमानत्वात्। देवतासंबन्ध एव तु यजिमत्व—प्रयोजकः।

---

### ७. संयुक्तस्त्वर्थशब्देन।

अग्नौ 'चरुमुपदधाति बृहस्पतेर्वा एतदन्नं यन्नीवाराः' इति श्रुतम्। तत्र चरुमुपदधाति इत्यत्र आर्थवादिकबृहस्पतिदेवतासंबन्धात् यजिमत्येवेयं चोदना इति पूर्वपक्षः। सिद्धान्तस्तु विशेषाकाङ्क्षायां हि अर्थवादान्निर्णयः। इह तु चरुः उपधाने विनियुक्तः न यागमात्रं श्रुतम्। अतः प्रयोजनाकाङ्क्षायामसत्यां न शक्यते यागः प्रयोजनतया कल्पयितुम्। अतः यावदुक्त-चौदनैवेयमपि।

---

### ८. पात्नीवते तु

त्वाष्ट्रं पात्नीवतं विधाय श्रुते पर्यग्निकृतं पात्नीवतमुत्सृजति इत्यत्र यागान्तरविधिः उत पूर्वकर्मणि पर्यग्निकृतपशोरुत्सर्ग इति सन्देहे यागान्तरमिति प्राप्तम्। कुतः? पूर्वत्र त्वाष्ट्र

पात्नीवतमिति सगुणश्रवणात् । अत्र पात्नीवतमिति निर्गुणश्रवणे न पूर्वप्रत्यभिज्ञा तस्माद्या-गान्तरम् ।

सिद्धान्तस्तु पर्यग्निकृतशब्द एवोद्देश्यसमर्पकः स च यौगिकत्वात् प्रकृतगामी । तेन प्रकृतस्यैवोत्सर्गविधिः । न च प्रत्यभिज्ञानुपपत्तिः । यत्र हि समासेनाभिधानं तत्र व्यस्तस्या-भिधानानुपपत्तिः ऐन्द्राग्ने आग्नेयवत् । यत्र पुनः व्यस्तयोरभिधानं तत्र नार्थान्तरे बुद्धिरुपपद्यत एव । उत्सर्गश्च अपूर्वोपदेशफल इति वक्ष्यते ।

---

## ९. अद्रव्यत्वात् केवले ।

अनारभ्याधीतयोः 'एष वै हविषा हविर्यजते योऽदाभ्यं गृहीत्वासोमाय यजते' परा वा एतस्यायुः प्राण एति योऽंशुं गृह्णाति' इति वाक्ययोः यागविधी उत केवलग्रहणसंस्कारविधी इति संशयः । पूर्वपक्षस्तु यागविधी इति । कुतः ? निष्प्रयोजनस्य संस्काराभावात्, उत्तरत्र यागश्रवणाच्च सोमाय यजते इति । अंशौतु निष्प्रयोजनस्य संस्काराभावात् अदाभ्यसाहचर्याच्च यागविधि-स्सिद्धः न तु ज्योतिष्टोमानुवादः अप्रकृतत्वात् । उच्यते । संस्कारमात्रचोदने एते । तावन्मात्रश्रवणात् । यजिश्रवणं तु अन्यपरम् अर्थवादार्थम् । न च केवल-संस्कारविधाने आनर्थक्यं दोषः । सोमाय यजते इत्यत्र सोमयुक्तयागश्रवणात् स च ज्योतिष्टोम एव तस्यैवोपदेशेन सोमवत्त्वात् । तस्मात् तस्य संस्कार एवायम् । तत्साहचर्याच्चांशावपि इति ।

---

## १०. अग्निस्तु लिङ्गदर्शनात् ।

'य एवं विद्वानग्निं चिनुते' इत्यत्र केवलचयनसंस्कारविधिः उत यजिमत्कर्मेति सन्देहे पूर्वपक्षः यजिमत्कर्मेति । अग्निं अनुयजन्ति इति यजिसामानाधिकरण्यात् यागवचनत्वे उपांशुयाजमन्तरा यजतीतिवत् अग्निंचिनुते अग्निसञ्ज्ञकं यागं करोतीत्यर्थः । चिनोतिश्च आलभतिवदनुवादः । स च कार्यप्राप्त ग्रहणसञ्ज्ञातानुवादो वा इष्टकाभिरग्निं चिनुत इति प्राप्तस्यानुवादो वा भविष्यति इति प्राप्ते सिद्धान्तः—संस्कारचोदनैषा

संस्कारशब्दश्रवणात् अग्निशब्दस्य ज्वलने रूढत्वात् । अग्निमनुयजति इति तु चयनसंस्कृतेऽग्नौ पश्चाद्यजतीत्यर्थः । तत्रैव च अग्नेः स्तोत्रं अग्नेः शस्त्रमित्यपि सङ्गच्छते ।

---

## ११. प्रकरणान्तरे प्रयोजनान्यत्वम् ।

मासमग्निहोत्रं जुहोति इति अग्निहोत्रशास्त्रात् शास्त्रान्तरं उत नेति संशयः । गुणविधिपक्षे अनुबन्धभेदाभावात् वाक्यान्तरमेवेदं न शास्त्रान्तरं अग्निहोत्रशास्त्रात् इति विशेषः । पूर्वपक्षस्तु न शास्त्रान्तरमिदं किन्तु नित्याग्निहोत्रे गुणविधिः अग्निहोत्रशब्देन तस्य प्रत्यभि-ज्ञानात् । उपसद्भिश्चरित्वेति च गुणद्वयविधाने वाक्यभेद एव । वाक्यभेदलक्षणयोः को बलीयानिति विचार्यते । वाक्यभेदोऽपि श्रुतसिध्यर्थमाश्रीयते इति प्राप्ते, उच्यते । उक्तवाक्यभेदप्रसङ्गात् । न चेष्टापत्तिः परस्परान्वयावगतेः यावन्ति पदानि परस्परान्वयं प्रतिपत्तुमलं तावदेकं वाक्यमिति लोके व्युत्पत्तेः तदनुसारेण एकवाक्यत्वात् होमान्तरविधि-रेवायम् । होमान्तर एवायं धर्मलक्षणया अग्निहोत्रशब्दः न तु नैयमिके वर्तते इति सिद्धान्तः ।

---

## १२. फलं चाकर्मसन्निधौ ।

अत्र नान्यदेव भेदकारणमुच्यते । अपि तु पूर्वत्र उपसद्भिश्चरित्वेति गुणान्तरश्रवणाद-प्रकृताभिधानता । इह तु फलसंबन्धेनाप्रकृताभिधानं प्रतीयते । आग्नेयमष्टाकपालं निर्वपेत् रुक्काम इत्यादौ द्रव्यदेवताभ्यां प्राकृताग्नेयः प्रत्यभिज्ञायते स च विहित इति तत्र फलं विधीयतामिति पूर्वपक्षः । अप्रकृतत्वेन आग्नेयादिप्रत्यभिज्ञानं नास्ति । ततश्च भावार्थस्य विधेयत्वात् न द्रव्यदेवते प्रकृताभिधानमापादयितुं शक्नुतः । फलानुरक्तो भावार्थश्च न विधातुं शक्यते इति फलं प्रति भावार्थ एव विधेयः । ततश्च शास्त्रान्तरमिदम् ।

१३. सन्निधौ त्वविभागात् ।

आग्नेयोऽष्टाकपालः पुरोडाशो भवति इति अवेष्टिं प्रकृत्य एतया अन्नाद्यकामं याजयेत् इति श्रूयते । तत्र पूर्ववत् कर्मान्तरत्वमिति पूर्वपक्षः । सिद्धान्तस्तु कर्मसन्निधौ फलयोगो न शास्त्रान्तरत्वमापादयति । न च फलस्याविधेयत्वात् भावार्थस्य विधेयत्वात् शास्त्रान्यत्वं युक्तम् । भावार्थस्य विधेयत्वेऽपि न सन्निधानमतिक्रामति । तथा च उत्पत्तिप्रत्यभिज्ञानात् उत्पत्त्यन्तराक्षेपो न युक्तः अधिकारविषयत्वेनैव विधेरप्राप्तप्रापकत्वोपपत्तेः ।

---

१४. आग्नेयस्तूक्तहेतुत्वात् ।

'यदाग्नेयोऽष्टाकपाल' इत्यादिना आग्नेयं विधाय श्रुते 'आग्नेयोऽष्टाकपालोऽमावास्यायां भवति' इत्यत्र प्रसिद्धादाग्नेयात् कर्मान्तरविधिः अभ्यासात् इति पूर्वपक्षः । सिद्धान्तस्तु विहितस्य तु पुनर्विधानं न शक्यते । अभ्यासाधिकरणे तु सर्वेषां विधानमित्युक्तम् । इह पुनः गृह्यते विशेषः । ननु निष्प्रयोजनं पुनर्वचनं, न प्रयोजनवशादर्थान्तरप्रतिपत्तिः । अवगमो हि तत्वान्यत्वे हेतुः । वस्तुतस्तु नानर्थक्यं, ऐन्द्राग्नस्तुतिपरत्वाद्वाक्यस्य ।

इति तृतीयः पादः ।

---

अथ चतुर्थः पादः

१. यावज्जीविकोऽभ्यासः

यावज्जीवमग्निहोत्रं जुहुयादिति किं काम्यादग्निहोत्राच्छास्त्रान्तरत्वं उत एकं शास्त्रमिति संशयः । पूर्वपक्षस्तु कर्मणः प्राप्तत्वात् जीवनकाले गुणोऽत्र विधीयते । ततश्चैकं शास्त्रमिति प्राप्ते सिद्धान्तः अधिकारमात्रचोदनैषा न कालविधिः । अतः शास्त्रान्तरम् । कुतः ? कालविधौ जीवनेन कालः जुहोतीति च होमाभ्यासो लक्षणीयः । अधिकारोपदेशे तु श्रुत्या पदद्वयान्वयो भवति । अधिकारचोदनायां च प्रयोगान्तरसिद्धिः ।

## २. नामरूपधर्मविशेष।

नानाशाखास्वधीतस्याग्निहोत्रादेरभ्यासाद्भेदो युक्तः नामादिगुणभेदस्यापि कर्मभेदकत्वात् अभ्यासादिवत् इति पूर्वपक्षः। सिद्धान्तस्तु एकस्यां शाखायां विधिभेदेन विधेयाभेदो युक्तः। यतोऽज्ञातज्ञापनं अप्रवृत्तप्रवर्तनं च विधिव्यापारः। यद्येकमेव कर्म स्यात् तदिदं द्वयमपि नोपपद्यते। शाखान्तरेषु तु भिन्नेषु प्रमातृषु तद्भेदेनैव अज्ञातज्ञापनं अप्रवृत्तप्रवर्तनं च विधेरुपपन्नमिति न शक्नोति भेदमापादयितुमिति।

इति चतुर्थः पादः

इति द्वितीयोऽध्यायः

---

## ॥ मीमांसादर्शनम् ॥

प्रथमाध्याये द्वितीयः पादः ॥

आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्माद-
नित्यमुच्यते ॥ १ ॥

शाबरभाष्यम्

'सोऽरोदीद्यदरोदीत्, तद् रुद्रस्य रुद्रत्वं' 'स प्रजापति-रात्मनो वपामुदखिदत्, 'देवा वै देवयजनमध्यवसाय दिशो

---

## बृहती

प्रभाकरमिश्रविरचिता ॥

प्रथमाध्यायस्य द्वितीयः पादः ॥

उक्तं कार्यमर्थं प्रतिपादयतो वेदस्य प्रामाण्यम्। यस्य पुनः कार्येऽ-र्थेऽन्वयो नावगम्यतेऽकार्यतया, तस्य यः प्रतिपादकः तस्य कथं प्रामाण्यं सोऽरोदीदित्येवमादेः ? । मा भूत्तस्य प्रामाण्यं ; न तदप्रमाणतया प्रमाण-

---

## ऋजुविमलापञ्चिका

शालिकनाथमिश्रकृता

प्रथमाध्यायस्य द्वितीयः पादः ॥

**उक्तं कार्यमर्थं प्रतिपादयतो वेदस्य प्रामाण्यम्।** अस्यार्थः-कार्यमर्थं प्रधानतया प्रतिपादयतो वेदस्य प्रामाण्यमुक्तम्। तत्रैव शब्दस्य प्रामाण्यव्युत्पत्तेः व्युत्पत्त्यायत्तत्वाच्च तस्येति। सहेतुकं प्रामाण्यमनुभाष्य पूर्वपक्षमिदानीमाह-**यस्य पुनः कार्येऽर्थेऽन्वयो नावगम्यते अकार्यतया तस्य यः प्रतिपादकः शब्दः तस्य कथं प्रामाण्यं यथा सोरोदीदित्येवमादेः।** यो ह्यनुष्ठेयरूपोऽर्थः तस्य कार्यात्मके विध्यर्थेऽन्वयो भवति नान्यस्येति-यथा करणस्येति-कर्तव्यतायाश्च, अधिकारिणोऽपि साध्यतैव, ऐश्वर्यस्य साध्यत्वात्। तेन तस्यापि कार्यरूपस्यैव

**न प्राजानन्'— इत्येवमादीनि समाम्नातारः समामनन्ति वाक्यानि। तानि किं कञ्चित् धर्मं प्रमिमते उत न? इति भवति विचारणा। तदभिधीयते,—क्रिया कथमनुष्ठेया? इति तां वदितुं समाम्नातारो वाक्यानि समामनन्ति। तत्, यानि वाक्यानि क्रियां नावगमयन्ति, क्रियासंबद्धं वा किञ्चित्; एवमेव भूतमर्थमन्वाचक्षते—रुदितवान् रुद्रः, वपामुच्चिखेद प्रजापतिः, देवा वै दिशो न प्रजज्ञिरे —इत्येवजातीय-**

---

मप्रमाणं भवति। प्रमाणस्य हि अनपेक्षत्वमुक्तम्; न चान्यस्याप्रामाण्यात् प्रमाणे तदपैति। अथ मन्यसे सकलस्य वेदस्य प्रामाण्यं न प्राप्नोतीति,

---

कार्यान्वयः। रुद्ररोदनादिकस्त्वर्थोऽकार्यात्मकः। अतः तस्य कार्यान्वयिता नावगम्यते तेन कार्यानन्वितार्थप्रतिपादकतया सोऽरोदीदित्येवमादेः प्रामाण्यं न युक्तमित्यर्थः।

तदेवं भिन्नवाक्याश्रयणेन एकदेशिमतेन पूर्वपक्षितम्। तत्र राद्धान्तैकदेश्याह— **माभूत्तस्य प्रामाण्यं** तस्य केवलस्यार्थवादभागस्य भवत्वप्रमाणता, न काचित् क्षतिः। ननु तदप्रामाण्ये विध्युद्देशस्यापि ज्ञातप्रामाण्यस्य [1]अप्रामाण्यापत्तिर्महती क्षतिः इत्यत्राह— **न तदप्रमाणतया प्रमाणमप्रमाणं भवितुमर्हति।** कार्यप्रतिपादकत्वाभावात् यद्यर्थवादानामप्रामाण्यं तदा कार्यप्रतिपादकस्यानपेक्षस्य किमित्यप्रामाण्यम्। **प्रमाणस्य ह्यनपेक्षत्वमुक्तम्।** तेनाप्रामाण्यस्यावकाशो नास्ति। न चार्थवादाप्रामाण्यात् विध्युद्देशस्यानपेक्षत्वमुक्तमपैति, कारणाभावात् तदाह—**न चान्यस्याप्रामाण्यात् प्रमाणे तदपैतीति।** आक्षेप्ता समाधातुराशङ्कामाह— **अथ मन्यसे सकलस्य वेदस्य प्रामाण्यं न प्राप्नोतीति** क्षतिः अस्ति। दूषयति —**केन वेदं सकलस्य** वेदस्य प्रामाण्यं **प्रतिज्ञातं** येन तदसिद्धौ क्षतिः स्यात्। नेदं प्रतिज्ञातं अतः तदसिद्धावपि न काचित् क्षतिः।

---

1. A reads अप्रामाण्यव्युत्पत्तिः।

कानि, तानि कं धर्मं प्रमिमीरन्?। अथोच्येत,—'अध्याहारेण वा विपरिणामेन वा व्यवहितकल्पनया वा व्यवधारणकल्पनया वा गुणकल्पनया वा कश्चिदर्थः कल्पयिष्यते'—इति। स कल्प्यमानः कः कल्प्येत? रुद्रः किल रुरोद, अतोऽन्येनापि

---

केनेदं प्रतिज्ञातं? यतोऽर्थावगतिः तस्य तल्लक्षणतैवेति प्रतिज्ञा। सा चानपेक्षतया साधिता। यतस्त्वर्थावगतिरेव नास्ति तदप्रमाणमेव। यतो वा प्रमाणान्तरप्रमितविषयैवावगतिः तस्यापि तत एव प्रामाण्यमित्युक्तं,

---

ननु चोदनालक्षणसूत्रे प्रतिज्ञातमेतदित्याह[1]—**यतोऽर्थावगतिः तस्य तल्लक्षणतैवेति प्रतिज्ञा।** यस्मात् कार्यरूपो वेदार्थोऽवगम्यते तस्य तत्र प्रामाण्यमेवेति प्रतिज्ञा, न पुनर्वेदः प्रमाणमिति। अर्थाद्धि प्रमाणप्रतिज्ञा। वेदार्थस्वरूपप्रतिज्ञा तु श्रौती—चोदनालक्षण एव कार्यरूप एव वेदार्थ इति। यल्लक्षणश्चासौ सैव चोदना तत्र प्रमाणमित्यर्थाल्लभ्यते। तेन कार्येऽर्थे तत्प्रतिपादकस्यैव प्रामाण्यं प्रतिज्ञातं नार्थवादभागस्य। न चार्थवादप्रामाण्यं [2]प्रतिज्ञासिद्धावुपयोगि। अनपेक्षत्वमात्रसाध्यत्वात्तस्याः साधितश्चानपेक्षत्वं, तत्सिद्धौ सिद्धैव प्रतिज्ञा। तदाह—**सा चानपेक्षतया साधिता। यतस्त्वर्थावगतिरेव नास्ति** यजमानः प्रस्तर इत्येवमादेः **तदप्रमाणमेव।** विध्यर्थैकवाक्यतया हि गौण्या वृत्त्या सामानाधिकरण्योपपत्तेः यजमानः प्रस्तर इत्येवमादेः अर्थावगमकत्वं अन्यथा त्वनवगमकत्वमेव। **यतो वा प्रमाणान्तरप्रमितविषयैवावगतिः तस्यापि तत एव** प्रमाणान्तरात्**प्रामाण्यमित्युक्तं** [3]प्रत्ययितभाष्ये। प्रमाणान्तरमालोच्य तस्य सत्यार्थतेत्यर्थः यथा 'आपो वै शान्ता' इति। विपर्यये चाप्रामाण्यमेव यथा "उत्ताना वै देवगवा वहन्ति" इति। अत्रापि गुणवादाश्रयणं विध्येकवाक्यतां विना नास्तीति यथाश्रुतार्थत्वे प्रमाणान्तरविपर्ययः।

---

1. B reads दित्यत आह। 2. C सिद्धावप्युपयोगि। 3. यत्तु लौकिकं वचनं तच्चेत् प्रत्ययितात् पुरुषादिन्द्रियविषयं वाऽवितथमेव तत् 1-1-2

**रोदितव्यं, उच्चिखेद आत्मवपां प्रजापतिः, अतोऽन्योऽप्यु-त्खिदेदात्मनो वपां, देवा वै देवयजनकाले दिशो न प्रज्ञा-तवन्तः, अतोऽन्योऽपि दिशो न प्रजानीयात्—इति, तच्चा-शक्यं,—इष्टवियोगेनाभिघातेन वा यत् बाष्पनिर्मोचनं, तत्**

---

विपर्यये चाप्रामाण्यमिति । तस्मादसंबद्धैवेयं चिन्ता—अक्रियार्थानां कथ-मिति ।

तद्विपर्ययात् स्वाध्यायविधेरानर्थक्यमिति चेत्, न स्वाध्यायशब्द-वाच्यस्याध्ययनं विधीयते नार्थवतोऽनर्थकस्य वा हुमित्येवमादीनामिव । तस्मात्कोऽयमुपालंभः ? । स्वाध्यायविधेः प्रयोजनशून्यता प्राप्नोतीति चेत् ?

---

आक्षेप्ता उपसंहरति—**तस्मादसंबद्धैवेयं चिन्ता-अक्रियार्थानां कथं प्रामाण्यमिति ।** समाधातुराशङ्कान्तरमाह—**तद्विपर्ययात् स्वाध्यायाध्ययनविधेः आनर्थक्यमिति चेत्** अस्यार्थः-यदा प्रमाणान्तरविपर्ययादर्थवादपदानामर्थशून्यता तदा " स्वाध्यायोऽध्येतव्य " [1]इत्यध्ययनविधेः आनर्थक्यं प्राप्नोति । अर्थवादभागेऽविवक्षितस्वार्थे अर्थावबोधलक्षणप्रयोजना-भावात् स्वाध्यायविधेरानर्थक्यं प्राप्नोति । तेनाव्यापकतयाऽर्थावबोधं प्रयोजनं परित्यज्यान्यत्प्र-योजनं [2]कल्प्यम् । ततश्च यत्राप्यर्थः प्रतीयते तत्राप्यन्यपरत्वादध्ययनस्याऽर्थाविवक्षा । [3]अविवक्षायामप्रामाण्यं प्राप्नोतीति ।

दूषयति— **नानर्थक्यम्** । कुत इत्याह-**स्वाध्यायशब्दवाच्यस्यार्थस्याध्ययनं विधी-यते नार्थवतोऽनर्थकस्य** वेति हेतोः, **हुमित्येवमादीनामिव** । यथा हुमित्येवमादीनाम-नर्थकानामप्यध्ययनं विधीयते, तथाऽर्थवादानामपि विधीयताम् । तद्विधाने च वाक्यार्थस्य नास्त्यानर्थक्यम् । **तस्मात्कोऽयमुपालम्भः** कोऽयं दोष इत्यर्थः ।

आशङ्कान्तरमाह— **स्वाध्यायविधेः प्रयोजनशून्यता प्राप्नोतीति चेत्** ।

---

1. B इत्यस्य विधेः 2. A कर्तव्यं 3. B विवक्षायां

तन्न, नियोगार्थनिर्वृत्तेः किमन्यत् प्रयोजनं सर्वविधीनां, स चाक्षरग्रहणेनैव निर्वृत्तः। अर्थज्ञानं चार्थाज्जातं, न नियोगतः प्रतिपन्नम्। न हि अर्थज्ञानकामस्य नियोगः, नहि पश्वादीनामिव वेदार्थस्यान्यतः प्रसिद्धिरस्ति येन तत्कामस्याध्ययनं विधीयते। ननु च वेदवद्वेदार्थस्यापि स्वाध्यायादन्यतः प्रसिद्धिरस्ति। न ह्यप्रसिद्धस्य कारणता शक्यते वक्तुम्। प्रसिद्धश्चेत्

---

दूषयति—**नियोगार्थनिर्वृत्तेः किमन्यत् प्रयोजनं सर्वविधीनाम्**, यदभावात् प्रयोजनशून्यता [1]प्राप्नोति। योऽपि हि काम्योऽधिकारः तत्रापि नियोगसिद्धिरेव प्रधानं प्रयोजनम्। स्वर्गादिसिद्धिस्तु नान्तरीयकी। स च नियोगार्थोऽक्षरग्रहणेनैव निर्वृत्तः विनाप्यर्थावबोधनं; तेन नास्ति प्रयोजनशून्यता। यदि नियोगार्थनिर्वृत्तिरेव प्रयोजनं कथं तर्ह्यर्थावबोधः प्रयोजनमित्यत्राह--**अर्थज्ञानन्त्वर्थाज्जातं न नियोगतः प्रतिपन्नमिति**। अध्यापनविधिनैव अध्ययनेऽनुष्ठापितेऽपि प्रतीयमानोऽर्थः स्वीकृतः। न पुनः विधिनैव तस्य सिद्धिः ज्ञापिता। कुत इत्याह—**न ह्यर्थज्ञानकामस्यायं नियोगः**। यदि ह्यर्थज्ञानकामस्य स्वाध्यायाध्ययनेऽधिकारः स्यात् तदा नियोग एवार्थावबोधसिद्धिं ज्ञापयेत्। न चासावस्ति। कुतः? **न हि पश्वादीनामिव वेदार्थस्यान्यतः प्रसिद्धिरस्ति, येन तत्कामस्याध्ययनं विधीयेत**। उपलब्धपूर्वके हि प्रिये भवतीच्छा नानुपलब्धे। न चानवधीतवेदेन वेदादन्यतो वेदार्थोऽवगतः येन तं कामयेत यथा पश्वादीन्॥

**ननु च वेदवद्वेदार्थस्यापि स्वाध्यायादन्यतः प्रसिद्धिरस्ति। न ह्यप्रसिद्धस्य कारणतापि शक्यते वक्तुम**। अस्यार्थः—यथा अध्येत्रन्तरगतो वेदः प्रसिद्धः तथाऽर्थोपि प्रसिद्धः। यदि ह्यध्येत्रन्तरगतो वेदः स्वार्थं नावबोधयेत्, ततोऽप्रसिद्धो वेदार्थ. कारणमपि न भवेत् प्रयोजकोपि न भवेत्। अध्यापनविध्यर्थोऽप्यप्रतिपन्नः कथमध्ययनं प्रयुञ्जीत तेनाध्यापयिता स्वप्रसिद्धं वेदार्थं स्ववाक्येनानधीतवेदमपि [2]प्रतिपादयिष्यति।

---

1. B स्यात्। 2. C स्ववाक्येन प्रतिपादयिष्यति।

सुतरामेवङ्कामस्य विधानं नोपपद्यते ज्ञेयतयैव हि तत् काम्यते। ज्ञातस्य च ज्ञेयतया काम्यत्वं नोपपद्यते। नियमार्थो विधिरिति चेत्। न। अन्यतः परिज्ञानाभावात्। ग्रहणान्ततैव स्वाध्यायशब्देनोच्यत इति चेत्। केन चोक्तं स्वाध्यायशब्देन ग्रहणान्ततोच्यत इति। अगृहीतात्तदर्थज्ञानमस्ति;

---

परिहरति—प्रसिद्धश्चेत् सुतरां एवङ्कामस्य विधानं नोपपद्यते। अर्थावबोधकामस्य सुतरामेव विधानं नोपपद्यते, यदि हि प्रसिद्धो वेदार्थः। अप्रसिद्धे हि कामनाया अनुपपत्तेर्विधानासंभवः। प्रसिद्धे तु कामनाभावात् प्राप्ते च फले प्रवृत्त्यभावात् विधानासंभव इति सुतरामित्युक्तम्। कस्मात् प्रसिद्धे वेदार्थे विधानानुपपत्तिरित्यत्राह—ज्ञेयतयैव हि तत् काम्यते। ज्ञातस्य हि ज्ञेयतया कामना नोपपद्यते॥

ननु सामान्येन वेदार्थो ज्ञातः कश्चिदर्थोऽभ्युदयकारी वेदस्यास्तीति, पुनर्विशेषेण कामयिष्यते। नैतदेवम्। नहि वेदार्थः सर्वोऽभ्युदयकारी नैमित्तिकनिषेधाधिकारयोस्तदभावात्। न च कश्चिदस्यार्थोऽस्तीत्येतावन्मात्रमवगम्य कामनोपपत्तिः। आशङ्कान्तरमाह—नियमार्थो विधिरिति चेत्। अस्यार्थः—स्वाध्यायेनैव वेदार्थोऽवबोद्धव्य इति नियमार्थो विधिः तेन ज्ञातेऽपि पुरुषान्तरवचनेन वेदार्थे वेदादवगन्तुं कामनास्तीति। दूषयति—न नियमार्थो विधिः। स्वाध्यायादन्यतो वेदार्थस्य परिज्ञानाऽसंभवात्। पुरुषवचनेभ्योपि धर्मशास्त्रकल्पसूत्रसदस्योपदेशादिभ्यो वेदमेवानुमाय तत एव वेदार्थप्रत्ययः। अनुमितोऽपि च वेदोऽर्थमवगमयति इति स्मृतिविचारे निपुणतरमुपपादयिष्यामः। तदेवमुपायान्तरप्रयुक्त्यभावान्न नियमार्थो विधिः।

ननु च स्वाध्यायशब्देन गृहीतो वेद उच्यते तेन संभवति नियमार्थो विधिः। अगृहीतावस्थस्य [1]वेदस्यैव व्यावर्त्यस्य संभवात्, इतीमामाशङ्कामाह—ग्रहणान्ततैव स्वाध्यायशब्देनोच्यत इति चेत्। दूषयति—केन वोक्तं ग्रहणान्तं स्वाध्यायशब्देनोच्यत इति नियमवाद्याह—अगृहीतात्तदर्थज्ञानमस्ति तन्निवृत्त्यर्थं भवत्विति भावः। दूषयति

---

1 C वेदस्य व्या।

नागृहीतादर्थज्ञानमस्ति अग्रहणे वर्णमात्रग्रहणात् । वाक्यावगमादिति चेत्, गृहीतं तर्हि वाक्यम् । न ह्यगृहीतं वाक्यत्वेनावगम्यते । तस्मान्न नियमस्यायं गोचरः । नाप्यर्थज्ञानकामस्यायं विधिः अतः प्रामणं प्रमाणमेव, अप्रमाणं अप्रमाणमस्तु । सत्यमेवं यथोक्तं पितृमता—तदेव तु प्रामाण्यमकार्यार्थसंबन्धमवगम्यते । ततः किम् ? इदं ततः अकार्यार्थता वेदस्य प्राप्नोति ।

---

**नागृहीतादर्थज्ञानमस्ति । अग्रहणे वर्णमात्रग्रहणात्**—न च वर्णमात्रग्रहणे वाक्यार्थप्रतीतिः अपि तु वाक्यग्रहणे, गृहीतेषु हि सर्वपदेषु[1] न्यायबलेन वचनव्यक्तिविशेषमवधार्य वाक्यार्थप्रतिपत्तिरिति दर्शितं **वाक्यार्थमातृकायाम्** । नियमवादिन आशङ्कामाह— **वाक्यावगमात् इति चेत्**, अगृहीतेऽपि वेदेवाक्यार्थोऽवगम्यत इति चेत् । दूषयति —**गृहीतं तर्हि वाक्यं** वाक्यार्थमवगमयति **नागृहीतं वाक्यत्वेनावगन्तुं शक्यते** । अस्यार्थः-यद्यपि कृत्स्ना शाखा न गृहीता तथापि वाक्यं तावद्गृहीतम् । न ह्यगृहीतं वाक्यत्वेनावगम्यते । एकैकमेव वाक्यं वाक्यार्थमवगमयति, तेन शाखयैव गृहीतया वाक्यार्थोऽवगमयितव्य इति नियमो न संभवति । शाखाया अनवगमकत्वात् वाक्यमात्रस्यावबोधकत्वात् । तस्य च [2]गृहीतस्यैव वाचकत्वात् अगृहीतस्यावाचकत्वादिति । **तस्मान्न नियमस्यायं गोचरः । नाप्यर्थज्ञानकामस्यायं विधिः, अतः प्रमाणं** विध्युद्देशः **प्रमाणं,** अप्रमाणं चार्थवादो**ऽप्रमाणमस्तु** ।

संप्रति परमपूर्वपक्ष्याह—**सत्यमेवं यथोक्तं पितृमता** पितृमानेव हि पितुरनुशासनेनावगतसमीचीनन्यायमार्गः एवं वक्तुं शक्नोति इति पितृमतेत्युक्तम् । यत्तावद्विध्युद्देशस्य प्रामाण्य तदेव तु प्रामाण्यं **अकार्यार्थसंबद्धं** अकार्यभूतेन रुद्ररोदनादिना संबद्धम**वगम्यते । ततः किम् ?** उत्तरम् । **इदं ततः । अकार्यार्थता वेदस्य प्राप्नोति** अर्थवादानामर्थमकार्यात्मकं वेदः प्रतिपादयतीति ।

---

(1) B गृहीत्वा हि सर्वपदानि । (2) A गृहीतत्वेनैव ।

रोदनमित्युच्यते, न च, तत् इच्छातो भवति ! न च, कश्चि-दात्मनो वपामुत्खिद्य तामग्नौ प्रहृत्य तत उत्थितेन तूपरेण पशुना यष्टुं शक्नुयात् !। न च, देवयजनाध्यवसानकाले

---

ननु च कार्यार्थताप्यस्ति। न। अकार्यपूर्वकत्वात्। अकार्यो ह्यर्थो हेतुतां प्रतिपद्यते कार्यार्थस्य। प्रदर्शितं चैतत्—रुद्रः किल रुरोद। अतोऽन्येनापि रोदितव्यमिति। तस्मात्तत्प्रभवं प्रामाण्यं तच्च प्रमाणान्तरापेक्ष-मिति अनपेक्षत्वमेवाक्षिप्यते।

ननु चैतत् प्रामाण्यसिद्ध्यर्थमुपन्यस्तं भाष्यकारेण। किमित्यन्यत्रैवोप-

---

ननु च कार्यार्थताप्यस्ति विध्युद्देशस्य कार्यार्थताप्रतिपादकत्वात्। तेन सिध्यत्येव कार्येऽर्थे वेदस्य प्रामाण्यम्। परिहरति—न कार्यार्थतास्ति—अकार्यपूर्वकत्वात् कार्यस्य। कथं तत्पूर्वकत्वमित्यत्राह—अकार्योऽर्थो हि हेतुतां प्रतिपद्यते कार्यार्थस्य[1]।

अस्यार्थः—अर्थवादानामकार्यात्मकोऽर्थो विध्युद्देशार्थस्य कार्यरूपस्य हेतुतां प्रतिपद्यते; अन्येन प्रकारेण सम्बन्धानवगमात्। अकार्यस्य प्रमाणान्तरापेक्षया सिद्धिः न शब्दतः। शब्दस्य कार्यमात्रे प्रामाण्यव्युत्पत्तेः। न च तत्प्रमाणान्तरं रुद्ररोदनादिष्वस्तीति हेत्वसिद्ध्या हेतुमदसिद्धेः कार्यार्थो वेदो न भवेत्। अकार्यस्य कार्यं प्रति हेतुतयान्वय इति प्रदर्शितम्—रुद्रः किल रुरोद। अतोऽन्येनापि किल रोदितव्यम् इति। तस्मात् तत्प्रभवं हेतुभूतसिद्धार्थप्रभवं हेतुमति कार्येऽर्थे वेदस्य प्रामाण्यम्। तच्च प्रमाणान्तरापेक्ष-मित्यनपेक्षत्वमेवाक्षिप्यते। अनपेक्षतया च कार्येऽर्थे वेदस्य प्रामाण्यमित्यायातं कार्येऽर्थे वेदस्या[2]प्रामाण्यमिति चोदनालक्षणप्रतिज्ञाक्षेपः।

ननु चैतत् रुद्रः किल रुरोद अतोऽन्येनापि रोदितव्यमिति प्रामाण्यसिद्ध्यर्थमुपन्यस्तं भाष्यकारेण। किमित्यन्यत्रैव हेत्वपेक्षत्वेनाप्रामाणसिद्धावुपनीयते। परिहरति

---

(1) B कायस्यार्थस्य। (2) A & B वेदस्य प्रामाण्यं

केचित् दिशो मुह्येयुः!। अतः एषामानर्थक्यम्। तस्मादेवं-जातीयकानि वाक्यानि 'अनित्यानि'—इत्युच्यन्ते, यद्यपि च नित्यानि, तथापि न नित्यमर्थं कुर्वन्ति इति। स एष वाक्यैक-देशस्याक्षेपः, न कृत्स्नस्य वाक्यस्य। ननु एकदेशाद्विना साकांक्षः पदसमूहो न पर्य्याप्तः स्वस्मै प्रयोजनाय, अतः आक्षिप्त एव इति। नैवं, भवति हि कश्चित् पदसमूहः, योऽर्थवादेभ्यो विनापि

---

नीयते। सत्यम्। सिद्धस्य साध्यैकवाक्यता प्रदर्श्यते। तदेकवाक्यत्वे च कार्यार्थता नास्तीत्येतदेव प्रदर्श्यते।

कथं तर्ह्ययं ग्रन्थः अध्याहारेण वेति? किं वास्य ग्रन्थस्य? इद-मस्य, कर्तव्यत्वानेकवाक्यत्वादप्रामाण्यं न पुनरकर्तव्यतैकवाक्यत्वादिति।

---

-सत्यं प्रामाण्यसिद्ध्यर्थ एवायं प्रकार उपन्यस्तः, तथापि हेतुभावेन सिद्धस्य साध्येनैकवाक्यता प्रदर्श्यते। तदेकवाक्यत्वे च सति कार्यता नास्तीत्येतदेव अप्रामाण्यमेव प्रदर्श्यते। यद्यर्थवादानां विध्युद्देशेनैकवाक्यतामेवाश्रित्याक्षेपोऽयं कथं तर्ह्ययं ग्रन्थः? अथोच्येत अध्याहारेण वा विपरिणामेन[1] वेति। किं वा अस्य ग्रन्थस्य? उत्तरम्—इदमस्य ग्रन्थस्य कर्तव्यतानेकवाक्यत्वादप्रामाण्यम्। न पुनरकर्तव्यतैकवाक्यत्वादिति। अस्यार्थः—[2]अस्माद्ग्रन्थादिदमवगम्यते—अर्थवादभागस्य केवलस्य कर्तव्यतैकवाक्यता नास्तीत्यप्रामाण्यं न पुनर्विध्युद्देशस्यापि अकर्तव्यतैकवाक्यत्वेनाप्रामाण्यमिति। यदि सिद्धार्थान्वयेन साध्यार्थस्याप्रमाण्य-मित्येष पूर्वः पक्षः तदा केन विशेषेण अध्याहारादिना [3]कार्यान्वयितोच्यते। यदि तावत्कार्या-न्वयशून्यत्वेनाप्रामाण्यमाशङ्क्यते तदा अध्याहारादिना कार्यान्वयाशङ्का युज्यते। तस्माद्भिन्न-

---

(1) C अध्याहारेण वेति (2) C ग्रन्थादेवमव (3) C कार्यान्वयउ

विदधाति कंचिदर्थं, यानि पुनः तैः सह संयुज्य अर्थान्तरे वर्तन्ते, तान्येकदेशाक्षेपेणाक्षिप्यन्ते ।

शास्त्रदृष्टविरोधाच्च ॥ २ ॥

'स्तेनं मनः' 'अनृतवादिनी वाक्' —इत्येवंजातीयकानां धर्मं प्रति अप्रामाण्यं, भूतानुवादात् । विपरिणामादि-

---

उक्तम्—अनेकवाक्यत्वे अचिन्तनीयोऽयमर्थ इति। अत्रापि चानर्थज्ञो भवान् । अत्रेदमेवाक्षिप्यते । नहि सिद्धार्थानुगमात् कर्तव्यताऽवसातुं शक्यते—यथा अस्मिन्नेव तावत्—किं शक्यन्ते रोदनादयः कर्तुम् ।

नन्वशक्यतया न शक्यन्ते न पुनः सिद्धानुगमात् । सिद्धतयैव ह्यशक्यतोक्ता । सिद्धस्य प्रमाणान्तरापेक्षत्वात् तस्य चात्रासम्भवादिष्ट-

---

वाक्याश्रयणेनैवात्र पूर्वपक्षितमिति परिहरति—उक्तमनेकवाक्यत्वेऽचिन्तनीयोऽयमर्थः [1]अप्रामाण्यमिति । अत्रापि च ग्रन्थे अनर्थज्ञो भवान् । अत्रेदमेव कार्येऽर्थे प्रामाण्यमेवाक्षिप्यते । कुतः प्रामाण्याक्षेप इत्यत्राह—न हि सिद्धार्थानुगमात् कर्तव्यतावसातुं शक्यते ।

सामान्येनाभिधाय विशेषं दर्शयति—यथा अस्मिन्नेव सोऽरोदीदित्यादौ । एकग्रन्थेनाह -किं शक्यन्ते रोदनादयः कर्तुम् ? न शक्यन्त एवेति यावत् । सिद्धार्थहेतुकाः सन्तो रोदनादयः न शक्यन्ते कर्तुम् । नन्वशक्यतया न शक्यन्ते न पुनः सिद्धार्थहेतुकत्वेन । परिहरति—सिद्धतयैव ह्यशक्यता उक्ता ; न पुनः स्वभावतोऽशक्यता । इष्टवियोगादिसम्पादनेनापि शक्यत्वात् । कथं पुनः सिद्धार्थानुगमनात् अशक्यतेत्राह—सिद्धस्य प्रमाणान्तरापेक्षत्वात्, कार्यैकविषयत्वेन शब्दस्य प्रामाण्यव्युत्पत्तेः तस्य च प्रमाणान्तरस्यात्र रुद्रे इष्टवियो-

---

(1) A प्रामाण्यमिति

भिरपि कल्प्यमाने स्तेयं मृषोद्यञ्च कर्तव्यमित्यापतति, तच्चाशक्यं

---

वियोगादेः। तथा च प्रमाणान्तराभावं दर्शयति—**न ह्यात्मनो वपामु-त्खिद्य तदुत्थितेन तूपरेण शक्यते यागः कर्तुमिति।** तर्ह्यवान्तरवाक्यो-पन्यासः न पुनर्महावाक्य एवैतत्प्रदर्शितम्। **अवान्तरकल्पनायामप्येत-स्मात्** सिद्धानुगमान्न मुच्यत इति भावः।

तदिदमुच्यते— **आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थाना-मिति।** किमिदमतदर्थानामिति विशेषाभिधानम्। ननु च सर्व एवेदानी-मतदर्थो वेदः। वसन्ताय कपिञ्जलानालभेतेति नास्ति सिद्धानुगम इति

---

गादेः प्रमेयस्य सम्बन्धिनोऽसम्भवात; रुद्रसम्बन्धीष्टवियोगादिग्राहकप्रमाणान्तराभावादिति यावत्। **तथा च प्रमाणान्तराभावं दर्शयति।** "न ह्यात्मनो वपामुत्खिद्य ततस्तस्या वपायाः प्रहृताया उत्थितेन तूपरेण शक्यते यागः कर्तुं" इति।

यद्यत्रापि सिद्धानुगमादेवाशक्यता, किमिति **तर्ह्यवान्तरवाक्योपन्यासः महावाक्य एवैतत्** सिद्धानुगमेनाशक्यत्वं किमिति पुनर्न **दर्शितम्।** उत्तरम्—**अवान्तरवाक्यकल्पना-यामपि एतस्मात्सिद्धानुगमान्न** [1]**मुच्यत** इत्यभिप्रायः। सर्वप्रकारमप्रामाण्यं दर्शयितुं अवान्तरवाक्योपन्यासः। यदि महावाक्यं यथाश्रुतमाश्रीयते तथापि सिद्धानुगमः; अथा-श्रुतमप्यवान्तरवाक्यमाश्रितं तथापि स एव सिद्धानुगम इति सर्वथैवाप्रामाण्यात। **तदिदं** सिद्धानुगमेनाप्रामाण्यं **उच्यते—आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामिति।**

अत्र चोदयति—**किमिदमतदर्थानामिति विशेषाभिधानम्।** एकग्रन्थेनाह— **ननु च सर्व एवेदानीमतदर्थो वेदः।** सर्व एवाकार्यार्थ इत्युक्तम्। **'वसन्ताय कपिञ्जला-नालभत** इति **नास्ति सिद्धानुगम इति चेत्।** वसन्ताय कपिञ्जलानालभत इति सिद्धार्थानु-

---

1 A मुच्यामहे

चेत्, तदेवेदमापतितम् अचिन्तनीयोऽयमर्थ इति। न कपिञ्जलादिवाक्यानामपि कार्यार्थत्वम्। तेषामपि सिद्धार्थैनैकवाक्यत्वात्, अतोऽतदर्थानामिति न निवर्त्यं किंचिदवसीयते। इदमवसीयते। सिद्धसाध्यार्थत्वाद्वाक्यानां सिद्धार्थमुखेनायमाक्षेपः अतः इदमुक्तं—आनर्थक्यमतदर्थानामिति। यथा च सिद्धार्थापेक्षितयाऽऽक्षेपः तथोदितम्। विवृतं च भाष्यकारेण—"तान्येकदेशाक्षेपेणाक्षिप्यन्ते" इति।

---

गमाभावात् [1]कार्यार्थमेतत्; तेनैतद्व्युदासाय 'अतदर्थाना'मिति विशेषाभिधानम्। आक्षेप्ता आह—[2]**तदेवेदमापतितमचिन्तनीयोऽयमर्थ** इति। यदि किञ्चित्कार्यार्थं किञ्चिच्चाकार्यार्थं तदा नेदमधिकरणमारब्धव्यम्। यस्यैव कार्यार्थत्वं तद्विषयत्वेनापि चोदनालक्षणप्रतिज्ञोपपत्तेः।

ननु यदि सिद्धार्थानुगमाभावादानर्थक्यं कपिञ्जलानालभेत इत्यादिवाक्यानामचिन्तनीयमिदं, तदा भवत्वचिन्तनीयं; नैतावता [3]सिद्धार्थानुगमः कपिञ्जलादिवाक्यानां शक्यते [4]वक्तुमित्याशङ्क्याह—**न कपिञ्जलादिवाक्यानामपि कार्यार्थत्वम्; तेषामपि सिद्धार्थैनैकवाक्यत्वात्।** 'वसन्ताय कपिञ्जलानालभत' इत्यङ्गविधय एते। अङ्गविधयश्च प्रधानविधिनैकवाक्यतापन्नाः। प्रधानविधिश्च सिद्धार्थैनैकवाक्यतापन्न इति सर्वेषामपि साक्षादेकवाक्यतापन्नं विध्यन्तरगतं वा सिद्धार्थमस्त्येवैकवाक्यतापन्नं [5]पदजातमिति सर्व एवाकार्यार्थो वेदः। **अतोऽतदर्थानामिति न निवर्त्यं किञ्चिदवसीयते।** समाधाता आह—**इदमवसीयते-सिद्धसाध्यार्थतया वाक्यानां सिद्धार्थमुखेन अयमाक्षेपः।** येनैव रूपेणासावाक्षेपः तदेव द्योतयितुं अतदर्थानामित्युक्तम्, न पुनः कस्यचिद्व्यावृत्त्यर्थम्। **अत इदमुक्तम् आनर्थक्यमतदर्थानामिति। यथा च सिद्धार्थापेक्षितयाऽऽक्षेपः तथोदितम्;** विवृतं च भाष्यकारेण 'तान्येकदेशाक्षेपेणाक्षिप्यन्त' इति। एक—

---

1. C कार्यार्थमेव। 2. A आयातं। 3. C सिद्धानुगमः। 4. A अवगन्तुं। 5. C पदमिति।

स्तेयानृतवादप्रतिषेधमबाधमानेनानुष्ठातुम् । न च विकल्पः, वैषम्यात्, एकः कल्प्यो विधिः, एकः प्रत्यक्षः ॥

अथ दृष्टविरोधः,—'तस्मात् धूम एवाग्नेर्दिवा ददृशे नार्चिः । तस्मादर्चिरेवाग्नेर्नक्तं ददृशे न धूमः'—इति 'अस्माल्लोकादुत्क्रम्याग्निरादित्यं गतः, रात्रौ आदित्यस्तं' इत्येतदुपपादयितुमिदं, उभयमपि दृष्टविरुद्धमुच्यते । तस्मान्नैषाऽवधारणा सिध्यति इति । अपरो दृष्टविरोधः,—'नचैतद्विद्मो वयं

---

कथं तर्हि राद्धान्त एकवाक्यतां प्रति प्रश्नोत्तरे ? कोऽभिप्रायः । अयमभिप्रायः । नैकवाक्यतानिबन्धनोऽयमाक्षेपः । भिन्नानां हि वाक्यानां का प्रतिपत्तिरिति पूर्वः पक्षः ।

आनर्थक्यमभिधायैकवाक्यतया राद्धान्ते स्तुत्यर्थत्वेनार्थवत्तोक्ता ।

---

वाक्यत्वे हि सति एकदेशता भवत्यर्थवादानाम्[1] । अन्यथा [2]स्वतन्त्रस्यैकदेशानुपपत्तेः । तेन एकदेशशब्दं प्रयुञ्जानेन भाष्यकारेण एकवाक्ताश्रयणेनायमाक्षेप इति विवृतम् । यद्येकवाक्यत्वाश्रयणेनायं पूर्वः पक्षः, कथं तर्हि राद्धान्ते एकवाक्यतां प्रति प्रश्नोत्तरे । पृच्छति—कोऽभिप्रायस्तव कथं तर्हि राद्धान्त एकवाक्यतां प्रति प्रश्नोत्तरे इति वदतः । उत्तरम्—अयमभिप्रायो मम; एकवाक्यतानिबन्धनोऽयं प्रामाण्याक्षेपो न भवति ; किन्तु भिन्नानां वाक्यानामर्थवादात्मकानां का प्रतिपत्तिः ? कीदृशी वर्णना ? इति चिन्तायां पूर्वपक्षे अक्रियार्थत्वेनानर्थक्यमभिधाय अत्र राद्धान्ते स्तुत्यर्थत्वेनैकवाक्यत्वादर्थवत्तोदितेति । यदि ह्येकवाक्यताश्रयणेनाक्षेपो भवेत् नैकवाक्यताश्रयणेन समाधानं स्यात्; तस्मात् भिन्नवाक्यत्वेन पूर्वः पक्षः एकवाक्यत्वेन राद्धान्त इत्यवगम्यते । परिहरति—

---

1. C वादपदानां । 2. C स्वातन्त्र्येणैकदेशत्वानुपपत्तेः ।

ब्राह्मणा वा स्मः, अब्राह्मणा वा' इति अक्रियार्थत्वादनर्थकम्। अथायमर्थः—नैवैतत् ज्ञायते किं वा ब्राह्मणा वयं उताब्राह्मणा एवेति, प्रत्यक्षविरुद्धमप्रमाणम् । अपरः शास्त्रदृष्टेन विरोधः —'को हि तद्वेद, यद्यमुष्मिन्लोकेऽस्ति वा, न वा' इति यदि प्रश्नोऽयं, अक्रियार्थत्वादनर्थकः । अथानवक्लृप्तिः, शास्त्रदृष्टेन विरोधः । अतः प्रत्यक्षविरुद्धमप्रमाणम् ॥

तथा फलाभावात् ॥ ३ ॥

गर्गत्रिरात्रब्राह्मणं प्रकृत्योच्यते 'शोभतेऽस्य मुखं य एवं वेद'—इति यदि भूतानुवादः, अनर्थकः। अथाध्ययनफलानुवादः, ततोऽसदनुवादः। कालान्तरे फलं भविष्यतीति चेत् । न हि अत्र प्रमाणमस्ति। विधिः स्यादिति चेत्। नैष विधिपरः; 'द्रव्यसंस्कारकर्मसु' (४ अ० ३ पा०) इति चिन्तयिष्यत्येतदु-परिष्टात्—किं फलविधिरुतार्थवादः ?—इति। इह तु किं भूता-

---

अहो अज्ञानकातर्यमायुष्मतः प्रदर्शितं तव—तान्येकदेशाक्षेपेणाक्षि-प्यन्त इति। राद्धान्ते तु प्रश्नोत्तरे तत्रैव चोदनीये परिहर्तव्ये च।

---

अहो अज्ञानकातर्यमायुष्मतः प्रदर्शितमस्माभिः — तान्येकदेशाक्षेपेणाक्षिप्यन्त इति । एकवाक्यत्वाश्रयणेनायमाक्षेप इत्येतत्प्रदर्शनपरं भाष्यम् । तेन एकवाक्यत्वाश्रयणेनैवायं कृत्स्नस्य वेदस्य प्रामाण्याक्षेपः । राद्धान्ते तु ये प्रश्नोत्तरे तत्रैव राद्धान्त एव चोदनीये कथमेते प्रश्नोत्तरे इति । भवता तु अज्ञानकातरेण पूर्वपक्षावस्थायामेव यच्चोदितं तत् तव कातर्यं केवलम् । किञ्च परिहर्तव्ये च समाधातव्ये च एते प्रश्नोत्तरे राद्धान्तकाल एवा-स्माभिः । तेन चोद्यावकाश एवात्र नास्ति ।

नुवादः, क्रियार्थो वा? —इति॥ 'आऽस्य प्रजायां वाजी जायते य एवं वेद' इति चोदाहरणम्॥

---

यत्पुनरिदानीं आनर्थक्यमुदाहरणभेदेनोपन्यस्तं तत् [1]हेतुप्रपञ्चार्थम्। हेतुप्रपञ्चस्य प्रयोजनमुक्तम्। अस्मिंस्तु प्रचये अयमपरो विशेषः परिहारान्तरपरिहरणीयत्वं च। तस्मादनित्यमुच्यत इति—सिद्धार्थापेक्षितया प्रमाणान्तरसव्यपेक्षत्वमनित्यत्वं शब्दार्थयोर्नित्यत्वात् लोकेऽपि।

---

यत्पुनरिदानीं उदाहरणभेदेनानर्थक्यमुक्तम् शास्त्रदृष्टविरोधाच्च इत्येवमादिभिः सूत्रैः तत् पूर्वपक्षे हेतुप्रपञ्चार्थं पूर्वपक्षहेतून् प्रपञ्चयितुम्। हेतुप्रपञ्चस्य प्रयोजनं शब्दाधिकरण उक्तम्—सर्वे पूर्वपक्षहेतवः उपन्यस्य निराकार्याः। अनुपन्यस्ते हि कस्य चिन्मन्दधियः पुनरुत्कोपो भवेदिति। अस्मिंस्त्वयमपरो विशेषः परिहारान्तरपरिहरणीयत्वम्—यथा यावन्तः शब्दाः नित्यत्वहेतवः एकेनैव प्रतिज्ञोपन्यासेन परिह्रियन्ते तथैते आनर्थक्यहेतवो न भवन्ति नानापरिहारपरिहरणीयत्वात्; तस्मात् पृथगुपन्यस्ताः पृथक् पृथक् परिहारदानायेति।

तस्मादनित्यमुच्यत इति सूत्रम्; तदनुपपन्नमिव प्रतिभाति। यदि तावद्वाक्यस्यानित्यत्वमुच्यते तत्सिद्धान्तिनोऽपि सम्मतमेव। अनित्यं हि कारणवत्त्वमुच्यते; यद्धि कारणवत् तदनित्यम्। वाक्यञ्चानु[2]पूर्व्यविशेषपरिगृहीतवर्णात्मकपदसङ्घातात्मकं आनुपूर्व्यस्य कारणवत्त्वेन कारणवत्। न च तादृशेऽनित्यत्वे सिद्धार्थापेक्षित्वं हेतुः। अथ वर्णात्मकस्य शब्दस्य पदार्थात्मकस्य च वाक्यार्थस्यानित्यत्वमुच्यते, तदशक्यं वर्णानां नित्यत्वात्। पदार्थानाञ्च यद्यपि केषाञ्चिदनित्यता तथापि केषाञ्चिद्गोत्वादीनां नित्यत्वादित्याशङ्क्याह—तस्मादनित्यमुच्यत इति। सिद्धार्थापेक्षितया प्रमाणान्तरसव्यपेक्षार्थत्वं अनित्यत्वं, शब्दार्थयोर्नित्यत्वाल्लोके वेदेपि।

---

1. हेतुप्रचयार्थं-मा 2. C आनुपूर्वीविशेष।

अन्यानर्थक्यात् ॥ ४ ॥

'पूर्णाहुत्या सर्वान् कामानवाप्नोति' 'पशुबन्धयाजी सर्वान् लोकानभिजयति' 'तरति मृत्युं, तरति ब्रह्महत्यां योऽश्वमेधेन यजते, य उ चैनमेवं वेद' इति, यदि भूतानुवादमात्रमनर्थकम्। अथ फलविधिः, इतरेषां आनर्थक्यम्,— न हि अकृत्वा पूर्णाहुतिं, अग्निहोत्रादयः क्रियन्ते!। न च, अनिष्ट्वा अग्नीषोमीयेन, सोमेन यजन्ते। न च, अनधीत्य, अश्वमेधेन यजते!। तद्यथा, पथिजाते अर्के मधु उत्सृज्य, तेनैव पथा मध्वर्थिनः पर्वतं न गच्छेयुः, तादृशं हि तत्। अपि

---

अतएव भाष्यकारेणाप्ययमर्थो विवृतः। "यद्यपि नित्यानि न नित्यकार्यं कुर्वन्ति" इति। किं पुनर्नित्यस्य कार्यं? प्रमाणान्तरानपेक्षं स्वार्थप्रतिपादनम्। अतः प्रमाणान्तरानपेक्षतैव नित्यतोच्यते। तेनास्या एवायमाक्षेपः—तस्मादनित्यमुच्यत इति।

---

अस्यार्थः—नानित्यशब्देन सूत्रोक्तेन कारणवत्त्वमुच्यते, शब्दार्थयोर्लोकवेदयोः सदसत्कारणत्वात्; किन्तु प्रमाणान्तरसव्यपेक्षत्वादनित्यत्वमत्राभिप्रेतम्। अत एव च भाष्यकारेणायमेवार्थोऽनित्यशब्दस्य विवृतः "यद्यपि नित्यानि तथापि न नित्यकार्यं कुर्वन्ति" इति ग्रन्थेन। एतदेव विवरीतुमाह—किं पुनर्नित्यस्य कार्यं यदकरणादनित्यमुच्यते। उत्तरम्—प्रमाणान्तरानपेक्षं स्वार्थस्य प्रतिपादनं; यत् किल नित्यं तत् प्रमाणान्तरमनपेक्ष्यैव स्वार्थं प्रतिपादयेत्; न हि [1]नित्यस्यापेक्ष्योऽर्थोऽस्ति। अतः प्रमाणान्तरानपेक्षतैव नित्यतोच्यते। तेनास्या एवायमाक्षेपः तस्मादनित्यमुच्यत इति।

---

1. C नित्यस्यापेक्षास्ति।

चाहुः—"अर्के चेन्मधु विन्देत, किमर्थं पर्वतं व्रजेत्?। इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत्" इति ॥

अभागिप्रतिषेधाच्च ॥ ५ ॥

'न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवि'—इत्यप्रतिषेधभागिनमर्थं प्रतिषेधन्ति। विज्ञायते एवैतत्,—अन्तरिक्षे, दिवि चाग्निर्न चीयते—इति। पृथिवीचयनप्रतिषेधार्थं च यद्वाक्यं भवेत् चयनप्रतिषेधार्थमेव तत्। अथाप्रमाणं, नैष विरोधो भवति। कथं तत् प्रमाणं? यत् विध्यन्तरमाकुलयेत्, स्वयं चाकुलं स्यात्,—न चेतव्यं, हिरण्यं निधाय चेतव्यमिति ॥

अनित्यसंयोगात् ॥ ६ ॥

अनित्यसंयोगश्च (वेदप्रामाण्ये सति) "परन्तु श्रुतिसामान्यमात्रं" (१ अ० १ पा० २१ सू०) इति परिहृतः। इदानीं वेदैकदेशानामाक्षिप्तानां पुनरुपोद्बलक उत्तिष्ठति,—'बबरः प्रावाहणिरकामयत'—इति ॥

विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः ॥ ७ ॥ (सि०)

इदं समाम्नायते,—'वायव्यं श्वेतमालभेत भूतिकामः, वायुर्वै क्षेपिष्ठा देवता, वायुमेव स्वेन भागधेयेनोपधावति, स एवैनं भूतिं गमयति'—इति। 'वायुर्वै क्षेपिष्ठा देवता'—इत्यतो यद्यपि क्रिया नावगम्यते, क्रियासंबद्धं वा किञ्चित्; तथापि विध्युद्देशो-

---

विधिना ॥ विध्युद्देशेनैकवाक्यत्वात् इति। कस्येदं व्याख्यानम्?

---

विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः। विध्युद्देशेनैकवाक्यत्वादिति भाष्यम्; तदाक्षिपति—विध्युद्देशेनैकवाक्यत्वादिति कस्येदं व्याख्यानम्? उत्तरम्—

विधिनेत्यस्य? ननु च नोपपद्यते विधिर्विध्युद्देशः। सत्यं, लक्षणयोच्यते। किमिति लक्षणा? एकवाक्यत्वादिति वचनात्। एकवाक्यत्वं विधिना नोपपद्यते। विधिनैव हि सर्वस्यैकवाक्यता। सत्यं कर्तव्यतान्वयः यस्य। न च स्तुतेः कर्तव्यताऽवसीयते। किं तर्हि? स्तुत्येन संबन्धः। किं विध्यर्थो न स्तुत्यः? न ब्रूमो न स्तुत्य इति। क्षेपिष्ठत्वादयस्तु गुणाः विधेये स्तुतिमुत्पादयन्ति; त एवातदर्थानामित्याक्षिप्ताः; आक्षेपसमाधानार्थं चैतत् सूत्रम्; तस्मात्

---

विधिनेत्यस्य। ननु विधिनेत्यस्येदं व्याख्यानं नोपपद्यते, यस्मात् विधिर्विध्युद्देशो न भवति; विध्युद्देशो हि "वायव्यं श्वेतमालभेत भूतिकामः" इत्येवमात्मकः; विधिस्तु लिङादिप्रत्ययमात्रम्। परिहरति—सत्यं न विधिर्विध्युद्देशः; किन्तु लक्षणया विधिशब्देन विध्युद्देश उच्यते अवयवेन समुदायस्य लक्षणा। किमिति लक्षणा? उत्तरम्—एकवाक्यत्वादिति वचनात्। किमेवाक्यत्वं विधिना सह नोपपद्यतेऽर्थवादानाम्, येनानुपपत्त्या लक्षणया प्रतीयते। विधिनैव हि सर्वस्यैकवाक्यत्वम् अतः श्रौत एव सम्बन्ध उपपद्यते। उत्तरम्—सत्यं विधिनैव सर्वस्यैकवाक्यत्वं कर्तव्यतयाऽन्वयो यस्य। यस्य कार्यार्थत्वं तस्य विधिनैकवाक्यत्वं यथा विषयनियोज्यादिपदानाम्। न च स्तुतेः कर्तव्यताऽवसीयते। न च स्तुतिपदानि कार्यमर्थं प्रतिपादयन्ति। किं[1] तर्हि? स्तुतिपदानां स्तुत्येन वाय्वादिना सह सम्बन्धो न विधिना। किं विध्यर्थो न स्तुत्यर्हः? येन स्तुत्येन सह एकवाक्यत्वेपि विधिनैकवाक्यता नास्ति। उत्तरम्—न ब्रूमो विध्यर्थो न स्तुत्य इति। क्षेपिष्ठादयस्तु गुणाः विधेये स्तुतिमुत्पादयन्ति। [2]त एवातदर्थानामित्याक्षिप्ताः। येषामेवार्थवादा विधेये स्तुतिमुत्पादयन्ति विध्युद्देशानां त एवात्राक्षिप्ताः। आक्षेपसमाधानार्थं चैतत्सूत्रम्। तस्मात् आक्षिप्तविध्युद्देशसम्बन्ध्यर्थवादैकवाक्यताप्रदर्शन-

---

1. C कथं तर्हि। 2. B अत एव।

नैकवाक्यत्वात् प्रमाणं; 'भूतिकामः'—इत्येवमन्तो विध्युद्देशः, तेनैकवाक्यभूतो 'वायुर्वै क्षेपिष्ठा देवता'—इत्येवमादिः। 'कथमेकवाक्यभावः ?'। पदानां साकाङ्क्षत्वाद्विधेः स्तुतेश्चैकवाक्यत्वं भवति,—भूतिकाम आलभेत, (कस्मात् ?) यतो वायुः क्षेपिष्ठेति।

---

युक्ता लक्षणा। अत एव च "कथमेकवाक्यत्वं" इति प्रश्नः। किमिदं ? इदमिदम् विध्युद्देशेनैकवाक्यत्वम्। विध्युद्देशस्य च तदनेकवाक्यत्वाच्च न कर्तव्यतावगमः अकर्तव्यतावगमे च नास्ति प्रामाण्यम्। अतोऽयं प्रश्नः कथमेकवाक्यत्वमिति।

इतर आह—उक्तं विध्युद्देशेनेति। ननु चैवं सिद्धार्थता प्राप्नोति, न कार्यार्थता। किमिदं सिद्धार्थता न कार्यार्थतेति ? उक्तम्—न कार्यार्थतया प्रतीयत इति। कुतस्तर्हि कार्यार्थतावगतिः

---

परत्वात् सूत्रस्य युक्ता लक्षणा। यत एव साक्षाद्विधिनैकवाक्यत्वं नास्ति, अत एव कथमेकवाक्यत्वमिति प्रश्नः। किमिदं पृष्टं कथमेकवाक्यत्वमित्यनेन ? उत्तरम्—इदमिदम्-विध्युद्देशेनैकवाक्यत्वं न विधिनैकवाक्यत्वम्। विध्युद्देशस्यैव, यथा विध्युद्देशस्य विधिनैकवाक्यत्वं तथा स्तुतेर्नास्ति तदनेकवाक्यत्वाच्च न कर्तव्यतावगमः ; अकर्तव्यतावगमे च नास्ति प्रामाण्यम्, अकर्तव्यस्यार्थस्य हेतुभावेन सम्बन्धात्। अतोऽयं प्रश्नः कथमेकवाक्यभाव इति। कथं विध्युद्देशेनैकवाक्यत्वं यावता विध्युद्देशेनैकवाक्यत्वेऽभ्युपगम्यमानेऽप्रामाण्यापत्तिः तस्माद्वरं विधिनैकवाक्यत्वमभ्युपगम्यताम्। इतर आह—उक्तं विध्युद्देशेनैकवाक्यत्वमिति। ननु चैवं विध्युद्देशेनैकवाक्यत्वे सति सिद्धार्थता प्राप्नोति न कार्यार्थता। किमिदं सिद्धार्थता न कार्यार्थतेति ? उत्तरम्—उक्तम् न कार्यार्थतया प्रतीयत इति। स्तुतिः कार्यार्थतया न प्रतीयत इति। कुतस्तर्हि कार्यार्थतावगतिः ? उत्तरम्—

**नायमभिसंबन्धो विवक्षितः,—'भूतिकामेनालब्धव्यमिति। कथं तर्हि आलभेत ?। यतः, ततो भूतिः'—इति, भिन्नाविमावर्थौ, उभयाभिधाने वाक्यम्भिद्येत ॥**

---

विध्युद्देशादिति ब्रूमः। मैवं वोचः, नायमभिसंबन्धो विवक्षितः आलभेत भूतिकाम इति। आलभेत यतस्ततो भूतिः—इति। किमनेनोक्तम् ? न विध्युद्देशात् कार्यावगतिः। किं तर्हि ? सस्तुतिपदादिति वदामः। तदुक्तं— **भिन्नाविमावर्थाविति**। कोऽभिप्रायः ? अयमभिप्रायः—स्याद्विध्युद्देशादेव कार्यावगतिः यद्येकरूपावगतिः स्यात् सस्तुतिपदात् केवलपदाच्च। इह त्वन्यरूपैवावसीयते। आलभेत भूतिकाम इत्येकोऽवगत्युपायः। आलभेत यतः ततो भूतिरित्ययमन्यः। अयमपि चेद्विधात् कथमानर्थक्यमतदर्थानाम्।

---

**विध्युद्देशादिति ब्रूमः। मैवं वोचः** विध्युद्देशात् कार्यार्थतावगतिरिति, **यस्मान्नायमभिसम्बन्धः - आलभेत भूतिकाम इति। कथं तर्हि ? आलभेत यतस्ततो भूतिरिति। किमनेनोक्तम् ?** उत्तरम्—न विध्युद्देशात् केवलात् कार्यावगतिः। **किं तर्हि ?** [1]**सस्तुतिपदादिति।** इदमनेनोक्तम्-यदि हि आलभेत भूतिकाम इति सम्बन्धः स्यात् ततः केवलविध्युद्देशात् कार्यावगतिः स्यात्। यदा तु आलभेत यतस्ततो भूतिरिति तदा सस्तुतिकात् कार्यावगतिरित्युक्तं भवति। 'भिन्नाविमावर्थौ'विति भाष्यम्। तत्रार्थभेदप्रदर्शने **कोऽभिप्रायः।** उत्तरम्—अयमभिप्रायः। **स्याद्विध्युद्देशात्** केवलादेवावगतिः **यद्येकरूपैवावगतिः स्यात् सस्तुतिकात् केवलाच्च। इयन्त्वन्यरूपैवावसीयते** यतश्चावगतिभेदः। अतोऽवगत्युपायावपि भिन्नौ। तदाह-**आलभेत भूतिकाम इत्येकोऽवगत्युपायः। आलभेत यतस्ततो भूतिरित्ययमन्य इति। अयमपि चेद्विद्यते कथमानर्थक्यमर्थ-**

1. B & Cसस्तुतिकादिति।

किमर्था स्तुतिरिति चेत्। कथं रोचेत ?, नोऽनुष्ठीयेत !—इति। ननु प्राक् स्तुतिवचनात्, अनुष्ठानं भूतिकामान्तात्सिद्धं, स्तुतिवचनमनर्थकं !। न हि; यदा स्तुतिपदाऽसन्निधानं, तदा पूर्वेणैव विधिः; यदा स्तुतिपदसंबन्धः, न तदा भूतिकाम स्यालम्भो विधीयते। यथा, पटो भवति—इति, पट उत्पद्यते इत्यर्थः, निराकाङ्क्षं च पदद्वयं। यदा च तस्मिन्नेव 'रक्तः'—इत्यपरं श्रूयते तदा रागसंबन्धो भवतीत्यर्थः, भवति च रक्तं प्रत्याकाङ्क्षा। एवं यदा न स्तुतिपदानि, विधिशब्देनैव तदा प्ररोचना, यदा स्तुतिवचनं, तदा स्तवनेन॥ ननु एवं सति, किं स्तुतिवचनेन ?, यस्मिन् सति अविधायकं, मा भूत् तत्,

---

किमर्था स्तुतिरिति चेत्? इति तुल्ये कार्यावगमे किमुपायान्तराश्रयणेन। कथं चोपायान्तरत्वं? कस्यात्रोपालम्भः, केन वेदमाश्रितं

---

वादपदानाम्। तान्यपि कार्यावगत्युपयोगेनैवार्थवन्ति। 'किमर्था स्तुतिरिति चेत' इति भाष्यमनुभाष्य व्याचष्टे—**तुल्ये कार्यावगमे किमुयान्तराश्रयणेन**। यदि विध्युद्देशात् केवलाच्च कार्यावगतिः किमर्थमुपायान्तराश्रयणम्; **कथं चोपायान्तरत्वम्**। अस्यार्थः—यद्यप्यर्थवादपदानि सन्ति तथापि तद्व्यतिरेकेणापि किमिति विध्युद्देशमात्रमेव कार्यावगतावुपायो न भवतीति। अनेन ' ननु च प्राक्स्तुतिवचनात् ' इति भाष्यं व्याख्यातम्। प्रथमं चोद्यं परिहरति—**कस्यात्रोपालम्भः** वेदे वक्तुरभावात् कस्योपालम्भः। वक्ता ह्येवमुपालभ्यते लघूपाये सम्भवति किमर्थं गुरूपायं प्रणयसीति तस्माद्वक्तुरभावान्निर्विषयोऽयमुपालम्भः। ननु माभूद्वक्तुरुपालम्भः स्वीकर्तुस्तु भविष्यतीत्यत्राह—**केन वेदमाश्रितम्**। न स्वीकर्तुरुपालम्भः उभयसम्भवे हि लघूपायपरित्यागेन गुरूपायपरिग्रहे स्वीकर्ता उपालभ्यते। गुर्वेकोपायसम्भवे तु तन्मात्रपरिग्रहे क उपालम्भः **केन वेदमाश्रितम्**। ईदृशमेवे-

तदभावेऽपि पूर्वविधिनैव प्ररोचयिष्यते'—इति। सत्यं, विनाऽपि तेन सिध्येत् प्ररोचनं; अस्ति तु तत्, तस्मिन् विद्यमाने योऽर्थो वाक्यस्य, सोऽवगम्यते स्तुतिप्रयोजनं, तयोः तस्मिन् अविद्यमाने विधिना प्ररोचनमिति॥

ननु सत्स्वपि स्तुतिपदेषु पूर्वस्य विधिस्वरूपत्वाद्विधिरभिप्रेतः स्यात् !, न विवक्ष्येत स्तुतिपदसंबन्धः !;। 'आह—स्तुतिपदानि ह्यनर्थकान्यभविष्यन् साकाङ्क्षाणि'। भवन्त्वनर्थकानि इति चेत्। न, गम्यमानेऽर्थे अविवक्षितार्थानि भवितुमर्हन्ति। योऽसौ विध्युद्देशः, स शक्नोति निरपेक्षोऽर्थं विधातुं, शक्नोति

---

केन चोत्पादितम् किन्तु शब्दादेवावगम्यते। अनेकपदाभिधाने हि न पदान्तरनिरपेक्षादर्थावगतिर्दृष्टा। तथा दर्शितम्-"पटो भवति रक्तः पटो भवति" इति। न रक्तपदनिरपेक्षात पदद्वयादवगतिः दृश्यते। सैषा औत्पत्तिकी शक्तिरिति॥

---

दमस्तीत्यर्थः। द्वितीयं चोद्यं परिहरति—केन[1] चोत्पादितम् इदमुपायान्तरत्वं न केनचिदुपपादितम्। वेदादेवेदमवगम्यते, वेदमवलोक्य[2] सार्थवादपदस्यैव विध्युद्देशस्य उपायत्वमवगम्यते। कुत इत्यत्राह—अनेकपदाभिधाने हि न पदान्तरनिरपेक्षात्पदादर्थावगतिर्दृष्टा यथा दर्शितम्—पटोभवति रक्तः पटो भवतीति न रक्तपदनिरपेक्षात् पदद्वयादवगतिर्दृश्यते। यथा पटोभवतीति पदद्वयस्यैवावगमकत्वं न तथा रक्तः पटो भवतीत्यत्र। सैषा पदानां औत्पत्तिकी शक्तिः यथा प्रयुक्तानां संभूयकारिता नाम। अत्र भाष्यम्[3] "नन्वेवं सति किं स्तुतिवचनेन" इति। तस्यार्थः—यदि प्रयोजनविशेषं विनापि सन्त्यर्थवादपदानीत्येतावता उपायान्तरत्वं तदा अर्थवादपदान्येव माभूवन्; तैर्विना केवल एव विध्युद्देशो लघुरुपायोऽस्त्विति।

---

1. केन वेदमुत्पादितम्—मा 2. C वेदमेवालोच्य 3. P. 21.

च स्तुतिपदानां वाक्यशेषीभवितुं, प्रत्यक्षश्च वाक्यशेषभावः। अतोऽस्माद्विधेः स्तुतिमवगच्छामः॥

ननु 'निरपेक्षादपि विधिमवगमिष्यामः'। भवतु एवं, नैवं सति कश्चिद्विरोधः; किन्तु अशक्यः स्तुतिपदसंबन्धे सति विध्यर्थो विवक्षितुं; वाक्यं हि संबन्धस्य विधायकं, द्वौ चेत्संबाधौ विदध्यात,—भूतिकाम आलभेत, (१) आलम्भेन च एष गुणो भविष्यति (२) इति; भिद्येत तर्ह्येवं सति वाक्यं। ॥ अथ यदुक्तं (३६। ६) 'न क्रिया गम्यते, न तत्सम्बद्धं वा किञ्चित्'— इति। 'स्तुत्यर्थेन विधीनां स्युः,' स्तुतिशब्दाः स्तुवन्तः क्रियां प्ररोचयमाणाः अनुष्ठातॄणामुपकरिष्यन्ति क्रियायाः। एव मिमानि सर्वाण्येव पदानि कश्चिदर्थं स्तुवन्ति विदधति।

---

ननु च विनापि तेन सिध्येदिति पुनरानर्थक्यमेव चोदितम्। सत्यं वक्तुरयमुपालंभः न प्रतिपत्तुः; न च तैर्विना प्रतिपत्तिरित्युक्तम्; प्रतिपत्तारश्च वयम् न वक्तारः, वेदे वक्ता नास्तीत्युक्तम्।

---

[1]इमं भाष्यमर्थतोऽनुभाष्य व्याचष्टे—ननु च विनापि तेन सिद्ध्येदिति पुनरप्यानर्थक्यमेव चोदितम्। 'सत्यम्' इति परिहारभाष्यं प्रतीकेनानुभाषते। अस्यार्थं व्याचष्टे-वक्तुरयमुपालम्भः माभूवन्नर्थवादपदानीति न पुनः प्रतिपत्तुः[2]। प्रतिपत्ता हि इत्थमुपालम्भ्यो भवति यद्यर्थवादपदैर्विनापि प्रतीतौ सिद्ध्यन्त्यां अर्थवादपदान्याश्रयेत। न च तैर्विना प्रतिपत्तिरस्तीत्युक्तम्। प्रतिपत्तारश्च वयं न वक्तारः वेदे च वक्ता नास्तीत्येतदप्युक्तम्।

---

(1) B इममर्थभाष्यस्य (2) प्रतिवक्तुः

अतः प्रमाणं एवंजातीयकानि 'वायुर्वैक्षेपिष्ठा देवता—इति ॥ (सि०) ॥

---

ननु च सत्स्वपि स्तुतिपदेषु पूर्वस्य विधिसरूपत्त्वात् विधिरभिप्रेतः स्यात्; न विवक्ष्येत स्तुतिपदसंबन्ध इति किमत्र चोदितम् ? । इदमत्र चोदितम् । किमवान्तरवाक्यान्वयो नास्ति पदार्थान्वयवादिनो हि नैवेदमर्थान्तरम् ।

अनर्थान्तरत्वे च सिद्धैव । अवान्तरान्वयात् कार्यावगतिर्नसिद्ध्यति । सकलपदार्थावगतौ सत्यां कथमवान्तरान्वयस्य निमित्तता शक्यते कल्पयितुम् । तस्मात् सकलपदपदार्थान्वयनिमित्तैव कार्यावगतिः

---

ननु च सत्स्वपि स्तुतिपदेषु पूर्वस्य विधिरूपत्वात् विधिरभिप्रेतः स्यात् ; न विवक्षितः स्तुतिपदसम्बन्ध इति किमत्र चोदितम् ? उत्तरम्-[1]इदमत्र चोदितम् । किमवान्तरान्वयो नास्ति यावताऽस्त्येवावान्तरान्वयः विध्युद्देशपदानां परस्परम् । पदार्थान्वयवादिनो हि नैवेदमर्थान्तरम् । यो हि पदार्थान्वयरूपं वाक्यार्थं वदति तस्य नैवार्थान्तरभूतो वाक्यार्थः । **न चेदमर्थान्तरम् अनर्थान्तरत्वे च सिद्धैव अवान्तरान्वयात्** विध्युद्देशगतपदनिबन्धनात् कार्यावगतिः । सिद्धायाश्च तस्यां किं अर्थवादपदाश्रयणेन ? इदानीं सिद्धान्तभाष्यं 'न स्तुतिपदानि ह्यनर्थकानि' इत्यादि व्याचष्टे—**अवान्तरान्वयात् कार्यावगतिर्न सिद्ध्यति '** सकलपदार्थान्वयात् **कार्यावगतौ सत्यां कथमवान्तरान्वयस्य निमित्तता शक्यते कल्पयितुम् । तस्मात्सकलपदार्थान्वयनिमित्तैवेयं कार्यावगतिः**

---

(1) परस्परान्वयवादिनो-मा (2) C इदमिदं

न अवान्तरान्वयनिमित्ता भवितुमर्हति ।

[1]ननु निरपेक्षाद्विधिमवगमिष्याम इति । किमिदमनुक्तमुक्तम् । इदमनुक्तमुक्तम् । नन्ववान्तरान्वयस्यापि निमित्तत्वमभ्युपगतं भवता । बाढमभ्युपगतम् । को दोषः ? नन्वयं दोषः । अत्रापि तदपह्नोतुं न शक्यते । सत्यं, प्रतीयमानं ह्यपन्होतुं न शक्यते न पुनरप्रतीयमानमपि । न चात्रावगतिद्वयमस्ति वाक्यभेदप्रसङ्गादित्युक्तम् । अथ यदुक्तम् न च क्रियाऽवगम्यते, क्रियासंबद्धं वा किंचिदिति । ननु कर्तव्यता स्तुतिपदान्न गम्यते । कर्तव्यतां च वेदः प्रतिपादयतीत्यवैदिकत्वम् ।

---

न विध्युद्देशमात्रनिमित्ता, तदाह—**नात्रान्तरान्वयनिमित्ता भवितुमर्हतीति**। ननु निरपेक्षादपि विधिमवगमिष्याम" इति भाष्यमाक्षिपति—**किमिदमनुक्तमुक्तम्**? यावता पूर्वभाष्येणैवैतदुक्तम् । अवान्तरान्वयात् कार्यावगतिः । उत्तरम्—**इदमनुक्तमुक्तम**। **नन्ववान्तरान्वयस्यापि निमित्तत्वमभ्युपगतम्**—यत्र केवलानि विध्युद्देशपदानि प्रयुज्यन्ते तत्र तेषां तावत् निमित्तत्वमभ्युपगतम् । राद्धान्ती पृच्छति—**बाढमभ्युपगतम्; को दोषः?** इति । आक्षेप्ताऽऽह—**नन्वयं दोषः, अत्रापि** सार्थवादकविध्युद्देशप्रयोगेपि केवलस्य निमित्तत्वं **प्रतीयमानं न शक्यतेऽपह्नोतुम्**। 'भवतु नैवं सति' इत्यादिराद्धान्तभाष्यं व्याचष्टे—**सत्यं प्रतीयमानं न शक्यतेऽपह्नोतुम्; न पुनरप्रतीयमानमपि। न चात्रावगतिद्वयमस्ति वाक्यभेदप्रसङ्गादित्युक्तम्**। अस्यार्थः—यावन्ति पदानि प्रयुज्यन्ते तावतां सम्भूयकारित्वं स्थिते च सम्भूयकारित्वेऽवान्तरावगतिरित्थं भवेत् । यदि द्वे वाक्ये स्यातां एकं केवलं विध्युद्देशात्मकं, अपरञ्च सार्थवादकमिति । "अथ यदुक्तं न क्रियाऽवगम्यते, क्रियासम्बन्धं वा किञ्चित् इति" भाष्यम्-तत् पुनरुक्तमिव मन्वानो व्याचष्टे—**ननु च कर्तव्यता स्तुतिपदात् नावगम्यते; कर्तव्यतां च वेदः प्रतिपादयतीत्यवैदिकत्वम्**। अस्यार्थः यः

(1) Page 23.

केन चोक्तं वैदिकत्वं ? वेद एवायं, यतो हि कर्तव्यताऽवगम्यते स वेदः अस्माच्च कर्तव्यतावगम्यत इत्युक्तम्। प्रामाण्यस्य चायमाक्षेपः कृतः। स चायं प्रतिसमाहितः। किमत्र वैदिकत्वेन।

नन्वेवं सति विध्युद्देशस्याप्यवैदिकत्वं, तदपि हि प्रतिपत्तौ निमित्तम्, असावपि वेद एव। बाढं निमित्ततया, न तु नैमित्तिकतया, स्तुतिपदार्थस्तु निमित्तमेवेति विशेषः॥

---

कार्यमर्थं प्रतिपादयति स वेदः। स्तुतिपदानि तु न कार्यमर्थं प्रतिपादयन्ति, अतो न तेषां वैदिकत्वम्। राद्धान्तमाह—**केन चोक्तं वैदिकत्वम्?** वेदसंबन्धीति वैदिकमुच्यते,—अर्थवादपदानि च स्वत एव वेदरूपत्वान्न वेदसंबन्धीनि। तदाह—**वेद एवायं** न वैदिक इति। **यतो हि कर्तव्यताऽवगम्यते स वेदः अस्माच्च कर्तव्यताऽवगम्यते** सार्थवादकादेव वाक्यात् कार्यावगतिः इत्युक्तम्। परिहारान्तरमाह—**प्रामाण्यस्य** चार्थवादपदैकवाक्यत्वात् **आक्षेपः कृतः; स चायं प्रतिसमाहितः। किमत्र वैदिकत्वेन?** भवतु वा वैदिकत्वं, मा[2]भूद्वा, सर्वथा अर्थवादपदैकवाक्यत्वेनाप्रामाण्यं नास्तीत्येतावन्नः साध्यम्। एतच्च साधितम्। **नन्वेवं सति** यस्मात्कर्तव्यतावगम्यते स वेदः, न तस्य वैदिकत्वमिति, **विध्युद्देशस्यापि** तर्हि **अवैदिकत्वम्। तदपि हि प्रतिपत्तौ निमित्तम्।** तेन असावपि हि वेद एव। परिहरति-बाढं, कार्यप्रतिपत्तिनिमित्ततया वेदत्वं न नैमित्तिकतया। विध्युद्देशस्यापि साक्षात्कार्यरूपोऽर्थः, स्तुतिपदानाञ्च सिद्धरूपः। तेन विध्युद्देशस्यार्थो नैमित्तिकः निमित्तप्रयोजनत्वात्। तेनार्थद्वारेण विध्युद्देशपदानि नैमित्तिकानि। तेन च रूपेण वैदिकानि, तस्यार्थस्य वेदप्रमेयत्वात्। स्तुतिपदानि तु स्तुतिनिमित्तमेव

---

(1) चोक्तं मू. पा. (2) B मावाभूत्

तुल्यं च साम्प्रदायिकम् ॥ ८ ॥

अथोच्येत,—'प्राक् स्तुतिपदेभ्यः, निराकाङ्क्षाणि विधायकानि, विधिस्वरूपत्वात्, स्तुतिपदानि तु प्रमादपाठः' इति। तन्न, एवं अर्थावगमात्, 'तुल्यं च साम्प्रदायिकं,' सम्प्रदायः (प्रयोजनं) येषां धर्माणां, सर्वे ते विधिपदानां अर्थवादपदानां च तुल्याः;—अध्यायानध्यायतें, गुरुमुखात्प्रतिपत्तिः, शिष्योपाध्यायता च सर्वस्मिन्नेवंजातीयके अविघ्नार्थे तुल्यमाद्रियन्ते स्मरणं च दृष्टम्। अतो न प्रमादपाठः इति ॥

अप्राप्ता चानुपपत्तिः प्रयोगे हि विरोधः स्याच्छब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्येत ॥ ९ ॥

अपि च, या एषा अनुपपत्तिरुक्ता "शास्त्रदृष्टविरोधात्"—इत्येवमाद्या, सा 'सोऽरोदीत्'—इत्येवमादिषु न

---

तुल्यं च सांप्रदायिकम् ॥ कदाचिदियमाशङ्का स्यात् विध्युद्देशस्तुत्यर्थं बालानां प्रवृत्तये प्रक्षिप्तान्यर्थवादपदानीति। तदयुक्तम्। तुल्यं च सांप्रदायिकम्। नैव कश्चित् प्रक्षेपमर्थवादपदानां स्मरति।

---

[1]स्वयमप्रमेयत्वादिति विशेषः। तेन स्तुतिपदानां वेदत्वमेव। तुल्यं तु ॥ 'तुल्यं तु सांप्रदायिकं' इति व्याख्येयानुभाषणं व्याख्यातुम्। निराकार्यमाशङ्कते—कदाचित् कस्यचिदाशङ्का स्यात्। विध्युद्देशस्तुत्यर्थं बालानां प्रवृत्तये[2] प्रक्षिप्तान्यर्थवादपदानीति। संप्रति सूत्रार्थं व्याचष्टे—तदयुक्तम्। 'तुल्यं च सांप्रदायिक'मिति नैव कश्चित्प्रक्षेपमर्थवादपदानां स्मरति विध्युद्देशपदानामिव। यथा विध्युद्देशपदानां पौरुषेयत्वं न स्मर्यते

(1) A स्वयमेव प्रमेयत्वात् (2) प्रतिपत्तये-टी. पा.

**प्राप्नोति। कुतः?। प्रयोगे हि स्तेयादीनामुच्यमाने विरोधः स्यात्, शब्दार्थस्तु अप्रयोगभूतः, तस्मादुपपद्येत 'स्तेनं मनः, अनृतवादिनी वाक्'—इति॥**

---

विध्युद्देशानामिवावगत्यन्तरं नास्तीत्युक्तम्। एवं चेद्रोदनानुपपत्तिः परिहृता। प्रत्युत कार्यावगतावयं दोषः न पुनः सिद्धार्थावगतौ॥

ननु चैवं सति प्रमाणमात्रपर्यवसायिषु अर्थवादपदेषु मृग्यं प्रमाणान्तरं स्तुत्यवगतौ, न च तदस्ति यथा अवका विधीयन्ते आपश्च स्तूयन्ते।

---

तथाऽर्थवादपदानामपि। यदि हि स्मर्येत विध्युद्देशाध्ययन इवाध्येतॄणामादरो न स्यात्। किञ्चार्थवादपदानि [1]विध्युद्देशपदैः सह प्रतिपत्त्यन्विताभिधायीन्यपि न भवेयुः तदाऽनन्वितत्वाच्च बालोन्मत्तादिप्रणीतानि भवेयुः। न चैतदस्ति, तदाह—**अवगत्यन्तरं च नास्तीत्युक्तम्।** सार्थवादकात् वाक्यात् सस्तुतिकात्कार्यावगतिः। **एवं चेत् रोदनानुपपत्तिः परिहृता।** अस्यार्थः-यदा सार्थवादकमपि वाक्यं कार्ये एव प्रमाणं, अर्थवादस्तु प्रमाणान्तरप्रतीतं प्राशस्त्यमनुवदति तदाऽर्थवादपदानां प्राशस्त्यमात्रपरत्वात् यथाश्रुतार्थानुपपत्तिरपि न दोषाय। **प्रत्युत कार्यावगतावयं दोषः। न पुनः सिद्धार्थावगतौ।** कार्यत्वे हि यथाश्रुतार्थपरिग्रहे प्रमाणान्तरविरोधादिको दोषः, न सिद्धार्थावग[2]तौ, अतत्परत्वात्।

**ननु चैवमपि प्रमाणमात्रपर्यवसायिषु अर्थवादपदेषु मृग्यं प्रमाणान्तरं स्तुत्यवगतौ।** अस्यार्थः—स्तुतावर्थवादपदानामन्वय इत्यत्रापि प्रमाणान्तरं मृग्यम्। **न च तदस्ति; यथा अवका विधीयन्ते आपश्च स्तूयन्ते।** ततश्च व्यधिकरणतया स्तुतेः स्तावकतयाऽन्वय इति न शक्यते वदितुम्। एवञ्च यदा स्तुत्याऽन्वयोऽवगम्यते स्तुतिपदानां तदा अरुदत्यरोदीदिति शब्दः रोदनवादी हि गौणः यदा स्तुत्याऽन्वयो नास्ति तदा मुख्य एव रोदनवादः। तदा

---

(1) C विध्युद्देशपदैः सह (2) C सिद्धावगतौ

गुणवादस्तु ॥ १० ॥

'यदुक्तं—' विधेयस्य प्ररोचनार्था स्तुतिः' इति; तदिह कथमवकल्प्येत ?, यत्रान्यद्विधेयं, अन्यच्च स्तूयते, यथा, 'वेतसशाखयाऽवकाभिश्चाग्निं विकर्षति'—इति वेतसावके विधीयेते, आपश्च स्तूयन्ते,—'आपो वै शान्ताः'—इति'। तदुच्यते, —'गुणवादस्तु,' गौण एष वादो भवति, यत संबन्धिनि स्तोतव्ये संबन्ध्यन्तरं स्तूयते। अभिजनो ह्येष वेतसावकयोः, ततस्ते जाते। अभिजनसंस्तवेन चाभिजातः स्तुतो भवति। यथा, अश्मकाभिजनो देवदत्तोऽश्मकेषु स्तूयमानेषु स्तुतमात्मानं मन्यते, एवमत्रापि द्रष्टव्यम् ॥

---

एवं चारुदति रोदितीति शब्दः। एवं सर्वत्र स्तेनादिषु। तस्मात् पुनरप्यनुपपत्तिरेव ॥ नेयमनुपपत्तिः। विध्यर्थैनैकवाक्यत्वे सति यथा प्रमाणान्तरेण संबन्धोऽवगम्यते तथा व्याख्येयम्। तदुक्तम् —गुणवादस्त्विति। हेतुप्रचयपरिहारस्तु हेतुवदेवावगन्तव्यः ॥

---

अरुदति 'अरोदीदि'ति प्रमाणान्तरविरोधादनुपपत्तिरेव। एवं सर्वत्र स्तेनादिषु। तस्मात् पुनरप्यनुपपत्तिरेव। नेयमनुपपत्तिः विध्यर्थैनैकवाक्यत्वे सति यथा प्रमाणान्तरेण सम्बन्धोऽवगम्यते तथैव व्याख्येयम्। अस्यार्थः-यावत्किञ्चित्पदजातं श्रूयते तस्य सर्वस्य विध्यन्विातार्थप्रतिपादकत्वम्। सार्थवादके च वाक्ये अर्थवादपदानामपि विधिपरत्वात् विध्यर्थैनैकवाक्यत्वे सिद्धे यथैकवाक्यत्वमुपपद्यते स्तुत्या निन्दया गौण्या लाक्षणिक्या वा वृत्त्या तथा व्याख्येयम्। तदुक्तं गुणवादस्त्विति। हेतुप्रचयपरिहारस्तु हेतुवदेवावगन्तव्यः। यथा हेतवो भाष्यतोऽवगताः तथा हेतुप्रचयपरिहारोऽपि भाष्यत एवावगन्तव्यः।

अथ 'सोऽरोदीत्'—इति कस्य विधेः शेषः ?'। 'तस्माद्बर्हिषि रजतं न देयं—इत्यस्य। कुतः ?। साकाङ्क्षत्वात्पदानां, 'सोऽरोदीत्, यदरोदीत्, तत्, रुद्रस्य रुद्रत्वमित्यत्र सः—इति प्रकृतापेक्षः, तत्प्रत्ययात्। 'तस्य यदश्रु अशीयत'—इति 'तस्य'—इति पूर्वप्रकृतापेक्ष एव। उपपत्तिश्चोपरितनस्य, यो बर्हिषि रजतं दद्यात्, पुराऽस्य संवत्सरात्, गृहे रोदनं भवतीत्यस्य हेतुत्वेनायं प्रतिनिर्दिश्यते,—'तस्माद्बर्हिषि रजतं न देयं'—इति; एवं सर्वाणि साकाङ्क्षाणि॥ 'कथं विधेरुपकुर्वन्तीति ?'। गुणवादेन,—रोदनप्रभवं रजतं बर्हिषि ददतो रोदनमापद्यते। तत् प्रतिषेधस्य गुणः; यत् अरोदनमिति॥ 'कथं पुनररुदति 'अरोदीत्'—इति भवति ? (१)। कथं वा अनश्रुप्रभवे रजतेऽश्रुप्रभवमिति वचनं ? (२)। पुराऽस्य संवत्सरादसति रोदने, कथं रोदनं भवतीति ? (३)'। तदुच्यते,—'गुणवादस्तु,' गौणा एते शब्दाः,—रुद्रः—इति रोदननिमित्तस्य शब्दस्य दर्शनात् 'यदरोदीत्' इत्युच्यते (१)। वर्णसारूप्यात् निन्दन् अनश्रुप्रभवमप्यश्रुप्रभवमित्याह (२)। निन्दन्नेव च धनत्यागे दुःखदर्शनात्पुराऽस्य संवत्सरात् गृहे रोदनं भवतीत्याह (३)॥

तथा, 'यः प्रजाकामः पशुकामो वा स्यात्, स एतं प्राजापत्यं तूपरमालभेत' इति, आकाङ्क्षितत्वादस्य विधेः शेषोऽयं,—'स आत्मनो वपामुदक्खिदत्'—इति। 'कथं गुणवादः ? इत्थं नाम न आसन् पशवः, यत्, आत्मनो वपामुदक्खिददिति'। एतच्च कर्मणः सामर्थ्यं, यत्, अग्नौ प्रहृतमात्रायां वपायामजस्तूपर उदगात्, इत्थं बहवः पशवो भवन्तीति। 'कथं पुनरनुत्खिन्नायां वपायां प्रजापतिरात्मनो वपामुदक्खिदत्—इत्याह ?'।

उच्यते,—असद्वृत्तान्तान्वाख्यानं स्तुत्यर्थेन, प्रशंसाया गम्यमानत्वात्। इहान्वाख्याने वर्त्तमाने, द्वयं निष्पद्यते,—यच्च वृत्तान्तज्ञानं, (१) यच्च कस्मिंश्चित्प्ररोचना, द्वेषो वा (२)। तत्र वृत्तान्तान्वाख्यानं न प्रवर्त्तकं, न निवर्त्तकं च इति प्रयोजनाभावात् अनर्थकं—इति अविवक्षितं; प्ररोचनया तु प्रवर्त्तते, द्वेषात् निवर्त्तते इति तयोर्विवक्षा। वृत्तान्तान्वाख्यानेऽपि विधीयमाने आदिमत्तादोषो वेदस्य प्रसज्येत!। 'कथं पुनरिदं निरालम्बनमन्वाख्यायते? इति। उच्यते,—नित्यः कश्चिदर्थः प्रजापतिः स्यात्,—वायुः, (१) आकाशः, (२) आदित्यो वा (३)। 'स आत्मनो वपामुदक्खिदत्'—इति वृष्टिं (१) वायुं (२) रश्मिं वा (३); तामग्नौ प्रागृह्णात्, वैद्युते (१) आर्वीसे (२) लौकिके वा (३)। ततोऽजइत्यन्नं, (१) बीजं,' (२) वीरुत् (३) वा तमालभ्य (तमुपयुज्य) प्रजाः पशून्प्राप्नोतीति गौणाः शब्दाः॥

'आदित्यः प्रायणीयश्चरुरादित्य उदयनीयश्चरुः'—इत्यस्य विधेः शेषो 'देवा वै देवयजनमध्यवसाय दिशो न प्राजानन्'—इति, आकाङ्क्षितत्वात्। सर्वव्यामोहानामादित्यश्चरुर्नाशयिता, अपि दिङ्मोहस्येति स्तुतिः। 'कथमसति दिङ्मोहे दिङ्मोहशब्दः इति। उच्यते,—अप्राकृतस्य बहोः कर्मसमूहस्योपस्थितत्वात् गौणो मोहशब्दोऽवधारणावकाशदानादिभिर्ज्ञापयतीति गौणता।

रूपात्प्रायात॥ ११॥

हिरण्यं हस्ते भवति, अथ गृह्णाति' इति साकाङ्क्षत्वादस्य विधेः शेषः—'स्तेनं मनोऽनृतवादिनी वाक्'—इति। निन्दावचनं

हिरण्यस्तुत्यर्थेन, यथा, किं ऋषिणा, देवदत्त एव भोजयितव्यः।
'कथं पुनरस्तेनं मनः निन्दितुमपि स्तेनशब्देनोच्यते, वाचं चानृतवादिनीं अपि 'अनृतवादिनी'—इति ब्रूयात्?'। गुणवादस्तु 'रूपात,' यथा, स्तेनाः प्रच्छन्नरूपाः, एवं च मनः इति गौणः शब्दः। 'प्रायात्' च, अनृतवादिनी वागिति॥

दूरभूयस्त्वात् ॥ १२ ॥

दृष्टविरोधे उदाहरणं, (४०।१७) 'तस्माद्धूम एवाग्नेर्दिवा ददृशे, नार्चिः, तस्मादर्चिरेवाग्नेर्नक्तं ददृशे, न धूमः'—इति 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा-इति सायं जुहोति, सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा—इति प्रातः',—इति मिश्रलिङ्गमन्त्रयोर्विधानस्याकाङ्क्षितत्वाच्छेषः। उभयोर्देवतयोः सन्निधाने होमः—इति स्तुतेरुपपत्तिः। दूरभूयस्त्वात्,' धूमस्याग्नेश्चादर्शने गौणः शब्दः॥

स्त्र्यपराधात् कर्तुश्च पुत्रदर्शनम् ॥ १३ ॥

दृष्टविरोधे एव उदाहरणं 'न चैतद्विद्मः'—इति, तत्, 'प्रवरे प्रव्रियमाणे देवाः पितर इति ब्रूयात्' इत्याकाङ्क्षितत्वादस्य विधेः शेषः। अब्राह्मणोऽपि ब्राह्मणः प्रवरानुमन्त्रणेन स्यादिति स्तुतिः। दुर्ज्ञानत्वादज्ञानवचनं गौणं, स्त्र्यपराधेन कर्तुश्च पुत्रदर्शनेन, 'अप्रमत्ता रक्षत तन्तुमेनं'—इत्यादिना दुर्ज्ञानम्॥

आकालिकेप्सा ॥ १४ ॥

शास्त्रदृष्टविरोधे उदाहरणं 'को हि तद्वेद'—इति, 'दिक्ष्वतीकाशान् करोति'—इति साकाङ्क्षत्वादस्य विधेः शेषः।

प्रत्यक्षफलत्वेन स्तुतिः । अनवकॢप्तिवचनं विप्रकृष्टकालफल-त्वाद्गौणम् ॥

विद्याप्रशंसा ॥ १५ ॥

'तथा फलाभावात्' (२ पा० ३ सू०) इत्यत्र उदाहृतं—'शोभतेऽस्य मुखं'—इति गर्गत्रिरात्रविधेराकाङ्क्षितत्वाच्छेषः वेदानुमन्त्रणस्य च 'आऽस्य प्रजायां वाजी जायते'—इति शेषः। मुखशोभा वाजिमत्त्वं च गुणवचनत्वाद्गौणः शब्दः, शोभते इव शिष्यैरुद्वीक्ष्यमाणं; कुले सन्तताध्ययनश्रवणान्मेधावी जायते—इति स प्रतिग्रहादन्नं प्राप्नोतीति ॥

सर्वत्वमाधिकारिकम् ॥ १६ ॥

अन्यानर्थक्यवाक्ये उदाहरणं,—'पूर्णाहुत्या सर्वान् कामान-वाप्नोति'—इति, 'पूर्णाहुतिं जुहोति'—इत्याकाङ्क्षितत्वादस्य विधेः शेषः। 'य उ चैनमेवं वेद'—इति, 'तरति मृत्युं'—इत्यस्याकाङ्क्षितत्वाच्छेषः। फलवचनं स्तुतिः, सर्वकामफलस्य निमित्ते सर्वकामावाप्तिवचनं गौणम्। असर्वेषु सर्ववचनं अधि-कृतापेक्षम् ॥

फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषः स्यात् ॥ १७ ॥

अन्वारुह्य वचनमिदं यद्यपि विधिः, तथापि अर्थवत्ता परिमाणतः सारतो वा फलविशेषात् ॥

अन्त्ययोर्यथोक्तम् ॥ १८ ॥

'अभागिप्रतिषेधात्'—इत्यादावुदाहृतं—'न पृथिव्यामग्नि-श्चेतव्यो नान्तरिक्षे न दिवि'—इति, 'हिरण्यं निधाय चेतव्यं' —इत्याकांक्षितत्वात् अस्य विधेः शेषः। पृथिव्यादीनां निन्दा हिरण्यस्तुत्यर्था। असति प्रसङ्गे प्रतिषेधो नित्यानुवादः। यच्च अनित्यदर्शनं 'बबरः प्रावाहणिरकामयत'—इति, तत् परिहृतं, अर्थवादाक्षेपेण पुनरुत्थितं, इदानीमर्थवादप्रामाण्ये तेनैव परिहारेण परिहरिष्यते—इति ॥

विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् ॥ १९ ॥

---

विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम्। उक्तं भूतार्थानां कार्यार्थप्रतिपादकतया प्रामाण्यम्। यत्र पुनः कार्यतैवावगम्यते कार्यान्तरेण चैकवाक्यत्वं तत्र कथं ? यथा 'औदुंबरो यूपो भवति' इति। "ऊर्ग्वा उदुंबर उर्क् पशवः ऊर्जैवास्मा ऊर्जं पशूनाप्नोति ऊर्जोऽवरुध्यै" इति यूपोदुंबरयोः साध्यसाधनताऽवगम्यते, पशूदुंबरयोरपि। गम्यते च एकवाक्यत्वं यस्मादुदुम्बरेण पशवः साध्यन्ते तस्मादौदुम्बरो यूपः कर्तव्य इति।

---

विधिर्वा स्यात् ॥ उक्तं भूतार्थानामर्थवादानां कार्यार्थप्रतिपादकतया प्रामाण्यम्। यत्र पुनः कार्यार्थतैवावगम्यते कार्यान्तरेण चैकवाक्यत्वं तत्र कथं प्रामाण्यं ? यथा "औदुम्बरो यूपो भवति उर्ग्वा उदुम्बर ऊर्क्पशव ऊर्जैवास्मा ऊर्जंपशूनाप्नोत्यूर्जोऽवरुद्ध्यै" इति यूपौदुम्बरयोरपि साध्यसाधनताऽवगम्यते पशूदुम्बरयोरपि 'औदुम्बरो यूपः कर्तव्य इति एका कार्यावगतिः 'उदुम्बरेण पशवः कर्तव्या' इत्यपरा। गम्यते चैकवाक्यता यस्मादौदुम्बरेण पशवः साध्यन्ते तस्मादौदुम्बरो यूपः कर्तव्य इति। राद्धान्ती पृच्छति

---

(1) C यथाव्याख्यातम्

इह ये विधिवत् निगदा अर्थवादाः, ते उदाहरणं,—औदुं-

---

किमत्र युक्तम्। साध्यावगमे संभवति सिद्धावगतिर्न युक्ता। कस्मात्? विध्यर्थत्वाद्वाक्यस्य विधेश्च साध्याकांक्षित्वात्। न च मुख्येऽर्थे संभवति लक्षणा युक्ता॥

ननु च साध्यद्वयमेकस्मिन् वाक्ये न संभवति। वयमप्येतदेव ब्रूमः। तस्मान्निर्बीजमेवेदमर्थद्वयं प्रतीयते।

---

—किमत्र युक्तम्? पृच्छतश्चायमाशयः-एकवाक्यत्वादेकैव कार्यावगतिर्युक्तेति। पूर्वपक्ष्याह—**साध्यावगमे संभवति न सिद्धावगतिर्युक्ता। कस्मात्? विध्यर्थत्वाद्वाक्यस्य विधेश्च साध्या[1]काङ्क्षित्वात्। न च मुख्येऽर्थे संभवति लक्षणा युक्ता।** अस्यार्थः-यदा एकवाक्यत्वेनैककार्यावगतिः तदा ऊर्जैवास्मा ऊर्जं पशूनाप्नोतीति सिद्धोऽर्थोऽङ्गीकरणीयः। न च साध्यार्थत्वे संभवति सिद्धार्थत्वं युक्तम्, विध्यर्थत्वात् सर्वस्य। विधिना च नियोज्यसिद्ध्यर्थं साध्यत्वेनैवास्यार्थस्यापेक्षितत्वात्। यत्तु साध्यं सत् नियोज्यार्थविशेषणं तद्विधेरेव साध्यम्। [2]तेनोच्यते विधिसंबन्धितया[3] साध्यतया चाकाङ्क्षितत्वादिति। ननु विधिः प्राशस्त्यमपि प्रवृत्त्यर्थमपेक्षत एव-अत्रोच्यते। न मुख्येऽर्थे संभवति लक्षणा युक्ता। प्राशस्त्यं हि न श्रुत्योच्यते, किन्तु लक्षणयाऽवगम्यते। साध्यसाधनभावस्तु श्रुत्यैव पशूदुम्बरयोरवगम्यते। तस्मात् साध्यत्वेनैव पशूदुम्बरसंबन्धोऽभ्युपगन्तुं युक्तः। राद्धान्ती चोदयति—**ननु च साध्यद्वयमेकस्मिन् वाक्ये न सम्भवति।** पूर्वपक्षी परिहरति—**वयमप्येतदेव ब्रूमः** साध्यद्वयमेकस्मिन् वाक्ये कथं संभवतीति। एतच्च ब्रुवतोऽयमाशयः-एकवाक्यत्वं चात्रावगम्यते साध्यद्वयञ्च। एतच्च परस्परविरुद्धम् [4]साध्यभेदे वाक्यद्वयापत्तेः। न चात्र वाक्यभेदोऽप्यवगन्तुं [5]शक्यते। तस्मान्निर्बीजमेवार्थद्वयं प्रतीयते। राद्धान्ताभासी चोदयति

---

(1) C साध्यतयाकाङ्क्षितत्वा (2) B & C साध्यत्वेनोच्यते (3) B omits साध्यतया (4) B adds साध्यद्वये (5) A & B गम्यते

बरो यूपो भवत्यूर्ग्वा उदुंबर ऊर्क्पशव ऊर्जैवास्मा ऊर्जं पशूनाप्नोति ऊर्जोऽवरुध्यै'—इति। किमस्य विधिः कार्यं उतास्यापि स्तुतिरिति ?। किं तावत्प्राप्तं ?—'विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकं'। विधिवन्निगदेष्वेवंजातीयकेषु फलविधिः स्यात्, फलं ह्यवगम्यते, तथा हि अपूर्वं अर्थं विधास्यति, इतरथा स्तुतिवादमात्रं अनर्थकं स्यात्, स्तुतश्च अस्तुतश्च तावानेव सोऽर्थः। अपि च 'ऊर्जोऽवरुध्यै'—इति प्रयोजनं श्रूयते; न च, 'प्रशस्तोऽयमर्थः'—इति कश्चिच्छब्दोऽस्ति। लक्षणया तु स्तुतिर्गम्यते, श्रुतिश्च लक्षणायाः ज्यायसीति॥

लोकवदिति चेत्॥ २०॥

इति चेत् पश्यसि,—'स्तुतिरनर्थिका, न च शब्देनावगम्यते—इति। लौकिकानि वाक्यानि भवन्तो विदांकुर्वन्तु। तत् यथा, 'इयं गौः क्रेतव्या देवदत्तीया, एषा हि बहुक्षीरा स्त्र्यपत्या अनष्टप्रजा च' इति। 'क्रेतव्या'—इत्यप्युक्ते गुणाभिधानात् प्रवर्तन्ते। बहुक्षीरेति च गुणाभिधानमवगम्यते; तद्वत् वेदेऽपि भविष्यति॥

न पूर्वत्वात्॥ २१॥

नैतदेवं, लोके विदितपूर्वा अर्था उच्यन्ते बहुक्षीरादयः, तेषां विज्ञानमेव न प्रयोजनं, अतः प्रशंसा गम्यते। अविदितवादे न श्रद्दधीरन् पूर्ववचनादिव। विदितत्वादेव च प्ररोचयन्ते; वैदिकेषु पुनर्यदि विधिशब्देन न प्ररोचयन्ते, नतरामर्थवादेन। जाताशङ्को हि विधिशब्दे स तदानीम्। अथ विधिशब्देन प्ररोचितः, किं अर्थवादशब्देन?। अपि च वेदे व्यक्तमसंवादः,—'ऊर्जोऽवरुद्ध्यै' इति अप्रसिद्धं वचनं, 'ऊर्ग्वा

उदुम्बरः'—इति हेतुत्वं चाप्रसिद्धं,—यस्मात् ऊर्गुदुम्बरः, तस्मात् तन्मयो यूपः कर्त्तव्य इति; 'ऊर्गुदुम्बरः'—इति—अनृतवचनात् अन्यदस्यानृतं—इति परिकल्प्येत ॥

उक्तन्तु वाक्यशेषत्वं ॥ २२ ॥

---

ननु चानेकस्मिन्नपि प्रतिपाद्येऽर्थे संभवति एकवाक्यता दृष्टा यथा देवदत्त गौः क्रय्येत्येवमादिषु लौकिकेषु वाक्येषु । विषम उपन्यासः । तत्र हि अर्थवशाद्वाक्यनिर्णयः । इह तु शब्दादेवावगन्तव्यः । अतः संभवद्विधेयानां स्तुत्यर्थेन प्रामाण्यं दुर्घटम् ॥

अत्रोच्यते—उक्तं तु वाक्यशेषत्वम् ॥ सत्यमुक्तं, तत्तु नोपपद्यते; द्वयोः साध्यत्वेनावगमादित्यप्युक्तम् । किमिदं विरुद्धं प्रलप्यते ।

---

—ननु चानेकस्मिन्नपि प्रतिपाद्येऽर्थे सम्भवति सति एकार्थता दृष्टा-यथा इयं गौः क्रय्येत्येवमादिषु लौकिकेषु वाक्येषु । तेन यद्यपि यूपोदुम्बरसंबन्धः पशूदुम्बरसबन्धश्च द्वावर्थौ, तथाप्येकार्थता अत्रापि भविष्यति । पूर्वपक्षी परिहरति—विषमोऽयमुपन्यासः तत्र हि लोके प्रमाणान्तरावगतार्थवशात् वाक्यनिर्णयः वाक्यस्य एकत्वानेकत्वाभ्यां निर्णयः । इह तु शब्दादेवावगन्तव्यं वाक्यम् । [1]शब्दार्थानेकार्थत्वे सति एकवाक्यत्वं न शक्यतेऽवगन्तुम् । एकवाक्यत्वे च नार्थद्वयम् । अतः संभवद्विधेयानां स्तुत्यर्थत्वेन[2] प्रामाण्यं दुर्लभम् ।

अत्रोच्यते—उक्तन्तु वाक्यशेषत्वम्, उक्तं तावद्वाक्यशेषत्वमर्थवादपदानाम् । पूर्वपक्षी आह—सत्यमुक्तं तत्तु नोपपद्यते, द्वयोः साध्यत्वेनावगमादित्येतदप्युक्तम् । राद्धान्ती वदति—किमिदं पूर्वापरविरुद्धं प्रलप्यते — 'एकवाक्यत्वं साध्यद्वयं चेति

---

(1) A & B शब्दाच्चानेक (2) स्तुत्यर्थेन प्रामाण्यं दुर्घटं

उक्तं अस्माभिर्वाक्यशेषत्वं,—'विधिना त्वेकवाक्यत्वात्'— इति। 'ननूक्तं फलवचनं इह गम्यते, न स्तुतिः' इति। यत् इह फलवचनं, तत् औदुंबरस्य यूपस्य, न च अविहित औदुंबरो यूपोऽस्ति। तत्र फलवचमेवानर्थकम्। 'स्तुतिवचनः शब्दो नास्ति' इति चेत्। इह फलवचनेन फलवत्ता प्रतीयते, फलवांश्च प्रशस्त इति, तत्र फलवत्तायामानर्थक्यमिति यो द्वितीयोऽर्थः, प्रशंसा नाम स गम्यते। लक्षणेति चेत्। न, लक्षणायामपि अर्थवत्ता भवत्येव लक्षणाऽपि हि लौकिकी। 'ननूक्तं असंवादो वेदे, न ह्यर्गुदुंबर इति'। गुणवादेन प्ररोचनार्थतां ब्रूमहे,—गौणत्वा-त्संवादः। किं?। सादृश्यं,—यथाऽन्नं प्रीतेः साधनं, एवमिदमपि

---

न हि द्वयोः साध्ययोः गुणयोरिव समत्वात् संबन्धः। कथं तर्ह्येकार्थावगतिः? यद्यवगतिरस्ति तदनुरूपं निमित्तं कल्पनी-यम्॥ ननु च साध्यद्वयं प्रतीयते। न तर्ह्येकार्थावगतिः।

---

न हि द्वयोः साध्ययोः गुणयोरिव समत्वात् संबन्धः यथा गुणयोर्द्वयोः परस्परं सम्बन्धो न भवति तथा साध्ययोरपि द्वयोः। यदि साध्ययोर्द्वयोरपि परस्पर-सम्बन्धो न भवति कथं तर्ह्येकार्थावगतिः? परस्परसम्बन्धे हि सति एकार्थत्वं सम्भवति। असति तु संबन्धे कथमेकार्थावगतिः। राद्धान्त्याह—यद्येकार्थावगतिः तदनुरूपं निमित्तं परिकल्प्य एकोऽर्थः सिद्धरूपोऽभ्युपगम्यताम्। अपरश्च साध्यरूपः येन परस्परसम्बन्धे सति एकार्थावगतिरुपपद्यते। पूर्वपक्ष्याह—ननु च साध्यद्वयं प्रतीयते; तेन न शक्यते एकः [1]सिद्धरूपोऽवगन्तुम्। राद्धान्ती परिहरति-यदि साध्यद्वयं प्रतीयेत न तर्ह्येकार्थावगतिः परस्परासम्बन्धात्। पूर्वपक्ष्याह

---

(1) B सिद्धोऽर्थो

प्रीतिसाधनशक्तियुक्तं प्रशंसितुं प्रशंसावाचिना शब्देन उच्यते शक्यते हि तत् फलसंबन्धादूर्गिति वक्तुम् ॥

---

अस्ति चेयम् । यस्मादनेनेदं भवति तस्मादनेनेदं कुर्यादिति । सिद्धं तर्हि भवतीत्यस्यार्थस्य सिद्धार्थत्वम् । कथं सिद्धस्य भवतीति व्यपदेशः ? प्रमाणान्तरतः सिद्धिरत्रोपयुज्यते नार्थतः सिद्धिः । सिद्धमसिद्धं वा प्रमाणान्तरप्रमितमर्थान्तरावगतौ निमित्ततां प्रतिपद्यते । तस्मादेकार्थ-त्वात् सिद्धं प्रामाण्यमत्रापि ॥

---

—अस्ति चेयं कार्यावगतिः यस्मादनेनेदं भवति तस्मादिदं कुर्या[1]दिति । यस्मादौदुम्बरेण यूपेन पशवो भवन्ति तस्मादौदुम्बरं यूपं कुर्यादिति । राद्धान्ती वदति - यद्यनेन प्रकारेणैकार्थावगतिः सिद्धं तर्हि भवतीत्यस्यार्थस्य सिद्धार्थत्वम् । [[2]यस्मादनेनेदं भवतीत्यस्य सिद्धार्थत्वं सिद्धं अन्यथा ह्येकवाक्यताप्रतीति-विरोधादिति । ] अत्र चोदयति—कथं तर्हि सिद्धस्य भवतीति व्यपदेशः ? सिद्धं हि भूतमुच्यते । यच्च भूतं न तन् भवतीति व्यपदेष्टुं शक्यते[3] । परिहरति —प्रमाणसिद्धिरत्रोपयुज्यते नार्थसिद्धिः सिद्धिशब्देन अवगतिः निष्पत्तिश्चोच्यते । तत्रावगतिरूपा सिद्धिः प्रमाणसिद्धिः । प्रमाणसिद्धिरत्रोपयुज्यते न निष्पत्तिरूपा सिद्धिः । सिद्धमसिद्धं वा निष्पन्नमनिष्पन्नं वा प्रमाणान्तरप्रतीतं अर्थान्तरावगतौ निमित्ततां प्रतिपद्यते । यत्खलु प्रमाणान्तरप्रतीतं न तत् शब्देन प्रतिपाद्यम् । किं तर्हि अन्यार्थप्रतिपत्त्यर्थं सतस्य प्रतीतस्यैवानुवादः । तस्मिन्नप्रतिपन्ने तद्विशिष्टस्यैतस्य प्रत्येतुमशक्तेः । तस्मादेकार्थत्वात् सिद्धं प्रामाण्यमत्रापि ।

---

(1) C कुर्वीति (2) C omits this (3) C युक्तम्

विधिश्चानर्थकः क्वचित्, तस्मात् स्तुतिः प्रतीयेत, तत्-
सामान्यादितरेषु तथात्वम् ॥ २२ ॥

'अप्सुयोनिर्वा अश्वो अप्सुजो वेतसः'—इति, अप्सुयोनिरश्वः कर्त्तव्यः—इति—विधेरशक्यत्वादानर्थक्यं, तत्रावश्यं स्तुतिः कल्प-

---

विधिश्चानर्थकः क्वचित् ॥

ननु च विध्यसम्भवादेवाधस्त्येऽधिकरणे प्रमाणमात्रपर्यवसायित्व-मुक्तमर्थवादानाम्; इह तु प्रमेयतास्तीत्याशङ्कितं, निरस्तं च। किमिदमुच्यते **विधिश्चानर्थकः क्वचिदिति?** क्वा विधेरर्थवत्त्वे सम्भवति केवलं प्रमाण-तोक्ता येनेदमुच्यते 'विधिश्चानर्थकः क्वचित् इति। तत्सामान्यादिति। किमिदं तत्सामान्यम्? विधिसम्भवः एवात्र प्रदर्शितः नासम्भवः। अयथार्थग्राहिण इदं चोद्यम्।

---

विधिश्चानर्थकः क्वचित् ॥

ननु च विध्यसंभवादेवाधस्त्येऽधिकरणे **प्रमाणपर्यवसायित्वमुक्तं अर्थवाद-पदानां, इह तु प्रमेयताप्यस्तीत्याशङ्कितम्, निरस्तं च। किमिदमुच्यते विधिश्चानर्थक इति?** इह विधिवन्निगदा अर्थवादा उदाहरणम्। तेषु च विधेरर्थवत्त्वं संभवत्येव तेन विध्यानर्थक्येन तेषु स्तुत्यर्थत्वं न शक्यते वक्तुम्। आक्षेपान्तरमाह—**क्व वा विधे-रर्थवत्त्वे संभवति केवलप्रमाणतैवोक्ता येनेदमुच्यते विधिश्चानर्थकः क्वचिदिति?** यदि हि विधेरर्थवत्त्वे संभवत्यपि केवलप्रमाणतैवोक्ता स्यात् क्वचित् तदैवं युज्यते वक्तुं विधिश्चानर्थकः क्वचिदिति। न चैतदस्ति तस्मात् क्वचिच्छब्दो न युक्तः। अपरमप्याक्षेप-माह—**तत्सामान्यादिति च किमिदं तत्सामान्यं? विधिसंभव एवात्र दर्शितः नासंभवः।** यदि हि विध्यसंभवोऽत्र भवेत् तदापि विध्यसंभव एव सामान्यं स्यात्। अत्र च विधिसंभव एव दर्शितः। समर्थयमान आह—**अयथार्थग्राहिण इदं चोद्यम्।**

यितव्या,—शमयित्रीभिरद्भिरश्वस्य अवकानां च संबन्धो यजमानस्य कष्टं शमयतीति। 'तत्सामान्यादितरेषु तथात्वं,' तथेति यावत् तावत् तथात्वमिति। किं तत् सामान्यम्?। विध्यसंभवः स्तुतिसंभवश्च॥

प्रकरणे संभवन् अपकर्षो न कल्प्येत, विध्यानर्थक्यं हि तं प्रति॥ २४॥

---

अत्रापि साध्यद्वयमुपन्यस्यता विधेयस्य स्तुत्यर्थता नावगम्यत इत्युक्तम्। यत्र विधेयासम्बद्धा स्तुतिरवगम्यते न तत्र स्तुत्यर्थेनेति शक्यते वक्तुम्। तदिदमुच्यते—**विधिश्चानर्थकः क्वचिदिति**। न हि वेतसे विधेये आपः शान्ता इति स्तुतिरुपपद्यते। न चाप्सु जायन्त इति विधिः सम्भवति, तथाप्येकार्थावगतेः निमित्तत्वं परिकल्प्यते एवमत्रापि भवितुमर्हतीति। इदं तत्सामान्यम्। **प्रकरणे च सम्भवन्निति।**

---

अत्र हि साध्यद्वयमुपन्यस्यता विधेयस्य स्तुत्यर्थता नावगम्यत इत्युक्तम्। पशूदुंबरसंबन्धो हि साध्यः, स च विधेयस्य यूपोदुंबरसंबन्धस्य स्तुत्यर्थत्वेन नावगम्यत इत्युक्तम्। यत्र च विधेयासंबन्धा स्तुतिरवगम्यते। यथा वेतसे विधेये 'आपश्शान्ता' इति, न तत्र स्तुत्यर्थेनेति शक्यते वक्तुं तदिदमुच्यते विधिश्चानर्थकः क्वचिदिति। न हि वेतसे विधेये आपश्शान्ता इति स्तुतिरुपपद्यते। न चाप्सु जायन्त इति विधिस्संभवति, तथाप्येकार्थावगतेर्निमित्तत्वं परिकल्प्यते एवमत्रापि भवितुमर्हतीति। इदं तत्सामान्यम्। अस्यार्थः—यथा वेतसे विधेये 'आपश्शान्ता' इति यद्यपि [1]विस्पष्टा स्तुतिर्नावगम्यते तथापि विधावसंभवति एकवाक्यत्वेन स्तुत्यन्वयरूपं निमित्तमाश्रित्य स्तुतित्वं परिकल्प्यते

---

(1) B. विशिष्टा

इतश्च पश्यामः स्तुतिरिति। कुतः ?। इदं समामनन्ति, —'यो विदग्धः, स नैर्ऋतः; योऽशृतः, स रौद्रः; यः शृतः, स दैवतः; तस्मादविदहता श्रपयितव्यः, सदैवतत्वाय'—इति, यदि स्तुतिः, दर्शपूर्णमासयोरेव शृतः स्ताविष्यते। तथा संभवन् अपकर्षो न कल्प्येत, अपकृष्यते इत्यपकर्षः। विधिपक्षे तु यत्र नैर्ऋतः, तत्र विदग्धता नीयेत! तथा सति प्रकरणं बाधितं भवेत्। दर्शपूर्णमासकर्म प्रति नैर्ऋताभावात् विदग्धविधानं अनर्थकं स्यात्, तस्मात् स्तुतिरेव॥

विधौ च वाक्यभेदः स्यात् ॥ २५ ॥

'औदुम्बरो यूपो भवति'—इति 'विधावेतस्मिन्नाश्रीयमाणे 'ऊर्जोऽवरुद्ध्यै'— इत्येतस्मिंश्च वाक्यं भिद्येत। इत्थं औदुम्बरो

---

किमनेनोपन्यस्तम् ? इदमनेनोपरन्यस्तम्—एकविध्यर्थत्वे सम्भवति नानेकविध्यर्थता युक्ता कल्पयितुम्; विनियोजकविरोधात्।

---

तथाऽत्राप्यापातमात्रेण साध्यद्वयावगमनेन यद्यपि विधेयस्तुतिर्नावगम्यते, तथापि एकवाक्यत्वेन विध्यन्तरासंभवादेकवाक्यत्वानुरूपं निमित्तं परिकल्पयितुं युक्तमिति। प्रकरणे च संभवन्निति सूत्रम्। तदाक्षिपति—**किमिदमनेनोपन्यस्तम् ?** समाधत्ते—**इदमनेनोपन्यस्तम्। एकविध्यर्थत्वे संभवति नानेकविध्यर्थता युक्ता कल्पयितुं विनियोजकविरोधात्।** अस्यार्थः दर्शपूर्णमासप्रकरणे हि यावत्किञ्चित्समाम्नायते तत्तदधिकारनियोगपरिगृहीतम्। परिगृह्य च स्वात्मनि विनियुक्तम्। तत्र यदि 'यो विदग्धः स नैर्ऋत' इति विधिः स्यात् तदा[1] दर्शपूर्णमासप्रकरणादुत्कृष्येत। तदुत्कर्षे चाधिकारविधेर्नियोजकस्य विरोधः। ननु च विनियोगानु-

---

(1) C. ततः

यूपः प्रशस्तः स चोर्जोऽवरुद्ध्यै—इति। तस्मात् विधिवन्निगदानामपि स्तुतिरेव कार्य्यमर्थवादानां—इति ॥

---

विनियोगमात्रापेक्षी विनियोजकः स न शक्यते विनियोगभेदात् अन्यथाकर्तुम् , तदन्यथात्वे पौरुषेयी कल्पना प्राप्नोति। किञ्च विध्यन्तरतोपि वाक्यभेदः प्राप्नोति। किं जातम् ? एकार्थावगतेर्बाधः। बाध्यताम् , न नियोगो विनियोगं बाधितुमर्हति। कार्यतो हि बाधं बाधविदो मन्यन्ते।

---

सारित्वाद्ग्राहकस्य विनियोगस्य च भिन्नविधिप्रतिपत्तिसमर्थत्वात "यो विदग्धः स नैर्ऋत" इत्येवमादीनां दर्शपूर्णमासाधिकारगृहीतत्वमेव नास्ति कथं विनियोजकविरोधः इत्यत्राह— **विनियोगमात्रापेक्षी विनियोजकः, स न शक्यते विनियोगभेदादन्यथाकर्तुं, तदन्यथात्वे पौरुषेयी कल्पना प्राप्नोति।** अस्यार्थः—विनियोगमात्रमपेक्ष्य विनियोजकः स्वविनियोज्यं विनियुङ्क्ते, न पुनर्नियोगविशेषमपेक्षते। तत्र यदि प्रकृतनियोगसम्बन्धे अन्वयविरोध एव स्यात् तदा विनियोगान्तरगृहीतत्वमेव भवेत् द्वादशोपसत्तावत। इह तु प्रकृतनियोगसंबन्धेपि नैवान्वयविरोधः, स्तुत्यर्थत्वेनाप्यन्वयोपपत्तेः। **किञ्च विध्यन्तरत्वेपि वाक्यभेदः प्राप्नोति।** पूर्वपक्षी पृच्छति—**किं जातं ?** यदि वाक्यभेदो भवति। उत्तरं—**एकार्थावगतेर्बाधो** जातः। पूर्वपक्ष्याह—**बाध्यताम्।** एकार्थावगतिः। राद्धान्त्याह—**न नियोगो विनियोगं बाधितुमर्हति। कार्यतो हि बाधं बाधविदो मन्यन्ते।** यदि हि सर्वस्य साक्षान्नियोगार्थत्वं भवतीत्यनया युक्त्या विधिभेदोऽङ्गीक्रियते तदा नियोगेन विनियोगो बाधितव्यः। विनियोगत[1] एव विध्यवगमात्। न च नियोगो विनियोगं बाधितुमर्हति। यथाविनियोगं नियोग इति प्रतिपदाधिकरणे [2]प्रतिपादितत्वात। ननु च विनियोगोऽपि तत्र [3]तत्र बाध्यत एव अवघातादीनामिव कृष्णलेष्विति। उच्यते—**तत्र कार्यतो बाधं बाधविदो मन्यन्ते।** ये हि औपचारिकं बाधं वदन्ति न ते कार्यतो विनियोगस्य बाधं वर्णयन्ति।

---

(1) A. नियोग (2) C. स्थितत्वात् (3) A. बाधितव्यः

हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् ॥ २६ ॥

**अथ ये हेतुवन्निगदाः—‘शूर्पेण जुहोति, तेन हि अन्नं क्रियते’—इत्येवमादयः; तेषु सन्देहः,—किं स्तुतिस्तेषां कार्यं, उत हेतुः?—इति। किं प्राप्तं?—हेतुः स्यादन्नकरणं होमस्य। ननु अप्रसिद्धे कार्यकारणभावे न हेतूपदेशः’। सत्यमेवं लोके, विधायिष्यते तु वचनेन वेदे,—शूर्पेण होमे कर्त्तव्ये अन्नकरणं हेतुरित्युपदिश्यते। किं प्रयोजनं?। अन्यदपि दर्वीपीठरादि अन्नकरणं यत्, तेनापि नाम कथं होमः क्रियेत—इति।**

---

तस्माद्वस्तुतः साध्यद्वयावगमेपि प्रमाणतः सिद्धसाध्यतयैव हि एकार्थावगतिरिति स्थितमेवंविधेष्वपि प्रमाणत्वम्।

**हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम्।** का पुनरत्राप्रामाण्यशङ्का? यदि हेत्वर्थः करणं यदि वा शूर्पार्थः उभयथापि अन्वितपदार्थको वाक्यार्थः।

---

बाधकार्यमननुष्ठानमस्तीति बाध इति व्यपदेशः। एतच्च दशमाद्ये प्रकटयिष्यामः। **तस्माद्वस्तुतः साध्यद्वयावगमेपि च** यद्यप्यर्थसिद्ध्या भवतीत्यर्थो न सिद्धः तेन साध्यद्वयमवगम्यते, तथापि **प्रमाणतः सिद्धसाध्यतयैव हि एकार्थावगतिरिति** हेतोः **सिद्धमेवंविधेष्वपि प्रामाण्यम्।**

**हेतुर्वा स्यात्।** का पुनरत्राप्रामाण्यशङ्का? यन्निराकरणाय [1]प्रमाणलक्षणे इदमधिकरणमारभ्यते। एकग्रन्थेनाह—**यदि हेत्वर्थः करणं** हेत्वर्थोऽन्नसाधनत्वं,[2] यदि तत्करणं येन येनान्नं क्रियते तेन तेन होमः कर्तव्य इति। तथा **यदि शूर्पार्थः करणं,** शूर्पेण होमः कर्तव्य इति **उभयथापि अन्वितपदार्थको वाक्यार्थः**। तथापि किमित्यप्रामाण्यं न भवतीत्यत्राह—

---

(1) C. प्रमाणेऽर्थैलक्षणमिदं (2) B. & C. साधनं

कुतः ?। तस्याप्यन्नक्रियायामर्थवत्ता, शक्यते च तेनाप्यन्नं कर्तुं एतद्धि 'क्रियते'—इत्युच्यते। न हि वर्त्तमानकालः कश्चिदस्ति यस्यायं प्रतिनिर्देशः। हेतौ च श्रुतिः शब्दः, स्तुतौ लक्षणा। यदि च, दर्वीपीठरादि न साक्षादन्नं करोतीति नान्नकरणं—इत्युच्यते। व्यर्थे तस्मिन् शूर्पस्तुतिरनर्थिका स्यात्। शूर्पमपि हि न साक्षादन्नं करोतीति तेन विनाऽर्थेन शूर्पस्य स्तुतिर्नोपपद्यते ॥

---

अनन्वयिनि हि पदार्थे निमित्ततया नैमित्तिकतया वा प्रतिभामात्रम्। अतश्चाप्रामाण्यं न त्वन्वयिनि। तस्मात् प्रमाणलक्षणान्तःपातिता कथमस्याधिकरणस्य ?। न चार्थान्तरं युक्तमत्रार्पयितुम्, प्रसङ्गाभावात् अनौपोद्घातिकत्वाच्च।

नन्वु चायमस्त्येव प्रसङ्गः किमर्थवादो नेति। सत्यमस्ति निष्प्रयोजनस्तु सः। ननु चेदमस्ति प्रयोजनं अर्थवादत्वे शूर्पेणैव होमः

---

अनन्वयिनि हि पदार्थे निमित्ततया नैमित्तिकतया वा प्रतिभामात्रं ततश्चाप्रामाण्यं न त्वन्वयिनि। द्विविधो हि पदार्थानामन्वयः यथा "वायुर्वै क्षेपिष्ठा देवता" इत्येवमादीनां केवलं निमित्तत्वेनैव, तथा नैमित्तिकत्वेनैव विध्युद्देशपदार्थानामिव। तत्र निमित्ततया नैमित्तिकतया वा एकस्मिन् पदार्थे अनन्वीयमाने इतरपदार्थान्वयप्रतीतिरपि न शाब्दी किन्तु प्रतिभामात्रमेव पदानां संभूयकारित्वस्य स्थितत्वात् सकलपदार्थान्वये तु प्रामाण्यमेव तत्र। "तेन ह्यन्नं क्रियते" इत्येतस्मिन्नन्वीयमाने उभयथापि प्रामाण्यमेव। तस्मात् प्रमाणलक्षणान्तःपातिता कथमस्याधिकरणस्य ? न चार्थान्तरं चिन्तयितुं युक्तम् प्रसङ्गाभावात् अनौपोद्घातिकत्वाच्च। ननु चायमस्ति प्रसङ्गः किमर्थवादो नेति। पूर्वं हि प्रामाण्यसिद्ध्यर्थं अर्थवादतोदिता तत्प्रसङ्गेनेदं चिन्त्यते। आक्षेप्ताऽऽह—सत्यमस्ति प्रसङ्गः निष्प्रयोजनस्तु सः। ननु चेदमस्ति प्रयोजनं अर्थवादत्वे शूर्पेणैव होमः कर्तव्यः

इतरथा ह्यनियम इति। सत्यमस्तीदं प्रयोजनं तार्तीयं त्वेतत्। न च लक्षणान्तरप्रयुक्तं प्रासङ्गिकं भवितुमर्हति। चिन्तितं चैतन्निवीतं मनुष्याणामित्येवमादिषु। तस्मात् प्रमाणलक्षणान्तःपातितैवास्य वक्तव्या।

सेयमुच्यते—हेतुपक्षे हि तन्निमित्तं करणत्वं ज्ञायते। यदि वेदात्सिद्धं तर्हि वैदिकत्वम्। सत्यं सिद्धम्; सापेक्षन्तु। सापेक्षत्वे च प्रमाणान्तरं मृग्यम्। न च तदस्तीति प्रतिभामात्रम्। तस्माद्धेतुत्वमिदानीं प्रतिपद्यते। हेतुरयम् कार्यत्वेनान्वयसम्भवात्। न प्रमाणमात्रपर्यवसायिता शक्यते वक्तुम्, कार्यार्थत्वादन्वयस्य।

---

इतरथाऽनियम इति। आक्षेप्ताऽऽह—सत्यमस्तीदं प्रयोजनं, तार्तीयन्त्वेतत् विनियोगविशेषरूपत्वात्। न च लक्षणान्तरप्रयुक्तं प्रासङ्गिकं भवितुमर्हति साक्षात्सङ्गतिसंभवे प्रसङ्गतश्चिन्तानुपपत्तेः। चिन्तितं चैतत् विनियोगविशेषापादकं अर्थवादत्वं निवीतं मनुष्याणामित्येवमादिषु तृतीय एव। तद्वदिदमपि तत्रैव चिन्तयितुं युक्तम्। तस्मात्प्रमाणलक्षणान्तःपातितैवास्य वक्तव्या; न पुनः प्रासङ्गिकत्वम्। समर्थयते—सेयं प्रमाणलक्षणान्तः पातिता उच्यते। हेतुपक्षे हि तन्निमित्तं करणत्वं अन्नसाधनत्वनिमित्तं होमं प्रति करणत्वं विज्ञायते तु वेदात्। तेनान्नसाधनत्वस्य होमकरणत्वं प्रति हेतुभावे प्रमाणान्तरमपेक्षणीयम्। न च तदस्ति यद्यदन्नकरणं तेन तेन होमः कर्तव्य इत्यत्रांशे प्रमाणाभावात्। राद्धान्त्याह—यदि वेदाद्विज्ञायते सिद्धं तर्हि वैदिकत्वम् वेदादेवावगतेः। पूर्वपक्ष्याह—सत्यं वैदिकत्वं सिद्धं सापेक्षता [1]तु। सापेक्षत्वे च प्रमाणान्तरं मृग्यं न च तदस्ति इति प्रतिभामात्रम्। ग्रन्थकार आह—तस्माद्धेतुत्वमिदानीं पूर्वपक्षावस्थायामप्रामाण्यसिद्ध्यर्थं प्रतिपाद्यते हेतुरयं अन्नकरणत्वरूपः शूर्पस्य होमकरणत्वे कार्यत्वेनान्वयसंभवात् न प्रमाणमात्रपर्यवसायिता अर्थवादमात्रता शक्यते वक्तुं कार्यार्थत्वादन्वयस्य। ननु च

---

(1) C. सापेक्षं तु

स्तुतिस्तु, शब्दपूर्वत्वात् अचोदना च तस्य ॥ २७ ॥

**न तु एतदस्ति, शब्दपूर्वकोऽयमर्थः,—अन्नकरणं हेतुः—इति,**

---

ननु च शूर्पस्यान्नकरणता न सम्भवति। असाधकतमत्वात् व्यापृतस्य चान्यत्वाकरणत्वात्। उपपद्यते हि करणत्वमापेक्षिकतया। आपेक्षिकी हि विवक्षा, विवक्षातश्च कारकाणि भवन्तीति कारकज्ञाः। वर्तमानकालताप्यस्य आपेक्षिक्येवेत्युक्तं कालज्ञैः। तस्मादुपपन्नोऽयम्—अर्थवत्त्वोपपत्तिभ्यामिति। अवश्यं चायमापेक्षिककरणभावो ग्रहीतव्यः; स्तुतावपि तुल्यत्वात्।

**स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य।** अत्रोच्यते—नायं हेतुः। कस्मात्? शूर्पहोमे हि हेतुः प्रतीयते। सिद्धश्च

---

शूर्पस्यान्नकरणता न संभवति **असाधकतमत्वात्**। अन्ननिष्पत्तौ व्यवहितव्यापारत्वात् **व्यापृतस्य चान्यत्वाकारणत्वात्।** 'तेन ह्यन्नं क्रियते' इति अन्ननिष्पत्तौ वर्तमानव्यापारं करणं प्रतीयते। न च तथाविधस्य होमं प्रति करणता संभवति।

परिहरति—**उपपद्यते हि करणत्वमापेक्षिकतया।** साधकतमं हि करणं। तच्च साधकतमं यत्प्रकृष्टं कार्यसाधकं, प्रकर्षश्चापेक्षिकः। कथमापेक्षिक इत्याह—**आपेक्षिकी हि विवक्षा विवक्षातश्च कारकाणि संभवन्तीति कारकज्ञाः।** यदा बाह्यमपरमपेक्ष्य शूर्पस्य प्रकर्षो विवक्ष्यते तदा युज्यते एव करणत्वनिर्देशः। [1]**वर्तमानकालोऽप्यापेक्षिक एवेत्युक्तं कालज्ञैः।** परमार्थतो हि भूतभविष्यन्तावेव कालौ प्रत्यासन्नतया वर्तमानव्यवहारः प्रत्यासत्तिश्चापेक्षिकी। **तस्मादुपपन्नोऽयमर्थोऽर्थवत्त्वोपपत्तिभ्यामिति। अवश्यं चापेक्षिकः करणभावो ग्रहीतव्यः। स्तुतावपि तुल्यत्वात्।** सिद्धान्तेपि हि **अन्नकरणत्वेनैव स्तुतिः।**

**स्तुतिस्तु। अत्रोच्यते; नायं हेतुः। कस्मात्?** उत्तरं—**शूर्पहोमे हि हेतुः प्रतीयते** शूर्पेण होमः कर्तव्य इत्येतस्मिन्नर्थे **अन्नकरणत्वं हेतुः प्रतीयते। सिद्धश्च**

---

(1) C. वर्तमानकालताप्यापेक्षिक्येवेति

**शब्दश्च अन्नकरणं शूर्पहोमे हेतुः—इत्याह, न च दर्वीपीठरहोमे ; तेन शब्दपूर्वं शूर्पं, न च दर्वीपिठरादेश्चोदना ॥**

व्यर्थे स्तुतिरन्याय्येति चेत् ॥ २८ ॥

**इति पुनर्यदुक्तं, तत् परिहर्तव्यम् ॥**

अर्थस्तु, विधिशेषत्वात् , यथा लोके ॥ २९ ॥

**अस्मत्पक्षेऽर्थोऽस्ति, वाक्यशेषो हि स विधेस्तदा भवति । संवादश्च स्तुतिवचनत्वेन,—यथा वयं शूर्पेण अन्नं क्रियमाणं जानीमः, तथा शूर्पेणान्नं क्रियते—इत्येव गम्यते; तदा च अवर्तमानं स्तोतुं वर्त्तमानमित्युपदिशति । त्वत्पक्षे एष दोषः,**

---

हेतुः न साध्यतयाऽवगन्तुं शक्यते । होमस्य च साध्यावगतिर्वेदात् । न च साध्यत्वेनावगम्यमानो वेदात् सापेक्षो भवति । तस्मात् हेतुवदेवायं न हेतुः । एवं च कृत्वा अवर्तमानोऽपि वर्तमानतया प्रतिपत्तुं शक्यते ।

---

**हेतुः न साध्यतयाऽवगन्तुं शक्यते ।** न च येन येनान्नं क्रियते तेन तेन होमः कर्तव्य इति सिद्धोऽयमर्थः तस्मादसिद्धत्वान्नायं हेतुः । युक्त्यन्तरं चाह—**होमस्य च साध्यावगतिर्वेदात् ।** शूर्पेण होमः कर्तव्यः साध्य इति वेदादयमर्थोऽवगम्यते । **न च वेदात् साध्यत्वेनावगम्यमानोऽर्थः** हेतुं प्रति **सापेक्षो भवति ।** वेद एव हि तत्र प्रमाणमिति न प्रमाणभूतं हेत्वन्तरमपेक्षते । **तस्माद्धेतुवदेवायं न हेतुः । एवञ्च कृत्वा** [1]**अवर्तमानोऽपि वर्तमानतया शक्यते प्रतिपत्तुं**—तेन ह्यन्नं क्रियते इति । योऽयमन्नकरणे शूर्पस्य वर्तमान इव व्यापारः प्रतीयते सोऽवर्तमानोऽपि वर्तमानतया शक्यतेऽवगन्तुं प्रमाणान्तरानुसारित्वात् स्तुत्यर्थस्य । होमे च करणस्य सतः शूर्पस्यान्नकरणे प्रमाणान्तरेण वर्तमानव्या-

---

(1) B. वर्तमानोप्यवर्तमानतया

यस्य ते हेतुविधिः, विधौ हि न परः शब्दार्थः प्रतीयते; न च वर्त्तमानं उपदिशन् वेदः शक्यमर्थं विदध्यात् । अस्मत्पक्षे तु एष परशब्दः परत्र वर्त्तते ; यथा लोके, बलवान् देवदत्तो यज्ञदत्तादीन् प्रसहते—इति प्रकृष्टबलेऽपि बलवच्छब्दो वर्त-

---

ननु च वर्तमान एव नास्तीत्युक्तम् ? केन चोक्तं नास्तीति । फलपर्यन्त आरम्भो वर्तमानव्यपदेशं भजतीति स्थितम् । न पुनर्विधिपक्ष एतदुपपद्यते । न ह्यर्थान्तरे प्रयोगः शक्यते निरूपयितुम् । आपेक्षिकत्वं च करणस्य मदीय एव पक्षे शक्यते निरूपयितुम् । विधिपक्षे हि क्रियान्तरता केन वार्यते ।

---

पारानुपलब्धेः । ननु वर्तमान एव नास्तीत्युक्तं तन किमित्यवर्तमानेपि वर्तमानव्यपदेशोऽयमुच्यते, यावता सर्वत्रैवमेव वर्तमानव्यपदेशः । परिहरति— केन चोक्तं सर्वत्र[1] पारमार्थिकं वर्तमानं च नास्तीति । यावता फलपर्यन्त आरम्भो वर्तमानव्यपदेशं लभत इति स्थितम् । उपक्रमप्रभृति समीहितफलनिष्पत्तिपर्यन्तो व्यापारक्षणसन्तानः एकफलवशीकृतः[2] एक एव सन् आख्यातशब्दाभिधेयः यदारभ्यापरिसमाप्य[त]तयावगम्यते तदा मुख्यवर्तमानव्यपदेशं लभत इति स्थितम् । तस्मादस्ति पारमार्थिकं वर्तमानव्यपदेशत्वं अन्यत्र । इह तु गौणं तदाश्रीयते । न पुनर्विधिपक्ष एतदुपपद्यते गौणवर्तमानत्वाश्रयणम् । न ह्यर्थान्तरे प्रयोगश्शक्यते निरूपयितुं अवर्तमाने वर्तमानव्यपदेशोऽयमिति विधिपक्षे न शक्यते निरूपयितुम् । विधेयं हि शब्दतो यथाभूतमवगम्यते तथाभूतमेव तदाश्रयितुं शक्यते । आपेक्षिकत्वञ्च करणस्य मदीय एव पक्षे स्तुत्यर्थमन्त्रकरणत्वसङ्कीर्तनं इत्येतस्मिन्नेव शक्यते निरूपयितुम् । हेतुविधिपक्षे पुनरन्त्रक्रियान्तरता केन वार्यते । अन्त्रक्रियायां यदेव व्यवहितं तदेव करणत्वेन गृह्यत इत्यर्थः ।

---

(1) B. reads सर्वज्ञः (2) B. omits एक एव

मानो न सिंहं शार्दूलं वा अपेक्ष्य प्रयुज्यते; ये देवदत्तात्तु निकृष्टबलाः तान् अपेक्ष्य भवति। एवं 'तेन हि अन्नं क्रियते'—इति प्रकृष्टान्नकरणेन संस्तवः शूर्पस्य, निकृष्टानि अन्यानि अन्नकरणानि अपेक्ष्य भविष्यति॥

यदि च हेतुः अवतिष्ठेत निर्देशात, सामान्यादिति चेत् अव्यवस्था विधीनां स्यात्॥ ३०॥

---

शूर्पशब्दादिति चेत् निवृत्तास्तर्हि दर्वीपिठरादयः व्याहतश्च हेत्वर्थो भवति। अत एवमुक्तम्—यदि च हेतुरवतिष्ठेत निर्देशाच्छूर्प एवेति। हेत्वव्याघात इति चेत्—अव्यवस्था तर्हि। अव्यवस्थाया अपि स एव हेतुर्व्याघातः निवर्त्याभावात्।

---

शूर्पशब्दादिति चेत्। अस्यार्थः—शूर्पेण होमः कर्तव्य इति विधीयते तेन ह्यन्नं क्रियते इति निर्देशात् यादृशं शूर्पस्य करणत्वं तादृशमाश्रीयत इति क्रिया(न)न्तरता निवार्यत इति चेत निवृत्तास्तर्हि दर्वीपिठरादयः यदि शूर्पनिर्देशः त्वयाऽङ्गीकृतः तदा दर्वीपिठरादीनां निवृत्तं होमं प्रति करणत्वं, व्याहतश्च हेत्वर्थो भवति हेतुनिर्देशार्थत्वेन हि हेत्वर्थो गृहीतः यदि दर्वीपिठरादिभिरपि होमः क्रियेत तदा अर्थवत्ता हेतुनिर्देशस्य। निवृत्तेषु तु दर्वीपिठरादिषु किं हेत्वर्थेन यत एव यथोक्तोऽयमर्थः प्रामाणिकः अत एव चेदमुक्तम्। यदि हेतुरवतिष्ठेत निर्देशाच्छूर्प एवेति। हेत्वव्याघात इति चेत्। अस्यार्थः—साक्षात्परंपरया वा यस्य साधकत्वं तस्यापि करणत्वम्! तेन दर्वीपिठरादीनामपि अन्नकरणत्वात्तेष्वपि हेत्वव्याघात इति चेत्। अव्यवस्था तर्हि। सर्वेणैव हि साक्षात्परम्परया वा अन्नं कर्तुं शक्यते। ततश्चान्नकरणेन होमः कर्तव्य इत्युच्यमाने येन केनचिद्धोमः कर्तव्यः इत्युक्तं भवेद इत्यव्यवस्था। अव्यवस्थायामपि स एव हेतुत्वव्याघातो निवर्त्यस्याभावात् अन्न—

यद्यपि च भवेदन्नकरणं हेतुः दर्वीपिठरप्रकाराणां, तथापि शूर्प एवावतिष्ठेत, शब्दात् अन्नकरणं हेतुः इति विज्ञायते, शब्दश्च शूर्पस्याह, न दर्वीपिठरादीनाम्; तद्धि निर्दिश्यते,—यस्मात् शूर्पेणान्नं क्रियते, तस्मात् शूर्पेण जुहोति—इति। यथा, यस्मात् बलवदुपध्मातोऽग्निः, तेन मे गृहं दग्धमिति, नानग्निरपि बलवदुपध्मातो दहति इति गम्यते। अथ मतं,—येन येन अन्नं क्रियते प्रणाड्या, शूर्पादन्येनापि तेन तेनापि

---

कारकस्य हेतोः निवर्त्याभावेप्यात्मलाभो ज्ञापकस्येव। तस्माद्धेतुवन्निगदानामपि प्रमाणतयैवावस्थानम्।

---

करणेन होमः कर्तव्यो नान्येनेति। यदि व्यवस्थितं किञ्चिदन्नकरणं भवेत्तदा विशेषविधानात् नियमार्थतया विधानमर्थवत् भवेत्। न च व्यवस्थितं किञ्चिदन्नकरणं; तेन निवर्त्याभावादनर्थकोऽयमुपदेशः अर्थवत्त्वेन च हेतुपक्षाश्रयणम्। अनर्थकत्वे च हेतुत्वव्याघातः। ननु अन्नक्रियायां कथं सर्वस्य करणत्वं, न हि कृतस्य करणत्वमुपपद्यते येनैकेनापि कृतेऽन्यदपि करणं भवेत। [1]ज्ञाप्ये हि यावदनेकमपि ज्ञापकं भवेत एकेनापि ज्ञापिते अपरस्यापि ज्ञापकत्वाव्याघातादित्याशङ्कयाह-**कारकस्य च हेतोर्निवर्त्याभावेपि आत्मलाभो ज्ञापकस्येव।** अस्यार्थः—यथा ज्ञापकहेतोर्निवर्त्याभावेपि आत्मलाभो भवति ज्ञापितस्यापि ज्ञापनोपपत्तेः तथा कारकस्यापि यद्यप्येकेन कृतेऽपरस्य कारकत्वं नोपपद्यते तथाप्येकस्मिन् कार्ये साक्षात्परंपरया वा बहूनामपि कारकत्वं घटत एवेति तेन कारकान्तरमनिवर्त्यापि कारकत्वमुपपद्यते इत्यन्नक्रियायां सर्वस्य [3]कारकत्वम्।

केचित्तु निवर्त्याभावेप्यात्मलाभो भवति ज्ञापितस्यापि ज्ञापनोपपत्तित इति पठन्ति तत्र पूर्वोक्तो व्याघातशब्दो विपरिणामेन योजनीयः कारकस्य च हेतोर्निवर्त्याभावेपि आत्मलाभो न व्याहन्येत ज्ञापकस्येवेत्यर्थः। **तस्माद्धेतुवन्निगदानामपि प्रमाणतयैवावस्थानम्।**

---

(1) A. & B. अज्ञाप्ये (2) B. & C. मतिरेकत्वं (3) B. करणत्वं

होमः क्रियते इति। अव्यवस्था विधीनां स्यात्, न केनचित् प्रणाड्याऽन्नं न क्रियते, तत्र यावदुक्तं स्यात्, जुहोति--इति तावदेवान्नकरणेन जुहोति—इति। अस्मत्पक्षे पुनः शूर्पं स्तूयते; तेन ह्यन्नं क्रियते'—इति वृत्तान्तान्वाख्यानं न च वृत्तान्तज्ञापनाय, किं तर्हि प्ररोचनार्थैव। तस्माद्धेतुवन्निगदस्यापि स्तुतिरेव कार्य्यं इति॥

अथ मन्त्राधिकरणम्॥

तदर्थशास्त्रात्॥ ३१॥

अथ इदानीं, किं विवक्षितवचना मन्त्राः, उताविवक्षितवचनाः?। किमर्थप्रकाशनेन यागस्य उपकुर्वन्ति, उत

---

तदर्थशास्त्रात्। यदुक्तं 'दृष्टो हि तस्यार्थः कर्मावबोधनं नाम' इति तदयुक्तम्। अविवक्षितार्थत्वं स्वाध्यायस्य मन्त्रेषु दृश्यते कथमविवक्षितार्थत्वम्? तदर्थशास्त्रविरोधादिभिः नवभिः प्रदर्श्यते। ननु चाविवक्षितार्थत्वे तदर्थशास्त्रादयोप्यविवक्षितार्था एव।

---

तदर्थशास्त्रात्। यदुक्तं दृष्टो हि तस्यार्थः कर्मावबोधनं नामेति तदयुक्तम्। अविवक्षितार्थत्वं स्वाध्यायस्य मन्त्रेषु दृश्यते। यत् स्वाध्यायस्य विवक्षितार्थत्वमुक्तं तदयुक्तं मन्त्राणामविवक्षितार्थत्वस्य दर्शनात्। कथमविवक्षितार्थत्वम्? उत्तरम्—तदर्थशास्त्रादिभिः। विवक्षितार्थत्वे मन्त्राणां तदर्थशास्त्रमनर्थकं लिङ्गादेव विनियोगसिद्धेः। तथा अग्नीदग्नीन् विहरेति बुद्धेऽर्थेऽर्थावबोधनार्थं विवक्षितार्थत्वे मन्त्रविनियोगो नोपपद्यते। अर्थविप्रतिषेधश्च विवक्षितार्थत्वे सति भवति अदितिर्द्यौरदितिरन्तरिक्षमिति। पूर्वपक्षमाक्षिपति—ननु चाविवक्षितार्थत्वे तदर्थशास्त्रादयोऽपि अविवक्षितार्था एव। तदर्थशास्त्रादीनां विवक्षितार्थत्वेन यथा मन्त्राणामविवक्षितार्थत्वं तथा मन्त्राणां विवक्षितार्थत्वेन तदर्थशास्त्रादीनामपि

उच्चारणमात्रेण ? इति;—यद्युच्चारणमात्रेण, तदा न नियोगतो 'बर्हिर्देवसदनं दामि'—इत्येष बर्हिर्लवने विनियुज्येत। अभिधानेन चेत्, प्रकरणेन विज्ञाताङ्गभावो नान्यत्रोपकर्तुं शक्नोति—इत्यन्तरेणापि वचनं, बर्हिर्लवन एव विनियुज्येत। —इति ॥ तदेवमवगच्छामः,—उच्चारणमात्रेणैवोपकुर्वन्तीति। कुतः ?। 'तदर्थशास्त्रात्,' यदभिधानसमर्थो मन्त्रः, तत्रैवैनं शास्त्रं निबध्नाति,—'उरुप्रथा उरु प्रथस्व—इति पुरोडाशं प्रथयति' —इति, वचनमिदं अनर्थकं, यदि अर्थाभिधानेनोपकुर्वन्ति; अथोच्चारणमात्रेण, ततो वक्तव्यो विनियोगः, उक्तश्च। अतो नार्थाभिधानेन; यथा साक्षः पुरुषः परेण चेन्नीयते, नूनमक्षिभ्यां न पश्यति—इति गम्यते।

नन्वर्थवादार्थं भविष्यतीति चेत्। न हि येन विधीयते तस्य वाक्यशेषोऽर्थवादः—इत्युक्तम्। न च निरपेक्षेण विहिते

---

ओमित्युच्यते। कथं तर्हि तैरविवक्षितार्थत्वम् ? परस्परव्याघातादसम्बद्धार्थतैव अविवक्षाहेतुः। यदि मन्त्रा अविवक्षितार्थाः तदा तदर्थशास्त्राणामविवक्षितार्थत्वमिति परस्परव्याघातः। रशनाभिधानविवक्षायां

---

अविवक्षितार्थत्वं किमिति न स्यात् तुल्यत्वात्। पूर्वपक्षी समर्थयते—ओमित्युच्यते अङ्गीक्रियत एव तदर्थशास्त्रादीनामप्यविवक्षितार्थत्वम्। यदि तदर्थशास्त्रादयोऽप्यविवक्षितार्थाः कथं तर्हि तैरविवक्षितार्थत्वं मन्त्राणाम्। उत्तरमाह—परस्परव्याघातादसंबन्धार्थतैवाविवक्षाहेतुः। यदि मन्त्रा अविवक्षितार्थाः तदर्थशास्त्रादयोप्यविवक्षितार्थाः विवक्षितार्थेषु मन्त्रेषु तदर्थशास्त्राणामविवक्षितार्थत्वं तदर्थशास्त्रेषु विवक्षितार्थेषु मन्त्राणामविवक्षितार्थत्वमिति परस्परव्याघातः। परस्परव्याघाताच्चासम्बद्धार्थतैव। असम्बद्धार्थत्वेन च अविवक्षितार्थत्वं सेयमसंबद्धार्थता तदर्थशास्त्रादिभिर्दर्शिता। एतदेव विवृणोति—रशनाभिधानविवक्षायां

अर्थवादेन किञ्चिदपि प्रयोजनं क्रियते। अतो नार्थवादार्थं वचनम्।

तथाऽभ्यादानसमर्था मन्त्राः उदाहरणम्। लिङ्गादेव आदाने प्राप्ता वचनेन विधीयन्ते,—'तां चतुर्भिरादत्ते'—इति। 'चतुः-संख्यार्थमिति' चेत्। न, समुच्चयशब्दाभावात्।

तथा 'इमामगृभ्णन् रशनामृतस्य इत्यश्वाभिधानीमादत्ते' इत्युदाहरणम्, रशनादाने प्राप्तस्य रशनादाने एव शास्त्रं विनियोजकम्। तत् विवक्षितार्थत्वे न घटेत—इति।

ननु गर्दभरशनां परिसंख्यास्यति। न शक्नोति परिसंख्यातुं, परिसञ्चक्षाणो हि स्वार्थं च जह्यात्, परार्थञ्च कल्पेत, प्राप्तं च बाधेत।

तस्मात् न विवक्षितवचना मन्त्राः, अतो न प्रमाणं 'बर्हिर्देव-सदनं दामि' इत्यस्य रूपं बर्हिर्लवने विनियोगस्य॥

वाक्यनियमात्॥ ३२॥

नियतपदक्रमा हि मन्त्रा भवन्ति,—'अग्निर्मूर्धा दिवः'—इति,

---

'अश्वाभिधानीमादत्त' इत्यस्य तदर्थशास्त्रस्य व्याघातः। न च परिसङ्ख्यादिभिः शक्यते व्याघातः परिहर्तुमिति प्रदर्शितम्।

---

मन्त्रेण रशनाभिधाने विवक्षिते 'अश्वाभिधानीमादत्ते' इत्यस्य तदर्थशास्त्रस्य व्याघातः। अस्य विवक्षितार्थत्वे मन्त्रार्थस्य व्याघातः। न च परिसङ्ख्यादिभिः शक्यते व्याघातः परिहर्तुमिति प्रदर्शितम्। तदेवमविवक्षितार्थत्वे मन्त्रतदर्थशास्त्राणां तदेकवाक्यतापन्नं

न विपर्ययेण। यद्यर्थप्रत्यायनार्थाः, विपर्ययेणाप्यर्थः प्रतीयते, इति नियमोऽनर्थकः स्यात्। अथ उच्चारणविशेषार्थाः, विपर्यये अन्यदुच्चारणं—इति नियम आश्रीयते। तेन यतरस्मिन् पक्षे नियमो अर्थवान्, स नूनं पक्ष इति। ननु अर्थवत्स्वपि नियमो दृश्यते,—यथा, 'इन्द्राग्नी'—इति। युक्तं तत्र तत्, विपर्ययेऽर्थ-प्रत्ययाभावात्॥

बुद्धशास्त्रात्॥ ३३॥

बुद्धे खल्वपि पाठादर्थे तदभिधानसमर्थो मन्त्रो भवति, 'अग्नीद् अग्नीन् विहर' इति। स बुद्धे किं बोधयेत्?। अथ नु उच्चारणविशेषार्थाः, बुद्धेऽप्युच्चारणविशेषोऽवकल्प्येतेति। ननु पुनर्वचनात् संस्कारविशेषो भविष्यति। एवं, अस्मत्पक्षमेवाश्रि-तोऽसि, वचनमुच्चारणं, तद्धि शक्यते कर्तुं नार्थप्रत्यायनं, तत् प्रतीतेऽशक्यं; यथा सोपानत्के पादे द्वितीयामुपानहमशक्य-त्वान्नोपादत्ते॥

अविद्यमानवचनात्॥ ३४॥

यज्ञे साधनभूतः प्रकाशयितव्यः, न च तादृशोऽर्थोऽस्ति यादृशमभिदधाति, यथा 'चत्वारि शृङ्गा'—इति। न हि चतुःशृङ्गं त्रिपादं द्विशिरस्कं सप्तहस्तं किञ्चित् यज्ञसाधनमस्ति। तदत्राभिधानार्थः किमभिदध्यात्?। उच्चारणार्थे त्ववकल्प्यते। तथा 'मा मा हिंसीः'—इत्यसत्यामपि हिंसायां किमभिदध्यात्?॥

अचेतनेऽर्थबन्धनात्॥ ३५॥

अचेतनेऽर्थे खल्वर्थं निबध्नन्ति,—'ओषधे त्रायस्वैनं'—इति, अभिधानेनोपकुर्वन्त एवंजातीयका ओषधिं पशुत्राणाय प्रतिपादयेयुः, न च, असावचेतना शक्या प्रतिपादयितुम्। उच्चारणार्थे तु नैष दोषो भवति। तस्मात् उच्चारणार्थाः। 'शृणोत ग्रावाणः' इति च उदाहरणम् ॥

अर्थविप्रतिषेधात् ॥ ३६ ॥

अर्थविप्रतिषेधोऽपि भवति,—'अदितिर्द्यौरदितिरन्तरिक्षं'—इति, सैव द्यौः, तदेवान्तरिक्षं—इति को जातुचिदवधारयेत् ?। अनवधारयंश्च किमभिधानेनोपकुर्यात् ?। उच्चारणमात्रे तु नैष विरोधो भवति। तस्मात् उच्चारणार्था मन्त्राः। 'एको रुद्रः, न द्वितीयोऽवतस्थे,' 'असंख्याता: सहस्राणि' 'ये रुद्रा अधिभूम्यां' —इति चोदाहरणम् ॥

स्वाध्यायवदवचनात् ॥ ३७ ॥

स्वाध्यायकाले पूर्णिकाऽवहन्ति करोति, माणवकोऽवहन्तिमन्त्रमधीते, नासौ तेन मन्त्रेण तदभिधानमभ्यस्यति, अक्षरानुपूर्व्याः अवधारणे एव यतते, येन च नाम प्रयोजनं, तदभ्यसितव्यम् ; अत उच्चारणाभ्यासात् उच्चारणेन प्रयोजनं इत्यवगच्छामः ॥

अविज्ञेयात् ॥ ३८ ॥

अपि च केषाञ्चिन्मन्त्राणां अशक्य एवार्थो वेदितुं, यथा, 'अम्यक् सात इन्द्र ऋष्टिरस्मे' इति, 'सृण्येव जर्भरी तुर्फरीतु' इति, इन्द्रः सोमस्य काणुका' इति च; एते किं प्रत्याययेयुः ?। उच्चारणार्थे तु न दोषः। तस्मात् उच्चारणार्था मन्त्रा इति ॥

अनित्यसंयोगान्मन्त्रानर्थक्यम् ॥ ३९ ॥

अनित्यसंयोगः खल्वपि भवेत् मन्त्रेष्वभिधानार्थेषु यथा, 'किं ते कृण्वन्ति कीकटेषु गावः'—इति, कीकटा नाम जनपदाः। नैचाशाखं नाम नगरं प्रमगन्दो राजा—इति। यद्यभिधानार्थाः, प्राक् प्रमगन्दात् नायं मन्त्रोऽनुभूतपूर्व इति गम्यते। तदेतैस्तदर्थशास्त्रादिभिः कारणैर्मन्त्राणां अविवक्षितवचनता॥

अविशिष्टस्तु वाक्यार्थः ॥ ४० ॥

अविशिष्टस्तु लोके प्रयुज्यमानानां वेदे च पदानामर्थः; स यथैव लोके विवक्षितः, तथैव वेदेऽपि भवितुमर्हति। नैवं, लोके तैरर्थैरवबुद्धैः संव्यवहारः, इह देवताभिरप्रत्यक्षाभिर्यज्ञाङ्गैश्चाचेतनैः संलापे न कश्चित् यज्ञस्योपकारः। यद्यदृष्टं परिकल्प्येत, उच्चारणादेव तद्भवितुमर्हति। यद्धि कर्त्तव्यं, तत् प्रयोजनवत्, उच्चारणं च न कथञ्चित न कर्त्तव्यं, यद्यपूर्वाय। यद्यर्थाय, यद्यर्थो न प्रत्याय्यते, न किञ्चित अनर्थकं, यदि न

---

अविशिष्टस्तु वाक्यार्थः। अत्राभिधीयते—नाविवक्षितार्थः स्वाध्यायः। नियोगसम्बन्धितया स्वाध्यायस्यार्थवत्ता उक्ता कार्ये प्रामाण्याभिधानात् कार्यार्थाभिधानतया परप्रयोगेपि।

---

सर्गमेव प्रयोगशास्त्रमप्रमाणमापतितमित्यविवक्षितार्थः स्वाध्यायः। अविशिष्टस्तु॥ अत्राभिधीयते। नाविवक्षितार्थः स्वाध्यायः नियोगसंबन्धितया स्वाध्यायस्यार्थवत्ता उक्ता, कार्ये प्रामाण्याभिधानात्। कार्येऽर्थे वेदः प्रमाणमित्यभिदधता सूत्रकारेण नियोगप्रतिपादकतया स्वाध्यायस्यार्थवत्तोक्ता। तथा प्रयोगे च कार्याभिधानतया येनापि प्रयोगावस्थायां

प्रयुज्यते, समाम्नानानर्थक्यम्। तस्मात् उच्चारणादपूर्वं, तथा च तदर्थशास्त्रादि उक्तम्। तदुच्यते,—अर्थप्रत्यायनार्थमेव यज्ञे मन्त्रोच्चारणम्। यदुक्तं—न देवताभिर्यज्ञाङ्गैश्च संलापे प्रयोजनमस्ति—इति, यज्ञे यज्ञाङ्गप्रकाशनमेव प्रयोजनम्। कथं ? न हि अप्रकाशिते यज्ञे यज्ञाङ्गे च यागः शक्योऽभिनिर्वर्तयितुम्। तस्मात्तन्निर्वृत्त्यर्थमर्थप्रकाशनं महानुपकारः कर्मणः, तच्च करोतीत्यवगम्यते। तस्मादस्त्यस्य प्रयोजनम्। तच्च दृष्टं न शक्यमपवदितुं—न चार्थाभिधानं प्रयोजनं—इति। ननु अर्थाभिधानेनोपकुर्वत्सु 'तां चतुर्भिरादत्ते'—इत्येवमादि अनर्थकं भवति। काममनर्थकं भवतु, न जातुचित् अपजानीमहे दृष्टं अर्थाभिधानस्योपकारकत्वम्॥

अथ किं तच्छास्त्रं अनर्थकमेव ?। न हि,

गुणार्थेन पुनः श्रुतिः॥ ४१॥

यदुक्तं 'तां चतुर्भिरादत्ते'—इति समुच्चयशब्दाभावात् न

---

किमिदं प्रयोग इति ? अनुष्ठानमित्यर्थः। अनुष्ठीयमानार्थौपयिकतया विवक्षितार्थत्वमवगम्यमानं न शक्यते तदर्थशास्त्रादिभिर्विहन्तुम्। प्राप्तार्थानुवादकान्यपि वाक्यानि दृश्यन्ते 'य एवं विद्वान् पौर्णमासीं यजत'

---

कार्यमभिधीयते तस्याप्यर्थवत्ता। किमिदं प्रयोग इति ? उत्तरं—अनुष्ठानं इत्यर्थः। ननु अनुष्ठीयमानार्थप्रतिपादकतयापि विवक्षितार्थत्वं तदर्थशास्त्रादिभिर्विहतं इत्यत्राह—अनुष्ठीयमानार्थौपयिकतया विवक्षितार्थत्वमवगम्यमानं तदर्थशास्त्रादिभिर्विहन्तुं न शक्यते प्राप्तार्थानुवादकान्यपि हि वाक्यानि दृश्यन्ते 'य एवं विद्वान् पौर्णमासीं यजते

समुच्चयार्थमिति । चतुः संख्याविशिष्टमादानं कर्त्तव्यं—इति वाक्यादवगम्यते, तदेकेन मन्त्रेण गृह्णन् न यथाश्रुतं गृह्णीयादिति ॥

परिसंख्या ॥ ४२ ॥

परिसञ्चक्षाणे च 'इमामगृभ्णन्नित्यश्वाभिधानीमादत्ते' इति त्रयो दोषाः प्रादुःष्युः—इति । नैवं संबन्धः,—इत्यादत्ते—इति । कथं तर्हि ? । इत्यश्वाभिधानीं—इति । लिङ्गाद्रशनामात्रे, शब्दात्तु विशेषे अश्वाभिधान्यां इति; सति च वाक्ये लिङ्गं विनियोजकं, तच्चास्य प्रकरणाम्नानानुमितं वाक्यं नास्ति । कतरत्तत् ? । एतेन मन्त्रेणादानं कुर्य्यादिति, यस्मिन् सति रशनामात्रे लिङ्गात् प्राप्नोति । अश्वाभिधान्यान्तु प्रत्यक्षमेव वचनं, अस्मिन् सति तत् आनुमानिकं नास्ति । तेन गर्दभरशनायां न प्राप्तिरेवेति ॥

अर्थवादो वा ॥ ४३ ॥

'उरुप्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति'—इति अर्थवादार्थेन पुनः श्रुतिः,—यज्ञपतिमेव तत् प्रथयति—इति । ननु नायं मन्त्रस्य वाक्यशेषः, न च प्राप्तस्य स्तुत्या प्रयोजनम् । सत्यं, नायं मन्त्रस्य विधिः, न संस्तवः, प्रथनमेव तत्र स्तूयते । मन्त्रः पुनः रूपादेव प्राप्त इहानूद्यते प्रथनं स्तोतुं,—इत्थं प्रथनं प्रशस्तं, यत् क्रियमाणं एवंरूपेण मन्त्रेण क्रियते । कस्तदा भवति गुणः ? । यज्ञपतिमेव तत् प्रजया पशुभिः प्रथयति । किमेतदेवास्य फलं भवति ? । नेति ब्रूमः, स्तुतिः कथं भविष्यति ? —इत्येवमुच्यते । कथमसति प्रथने प्रथयतीति शब्दः ? ।

मन्त्राभिधानात् ,—मन्त्रेण पुरोडाशं अध्वर्युः प्रथस्वेति ब्रूते, यश्चैवं प्रथस्वेति ब्रूते, स प्रथयति, यथा, यः कुर्विति ब्रूते, स कारयति ॥

अविरुद्धं परम् ॥ ४४ ॥

यदुक्तं,—पदनियमस्यार्थवत्त्वादविवक्षितार्था मन्त्रा इति । काममनर्थको नियमः, न दृष्टमप्रामाणम् । नियतोच्चारणमदृष्टाय —इति चेत् , अविरुद्धाऽदृष्टकल्पना अस्मत्पक्षेऽपि, एवं प्रत्याय्य-मानमभ्युदयकारि भवति—इति ॥

संप्रैषे कर्मगर्हानुपालम्भः संस्कारत्वात् ॥ ४५ ॥

अथ यदुक्तं,—प्रोक्षणीरासादयेति—वृद्धबोधनमशक्यं, अत उच्चारणाददृष्टं—इति । तन्न, कर्त्तव्यं इत्यपि विज्ञाते अनुष्ठान-काले स्मृत्या प्रयोजनं, उपायान्तरेणापि सा प्राप्नोति,—अतोऽनेनोपा-येन कर्त्तव्येति नियमार्थमाम्नानं, संस्कारत्वात् ॥

अभिधानेऽर्थवादः ॥ ४६ ॥

'चत्वारि शृङ्गा' इत्यसदभिधाने गौणः शब्दः, गौणीकल्पना प्रमाणवत्त्वात् ; उच्चारणाददृष्टमप्रमाणम् । चतस्रो होत्राः शृङ्गाणी-वाऽस्य । 'त्रयोऽस्य पादाः'—इति सवनाभिप्रायम् । 'द्वे शीर्षे' इति पत्नीयजमानौ । 'सप्त हस्तास' इति छन्दांसि अभिप्रेत्य । 'त्रिधा बद्धः' इति त्रिभिर्वेदैर्बद्धः । 'वृषभः' कामान् वर्षतीति रोरवीति शब्दकर्मा 'महो देवो मर्त्यान् आविवेश' इति मनुष्या-धिकाराभिप्रायम् । तद्यथा, चक्रवाकस्तनी हंसदन्तावली काशवस्त्रा शैवालकेशी नदी—इति नद्याः स्तुतिः । यज्ञसमृद्धये

साधनानां चेतनसादृश्यं उपपादयितुकाम आमन्त्रणशब्देन लक्षयति,—'औषधे त्रायस्वैनं'—इति, 'शृणोत ग्रावाणः' इति, अतः परं प्रातरनुवाकानुवचनं भविष्यति, यत्राचेतनाः सन्तो ग्रावाणोऽपि शृणुयुः, किं पुनर्विद्वांसोऽपि ब्राह्मणाः—इति, इत्थं च अचेतना अपि ग्रावाण आमन्त्रयन्ते ॥

गुणादविप्रतिषेधः स्यात् ॥ ४७ ॥

'अदितिर्द्यौः'—इति गौण एष शब्दः, अतो न विप्रतिषेधः। यथा त्वमेव माता, त्वमेव पितेति; तथैकरुद्रदैवत्ये एको रुद्रः, शतरुद्रदैवत्ये शतं रुद्रा इति अविरोधः ॥

विद्यावचनमसंयोगात् ॥ ४८ ॥

यत्तु—अकर्मकालेऽवहन्तिमन्त्रेण माणवको न पूर्णिकावहन्तिं प्रकाशयितुमिच्छति' इति। अयज्ञसंयोगात्, न यज्ञोपकारायैतत् प्रकाशयितुमिच्छति। ननु प्रकाशनानभ्यासोऽक्षराभ्यासश्च परिचोदितः। उच्यते,—सौकर्यात् प्रकाशनानभ्यासः, दुर्ग्रहत्वाच्चाक्षराभ्यासः ॥

सतः परमविज्ञानम् ॥ ४९ ॥

विद्यमानोऽप्यर्थः प्रमादालस्यादिभिर्नोपलभ्यते, निगमनिरुक्तव्याकरणवशेन धातुतोऽर्थः कल्पयितव्य, ; यथा, 'सृण्येव जर्भरी तुर्फरीतू'—इत्येवमादीनि अश्विनोरभिधानानि द्विवचनान्तानि लक्ष्यन्ते। अनेन 'अश्विनोः काममप्रा'—इत्याश्विनं सूक्तमवगम्यते। देवताभिधानानि च घटन्ते, जर्भरीत्येवमादीनि; अवयवप्रसिद्ध्या च लौकिकेनार्थेन विशेष्यन्ते। एवं सर्वत्र ॥

उक्तश्चानित्यसंयोगः ॥ ५० ॥

'परन्तु श्रुतिसामान्यमात्रं' इत्यत्र इति ॥

लिङ्गोपदेशश्च तदर्थवत् ॥ ५१ ॥

'आग्नेय्याऽग्नीध्रमुपतिष्ठते'—इति विधानात्, विवक्षितार्थानामेव मन्त्राणां भवति लिङ्गेनोपदेशः, यदि तेऽग्निप्रयोजनाः, ततस्ते आग्नेय्याः, नाग्निशब्दसन्निधानात् ॥

ऊहः ॥ ५२ ॥

ऊहदर्शनं च विवक्षितार्थानामेव भवति। किमूहदर्शनम्?। 'न पिता वर्धते, न माता'—इति; अन्ये वर्धन्ते इति गम्यते, प्रत्यक्षं कौमारयौवनस्थाविरैः वर्द्धन्ते मात्रादयः, शब्दो न वर्द्धते—इति ब्रूते। का पुनः शब्दस्य वृद्धिः?। यद्द्विवचन-बहुवचनसंयोगः ॥

---

इत्येवमादीनि। न चैतान्यतदर्थकानि इति प्रदर्शितं देवताविधानादिभिः विशेषैः। एवं प्रतिसूत्रं द्रष्टव्यम्।

---

इत्येवमादीनि। ननु यावदेव लैकिको मन्त्रस्य विनियोगो न भवति तावदेव किमिति शीघ्रतया तदर्थशास्त्रमेव विनियोजकं न भवति येन तस्यानुवादत्वमुच्यते। अत्र ब्रूमः। मन्त्रशक्ति-निरूपणेनैव तदर्थशास्त्रादिभिरपि विनियोगः कार्यः नान्यथा ततश्च लैङ्गिक एवात्र प्रथमं विनियोगः। तेनानुवादकत्वेनापि परिहारो न्याय्यः। एतच्च तदर्थशास्त्रादीनामर्थान्तराभाव-मभ्युपगम्योक्तम्। न चैतान्यनर्थकानीति दर्शितं गुणविधानादिभिर्विशेषैः। एवं प्रतिसूत्रं द्रष्टव्यम्।

विधिशब्दाश्च ॥ ५२ ॥

विधिशब्दाश्च विवक्षितार्थानेव मन्त्राननुवदन्ति,—'शतं हिमाः शतं वर्षाणि जीव्यासमित्येतदेवाह'—इति ॥

इति श्रीमदाचार्यश्रीशबरस्वामिकृतौ मीमांसाभाष्ये
प्रथमस्य द्वितीयः पादः ॥

---

अस्य चार्थस्य न्याय्यत्वं वैदिकान्यपि लिङ्गदर्शनानि उपोद्वलयन्ति 'आग्नेय्या आग्नीध्रमुपतिष्ठते' इत्येवमादीनि ।

इति बृहत्यां प्रथमाध्यायस्य
द्वितीयः पादः

---

अस्य चार्थस्य विवक्षितार्था मन्त्रा इत्यस्य न्याय्यत्वं वैदिकान्येव लिङ्गदर्शनान्युपोद्वलयन्ति' आग्नेय्या आग्नीध्रमुपतिष्ठते' इत्येवमादीनि ।

इति महामहोपाध्यायशालिकनाथ-
मिश्रविरचितायां ऋजुविमलायां
पञ्चिकायां प्रथमस्याध्यायस्य
द्वितीयः पादः

---

# तृतीयः पादः ॥

## अथ स्मृतिप्रामाण्याधिकरणम् ॥

धर्मस्य शब्दमूलत्वात् अशब्दमनपेक्षं स्यात् ॥ १ ॥

एवं तावत्कृत्स्नस्य वेदस्य प्रामाण्यमुक्तं, अथ इदानीं यत्र न वैदिकं शब्दं उपलभेमहि, अथ च स्मरन्ति,—एवमयमर्थोऽनुष्ठातव्यः, एतस्मै च प्रयोजनाय—इति ; किं असौ तथैव

---

अथ तृतीयः पादः

धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात्—किमिदमप्रस्तुतं चिन्त्यते ? किमप्रस्तुतम् ? अचोदनार्थविचारः ब्रवीति च धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात् इति । अशब्दश्चेन्न प्रतिज्ञातं ; अप्रतिज्ञातचिन्ता च प्रतिज्ञां विहन्ति । पूर्वापरविरोधाच्चा-

---

तृतीयः पादः ॥

**धर्मस्य शब्दमूलत्वात्**—किमिदमप्रस्तुतं चिन्त्यते । समाधाता पृच्छति— **किमप्रस्तुतम् ?** उत्तरम्—[1]**अचोदनार्थविचारः** । अष्टकादिस्मृतिविचारो हि विस्पष्ट एवाचोदनार्थविचारः ! **ब्रवीति च** सूत्रकारः **धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यादिति** । ननु ब्रवीत्येव[2] सूत्रकारः तथापि किमित्यत्राह—**अशब्द[3]श्चेन्न प्रतिज्ञातम्** । अष्टका कर्तव्येत्येवमादिकं यद्यशब्दं न तर्हि तद्विचार्यत्वेन[4] प्रतिज्ञातम् । **अप्रतिज्ञातार्थचिन्ता च प्रतिज्ञां विहन्ति** । यद्यशब्दमप्यत्र चिन्तनीयं तदा शब्दैकगम्यचिन्ताप्रतिज्ञा नोपपद्यते[5] । अथ शब्दैकगम्यचिन्तैव प्रतिज्ञाता न तर्हि अशब्दं चिन्तनीयम् । सोऽयं पूर्वापरव्याघातः सूत्रकारस्याबुद्धिपूर्वकारितया प्राप्नोति । तदाह—**पूर्वापरविरोधश्चा[6]**-

---

(1) C. चोदनार्थः (2) B. & C. read ब्रवीत्येवं (3) B. & C. अशब्दं (4) B. & C. विषयत्वेन (5) A. नोत्पद्यते (6) B. विघातश्च

स्यात्, न वा? इति। यथा 'अष्टकाः कर्त्तव्याः' गुरुरनुगन्तव्यः' 'तडागं खनितव्यं' 'प्रपा प्रवर्त्तयितव्या' 'शिखाकर्म कर्त्तव्यं'—इत्येवमादयः ॥ तदुच्यते,—'धर्मस्य शब्दमूलत्वादशब्दमनपेक्ष्यं स्यात्'—इति। शब्दलक्षणो धर्मः—इत्युक्तं 'चोदनालक्षणोऽर्थो धर्मः'—इति, अतो निर्मूलत्वान्नापेक्षितव्यमिति।

---

बुद्धिपूर्वकता प्राप्नोति। अथायमभिप्रायः—इदमपि वेदविद्भिः प्रमाणतया परिगृहीतम्। तस्मादिदमपि विचारणीयमिति। तदयुक्तम्। प्रत्यक्षाद्यपि तैः प्रमाणतया परिगृहीतं तदपि विचारणीयं प्राप्नोति। ननु च विचारितमेतत्। क्व विचारितम्? सत्संप्रयोगे पुरुषाणामित्यत्र प्रमाणमिति। किं प्रत्यक्षं प्रमाणमप्रमाणमित्यस्य संशयस्य निर्णयाय तत्सूत्रम्? धर्मं प्रति प्रमाणं न भवतीत्येतत्परं

---

बुद्धिपूर्वकारितया प्राप्नोति इति। अथायमभिप्रायः—इदमपि वेदविद्भिः प्रमाणतया परिगृहीतं, तस्मादिदमपि विचारणीयमिति; तदिदमयुक्तं प्रत्यक्षाद्यपि तैः प्रमाणतया परिगृहीतमेव तदपि विचारणीयं प्राप्नोति न च तद्विचारितम्। तेनातिप्रसङ्गदोषात् स्मृतिविचारोऽपि न युक्तः। ननु विचारितं तत् प्रत्यक्षादि। आक्षेप्ता पृच्छति—क्व विचारितम्? समाधातैकदेश्युत्तरमाह—सत्संप्रयोगे पुरुषस्येन्द्रियाणामित्यत्र। आक्षेप्ता पृच्छति—किं प्रत्यक्षं प्रमाणमप्रमाणमित्यस्य संशयस्य निर्णयायैतत्सूत्रम्? यदि हि प्रत्यक्षं प्रमाणमाहोस्विदप्रमाणमित्येतत्संशयनिराकरणार्थं सूत्रं स्यात् तदा प्रत्यक्षादि तत्र विचारितं भवेत् नान्यथेति भावः। ऋज्वाशयः[1] समाधातैकदेश्याह-नास्य संशयस्य निर्णयाय तत्सूत्रं; किं तर्हि धर्मं प्रति प्रत्यक्षादि प्रमाणं न भवतीत्येवंपरं

---

(1) B. & C. शुद्धाशयः

ननु ये विदुः,—इत्थं असौ पदार्थः कर्त्तव्य इति, कथमिव ते वदिष्यन्ति,—अकर्तव्य एवायं—इति ?। स्मरणानुपपत्त्या, न हि अननुभूतोऽश्रुतो वाऽर्थः स्मर्य्यते ; न च अस्यावैदिकस्यालौकिकस्य च स्मरणमुपपद्यते । पूर्वविज्ञानकारणाभावादिति, या हि वन्ध्या स्मरेत् ,—इदं मे दौहित्रकृतमिति, न मे दुहिता—

---

सूत्रं, न तर्हि प्रमाणान्तरं प्रमाणतया चिन्तितमस्मिन् शास्त्रे । तस्मात्प्रतिज्ञातं चिन्तनीयं नाभ्युपगतं अप्रतिज्ञातं च स्मृतिशास्त्रम् । अतोऽसंबद्धैवेयं चिन्ता ।

अत्राभिधीयते—प्रतिज्ञातार्थस्य चिन्तेयम् । ननु च स्वतन्त्रशब्दविषया सा प्रतिज्ञा न चात्र स्वातन्त्र्यमस्ति । सत्यं, स्वातन्त्र्यं नास्ति स्वतन्त्रशब्दविषयैवेयं चिन्ता । किमष्टका कर्तव्येति स्वतन्त्रशब्दः ?

---

तत्सूत्रम् । अक्षेप्राऽऽह-यदि धर्मं प्रति प्रामाण्यनिराकरणाय तत्सूत्रं न तर्हि प्रमाणान्तरं अस्मिन् शास्त्रे प्रमाणतया चिन्तितम् । किं तर्हि सिद्धप्रमाणस्यैव प्रत्यक्षादेः धर्मं प्रति प्रामाण्यं निराकर्तुम्[1] । न पुनः प्रत्यक्षादि सर्वत्र प्रमाणमेव न भवतीत्याशङ्क्य प्रामाण्यं व्युत्पादितम् । वृत्तिकारग्रन्थेपि प्रत्यक्षादीनां स्वरूपं परीक्षितं न प्रामाण्यं व्युत्पादितम् । तस्मादतिप्रसङ्गादिदोषात् यदेव प्रतिज्ञातं तदेव चिन्तनीयं नाभ्युपगतं [2]अप्रतिज्ञातं च स्मृतिशास्त्रम् । अतोऽसंबद्धैवेयं चिन्ता । अत्राभिधीयते । प्रतिज्ञातस्यैवार्थस्य चिन्तेयम् । ननु च स्वतन्त्रशब्दविषया सा प्रतिज्ञा न चात्र स्वातन्त्र्यमस्ति । समाधाता आह—सत्यम् स्वतन्त्रशब्दविषया प्रतिज्ञा । स्वतन्त्रशब्दविषयैवेयं चिन्ता । आक्षेप्ता पृच्छति—किमष्टकाकर्तव्येति स्वतन्त्रशब्दः ? येन तद्विषयचिन्ताभवता स्वतन्त्रशब्दविषयोच्यते । समाधा-

---

(1) B. & C. निराकृतं (2) B. प्रतिज्ञातं

ऽस्ति—इति मत्वा, न जातुचिदसौ प्रतीयात्,—सम्यगेतत ज्ञानं

---

नायं स्वतन्त्रशब्दः स्वतन्त्रशब्दसम्बन्धस्तु। केन स्वतन्त्रेणास्य सम्बन्धः? यां जनाः प्रतिनन्दन्तीति। ततः किम्? सापेक्षपरतन्त्रत्वात् अस्यापि साधकता प्राप्नोति तत्सामान्याच्चेतरेषामपि। तदिदमाह—**धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात्** इति। अपेक्षितं चैतत् यां जनाः प्रतिनन्दन्तीत्येवमादिभिः। अत एषामशब्दतैवेति

---

तोत्तरमाह—**नायं स्वतन्त्रशब्दः** अष्टका कर्तव्येति **स्वतन्त्रशब्दसंबद्धस्तु**। पुनराक्षेप्ता पृच्छति—**केन स्वतन्त्रेण शब्देन अस्य संबन्ध इति?** समाधातोत्तरमाह—**यां जनाः प्रतिनन्दन्तीत्यनेन** स्वतन्त्रेण मन्त्रशब्देन। अयं हि मन्त्रो रात्रिं प्रकाशयन् कस्मिंश्चिन्नियोगे [1]प्रकाशकतया संबद्धयते। स्मार्ते चाष्टकाकर्मणि रात्रिर्देवतेति तेनैवास्य संबन्धः। आक्षेप्ता पृच्छति—**ततः किं?** यदि स्वतन्त्रेण शब्देनास्य संबन्धः। उत्तरं समाधातुः—**सापेक्षपरतन्त्रत्वात्। अस्यापि** सापेक्षता **प्राप्नोति।** अस्यार्थः अष्टका कर्तव्येति पौरुषेयं वचनं प्रमाणान्तरसापेक्षमेव कार्यं प्रतिपादयति। मन्त्रेणापि च देवताभूतरात्रिप्रकाशनद्वारेण तदेव कार्यं स्मरणीयं ततश्च सापेक्षपौरुषेयवाक्यपरतन्त्रं वैदिकमपि मन्त्रवाक्यं सापेक्षमेव प्राप्नोति। तत्सामान्यादितरेषामपि सापेक्षता प्राप्नोति। [2]यदाऽस्मर्यमाणपुरुषमपि वैदिकं मन्त्रवाक्यं प्रमाणान्तरसापेक्षं सञ्जातं तदा स्वाभाविकमेव शब्दस्य सापेक्षार्थाभिधायकत्वमिति सर्व एव वेदः कार्याभिधायी न स्यात्। कार्ये प्रमाणान्तरस्यापेक्षणीयस्याभावात्। तदिदमाह—**धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यादिति। अपेक्षितं चैतत् यां जनाः प्रतिनन्दन्तीत्येवमादिभिः अत एतेषाम्[3]शब्दतैवेति** पूरयित्वा सूत्रं पठितम्। यस्मात् यां जनाः प्रतिनन्दन्तीत्येवमादीनि अशब्दमर्थमपेक्षन्ते अत एषामप्यशब्दतैव।

---

(1) A. तत्प्रकाशकतया (2) B. add तदाह यदा स्व (3) B. मप्यश

स एव प्रतिज्ञातार्थः पुनराक्षिप्यते । न सापेक्षानपेक्षयोः एकार्थत्वं संभवतीत्युक्तं विषयभेदादिति ।

ननु चात्र विषयभेद एव न संभवति द्वयोः कार्यार्थत्वात् तदेव हि न संभवतीत्युच्यते । ननु च कार्यार्थस्यैव अनुमानं भविष्यति । तत्परित्यागे कारणं वक्तव्यम् ।

---

यद्यपि स्वरूपतः शब्दतैवैषां तथापि शब्दकार्याकरणात् अशब्दतोच्यते । किं पुनः शब्दकार्यं ? प्रमाणान्तरानपेक्षं कार्यार्थप्रतिपादकत्वम् । तदभावादशब्दतैवेति । स एव तु **प्रतिज्ञातार्थश्चोदनालक्षणोऽर्थो धर्म इति पुनराक्षिप्यते ।** कथमाक्षिप्यत इत्यत्राह— **न सापेक्षानपेक्षयोरेकार्थत्वं संभवतीत्युक्तम् विषयभेदादित्यनेन** प्रकारेणाक्षिप्यते । सापेक्षं वाक्यं अष्टका कर्तव्येत्य[1]कार्यविषयम् । तत्र यदि यां जनाः प्रतिनन्दन्तीत्यनपेक्षं स्यात् तदा कार्यार्थं भवेत् । ततश्च विषयभेदे सति एकार्थत्वं न भवति । गम्यते चैकार्थत्वं, तस्मात् यांजनाः प्रतिनन्दन्तीत्यपि सापेक्षं अकार्यार्थप्रतिपादकमिति कार्येऽर्थे प्रामाण्यं प्रतिज्ञातं पुनराक्षिप्यते । **ननु चात्रापि[2] विषयभेद एव नास्ति द्वयोः कार्यार्थत्वात् ।** स्मृतावपि हि कार्यार्थत्वमेव प्रतीयते । पूर्वपक्ष्याह—**तदेव हि** स्मृतेः कार्यार्थत्वं **न संभवतीत्युच्यते** अत्र हि ता एव स्मृतय उदाहरणं यासामेव हि मूलभूतं श्रुतिवाक्यं कृत्स्नेऽपि वेदे नोपलभ्यते । तत्र च स्मृतेः पौरुषेयवाक्यस्य स्वातन्त्र्येण कार्यप्रतिपादकत्वं नास्ति । न चानुपलब्धं वेदवाक्यमपि कार्यं प्रतिपादयितुमलं येन तन्मूलतां यायात् । राद्धान्तैकदेश्याह— **ननु च कार्यार्थस्यैवानुमानं भविष्यति ।** अस्यार्थः—यद्यपि संप्रति प्रत्यक्ष वेदवाक्यं कार्यार्थप्रतिपादकं नोपलभ्यते तथाप्यासीत् स तादृशो वेदः इत्यनुमानं भविष्यति । यत[3] उपलभ्य स्मृतिकाराः कार्यार्थं स्ववचनैरुपबध्नन्तीति । सोऽयमुत्सन्नवेदमूलस्मृतिपक्षः । पूर्वपक्षवादी दूषयति—**तत्परित्यागे कारणं वक्तव्यम् ।** योऽसावासीद्वेदः तस्याध्येतृभिः परित्यागे

---

(1) A. त्येकार्थविषयं (2) omits अपि (3) C. तत

ननु च कार्यविगातिरपि त्यक्तुं न शक्यते तदानुपूर्व्यसिद्धमनुमानं केन वार्यते; सत्यं न वार्यते यद्यत्र स्मरणाभिमानो न स्यात्।

---

कारणं वक्तव्यम्। केन कारणेनासावध्येतृभिः परित्यक्त इति कारणं वक्तव्यम्। न च तच्छक्यते वक्तुम्। यथानन्तचरणाध्येतृभिः अहरहरभ्यासकृतसंस्कारपटवातिशयवशेन इतरेषां वेदवाक्यानां [1]धारणं तथाऽस्यापि[2] स्यात्। तथा सोऽपि केषां चिच्छाखिनां स्वशाखान्तः पतित एव। स्वशाखाधारिणो[3]ऽनन्तमेधाबलशालिनः सतताभियोगात् द्विजातयो दृश्यन्ते। तत्र कोऽवकाशः परित्यागस्य। परित्यागश्चायमवकाशं लभमानः सकलवेदव्यवहारमेवापाकुर्यात्। सकलाङ्गोपसंहार एवाधिकारसिद्धेः। तत्सिद्ध्यर्थत्वाच्चानुष्ठानस्याशङ्क्यते एव हि कस्यचिदङ्गविधेः परित्यागोऽपि। एवं पदपरित्यागशङ्कया कस्यचिद्वाक्यस्यार्थो नावसीयेत पदानां संभूयकारित्वात्।

यदप्यापस्तंबेनोक्तं—अथ ब्राह्मणोक्ता विधयः तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते—इति तद[पि]न्यायमूलमिति न्यायाभावादनादर्तव्यम्। पूर्वपक्षमाक्षिपति—ननु च कार्यावगतिरपि नैव त्यक्तुं शक्यते तदानुपूर्व्यसिद्धमनुमानं केन वार्यते। अस्यार्थः—अष्टका कर्तव्येति तावत् कार्यावगतिरस्ति। सा च कार्यभूता कादाचित्कत्वात्, कार्यं च कारणाविनाभावि। कारणभाव एवभावोऽभावे चाभाव एवेति[4] कार्यावगतिश्चेयमष्टका कर्तव्येत्येतद्वाक्य एव भवति। तेन तस्यैव वाक्यस्य कारणत्वमनुमातुं युक्तम्। अतः कार्यावगत्यानुमानानुपूर्व्येण क्रमेण सिद्धमनुमानं केन वार्यते, अवगतेः कादाचित्कत्वात्। कार्यं चानुमानं, कार्यत्वाच्च कारणवत्त्वानुमानं, कारणवत्त्वाच्च स्मृतौ कारणवत्त्वानुमानमिति। तदिदमानुपूर्व्यं पूर्वपक्षी समाधत्ते—सत्यं न वार्यतेऽनुमानं यद्यत्र स्मरणाभिमानो न स्यात्। अस्यार्थः—अष्टका कर्तव्येत्येवमादिवाक्यं स्मरणत्वेनाभिमतं येन स्मर्यते तत्स्मरणम्। प्रमाणान्तरप्रतीतोऽर्थो येन वाक्येन प्रतिपाद्यते अष्टकाः कर्तव्या इत्यादिना तदित्यर्थः। भवत्वष्टकादि-

---

(1) C. स्मरणं (2) C. तस्यापि (3) B. & C. धारणे (4) C अनादृत्यं
(5) A. adds तच्चकारणं यदभावेऽभाव एव भावेच भाव (6) B. adds पूर्वं

—इति। एवमपि यथैव पारम्पर्येणाविच्छेदात् 'अयं वेदः' इति प्रमाणमेषां स्मृतिः, एवं इयमपि प्रमाणं भविष्यति—इति। नैतदेवं, प्रत्यक्षेणोपलब्धत्वात्ग्रन्थस्य, नानुपपन्नं पूर्वविज्ञानं, अष्टकादिषु त्वदृष्टार्थेषु पूर्वविज्ञानकारणाभावात् व्यामोहस्मृतिरेव गम्यते; तत् यथा, कश्चित् जात्यन्धो वदेत्, स्मराम्यहं अस्य रूपविशेषस्य—इति, कुतस्ते पूर्वविज्ञानं? इति च पर्यनुयुक्तो जात्यन्धमेवाऽपरं विनिर्दिशेत्; तस्य कुतः? जात्यन्धान्तरात्, एवं जात्यन्धपरम्परायामपि सत्यां

---

स्मरणाभिमाने को दोषः? स्मरणादनुमानं प्राप्नोति न कार्यतः। किं ततः? स्मरणं हि प्रमाणविषयं नार्थविषयं; किमिति? तत्पुरस्सरत्वादर्थसंविदः। सिद्धं तर्हि प्रामाण्यं; नेति ब्रूमः अयथार्थत्वेपि संभवात्।

---

वाक्येषु स्मरणसंमतिः तथापि **स्मरणाभिमाने को दोषः**। उत्तरमाह पूर्वपक्षी—अयं दोषः **स्मरणादनुमानं प्राप्नोति न कार्यतः**। स्मरणात् पौरुषेयाद्वाक्यादनुमानेन भवितव्यं न कार्यतः। यदि कार्यतोऽवगतिरूपादनुमानं स्यात् ततः स्मृतिवाक्यस्यैव कारणत्वमनुमीयते। न चैतदस्ति। भवतु स्मरणादनुमानं ततः किं? उत्तरमाह पूर्वपक्षी—**स्मरणं हि प्रमाणविषयं नार्थविषयं**; यदिदं स्मरणं वाक्यरूपं तत् प्रमाणस्यानुमापकमिति प्रमाणमेव तस्य विषयः नार्थः, अर्थस्याननुमेयत्वात्। **किमिति**। उत्तरं—**तत्पुरस्सरत्वादर्थसंविदः**, वाक्यं हि पौरुषेयं कार्यभूतं प्रमाणमेवानुमापयति नार्थमिति 'अपि च पौरुषेयाद्वचनात्' इत्यत्रोक्तम्। अस्माभिश्च नीतिपथे।

पुनः पूर्वपक्षमाक्षिपति—यदि स्मरणात्प्रमाणमनुमीयते **सिद्धं तर्हि प्रामाण्यं** वेदस्य स्मरणेन प्रमाणेऽनुमितें प्रमाणेन च कार्यरूपेर्थे प्रतिपादिते यांजनाः प्रतिनन्दन्तीत्येवमादीनां कार्यार्थत्वात्। पूर्वपक्ष्याह—न सिद्ध्यति प्रामाण्यमिति **ब्रूमः, अयथार्थत्वेपि संभवात्**।

तस्मान्न कार्यतोऽनुमानसिद्धिः—अस्माकं चेदमनुमानम्। न चास्माकं स्मरणव्यवधानादिदमुपपद्यते न कार्यं स्मरणसम्बन्धि कारणसम्बन्धि तत। न च व्यवहितस्य निरपेक्षं तदस्तीत्यनपेक्षम्। तस्माद्वन्ध्या-सुतस्मरणतुल्यमिदं कार्यम्। ननु चानिदंप्रथमतापि तथात्वे हेतुर्दृष्टा-यथा शब्दार्थावगतौ वेदोऽयं ब्राह्मणोऽयमिति। विषम उपन्यासः दृष्टेऽर्थेऽनिदंप्रथमता युक्ता। अर्थदर्शनमेव हि तत्र मूलतां

---

यदि हि सर्वं पौरुषेयं वाक्यं प्रमाणपूर्वकमेव[1] स्यात् तदा सिद्ध्यत्येव[2] प्रामाण्यं भ्रान्त्यादि-मूलमपि तु बहुलं पौरुषेयं वाक्यमुपलभ्यते चैत्यवन्दनादिवत् तस्मान्न कार्यतोऽनुमानमिति सिद्धम्। युक्त्यन्तरे चाह—**अस्माकं चैतदनुमानं** ये वयं स्मृतिवाक्यात् कार्यं प्रति-पद्यामहे तेषामिदं [3]प्रमाणमनुमानम्। **न चास्माकं स्मरणव्यवधानादिदमुपपद्यते।** यदि हि वेदवाक्यादेव वयं कार्यमवगच्छेम[4] ततोऽस्माकं कार्यावगतिलक्षणं कार्यमुपपद्यते। स्मरणव्यवधाने तु तन्नोपपद्यते। कस्मादित्याह—**न कार्यं स्मरणसंबन्धि कारणसंबन्धि तत्।** यत्कार्यावगतिलक्षणं कार्यं न तत् पौरुषेयवाक्यसंबन्धि। अपि तु स्मरणकारणभूतवेदवाक्य-संबन्धि तत्। **न च व्यवहितस्य कार्यस्य निरपेक्षं तदेव** मूलभूतं वेदवाक्यम**स्तीत्यनपेक्षं** कार्यावगतिलक्षणं कार्यं; **तस्मात् वन्ध्यासुतस्मरणतुल्यमिदं** कार्यावगतिलक्षणं **कार्यम्।** यथा बन्ध्यासुतस्मरणमसिद्धं तथा कार्यावगतिरप्यसिद्धेति हेत्वसिद्ध्या नानुमानोदयः। **ननु चानिदंप्रथमतापि तथात्वे हेतुः दृष्टा यथा शब्दार्थावगतौ वेदोऽयं ब्राह्मणोऽयमिति।** अस्यार्थः—यदा वेदशब्दवाच्योऽयं ग्रन्थः ब्राह्मणशब्दवाच्योऽयं पुरुष इति शब्दार्थसंबन्धावगतौ पुरुषवचसां [5]यथार्थत्वेऽनिदंप्रथमता हेतुः। एकस्मात् पुरुषवचनादुपलभ्य अपरं पुरुषवचनं प्रयुक्तं; तदप्यपरस्मादिति तथेहाप्येकस्मरणादपरंस्मरणं तदप्यपरस्मादिति। परिहरति—**विषम उपन्यासः, दृष्टार्थे वचनेऽनिदंप्रथमतायुक्ता। अर्थदर्शनमेव हि तत्र मूलतां**

---

(1) B. प्रमाणमेव (2) A. सिध्येत् (3) C. प्रमाणानुमानं (4) C. अव-गच्छामः (5) व्यवधानारेव तु (6) A. यथार्थहेतुत्वे

नैव जातुचित्संप्रतीयुर्विद्वांसः सम्यग्दर्शनमेतत्—इति। अतो न आदर्त्तव्यमेवं जातीयकमनपेक्ष्यं स्यादिति ॥

अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात् ॥ २ ॥

अपि वा—इति पक्षो व्यावर्त्यते। प्रमाणं स्मृतिः, विज्ञानं हि तत्, किमिति अन्यथा भविष्यति ?। पूर्वविज्ञानमस्य नास्ति कारणाभावात्—इति चेत्। अस्या एव स्मृतेर्दृढिम्नः

---

प्रतिपद्यत इति। इह तु तस्याभावः। तस्मान्मृग्यमत्र प्रमाणान्तरं न च तत्प्रमाणान्तरमस्तीत्युक्तम्। तस्मादचोदनालक्षणो धर्मः।

अपि वा कर्तृसामान्यात् प्रमाणमनुमानं स्यात्। नाप्रमाणं चोदना, प्रमाणस्य हि तथात्वेऽवगतिरेव कारणम्। अयथार्थत्वे पुनः दुष्टकारणता विपर्ययश्च। सेयं तावदवगतिरस्ति न च विपर्ययः।

---

प्रतिपद्यते। अस्यार्थः—तत्र सर्वेषां व्यवहारावगतिलक्षणकार्यमूलं शब्दार्थसंबन्धदर्शनमेव वाक्यप्रयोगमूलम्। इह तु तस्य[1]वाक्यार्थदर्शनस्याभावः। तस्मात् पौरुषेयवचनपरंपरां परित्यज्य मृग्यं प्रमाणान्तरम्। न च तत्प्रमाणान्तरमस्तीत्युक्तम्। भ्रान्त्यादिमूलस्यापि स्मरणस्य संभवादित्युक्तम्। पूर्वपक्षमुपसंहरति—तस्मान्न चोदनालक्षणोऽर्थो धर्मः इति।

अपि वा कर्तृसामान्यात्। नाप्रमाणं चोदना। कुत इत्यत आह—प्रमाणस्य हि तथात्वे प्रमाणत्वे अवगतिरेव कारणम्। स्वत एवावगतिः प्रमाणमिति मीमांसाजीवरक्षायामुदितम्। [2]अयथार्थत्वे अप्रमाणत्वे दुष्टकारणता विपर्ययश्च कारणम्। सेयं तावदवगतिरस्ति अग्निहोत्रं जुहोतीत्येवमादिभ्यः। न च विपर्ययोऽस्ति

---

(1) B. adds कार्य (2) B. अतथात्वे

**कारणं अनुमास्यामहे; तत्तु न अनुभवनं, अनुपपत्त्या, न हि मनुष्या इहैव जन्मनि एवंजातीयकमर्थमनुभवितुं शक्नुवन्ति! जन्मान्तरानुभूतं च न स्मर्यते; ग्रन्थस्तु अनुमीयेत, कर्तृ-**

---

ननु च कारणाभावात् दुष्टकारणतान्वयः; किमभावः कारणे शक्यते वक्तुं; किमिति न शक्यते? वेदसंयोगस्य संभवात्; सत्यं कारणस्याभावो न शक्यते वक्तुम्। भावोऽपि नैव।

ननु कार्यत एवावगम्यते कारणस्य भावः न, स्मरणव्यवधानादि-त्युक्तम्। किमिदं स्मरणव्यवधानादिति? इदं तत्, स्मरणं ह्यत्र प्रमाण-

---

**ननु च कारणाभावात् दुष्टकारणत्वं**; यदा हि उक्तेन न्यायेन कार्यप्रतिपत्तौ शब्दस्य कारणत्वं निरस्तम् तदा कारणाभावात् दुष्टकारणत्वमेवावगम्यते। राद्धान्ती पृच्छति— **किमभावः कारणे शक्यते वक्तुं**; न शक्यत इति भावः। पूर्वपक्षी पृच्छति—**किमिति न शक्यते**। राद्धान्ती तूत्तरमाह—**वेदसंयोगस्य संभवात्**। अस्यार्थः—अष्टकाः कर्तव्या इत्येवमादि-वाक्यप्रणेतॄणां यदा वेदसंयोगः संभवति तदा तत एव निरपेक्षात् कार्यावगमात् 'यां जनाः प्रतिनन्दन्ति' इत्येवमादीनामपि सिद्धं स्वाभाविकं कार्यार्थत्वम्। कार्यार्थत्वे सिद्धे सिद्धं स्वाभाविकं सर्वशब्दानां कार्यार्थत्वमिति न कारणाभाव. शक्यते वक्तुम्। अतः कारण-दोषोऽपि न शक्यते वक्तुम्। पूर्वपक्ष्याह—**सत्यं कारणस्याभावो न शक्यते वक्तुं भावोऽपि नैव**; **भ्रान्त्यादिमूलस्यापि संभवात्**। राद्धान्ती परिहरति—**ननु कार्यत एव भावोऽवगम्यते कारणस्य**; कार्यतावगतिलक्षणात् कार्यात् कार्यावगतौ कारणस्य भावोऽवगम्यते। एतदुक्तं भवति—अष्टकाः कर्तव्या इत्यस्याः कार्यावगतेः कारणं परिकल्प्यत इति। पूर्वपक्ष्याह—**न** कारणस्य भावोऽवगम्यते **स्मरणव्यवधानादित्युक्तम्**। **किमिदं स्मरणव्यवधानादिति?** उत्तरम्—**इदं तत्** स्मरणव्यवधानादिति **स्मरणं ह्यत्र प्रमाण-**

सामान्यात् स्मृतिवैदिकपदार्थयोः। तेन उपपन्नो वेदसंयोग-स्त्रैवर्णिकानाम्।

---

तयोपलभ्यते। ततः किं? तद्गतमेव प्रामाण्यमनुमातुं शक्यते न शब्दगतम्। उपलब्धस्य हि कारणस्य शक्त्यनुमानं कार्यतः नानुपलब्धस्य। ननु च स्मरणमेव नोपपद्यत इति कारणान्तरानुमानं; कस्य? कार्यस्य। मैवं वोचः, न स्मरणं कारणमित्युक्तम्। स्मरणस्य तर्हि कारणान्तरानुमानम्। किमायातं कार्यस्य?। न ह्यन्यकारणमन्यस्य

---

**तयोपलभ्यते**[1]। अधुनातनप्रमातॄणां स्मृतिवाक्यमेव कार्यावगतौ कारणम्। न तु वेदवचनम्। राद्धान्ती पृच्छति—**ततः किं?** यदि स्मरणादेव कार्यावगतिः। पूर्वपक्षी तूत्तरमाह—इदं ततः तया **तद्गतमेव प्रामाण्यमनुमातुं शक्यते, न शब्दगतं, उपलब्धस्य हि कारणस्य** [2]**शक्त्यनुमानं कार्यतः नानुपलब्धस्य**। यतो हि कार्यावगतिः तस्यैव शक्ति-रनुमातुं युक्ता। स्मरणाच्चेयं कार्यावगतिः न वेदादिति स्मरणस्यैव प्रामाण्यमनुमातुं युक्तं न वेदस्य।

**ननु च स्मरणमेव नोपपद्यत इति कारणान्तरानुमानं** वेदानुमानम्। पूर्वपक्षी पृच्छति—**कस्य** कारणान्तरानुमानम्? किं स्मरणस्य, आहोस्वित् कार्यावगतिलक्षणस्य कार्यस्य। उत्तरम्—कार्यावगतिलक्षणस्य **कार्यस्य** कारणान्तरानुमानम्। पूर्वपक्ष्याह—**मैवं वोचो** राद्धान्तिन्। **न स्मरणं कारणं** कार्यावगतेरि**त्युक्तम्**। तेन तत्र कारणान्त-रानुमानमयुक्तम्। राद्धान्ती वदति—**स्मरणस्य** मन्वादिवाक्यस्य **तर्हि** कारणान्तरानुमानम्। पूर्वपक्षी वदति—यदि स्मरणस्य कारणान्तरानुमानं **किमायातं कार्यस्य?** कार्यावगतिलक्ष-णस्य [3]न तदीयं तावत् कारणमनुमितमित्यर्थः। कुत इत्याह—**न ह्यन्यकारणं अन्यस्य**

---

(1) A. & B. पलक्ष्यते (2) C शक्यमनुमानं (3) omits न

ननु नोपलभन्ते एवंजातीयकं ग्रन्थम्। अनुपलभमाना अप्यनुमिमीरन्, विस्मरणमप्युपपद्यते—इति, तदुपपन्नत्वात्

---

भवितुमर्हति। ननु च प्रणाड्या भविष्यति। कारणतस्तर्हि कार्यं विज्ञेयं न कार्यतः कारणं; कार्यं हि कारणमात्रपर्यवसायि न ततस्तत्प्रणाडीमपेक्षते। कारणनिष्पत्तिर्हि कार्योत्पत्तौ हेतुः न तन्निष्पादकमपि। असम्बन्धस्य चानुमानेऽव्यवस्था प्राप्नोति। ननु च नियतकारणकारणकं हि

---

कारणं भवितुमर्हति। तेन स्मरणस्य कारणं न कार्यावगतेः कारणं भवितुमर्हति। अतः स्मरणकारणेप्यनुमिते न कार्यावगतेः कारणमनुमितं भवति। ननु च स्मरणकारणमपि प्रणाड्या कार्यावगतेः कारणं भविष्यति तेन कार्यावगतिः स्मरणकारणमनुमापयिष्यति। पूर्वपक्षी परिहरति—यद्यन्यकारणमपि प्रणाड्या अन्यस्य कारणं भवति कारणात्तर्हि कार्यं विज्ञेयम्। न कार्यतः कारणम्। अस्यार्थः—प्रथमं कारणमवगम्य अस्येदं[1] कार्यमिति ज्ञानमापद्यते न पुनः कार्यबलेनैव कारणत्वपरिकल्पनम्। कस्मादित्याह—कार्यं हि कारणमात्रपर्यवसायि न [2]तत्प्रणाडीमपेक्षते। कार्याद्धि कारणे परिकल्प्यमाने यदेव तस्य साक्षात् कारणं तस्यैव कारणत्वं परिकल्प्यते। न पुनः कारणकारणस्यापि। कुत इत्यत आह—कारणनिष्पत्तिर्हि [3]कार्योत्पत्तौ हेतुः न तन्निष्पादकमपि। तेन यदेव कार्योत्पत्तौ हेतुः [4]तदेवापेक्षते यदनन्तरमेव कार्यमुत्पद्यते तस्यैव कार्यत्वबलेन कारणत्वं कल्पयितुं शक्यते न कारणकारणस्यापि। यस्तु कारणकारणस्यापि कारणत्वमिच्छति तेन बलादिदमभ्युपगमनीयम्। व्यवहितस्यापि प्रमाणान्तरेण कारणत्वमवगम्य तस्येदं कार्यमित्यवगम्यत इति। तच्च प्रमाणान्तरं नास्ति। तस्मान्न कारणकारणं कार्यस्य कारणम्। अतोऽसंबद्धं तत्। कार्येणासंबद्धस्य चानुमानेऽनवस्था प्राप्नोति। अत्र चोदयति—ननु च नियतकारणकारणकं हि

---

(1) C. तस्येदं (2) C. omits तत् (3) कार्योद्भूतौ (4) C. omits this

**पूर्वविज्ञानस्य त्रैवर्णिकानां स्मरतां, विस्मरणस्य च उपपन्नत्वात् ग्रन्थानुमानमुपपद्यते—इति प्रमाणं स्मृतिः।**

**अष्टकालिङ्गाश्च मन्त्रा वेदे दृश्यन्ते,—'यां जनाः प्रतिनन्दन्ति'**

---

यत्कार्यं तत् कारणकारणमप्यवगमयति; नैवं, तावदेव हि तत्र कारणम्। किमेवं स्मृतेः शब्दकारणकारणतैवास्मिन् कार्ये? ओमित्युच्यते, सिद्धं तर्हि चैत्यवन्दनादीनामपि प्रामाण्यम्।

---

**यत्कार्यं तत् कारणकारणमप्यवगमयति**[1]। तेन असंबद्धस्यापि कारणकारणस्य कार्यतोऽनुमानमस्ति यथा पटादिभ्यः कुविन्दादेः। पटस्य हि साक्षात् तन्तवः समवायिकारणम् तत्संयोगस्त्वसमवायिकारणम्। कुविन्दादयस्तु असमवायिकारणभूततन्तुसंयोगस्योत्पत्तावपि न कारणं साक्षात। तथा हि—तन्तुकर्मभ्यः तन्तुसंयोगाः। तन्तुकर्माणि च कुविन्दहस्ततन्तुसंयोगेभ्यः। पटस्तु तन्तुसंयोगेभ्य इति। अथ च पटादिभ्यः कुविन्दादयोऽप्यनुमीयन्त इति। पूर्वपक्षी परिहरति—**मैवं मंस्थाः असंबद्धं** कारणकारणमप्यनुमीयत इति। **एतावदेव हि तत्र कारणम्**। तन्तुतत्संयोगकुविन्दादिकमेव पटोत्पत्तौ कारणम्। निमित्तकारणस्यापि कारणत्वात् कुविन्दादयश्च पटोत्पत्तौ निमित्तकारणम् तेन नासंबद्धत्वमिति युक्तमेव तेषामनुमेयत्वं च। पूर्वपक्षी राद्धान्तिनो मतमाशङ्कते—**किमेवं स्मृतेः शब्दकारणकारणतैवास्मिन् कार्ये**। अस्यार्थः—यथा पटादौ जनयितव्ये तन्तुसंयोगानां कुविन्दकारणकर्मकारणता एवं स्मृतेरप्यस्मिन् कार्यावगतिलक्षणकार्ये जनयितव्ये शब्दकारणकं यद्विज्ञानं तत्कारणतैवेति किं सिद्धान्तिन् मन्यसे येन शब्दमनुमापयि[2]तुमिच्छसि। सिद्धान्ती तूत्तरमाह—**ओमित्युच्यते**। एवमेवाङ्गीकरोमीत्यर्थः। पूर्वपक्षी दूषयति—**सिद्धं तर्हि चैत्यवन्दनादीनां प्रामाण्यं**, तेषामपि शब्दकारणकारणत्वात् शब्दानुमाने स्थिते तन्मूलत्वेन प्रामाण्योपपत्तेः।

---

(1) A. अनुमापयति। (2) C. अनुमानुमि

—इत्येवमादयः ॥ तथा प्रत्युपस्थितनियमानामाचाराणां दृष्टार्थत्वादेव प्रामाण्यम्,—गुरोरनुगमात् प्रीतो गुरुः अध्यापयिष्यति, ग्रन्थग्रन्थिभेदिनश्च न्यायान् परितुष्टो वक्ष्यति—इति; तथा च दर्शयति,—'तस्मात् श्रेयांसं पूर्वं यन्तं पापीयान् पश्चादन्वेति'—इति। प्रपास्तडागानि च परोपकाराय, न

---

न, अनभ्युपगमादिति चेत्, न तर्हि कार्यतो विशिष्टकारणानुमानं, तस्मात् प्रमाणान्तरं मृग्यम्। न च तदस्तीत्युक्तम्। तदिदं वन्ध्यासुतस्मरणवदकारणं न तत्स्मरणं करणीभवितुमर्हति।

---

पूर्वपक्षी राद्धान्तिनो मतमाशङ्कते—न सिद्ध्यति चैत्यवन्दनादीनां प्रामाण्यं, शब्दमूलत्वेन प्रणेतृभिरनभ्युपगमात्। तथा ह्याह शौद्धोदनि[1]:—"पश्याम्यहं भिक्षवो दिव्येन चक्षुषा सुगतिं दुर्गतिं च" इति। न च दिव्यचक्षुरुपपद्यते यद्योगजं सर्वविषयज्ञानमभिमतम्। न च तथाविधस्य ज्ञानस्य कारणमस्ति। अतो निर्मूलत्वात् चैत्यवन्दनादिस्मृतीनां अप्रामाण्यमिति चेत्। दूषयति—न तर्हि कार्यतो विशिष्टकारणानुमानम्। यदि हि चैत्यवन्दनादिस्मृतिषु शब्दकारणकारणता[2] व्यभिचरिता तदा स्मृतिः व्यभिचारिणी सती न शब्दमनुमापयितुमलम्। तस्मात्—प्रमाणान्तरमत्र मृग्यम्। मूलभूतशब्दसद्भावावधारणे न च तदस्तीत्युक्तम्। यत्र न वैदिकं शब्दमूलमुपलभत इति प्रमाणान्तरेण वैदिकशब्दोपलंभाभाव एवेदमधिकरणम्। पूर्वपक्षमुपसंहरति—तदिदं वन्ध्यासुतस्मरणवदकारणं, यथाऽत्यन्तानुपलब्धवन्ध्यासुतादिस्मरणं न प्रमाणसद्भावे कारणं तथेदमप्यष्टकादिस्मरणम्। ननु मा भूत् स्मरणं प्रमाणसद्भावे कारणं, स्वयमेव तु स्वतन्त्रमर्थपरिच्छेदकारणं भवतु इत्यत्राह—न [3]तत् स्मरणतया करणीभवितुमर्हति न स्वतन्त्रं प्रमाणं भवितुमर्हति। स्मरणत्वादेवेत्यर्थः।

---

(1) A. बुद्धमुनिः (2) A. & C. शब्दकारणता (3) A. न तु स्म

धर्माय,—इत्येवावगम्यते। तथा च दर्शनं,—'धन्वन्निव प्रपा असि'—इति, तथा 'स्थलयोदकं परिगृह्णन्ति'—इति च। गोत्रचिह्नं शिखाकर्म, दर्शनञ्च,—'यत्र बाणाः सम्पतन्ति'—इति। तेन ये दृष्टार्थाः, ते तत एव प्रमाणं, ये त्वदृष्टार्थाः, तेषु वैदिकशब्दानुमानमिति॥

---

तस्मात् दुष्टकारणतैवात्र स्थिता। तस्मादप्रामाण्यं चोदनायाः।

अहो अनवसितनयनीतिज्ञो भवान्। किमिति? कार्यतस्तावत् स्मरणे शक्तिरस्ति। स्मरणमिदानीमकारणमित्यकारणता स्मरणेऽध्यवसीयते। न च तदकारणत्वं स्मरणेऽध्यवसातुं शक्यते संभवाद्वेदसंयोगस्य, कारणान्तरस्य चासंभवात् अस्मिन् कार्ये।

---

**तस्मात् दुष्टकारणतैवात्र स्थिता।** ततश्चाप्रामाण्यं चोदनायाः। राद्धान्तमाह—**अहोऽनवसितनयनीतिज्ञो भवान्।** न भवता नयोऽवसितः; नापि नीतिज्ञाः मीमांसकाः मीमांसकोक्तो नयः, मीमांसकाश्च नीतिज्ञाः। तेन मीमांसकोक्तं नयं मीमांसकांश्च नीतिज्ञान् अनाद्रियमाणः भवान् अनवसितनयनीतिज्ञः। पूर्वपक्षी पृच्छति—**किमिति।** राद्धान्ती तूत्तरमाह—**कार्यतस्तावत् स्मरणे शक्तिरस्ति।** अस्यार्थः—अष्टकाः कर्तव्या इत्युक्ते कार्यावगतिस्तावदुपजायते। यथा च प्रत्यक्षमूलानि लौकिकानि वचांसि वक्त्रभिप्रायान्तर्भावद्वारेण अर्थप्रतीतिमुपजनयन्ति तद्व[1]दष्टकादिवाक्यान्यपि। तेन कार्यावगतिरेवासिद्धेति न शक्यते वक्तुम्। तेन कार्यावगतिलक्षणकार्यदर्शनात् स्मरणस्य तत्र शक्तिरस्तीत्यवगम्यते। **स्मरणमिदानीमकारणमित्यकारणता स्मरणेऽध्यवसीयते। न च तदकारणत्वं स्मरणे शक्यतेऽध्यवसातुं संभवाद्वेदसंयोगस्य कारणान्तरस्यासंभवादस्मिन् कार्ये।** अस्यार्थः—एवं स्मरणस्य कार्यावगतौ[2] कारणत्वे प्रतिभासमानेप्यकारणत्वं भवेत् यदि स्मरणमेव प्रमाणलक्षणकारणशून्यं

---

(1) B. तथा (2) B. स्मरणकार्यावगतौ

भवेत्। न च स्मरणस्यैवंविधस्य कारणं नास्ति स्मरणादेव कार्यभूतात् कारणानुमानात्। कारणे चानुमीयमाने कार्यावगतिशक्तस्मरणलक्षणकार्यानुगुणत्वेन वेद एवानुमीयते। प्रमाणान्तरस्याननुगुणत्वात्। न हि प्रमाणान्तराणि एवंविधस्मरणकारणतामासादयितुमर्हन्ति कार्यं प्रति तस्य प्रमाणत्वाभावात्। न च वेदानुमानमप्यसंभवान्निरस्तम्; वेदसंयोगस्य संभवात्स्मृतिकाराणामपि। ननु न संभवति स्मृतिकाराणामपि वेदसंयोगः वेदस्यानुपलब्धेः। यत्रैव हि विषये सर्वेषां वेदानुपलंभः तद्विषयस्मृतिगोचर एवायं विचारः। अन्यत्र विचारस्य निरवकाशत्वात्। न च तत्र ग्रन्थस्त्वनुमीयत इति ग्रन्थानुमानेन राद्धान्तोपवर्णनं युज्यते। [1]न हि प्रत्यक्षस्य ग्रन्थस्यानुमानं युक्तम्। न चेदं वाच्यं, यद्यपि स्मृतिकाराणां प्रत्यक्षवेदसंयोगो नास्ति तथाप्यनुमाननिबन्धनो वेदसंयोगो भविष्यतीति। लिङ्गाभावात्। अनुमितश्च कथं वेदो भविष्यति इति, कथं च तस्यार्थबोधकत्वम्।

अत्रोच्यते—अनुमितोऽपि तावच्छब्दो बोधक[2] एव, अवगतस्य सतः स्मरणारूढस्य वाचकत्वात्। अत एव लिप्यवगतेभ्योऽक्षरेभ्योऽर्थ [3]प्रतिपत्तिः। न चानुमेयस्यावेदत्वम्, वेदो हि नाम अपौरुषेयः शब्द[4]सङ्घातः। न चानुमीयमानस्य तदानीं अश्रोत्रग्रहणतया शब्दत्वमेवानुपपन्नम्। लिप्यवगतस्येव योग्यतया हि श्रोत्रग्रहणता तस्य विद्यते तस्यापि ककारादिवर्णमयत्वात्। यच्च लिङ्गाभावादननुमानमुपन्यस्तं तदुदाहरणमात्रनिष्ठतया, यथैव ह्यस्माकं स्मृतिवाक्ये दर्शनसमुत्थमनुमानं तथा मन्वादीनामपि स्मृत्यन्तरदर्शनसमुत्थितमित्यनेन क्रमेणापरेषामप्यनुमानमपरेषामपीत्यनादिस्मृतिपरंपराश्रयणान्न कश्चिद्दोषः। अनादित्वेपि च स्मृतिपरंपरायाः [5]स्मृतेरेव द्रढिमा प्रमाणं; [6]तेनानादावप्यन्धपरम्परादिदोषोऽपि नास्ति। सर्वेषां स्मृतिलक्षणलिङ्गमयलोचनशालित्वात्। शब्दार्थसंबन्धवत्। यथा हि शब्दार्थसंबन्धावगमे पूर्वपूर्ववृद्धव्यवहारलिङ्ग[7]सद्भावात् नान्धपरंपरादोषः तथेहापि। न च ग्रन्थानुमानाभ्युपगमेऽपसिद्धान्तदोषः। अर्थो ह्यर्थापत्तौ न शब्दमुपस्थापयति। तस्याकारणत्वात्। स्मृतिस्तु [8]प्रमाणमेवोपस्थापयितुमलं, तस्यैव तद्धेतुत्वात्। अत एव गौतमः 'प्रत्यक्षविधानाद्गार्हस्थ्यस्य'

(1) A. नह्यप्रत्य (2) B. & C. वाचक एव (3) C. क्षरप्रतिपत्तिः (4) C. सन्दर्भः (5) A. स्मृति (6) C. तेनात्राप्य (7) लिङ्गसंबन्धसंभवात् (8) B. & C. प्रामाण्यमेव

चैत्यवन्दनादिष्वसंभवात् न पुनरस्मदीयं कार्यतोऽनुमानम् । तस्माद-तन्त्रमनुपलब्धिर्ग्रन्थविषया । विस्मरणोपपत्तेश्च प्रतिपत्तुः । तस्मा-दव्याहतमनपेक्षत्वं चोदनायाः । यत्पुनरिदमुक्तं 'यां जनाः प्रतिनन्दन्ति' इत्यष्टकालिङ्गा मन्त्रा इति । तदनुपपन्नं; कुतः, तदेकवाक्यतयैवाप्रामाण्यमुक्तम् । कथं तदेव प्रामाण्यहेतुतयोपन्यस्यते ।

---

इत्याह । अन्यथा प्रत्यक्षवेदमूलत्वे सर्वस्मृतीनां इतरेप्याश्रमाः प्रत्यक्षवेदविहिता एवेति गार्हस्थ्यस्य विशेषाभावात् प्रशंसा नोपपद्यते । नन्वेवं चैत्यवन्दनादीनां प्रामाण्यं किमिति न भवतीत्यत्राह—**चैत्यवन्दनादिष्वसंभवात्** । लब्धात्मकः कारणाभावः । अस्यार्थः—ग्रन्थ-प्रणेतृभिः चैत्यवन्दनादिषु यत्कारणमभ्युपगतं [1]तन्न संभवति योगिप्रत्यक्षादि तस्य तेन तेषां वन्ध्यासुतस्मरणवदप्रामाण्यम् । मन्वादयस्तु वेदमूलत्वमेव स्ववचसां प्रतिजानते ।

यः कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तितः ।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ॥

इति ब्रुवाणाः । तस्माद्वैषम्यं चैत्यवन्दनादिभिः अष्टकादीनाम् । अतो भवदीयमेवात्र कारणदोषानुमानं निरस्तं, **न पुनरस्मदीयं कार्यतो ग्रन्थानुमानम्** । **तस्मादतन्त्रमनुपलब्धिः, ग्रन्थविषया,** न निर्मूलतां स्मृतेरापादयितुमलमित्यर्थः ।

यद्यपि हि कस्यांचिच्छाखायामनाम्नातत्वात् । अनभिव्यक्ततया ग्रन्थो नोपलभ्यते तथापि तस्यानुमानमविरुद्धं, अनभिव्यक्ततया सदपि वाक्यं नोपलभ्यत इति । एतदेवोपपादयति **विस्मरणोपपत्तेश्च प्रतिपत्तुः** । यदि ह्यनाम्नातोऽपि शब्द उपलभ्यते ततः प्रतिपत्तुः विस्मरणं नोपपद्यते । दृश्यते च प्रतिपत्तॄणां विस्मरणमपि । ततोऽवगच्छामोऽनाम्नातस्य सतोप्यनुपलंभनं भवतीति । **तस्मादव्याहतमनपेक्षत्वं चोदनायाः** । यत्पुनरिदमुक्तं 'यां जनाः प्रतिनन्दन्तीत्यष्टकालिङ्गा मन्त्राः इति तदनुपपन्नम्; कुतः? उत्तरम्—तदेक-वाक्यतयैवाप्रामाण्यमुक्तम्** । **कथं तदेव प्रामाण्यहेतुतयोपन्यस्यते** स्मृत्येकवाक्यत्वा-

---

(1) C. omits **तन्न संभवति**

नैवेदं प्रामाण्यहेतुतयोपन्यस्तम् , वेदसंयोगस्य तु संभवे लिङ्गम् । कथं कृत्वा तल्लिङ्गं ? तल्लिङ्गापेक्षं देवताभिधानं कर्मणि । तस्मान्मान्त्रवर्णिकीं देवतां अनुवदन् वेदसंयोगमुपोद्बलयति । यत्पुनरिदमुक्तं ये दृष्टार्थास्ते तत एवेति, असदिदमुक्तं ; किमत्रासदुक्तम् ? बाढमतिशयेनासदुक्तम् । अध्ययनविधेः प्रमाणान्तरापेक्षितोक्ता भवति । स्वरूपे वा केन वारितम-

---

पन्नमन्त्रनिरूपणेनैवाप्रामाण्यमुक्तम् । कथं तस्यैव प्रामाण्यहेतु(क)त्वेनोपन्यासः । समर्थयते—**नैवेदं प्रामाण्यहेतुतयोपन्यस्तम्** । **वेदसंयोगस्य तु संभवे लिङ्गम्** । आक्षेप्ता पृच्छति—**कथं कृत्वा,** कथमित्यर्थः अन्यथा एवं कथमित्थमिति क्त्वाप्रत्ययः । उत्तरम्—**तल्लिङ्गापेक्षं देवताभिधानं** [1]**कर्मणि** । अस्यार्थः—यां जनाः प्रतिनन्दन्तीति मन्त्रलिङ्गालोचनया क्वचित्कर्मविशेषे समवेता रात्रिरिति प्रतिभासते । सा रात्रिः स्मृत्या अष्टकाकर्मणि देवतात्वेन समवेतोच्यते । अष्टका हि रात्रिदेवत्या पुष्टिकर्मेति । तेन वेदादवगतोऽर्थः रात्रेः समवायः स्मृत्योच्यते । तद्दर्शनान्मन्यामहे अन्यदपि चोदितमेव स्मृत्या बोध्यत इत्यस्ति वेदसंयोगः स्मृतिकाराणामित्यवगम्यते । तदाह—**तस्मान्मान्त्रवर्णिकीं देवतामनुवदन्** स्मरन् स्मृतिकारो **वेदसंयोगमात्मन उपोद्बलयति** । ये तु मन्त्रादिमूलां स्मृतिमिच्छन्ति तेषां सर्व एवायं ग्रन्थो विरुद्ध्यते । न च मन्त्रार्थवादाः कर्मस्वरूपफलविशेषादिषु प्रामाण्यं प्रतिपत्तुमलमिति । अलमनेनातिस्थूलदोषेण बालजनजल्पितेन पक्षेण दूषितेन । एतेनैव प्रयोगविधिमूलतापि स्मृतीनां विनिवारिता । किञ्च प्रयोगविधिसंबन्धेऽपि स्मृत्यर्थस्य किं प्रमाणमित्यपि चिन्तनीयमेव । **यत्पुनरिदमुक्तम्—ये दृष्टार्थास्ते तत एव प्रमाणमिति** । **असदिदमुक्तम्** । समर्थयिता पृच्छति—**किमत्रासदुक्तं,** न किञ्चिदसदुक्तमित्यर्थः । अत्राक्षेप्ता आह—**बाढमतिशयेनासदुक्तम्** । यस्मादेवं वदता प्रमाणान्तरापेक्षा उक्ता भवति यानि दृष्टार्थानि गुर्वनुगमनादीनि अध्ययनविधावङ्गत्वेन स्मर्यन्ते तत्स्मृतिषु प्रयोजनदर्शनमेव मूलमित्युच्यते **तेनाध्ययनविधेः प्रमाणान्तरापेक्षिता उक्ता भवति** । अङ्गग्राहकप्रमाणान्तरापेक्षिता उक्ता भवति । अङ्गग्राहकप्रमाणान्तरापेक्षित्वात् । समर्थयिता आह—**स्वरूपे वा केन वारितम-**

---

(1) C. देवताविधानं

अथ विरोधाधिकरणम् ॥

विरोधे त्वनपेक्ष्यं स्यात् असति ह्यनुमानम् ॥ ३ ॥

**अथ यत्र श्रुतिविरोधः, तत्र कथं ?। यथा औदुम्बर्याः सर्ववेष्टनं 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति श्रुत्या विरुद्धम्। अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यचरणं 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत'—इत्यनेन विरुद्धम्। 'क्रीतराजको भोज्यान्नः' इति 'तस्मात् अग्नीषोमीये संस्थिते यजमानस्य गृहेऽशितव्यं'—इत्यनेन विरुद्धम्। तत् प्रमाणं, कर्तृसामान्यात्,—इत्येवं प्राप्ते ब्रूमः,-अशक्यत्वाद्व्यामोहः,—इत्यवगम्यते। कथमशक्यता ?।**

---

वघातादेरिव दृष्टार्थत्वम्। कथं तर्हि उपरितनेऽधिकरणे दृष्टार्थत्वादप्रामाण्यम् ? तत्रैव विशेषं वक्ष्यामः।

**विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्।** यदि संभवति वेदसंप्रयोगेऽप्रतिहतं कार्यानुमानं स्मृताविति प्रामाण्यं वेदस्याप्रामाण्यमपि

---

**वघातादेरिव दृष्टार्थत्वम्।** अस्यार्थः—यथाऽवघातादेः स्वरूपे दृष्टार्थत्वं तथा गुर्वनुगमनादीनामपि नैयोगिके तु स्वरूपे [1]नास्त्येव दृष्टार्थत्वम्। तेन स्वरूपे भवतु प्रमाणान्तरापेक्षा। नैयोगिके तु स्वरूपे सिद्धमेवानपेक्षत्वं; यदि दृष्टार्थत्वात् गुर्वनुगमनादिस्मृतिः प्रमाणं **कथं तर्हि उपरितनेऽधिकरणे** हेतुदर्शनाच्चेत्यत्र दृष्टार्थत्वात्तदप्रामाण्यमुक्तम्? उत्तरम् **—तत्रैव विशेषं वक्ष्यामः।**

**विरोधे त्वनपेक्षं स्यात् असति ह्यनुमानम्।** यदि संभवति वेदसंप्रयोगे अप्रतिहतं **कार्यात्** स्मृतिलक्षणात् वेदानुमानं **स्मृताविति** हेतोः **प्रामाण्यं वेदस्य** तर्हि—**अप्रामाण्य-**

---

(1) B. नात्रैव

अनयैव युक्त्या प्रसक्तम्। कथं ? विरोधात्। विरोधोऽपि च स्मृत्या सह वेद उपलभ्यते। विरोधे चाप्रामाण्यं परस्परव्याघातात्। यथा औदुम्बर्याः सर्ववेष्टनं स्पर्शनेन। सत्यमेवं यद्यन्यतः कार्यानुमानविघातो न स्यात्। कुतोऽन्यतः ? विरुद्धादेव वैदिकाद्वचसः,

---

मनयैव युक्त्या प्रसक्तम्। कथम्? उत्तरम्—विरोधात्। विरोधो हि स्मृत्या सह वेदस्योपलभ्यते विरोधे च अप्रामाण्यं स्फुटम् परस्परव्याघातात्। यथा औदुंबर्याः सर्ववेष्टनं स्पर्शनेन सह परस्परव्याहतम्। अत्रायं भावः—यथा ह्यविरुद्धा स्मृतिः वेदमुपस्थापयति[1] तथा विरुद्धापि तुल्यत्वाद्धेतोः। मन्वादयो हि प्रत्ययिता इति तद्वचनाद्वेदानुमानम्। तच्च विरुद्धस्मृतिविषयेपि समानम्। यदि परस्परविरुद्धार्थाः श्रुतयो न संभवेयुः तदा भ्रान्त्यादिमूला विरुद्धार्था स्मृतिः स्यात्। तथा चोक्तं **मीमांसातन्त्रवार्तिके**—

परस्परविरुद्धत्वं श्रुतीनां न भवेद्यदि।
स्मृतेः श्रुतिविरुद्धायाः ततो मूलान्तरं भवेत्॥ इति

दृश्यन्ते च उदितानुदितहोमविधिवत् अतिरात्रे षोडशिग्रहणाग्रहणवच्च सहस्रशः श्रुतयोप्यसंभवद्युगपदनुष्ठानार्थतया परस्परविरुद्धार्थाः। ततश्च विरुद्धार्थवेदानुमाने तेन सह परस्परव्याघाते दुर्लभं प्रामाण्यं वेदस्य।

अथ मन्वादीनां विरुद्धार्थस्मृतिविषये प्रत्ययितत्वं नास्तीत्यननुमानं हन्त तर्हि[2] अन्यत्राप्यननुमानमिति पुनरप्यप्रामाण्यं; तथा च **मीमांसातन्त्रवार्तिक** एवोक्तम्—

कदाचिच्छ्रुतिमूलत्वमुक्त्वा भ्रान्त्यादिमूलता।
[3]स्मृतिभिः प्रतिपन्ना चेत् कस्तामिन्द्रोऽपि वारयेत्॥ इति

राद्धान्तमाह—**सत्यमेवं** भवेद्विरोधाद्वेदस्याप्रामाण्यं **यद्यन्यतः कार्यानुमानविघातो न स्यात्।** कुतोऽन्यतोऽनुमानविघात इत्यत्राह—**विरुद्धादेव वैदिकाद्वचसः।** कथं पुनः तस्यानुमान-

---

(1) B. वेदमनुमापयति (2) B. & C. उत्तरं—न तर्हि अन्यत्राप्यनुमानमिति
(3) B. श्रुतिविप्रतिपन्ना

स्पर्शविधानात् न सर्वा शक्या वेष्टयितुं, उद्गायता स्प्रष्टुञ्च। तामुद्गायता स्प्रष्टव्यामवगच्छन्तः केनेमं संप्रत्ययं बाधेमहि। सर्ववेष्टनस्मरणेन—इति ब्रूमः।

ननु निर्मूलत्वाद्व्यामोहः तत् स्मरणं इति। वैदिकं वचनं मूलं भविष्यति इति। भवेद्वैदिकं वचनं मूलं, यदि स्पर्शनं

---

साक्षाद्वेदप्रतिपादिते ह्यर्थे न तद्विरोधि सापेक्षं पुंवचः प्रमाणं भवितुमर्हति। प्रमाणान्तरानवच्छिन्ने प्रमाणं प्रमाणं भवति न पुनः तदवच्छिन्नेपि। सिद्धसाध्यव्यवस्थाया हि बाधं नैयायिका मन्यन्ते। न सिद्धं साध्येन बाध्यते सिद्धेन हि साध्यं बाध्यते। सिद्धश्चायं वैदिकोऽर्थः प्रत्यक्षावगम्यकारणत्वात् न विरुद्धकारणविषयमनुमानमात्मानं लभते अग्नाविव शैत्यानुमानम्।

---

विघातकर्तृत्वमित्यत्राह—साक्षाद्वेदप्रतिपादिते ह्यर्थे न तद्विरोधि सापेक्षं पुंवचः प्रमाणं भवितुमर्हति। कुत इत्यत्राह—प्रमाणान्तरानवच्छिन्ने ह्यर्थे प्रमाणं प्रमाणं भवितुमर्हति। न पुनस्तद्व्याघातेन हि जाता प्रतीतिः अन्यथा शक्या कर्तुमिति प्रतीत्यन्तरमेव नोपजायते। प्रतीत्यन्तरे विरोधिनि जाते हि सिद्धसाध्यव्यवस्थया हि बाधं नैयायिका मन्यन्ते न सिद्धं साध्येन बाध्यते, अशक्यत्वात्। सिद्धेनैव हि साध्यं बाध्यते। उत्पत्तिप्रतिबन्धनात्। सिद्धश्चायं वैदिकोऽर्थः प्रत्यक्षावगम्यवेदवाक्यकारणत्वात्। पश्चात न तद्विरुद्धकारणविषयमनुमानमात्मानं लभते वह्नाविव शैत्यानुमनम्। यथाऽस्माकमनुमानं नास्ति तथा पूर्वेषामपि। किं निबन्धना तर्हि स्मृतिरियम्? तर्हि भ्रान्तिमूलेति वदामः। यथा अविरुद्धा स्मृतिरनुमापिका तथा विरुद्धापि इति पूर्वपक्षन्यायनिबन्धनया भ्रान्त्या मूलानुमानमविरुद्धमिति मन्वानाः स्मृतीः प्रणीतवन्तः। दृश्यन्ते च पूर्वपक्षन्यायमूलाः स्मृतयः "अङ्गं वा समभिव्याहारात" इति पिण्डपितृयज्ञस्य दर्शाङ्गत्वस्मृतिः पूर्वपक्षन्यायमूलेति स्फुटतरं समभिव्याहारादिति हेत्वभिधानात्। 'वेदमधीत्य स्नायात' इति च स्मृतेः पूर्वपक्षन्यायमूलता प्रथमसूत्रे

व्यामोहः; अव्यामोहे त्वशक्यत्वात् अनुपपन्नम्। यथा, अनुभवनं अनुपपन्नं इति न कल्प्यते, तथा वैदिकमपि वचनम्। कथं तर्हि सर्ववेष्टनस्मरणं ?। व्यामोहः। कथं व्यामोहकल्पना ?। श्रौतविज्ञानविरोधात्। अथ किमर्थं नेमौ विधी विकल्प्येते व्रीहियववत् बृहद्रथन्तरवद्वा ?। नासति व्यामोहविज्ञाने विकल्पो भवति, यदि सर्ववेष्टनविज्ञानं प्रमाणं, स्पर्शनं व्यामोहः, यदि स्पर्शनं प्रमाणं, स्मृतिर्व्यामोहः। विकल्पन्तु वदन् स्पर्शनस्य पक्षे तावत्प्रामाण्यमनुमन्यते, तस्य च मूलं श्रुतिः, सा चेत्प्रमाणमनुमता, न पाक्षिकी। पाक्षिकं च सर्ववेष्टनस्मरणं

---

तस्मान्न विरोधे प्रामाण्यं स्मृतेः। अप्रामाण्याच्चाविरोधः। अविरोधाच्चाविघातः। अव्याघाताच्चाविहतं प्रामाण्यं चोदनायाः। ननु च कार्यार्थत्वे शब्दस्य को विरोधः ? कार्यद्वयं हि प्रतीयमानं एकार्थमपि विकल्पेनानुष्ठीयमानं

---

उक्ता। न चात्र भ्रान्तिमूलताभ्युपगमे सर्वत्र मिथ्याभावः। यत्र हि वेदमूलत्वं नास्तीति बलीयसा प्रमाणेनावगतं तत्र भ्रान्तिमूलकत्वकल्पना। अन्यत्र निर्बीजमेव भ्रान्तिमूलत्वमिति स्मृतिदार्ढ्यात् वेद एवानुमीयते। अनेनेदमपहस्तितं यदुक्तं—

अविरोधे श्रुतिर्मूलं न मूलान्तरसंभवः।
विरोधे त्वन्यमूलत्वमिति स्यादर्धवैशसम् ॥ इति

इह चात्यन्ताप्रत्यक्षवेदमूला विरुद्धार्थविषया स्मृतिः उदाहरणं; तस्मान्न विरोधे प्रामाण्यं स्मृतेः। अप्रामाण्याच्चाविरोधः अविरोधे चाव्याघातः। अव्याघाताच्चाविहतं प्रामाण्यं चोदनायाः।

अधिकरणारंभमाक्षिपति—ननु च कार्यार्थत्वे शब्दस्य को विरोधः। कस्मात् कार्यार्थत्वे विरोधो नास्तीत्यत आह—कार्यद्वयं हि प्रतीयमानं एकार्थमपि विकल्पेनानुष्ठीयमानं

पक्षे तावन्न शक्नोति श्रुतिं परिकल्पयितुं स्पर्शविज्ञानेन बाधितत्वात्। ततश्च अव्यामोहे च तस्मिन्न शक्या श्रुतिः कल्पयितुम्। न चाऽसावव्यामोहः पक्षे, पक्षे व्यामोहो भविष्यति इति, यद्येव

---

न परस्परं व्याहन्तुमुत्सहते। सतत्त्वं हि वस्तुनः सिद्धस्य विरुद्धमवगम्यमानं परस्परव्याघातं संविदः उपजनयति। कार्यं पुनरेकतया प्रतिपत्तुं न शक्यते अनुबन्धादिभिर्भेदेनैवावगमात्। भिन्नानुबन्धं च न स्वरूपे विरोधमावहति एककार्यत्वाच्च युगपदनुष्ठानविरोधमात्रं, निर्ज्ञातस्वरूपस्य हि कर्मणोऽनुष्ठानं, अनुष्ठानविरोधश्च विकल्पेनैव परिहृतः प्रसङ्गात् कार्यसिद्धेः। तस्माद्विरोध एवात्र नास्ति कार्यार्थत्वाच्छब्दस्य। किमिदमप्रामाण्यमाशङ्क्यते निराक्रियते च।

---

**न परस्परं व्याहन्तुमुत्सहते।** स्वरूपविरोधे हि विरोधः। [1]कार्यद्वयस्य च स्वरूपे विरोधो नास्ति। यदि परमेकार्थत्वात एकानुष्ठानेनैवार्थसिद्धेः एकस्य कृतकृत्यत्वात् औदासीन्यं भवति। **सिद्धस्य हि वस्तुनः** त्रिकोणादेः **सतत्त्वं** स्वभावो रजतशुक्तिकात्वेन **परस्परविरुद्धमवगम्यमानं** [2]**परस्परव्याघातं संविद उपजनयति। कार्यं पुनरेकतया प्रतिपत्तुं न शक्यते। अनुबन्धादिभिः** भिद्यमानैः **भेदेनावगमात्।** **भिन्नानुबन्धं** स्वरूपतो भिन्नमवगम्यमानं भिन्नविषयतया **न स्वरूपे विरोधमावहति, एककार्यतया युगपदनुष्ठानविरोधमात्रम्।** न चानुष्ठानविरोधे स्वरूपविरोधः यस्मादन्यदनुष्ठानं अन्यच्च स्वरूपम्। एतदेव विवृणोति—**निर्ज्ञातस्वरूपस्य हि कर्मणोऽनुष्ठानम**र्थिभिः क्रियते सकृत् असकृद्वा। अनेन भेदमेव स्पष्टयति। कर्मस्वरूपभेदे कचिदनुष्ठानैक्यं तन्त्रेण संप्रतिपन्नद्रव्यदेवतानामिव कर्मणाम्। तथा कर्मस्वरूपाभेदेप्यावृत्त्याऽनुष्ठानं सोमयागवत्। तेनानुष्ठानस्वरूपयोः भेदः। **अनुष्ठानविरोधश्च विकल्पेनैव परिहृतः प्रसङ्गात् कार्यसिद्धेः। तस्माद्विरोध एवात्र नास्ति कार्यार्थत्वाच्छब्दस्य। किमिदमप्रामाण्यमाशङ्क्यते निराक्रियते च?** समा-

---

(1) B. adds कस्मात् कार्यार्थत्वे चेद्विरोधोनास्तीत्याह (2) B. व्याघातसंविदमु

हि तस्यैकस्मिन् पक्षे मूलं, तदेवेतरस्मिन्नपि, एकस्मिंश्चेत्पक्षे न व्यामोहः, श्रुतिप्रामाण्यतुल्यत्वादितरत्राप्यव्यामोहः; न च असावेकस्मिन् पक्षे श्रुतिर्निबद्धाक्षरा हि सा न प्रमादपाठः

---

सत्यं भवेदेतदेवं यद्यनुष्ठानविरोधे कार्यविरोधो न स्यात्। ननूक्तं बृहद्रथन्तरादिषु अनुष्ठानविरोधे सत्यपि कार्यविरोधो न जायत इति। अनभिज्ञो भवान् वैकल्पिकानां पदार्थानां; अनुष्ठानमेव हि कार्यमित्युच्यते। तद्विरोधे कार्यविरोधो नास्तीति प्रलापः।

कथं तर्हि पुनः पुनरनुष्ठानं बहुभिश्च। तथैवावगमात् कार्यस्य। व्याघातस्तर्हि व्रीहिभिर्यजेत यवैर्यजेतेति। बाढम्, कथं तर्हि प्रामाण्यं? उक्तमनपेक्षत्वादिति। किमनपेक्षता व्याघाते [प्रामाण्ये] करिष्यति।

---

धत्ते—सत्यं भवेदेवं यद्यनुष्ठानविरोधे [1]कार्यविरोधो न स्यात्। अनुष्ठानविरोधे त्वस्त्येव कार्यविरोधः। ननूक्तं बृहद्रथन्तरादिष्वनुष्ठानविरोधे सत्यपि कार्यविरोधो न जायते इति। परिहरति—अनभिज्ञो भवान् वैकल्पिकानां पदार्थानां, अनुष्ठानमेव हि कार्यमित्युच्यते नापरं कार्यमस्ति तद्विरोधे चानुष्ठानविरोधे कार्यविरोधो नास्तीति प्रलापः। यद्यनुष्ठान-कार्ययोरैक्यम्। कथं तर्हि पुनः पुनरनुष्ठानं बहुभिश्च एकत्वात् कार्यस्यानुष्ठानमप्येकमेव स्यादित्यर्थः। उत्तरं—तथैवावगमात् कार्यस्य। कार्यमपि पुनः पुनरवगम्यते बहूनां चेति न कश्चिद्दोषः। यद्यनुष्ठानकार्ययोरैक्यं तर्हि अनुष्ठानाव्याघातेपि व्याघातो व्रीहि-भिर्यजेत यवैर्यजेत इति।

परिहरति—बाढं व्याघातः। यदि व्याघातः कथं तर्हि प्रामाण्यम्? उत्तरं—उक्त-मनपेक्षत्वात् प्रामाण्यमिति। चोदयति—किमनपेक्षता[2]प्रामाण्ये करिष्यति? प्रामाण्यं

---

(1) B. reads कार्यार्थविरोधो (2) C. व्याघाते

इति शक्या गदितुम् । तेन नैतत्पक्षे विज्ञानं व्यामोहात् पक्षान्तरं संक्रान्तं—इत्यवगम्यते । तत्र दुःश्रुतस्वप्नादिविज्ञान-मूलत्वं तु सर्ववेष्टनस्य इति विरोधात् कल्प्यते ; न हि तस्य सति विरोधे प्रामाण्यमभ्युपगन्तव्यं—इति किञ्चिदस्ति प्रमाणम् । तस्मात् यथैवैकस्मिन् पक्षे न शक्या श्रुतिः कल्पयितुं, एवं अपरस्मिन्पक्षे, तुल्यकारणत्वात् ।

---

व्याघातो हि परस्परविपर्ययमापादयति विपर्ययश्च मूर्धाभिषिक्तमप्रामाण्ये । सत्यमेवम् । इह तु विपर्यय एवात्मानं न लभते उभयोरनपेक्षत्वात् । न तर्हि व्याघातः । कथं न व्याघातः ? एकत्वादनुष्ठानस्यैकशब्दात् । किमिदं महेन्द्रजालोपमम् ? इदमिदं एकत्वाच्छास्त्रस्य ; ततश्च विरोधावगतेस्तथैव ।

---

प्रत्यकिञ्चित्करेत्यर्थः । कुत इत्याह—व्याघातो हि परस्परविपर्ययमापादयति । विपर्ययश्च मूर्धाभिषिक्तमुदाहरणमप्रामाण्ये[1] । परिहरति—सत्यमेवं विपर्ययो मूर्धाभिषिक्तमप्रामाण्ये इति किन्तु इहानपेक्षत्वे [2]स विपर्यय एवात्मानं न लभते उभयोरनपेक्षत्वात् । अग्रहण-निबन्धनो हि विपर्ययः । न चानपेक्षवचनस्याग्रहणं संभवति । यदि विपर्ययस्यात्मलाभो नास्ति न तर्हि व्याघातः । समाधत्ते—कथं न व्याघातः यावता व्याघात एवैकत्वादनुष्ठानस्य चैकशब्दात् । एको हि प्रयोगविधिरेकमेवानुष्ठानमाक्षिपति । एकत्वे चानुष्ठानस्यास्त्येव व्याघातः । पुनश्चोदयति—किमिदं महेन्द्रजालोपमं व्याघातोऽस्ति विपर्ययो नास्ति इति । परिहरति—इदमिदं, एकत्वाच्छास्त्रस्य । ततश्च विरोधावगतेः तथैव तत । अस्यार्थः-एकेन शास्त्रेण विरुद्धमनुष्ठानं बोधितं युगपदनुपसंहरणीयत्वात् । न च विरुद्धत्वेपि बला-बलमस्तीति द्वयमप्यविपरीतं केवलं विकल्पाश्रयणं भवति यौगपद्येन विरोधात् । नन्वेवं

---

(1) C. अप्रामाण्यं (2) B. omits स C. reads सति

अपि चेतरेतराश्रयेऽन्यतः परिच्छेदात्। केयमितरेतराश्रयता?। प्रमाणायां स्मृतौ स्पर्शनं व्यामोहः, स्पर्शने प्रमाणे स्मृतिर्व्यामोहः, तदेतदितरेतराश्रयं भवति। तत्र स्पर्शनस्य क्लृप्तं मूलं, कल्प्यं स्मृतेः, सोऽसावन्यतःपरिच्छेदः, कल्प्यमूलत्वात् स्मृतिप्रामाण्यमनवक्लृप्तं; तदप्रामाण्यात् स्पर्शनं न व्यामोहः, तदव्यामोहात् स्मार्तश्रुतिकल्पनाऽनुपपन्ना प्रमाणाभावात्। ननु एवं सति व्रीहिसाधनत्वविज्ञानस्यापि अव्यामोहात् यवश्रुतिर्नोपपद्येत। सत्यं नोपपद्यते, यद्यप्रत्यक्षा स्यात्, प्रत्यक्षा त्वेषा, न हि प्रत्यक्षमनुपपन्नं नामास्ति। द्वयोस्तु श्रुत्योर्भावात्, द्वे ह्येते वाक्ये, तत्रैकेन केवलयवसाधनता गम्यते, एकेन केवलव्रीहिसाधनता। न च, वाक्येनावगतोऽर्थोऽपह्नूयते!।

---

तत्स्मृतिस्तु न तथा। कुतः अप्रसिद्धेरेकतायाः। आनुमानिकं हि तत्र कारणं अनुगते च प्रत्यर्थिनि नानुमानमात्मानं लभते इत्युक्तम्। तस्मादितरेतराश्रयतात्र व्याहता सिद्धे नेति वैषम्यम्। तस्मात्र स्मृति-

---

स्मृतावप्येवमेव कस्मान्न भवति येनैकान्ततः स्मृतेर्बाध इत्यत्र आह—तत्स्मृतिस्तु न तथा। कुतः? अप्रसिद्धेरेकतायाः। एकशास्त्रत्वमेव तत्रासिद्धम्। कुत इत्याह—आनुमानिकं हि तत्र कारणम्। अवगते च प्रत्यर्थिनि नानुमानमात्मानं लभते इत्युक्तम्। वेदानुमाने ह्येकशास्त्रत्वं स्यात्। न चात्र वेदानुमानसंभवः प्रत्यक्षवेदविरोधात्। तस्मादितरेतराश्रयताऽत्र व्याहता सिद्धे नेति वैषम्यम्। यासावितरेतराश्रयता विरुद्धयोः श्रुतिस्मृत्योरुक्ता—श्रुतिप्रामाण्ये स्मृतिर्व्यामोहः। स्मृतिप्रामाण्ये श्रुतिर्व्यामोहः इति साऽत्र व्याहता। अन्यतः सिद्धेन स्मृतिव्यामोहेन प्रत्यक्षवेदे प्रत्यर्थिनि वेदानुमानविरोधेन भ्रान्तिमूलतया स्मृतेः व्यामोहस्य सिद्धत्वात्। अधिकरणद्वयार्थमुपसंहरति—तस्मात् स्मृति

तस्मात् व्रीहियवयोरुपपन्नो विकल्पः, बृहद्रथन्तरयोश्च । तस्मात् उक्तं श्रुतिविरुद्धा स्मृतिरप्रमाणं इति । अतश्च सर्ववेष्टनादि नादरणीयम् ॥

हेतुदर्शनाच्च ॥ ४ ॥

लोभाद्वास आदित्समाना औदुम्बरीं कृत्स्नां वेष्टितवन्तः केचित्, तत् स्मृतेर्बीजम् । बुभुक्षमाणाः केचित् क्रीतराजकस्य

---

मुखमप्रामाण्यं निषिद्धं चोदनायाः प्रमाणान्तरोपलभ्यमानकारणतयाऽनुमान-प्रतिषेधः । तदुक्तम्—

हेतुदर्शनाच्च इति । अधिकरणान्तरं वेति कोऽर्थः ? अयमर्थः । पूर्वयुक्तिनिरपेक्षं युक्त्यभिधानम् । युक्त्यन्तरापेक्षिणी युक्तिः पूर्वमुक्ता । इह पुनः निरपेक्षतयाऽभिधीयमानाऽधिकरणान्तरमित्युच्यते ।

---

मुखमप्रामाण्यं निषिद्धं चोदनायाः प्रमाणान्तरोपलभ्यमानकारणतया चानुमानप्रतिषेधः तदुक्तम्—

हेतुदर्शनात् इति । आचारदर्शनमूलिकापि विरुद्धार्था स्मृतिरुपपद्यते आचारस्य मूलं लोभः वासोलुब्धेन ह्यृत्विजा प्रतार्याल्पविद्यो यजमानः कृत्स्नामौदुम्बरीं कश्चिद्वेष्टितः तस्याचारस्य वेदमूलतामवगम्य भ्रान्तेन स्मृतिकारेण "औदुम्बरी सर्वा वेष्टयितव्या" इति स्मृतम् । तेन परिदृश्यमानमूलतयोपपत्तेः नात्यन्तापरिदृष्टवेदमूलतानुमानसंभवः ।

अधिकरणान्तरं वा । अधिकरणान्तरं वेति कोऽर्थः । अस्यार्थः—नेदं पूर्वाधि-करणादधिकरणान्तरं तत्रापि हेतुदर्शनाद्धेत्वन्तरानुमानं नास्तीत्युक्तम् । इहापि तदेवोच्यत इति नाधिकरणान्तरत्वम् । परिहरति—अयमर्थः । पूर्वयुक्त्यनपेक्षं युक्त्यभिधानम् एतदेव विवृणोति—युक्त्यन्तरापेक्षिणी युक्तिः पूर्वमुक्ता । इह पुनर्निरपेक्षतयाऽभिधीय-मानाऽधिकरणान्तरमित्युच्यते । विरोधस्तावत् पूर्वाधिकरणे मूलयुक्तिः अनुमाननिरोधे

भोजनमाचरितवन्तः। अपुंस्त्वं प्रच्छादयन्तश्चाष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चरितवन्तः तत एषा स्मृतिः इत्यवगम्यते।

अथ दृष्टमूलकस्मृत्यप्रमाण्याधिकरणम्॥

अधिकरणान्तरं वा। 'वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाति' इति, 'यूपहस्तिनो दानमाचरन्ति'—इति, तत् कर्तृसामान्यात्

---

कथं पुनः युक्त्यन्तरनिरपेक्षं कार्यानुमानविरोधे हेतुदर्शनं? हेतु-दर्शनादेव। न हि दृष्टे हेतौ हेत्वन्तरानुमानं क्रमते। दृष्टोऽत्र लोभ एव हेतुः। तस्मात् दृष्टे हेतौ न वैदिकानुमानं विरुद्धम-विरुद्धं वा भवति। असति वेदानुमाने दृष्टकारणानां वैदिकप्रयोग-ग्राह्यत्वं किमस्ति। अस्तु; क्व तर्हि अप्रामाण्याभिधानमुपयुज्यते।

---

हेतुदर्शनमभ्युच्चयः। इह तु हेतुदर्शनमेव केवलमनुमानविरोधे कारणमिति भवत्यधिकरणान्त-रत्वम्। अत एवाविरोधविषय एवोदाहृतः 'यूपहस्तिनो दानमाचरन्ति" इति। कथं पुनः युक्त्यन्तरनिरपेक्षं कार्यानुमानविरोधे[1] हेतुदर्शनम्? उत्तरं—हेतुदर्शनादेव। यत एव हेतुर्दृश्यते अत एव च कार्यानुमाननिरोधः। न हि दृष्टे हेतौ हेत्वन्तरानुमानं क्रमते। दृष्टश्चात्र लोभ एव हेतुः ऋत्विग्वर्ती येन यजमानः तथा कारितः, [2]यदा-चारदर्शनाक्रान्तः स्मृतिकारः स्मृतिं निबद्धवान्। तस्मात् दृष्टे हेतौ न वैदिकानुमानं विरुद्धं पूर्वाधिकरणवत् अविरुद्धं वा एतदधिकरणवद्भवति। अत्र पृच्छति—असति वेदानुमाने दृष्टकारणानां वैदिकप्रयोगवचनग्राह्यत्वं किमस्ति? येप्यन्ये दृष्टकारणाः तेषां किं वेदानुमानं भवति न वा। यदि भवति तदा प्रयोगवचनग्राह्यता भवति। अथ न भवति ततो नेति। उत्तरम्—अस्तु वैदिकप्रयोगवचनग्राह्यत्वं, भवतु वेदानुमानमिति यावत्। चोदयति—क्व तर्हि अप्रामाण्याभिधानमुपयुज्यते यदि तत्रापि वेदानुमानम्

---

(1) C. विरोधि　(2) C. तदाचार

प्रमाणं इति प्राप्तेऽप्रमाणं स्मृतिः, अत्रान्यन्मूलं,—लोभादाचरितवन्तः केचित्, तत्र एषा स्मृतिः। उपपन्नतरश्चैतत् वैदिकवचनकल्पनात्॥

अथ पदार्थप्राबल्याधिकरणम्॥

शिष्टाकोपेऽविरुद्धमिति चेत्॥ ५॥

---

अदृष्टोपकारिणो न गृह्यन्ते दृष्टार्थास्तु गृह्यन्त इति विषयभेदः तस्माददृष्टार्थम्। दृष्टकारणमप्रमाणमिति युक्तमप्रामाण्याभिधानम्। तदुक्तं वैसर्जनहोमीयस्य वाससो दृष्टार्थं दानम्।

शिष्टाकोपेऽविरुद्धमिति चेत्। विरोधाविरोधपरिहारेण स्थितं प्रामाण्यं चोदनायाः। स एवायं विरोधः क्वास्ति क्व नास्तीति

---

उत्तरम्—अदृष्टोपकारिणो न गृह्यन्ते दृष्टार्थास्तु गृह्यन्त इति प्रामाण्याप्रामाण्ययोर्विषयभेदः। यस्य हि क्रतौ दृष्टं कार्यं दक्षिणादानस्येव तस्य तावत् क्रतुनाऽऽक्षिप्तत्वात् केवलं नियममात्र एव वचनस्य व्यापारः। न च नियमे लोभस्य मूलता संभवति नियमस्य पुरुषं प्रत्यनुपयोगात्। अत एव च सुवर्णशृङ्गीदानादिस्मृतिरपि न लोभमूला। परोपकारः कर्तव्य इति प्रत्यक्षेण वेदेनैव परोपकारे विहिते तद्बलेनैव धनदानाक्षेपे नियममात्रे वचनस्य व्यापारः। तत्र च न लोभः संभवति इति न लोभमूलासौ। यस्य पुनः क्रतौ दृष्टं नास्ति तस्य दानमेव वचनगम्यम्। तत्र लोभस्य संभवात् तन्मूलत्वमेव। तस्मात् क्रतावदृष्टार्थम् दृष्टकारणं संभावितलोभादिमूलमप्रमाणमिति युक्तमप्रमाणाभिधानम्। अत एव चादृष्टार्थं क्रतावप्रमाणम्—तदुक्तं वैसर्जनहोमीयस्य वाससो दृष्टार्थं दानमित्यप्रामाण्यम्।

शिष्टाकोपेऽविरुद्धमिति चेत्। श्रुत्या सह स्मृतेर्विरोधे चाविरोधे चाप्रामाण्यपरिहारो य उक्तः तेन स्थितं प्रामाण्यं चोदनायाः। स एवायं विरोधः क्वास्ति क्व नास्तीति

'आचान्तेन कर्तव्यं' 'यज्ञोपवीतिना कर्तव्यं' 'दक्षिणाचारेण कर्तव्यं' इत्येवंलक्षणानि उदाहरणानि। किमेतानि श्रुति-विरुद्धानि न कर्तव्यानि, उताविरुद्धानि कार्याणि? इति। इति चेत् पश्यसि, तैरप्यनुष्ठीयमानैर्वैदिकं किञ्चिन्न कुप्यति; तस्मात् अविरुद्धानि इति॥

न, शास्त्रपरिमाणत्वात्॥ ६॥

नैतदेवं, शास्त्रपरिच्छिन्नं हि क्रमं बाधेरन्। कथं?। 'वेदं कृत्वा वेदिं कुर्वीत' इतीमां श्रुतिमुपरुन्ध्यात् अन्तरा वेदं वेदिं च, अनुष्ठीयमानमाचमनादि। दक्षिणेन चेकहस्तेनानुष्ठीय-

---

चिन्त्यते हानोपादानार्थम्। विषयव्याप्तिदर्शनं किमर्थं? न्यायस्वरूपाभिधानपरं ह्येतच्छास्त्रं न लक्ष्यनिष्ठम्। सत्यम् यथा भवानाह। न्यायस्वरूपाभिधानमेवेदं विषयव्याप्त्या प्रदर्श्यते, स्वरूपेऽभिहितेपि न्यायस्य कस्मिंश्चिद्विषयेऽसदिव प्रतिभाति कार्यधियाम्। अतः तदपनुत्तये कृतधीभिरयं यत्नः कृतः। यथाऽस्मिन्नेवोदाहरणे क्रमकालविरोधं मन्वानस्य

---

चिन्त्यते हानोपादानार्थम्। यदि विरोधोऽस्ति तदा हानं स्मृतेः कर्तव्यम्। अथ नास्ति तदोपादानम्। अत्र चोदयति—विषयव्याप्तिप्रदर्शनं किमर्थम्? न्यायस्वरूपाभिधानपरं ह्येतच्छास्त्रम्, न लक्ष्यनिष्ठम्। न्यायस्वरूपाभिधानमनेन शास्त्रेण क्रियते। तेन विरोधे हानमविरोधे वा उपादानं स्मृतेरित्युक्ते किमर्थं विरोध एवास्ति नास्तीति चिन्त्यते। परिहरति—सत्यं यथा भवानाह न्यायस्वरूपाभिधानमेवेदं विषयव्याप्त्या प्रदर्श्यते। स्वरूपेऽभिहितेऽपि न्यायस्य कस्मिंश्चिद्विषयेऽसदिव प्रतिभाति कार्यधियाम्। अतस्तदपनुत्तये कृतधीभिरयं यत्नः कृतः। यथाऽस्मिन्नेवोदाहरणे क्रमकालविरोधं मन्वानस्य

मानेषु पदार्थेषु कदाचित् प्रधानं स्वकालं अतिक्रामेत्, उभाभ्यां हस्ताभ्यां अनुतिष्ठन् प्रधानकालं संभावयिष्यति ॥

अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ॥ ७ ॥

अपि वा—इति पक्षव्यावृत्तिः। अगृह्यमाणकारणा एवंजातीयकाः प्रमाणम्। ननु क्रमकालौ विरुन्धन्ति। विरुन्धन्तु, नैष दोषः,—आचमनं पदार्थः, पदार्थानां च गुणः क्रमः, न च गुणानुरोधेन पदार्थो न कर्त्तव्यो भवति। अपि च प्राप्तानां

---

विरुद्धमाचमनादि प्रतिभाति। कथं ? यथाश्रुतस्यार्थस्य विधिवितानवशादनुष्ठानमिति स्थितं क्रमलक्षणे। प्रत्यक्षविधिवितानविरोधात् विरोधः।

---

विरुद्धमाचमनादि प्रतिभाति। 'वेदं कृत्वा वेदिं करोति' इति योऽयं श्रुतिपरिच्छिन्नः क्रमः तस्य विरोधमावहति क्षुतादिषु सत्सु अन्तरा स्मार्तमाचमनं क्रियमाणम्। तथा प्रधानकालता शास्त्रपरिच्छिन्नाऽङ्गानाम्। स्मृत्यनुसारेण दक्षिणेनैकेन हस्तेनानुष्ठाने [1]विरुद्धयते विलंबापत्तेः। ननु च श्रौतस्मार्तपदार्थान् गृहीत्वा क्रमकालसमाश्रयणं ततश्च नास्त्येव विरोध इत्यभिप्रायेणाह—कथमिति। उत्तरं—यथाश्रुतस्यार्थस्य विधिवितानवशादनुष्ठानमिति स्थितं क्रमलक्षणे। अस्यार्थः—श्रुतिपरिच्छिन्नानेव पदार्थान् गृहीत्वा यद्विधिवितानं प्रतीयते तद्वशेनानुष्ठानमिति पञ्चमे स्थितम्। तेषां प्रत्यक्षश्रुतत्वात्। आनुमानिकास्तु स्मार्ताः पश्चात्क्रमविरोधे नानुप्रविशन्ति। तस्मात् [2]प्रत्यक्षात् विधिवितानविरोधाद्विरोधः। तथा कालस्यापि विरोध.। प्रधानकालतयाऽङ्गानामाक्षेपात्। प्रधानस्य च प्रत्यक्षत्वात् ततः [3]प्रधानकालापकर्षे सति तदपकर्षे विरोधः।

---

(1) A. & B. add विकल्प्यते (2) A. प्रत्यक्षविधि (3) B. प्रधानकालापकर्षात्

पदार्थानां उत्तरकालं क्रम आपतति, यदा पदार्थः प्राप्नोति,

---

अत्रोच्यते शास्त्रार्थविरोधे विरोधः। शास्त्रं च कार्यार्थं न विधिवितानार्थमित्युक्तं द्वितीये सूत्रे। कार्यमेव विततं प्रतीयते नित्यं कार्यपरतन्त्रत्वात् वितानस्य, न स्वातन्त्र्येण प्रमेयता कार्यस्य च कार्यान्तरेण विरोधः, न पदार्थवैतत्येन तद्गुणत्वात्। काले कथं? कालोऽपि हि प्रचयः कार्याणाम्। अतस्तदपेक्षत्वात् न विरुद्ध्यते "अपि च प्राप्तानां पदार्थानामुत्तरकालं क्रमं आपतति यदा पदार्थाः प्राप्नुवन्ति तदा क्रम एव नास्ति"। किमनेनानभिहितमभिहितम्? स एव हि गुणभावः क्रमस्य प्रतिपादितः। स चोक्तत्वान्न प्रतिपादनीयः।

---

राद्धान्तमाह—अत्रोच्यते शास्त्रार्थविरोधे विरोधः। शास्त्रं च कार्यार्थं न विधिवितानार्थमित्युक्तं द्वितीये सूत्रे। कार्यार्थे वेदस्य प्रामाण्याभिधानात्। कस्माद्वितानार्थमपि[1] शास्त्रं न भवतीत्यत्राह—कार्यमेव हि विततं प्रतीयते। नित्यं कार्यपरतन्त्रत्वात् वितानस्य न स्वातन्त्र्येण प्रमेयता कार्यस्य च कार्यान्तरेण विरोधः न पुनः पदार्थवैतत्येन तद्गुणत्वात्। न गुणभूतस्य क्रमस्य पदार्थापेक्षिणः पदार्थैः सह विरोधः। एतदुक्तं भवति अवगतेऽनुष्ठेयस्वरूपे श्रौतस्मार्तपदार्थात्मके पश्चात्क्रमकल्पनेति[2] न पदार्थैः सह क्रमस्य विरोधः। काले कथमविरोधः। उत्तरं–कालो हि प्रचयः कार्याणाम्। अतस्तदपेक्षत्वात् कार्यापेक्षत्वात् न कार्यभूतैः स्मार्तैः पदार्थैः सह विरोत्स्यते। अत्र भाष्यम्—"अपि च प्राप्तानां पदार्थानामुत्तरकालं क्रम आपतति। यदा च पदार्थाः प्राप्नुवन्ति तदा क्रम एव नास्ति" इति। तदाक्षिपति—किमनेनानभिहितमभिहितम्?। स एव गुणभावः क्रमस्य प्रतिपादितः योऽसौ पूर्वं सिद्धान्तहेतुत्वेनोक्तः। स चोक्तत्वान्न प्रतिपादनीयः। गुणभावप्रतिपादनेनापि हि यदा पदार्थाः प्राप्नुवन्ति तदा क्रम एव नास्तीत्युक्तं भवति। अतः कथ-

---

(1) A. विधानार्थतया B. विधानार्थमपि (2) B. & C. पश्चात्क्रमोभवतीति

तदा क्रम एव नास्ति, केन सह विरोधो भविष्यति ? इति। तथा यदि दक्षिणेन नाचर्यते, कालो मा विरोधीत् इति, तत्र कालानुरोधेन पदार्थो नाऽन्यथात्वमभ्युपगच्छेत्। प्रयोगाङ्गं हि कालः पदार्थानामुपकारकः, अतो न कालानुरोधेन व्यथयितव्यः पदार्थः। अपि च शौचं दक्षिणाचारता यज्ञोपवीतित्वं च एवंजातीयका अर्थाः व्यवधातारो न भवन्ति, सर्वपदार्थानां शेषभूतत्वात्। तस्मात् आचमनादीनां प्रामाण्यम् ॥

---

अस्त्यत्राभिप्रायः—न च वितानप्रचयावेव क्रमकालाविति मन्यते। कथं ? पौर्णमास्यां पौर्णमास्या यजेत कः प्रचयोऽत्र कर्मणां ? द्वितीयादिष्वपि तुल्यत्वात् न तत्प्रचयस्य पौर्णमासीत्वं युक्तम्। कार्यतया च क्रमावगतिर्दृष्टा—यथाऽध्वर्युर्गृहपतिं दीक्षयित्वेति। तस्मान्न गुणतया परिहार उपपद्यते। कार्यत्वात् कार्यतया च विरोध इति।

---

मिव युक्त्यन्तरमिवेदमुच्यते। समाधत्ते—अस्त्येवात्राभिप्रायः वितानप्रचयावेव क्रमकालौ न भवत इति मन्यते। यदि हि तौ तथाभूतौ भवतः न भवेदेव विरोधः। स्वतन्त्रपदार्थस्वरूपत्वे तु युक्त एव विरोधः इति कथं क्रमकालौ वितानप्रचयात्मकौ न भवतः। उत्तरम्—पौर्णमास्यां पौर्णमास्या यजेतेति कः प्रचयोऽत्र कर्मणात्। प्रयाजादिपदार्थानां प्रचयस्य द्वितीयादिष्वपि तुल्यत्वात् न तत्प्रचयस्य तावत् पौर्णमासीत्वं युक्तम्। कार्यतया च क्रमावगतिर्दृष्टा। यथाऽध्वर्युर्गृहपतिं दीक्षयित्वेति। क्रमस्य क्त्वाप्रत्ययोच्चारणादत्र कर्तव्यतोच्यते। तस्मान्न गुणतया परिहारः संभवति कार्यत्वात् कार्यतया च विरोध इति। तदिदं चोद्यमनेन भाष्येण परिह्रियते। यथा च परिह्रियते तथा च दर्शयितुं

तदिदं परिह्रियते—किं प्राप्ते दीक्षाकार्ये दीक्षावितानमवगम्यते अध्वर्युर्गृहपतिमित्येतस्मिन् वाक्ये उत तत्प्राप्तिनिरपेक्ष एवायं स्वतन्त्रः कार्यतयाऽवगम्यते समिदादिवत्। न हि कार्यमन्तरेण कार्यवितति-तिरवगम्यते कार्यस्य चेद्विततिः न कार्यान्तरतया शक्यतेऽवगन्तुम्। तस्मादनवगते कार्ये वितानस्यानवगमात् केन विरोधः? कस्तर्हि अध्वर्युर्गृहपतिमित्यस्य विषयः? स्वावसरे वक्ष्यामः। कालेपि चायमेव परिहारः। कथं? पौर्णमासीशब्दवाच्यं किमभिप्रेतमायुष्मतः तत्रापि क्रिया-प्रचितिरेव संयोगविभागजा ग्रहाणाम्। इयांस्तु विशेषः चोदितकार्यप्रचिति-

---

सन्देहं तावदुपन्यस्यति—किं प्राप्ते दीक्षारूपे कार्ये दीक्षावितानमवगम्यते अध्वर्युर्गृहपति-मित्यस्मिन् वाक्ये उत तत्प्राप्तिनिरपेक्ष एवायं क्रमः स्वतन्त्रः कार्यतयाऽवगम्यते समिदादिवत्। तत्र न स्वतन्त्रः कार्यतयावगम्यते। न हि कार्यमन्तरेण कार्यविता[1]न मवगम्यते। कार्यस्य चेद्विततिः न स्वतन्त्रकार्यतया[2] शक्यतेऽवगन्तुम्। तस्मादनवगते कार्ये कार्यवितानस्यानवगमात् केन विरोधः। यदि क्रमः कार्यान्तरतया नोच्यते कस्तर्हि अध्वर्युर्गृहपतिमित्यस्य विधेः विषयः। उत्तरं—स्वावसरे पञ्चमे वक्ष्यामः। कालेऽपि चायमेव भाष्योक्त एव परिहारः। कथमयं परिहारः? उत्तरं—पौर्णमासीशब्दाभिधेयं किमभिप्रेतमायुष्मतः। यावता यदि तावत् काल एको विभुर्नित्यश्च अभिधेयः तदा तस्य द्वितीयादिष्वप्यविशेषात् अनभिधेयत्वापत्तिः[3]। स एवाह—अतोऽत्रापि क्रियाप्रचितिरेव ग्रहाणां संयोगविभागजा पौर्णमास्यादिशब्दवाच्या चन्द्रादित्ययोः संयोगाद्या क्रियाप्रचितिर्जा-यते सा प्रतिपदादिः पौर्णमासीपर्यन्ता। या च विभागजा सा प्रतिपदादिरमावास्यापर्यन्ता। तस्यां सत्यां काले तदुपाधिभिन्ने प्रतिपदादिशब्दप्रयोगात् तस्या एव तच्छब्दवाच्यता युक्ता सामशब्दवत् भवतीति। गीतिविशिष्टे मन्त्रे प्रयुज्यमानो यथा सामशब्दः गीतिमात्रवाची, तथा प्रतिपदादिशब्दोऽपि। इयांस्तु विशेषः—क्रियाप्रचयात्मकत्वेपि चोदितकार्यप्रचिति-

---

(1) B. & C. read न कार्यान्तरतया (2) C. वितति (3) B. अवि धेयापत्तिः

रेकत्वाङ्गम् । क्रियान्तरप्रचितिरन्यत्र । तत्र क्रियान्तरप्रचित्या तावदविरोधः । चोदितकार्यप्रचितिस्तु कार्योत्तरकालभाविनी । तस्मात् क्रमवदविरोधः ।

"न चाचमनादयो व्यवधानं कुर्वन्ति" इति प्रतिपदार्थाङ्गाभिप्रायम् । साङ्गस्यैव हि पदार्थस्य पदार्थान्तरेण क्रमावगतिः । तस्मादाचमनाद्यन्विता एव वैदिकाः प्रयोगाः प्रतिपत्तव्या इति ।

---

**रेवैकत्वाङ्गम्**। योऽसौ प्रधानकालतयाऽङ्गानां काल आक्षिप्यते स चोदितकार्यप्रचित्यात्मकः । **क्रियान्तरप्रचितिः अन्यत्र**ामावास्यादिरूपाङ्गम् । कथं पुनस्तस्या अङ्गत्वं ? यदासौ तदा कर्मानुष्ठानात् तद्विशिष्टे काले कर्मणः करणादिति यावत् । न च द्रव्यभूतकालाङ्गभावोऽत्राभिप्रेतः । किन्तु पौर्णमास्यादिशब्दवाच्यता तस्य नास्ति । शब्दवाच्यस्य चाङ्गता शब्देन बोध्यते । [1]तेन संभवति कालावच्छेदद्वारेणादित्यादिगतिप्रचयस्यापि कर्माङ्गत्वमिति तत्र दक्षिणाचारेण[2] क्रियमाणेषु पदार्थेषु **क्रियान्तरप्रचित्या तावदविरोधः**। पौर्णमासीकालस्य तद्योगित्वात् । **चोदितकर्मप्रचितिस्तु कर्मोत्तरकालभाविनी** यथाचोदितश्रौतस्मार्तपदार्थाश्रया चोदितप्रचितिः । तस्मात् तस्याः क्रमवदविरोधः । अत्र भाष्यं— "न चाचमनादयो व्यवधानं कुर्वन्ति" इति तस्याभिप्रायमाह—**प्रतिपदार्थाङ्गाभिप्रायं**, आचमनं कर्तृसंस्कारः कर्ता च प्रयोगाङ्गतया प्रतिपदार्थाङ्गभूतः । तेन द्वारेणाचमनादेरपि प्रतिपदार्थमङ्गभावः । न च स्वाङ्गं व्यवधायकं भवति । कुत इत्याह—**साङ्गस्यैव हि पदार्थस्य पदार्थान्तरेण क्रमावगतिर्युक्ता**[3] । तस्मादविरोधित्वादाचमनादीनां **आचमनाद्यन्विता एव वैदिकाः प्रयोगाः प्रतिपत्तव्याः इति** ।

---

(1) C. omits तेन (2) B. दक्षिणकरेण (3) तिर्यतः

शास्त्रप्रसिद्धिप्राबल्याधिकरणम् ॥

तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात् ॥ ८ ॥

'यवमयश्चरुः' 'वाराही उपानहौ' 'वैतसे कटे प्राजापत्यान् संचिनोति'—इति यववराहवेतसशब्दान् समामनन्ति। तत्र

---

तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात्। शब्दार्थविप्रतिपत्तौ सत्यां किमप्रामाण्यं वेदस्य स्यात्। संशयादप्रतिपत्तेः। ननु च सन्दिग्धेषु वाक्यशेषादित्युद्धृतमिदमप्रामाण्यम्। सत्यमुद्धृतम्। यत्रानेकार्थतयैव सर्वत्र निमित्तभावः प्रसिद्धः यथाऽक्षादिषु। यत्र पुनः विप्रतिपत्त्यैव क्वचित् कस्यचिन्निमित्तत्वं न तत्र प्रयोगात्संशयो

---

तेष्वदर्शनात्। शब्दार्थविप्रतियत्तौ सत्यां किमप्रामाण्यं वेदस्य स्यात्। नास्तीत्यभिप्रायः। व्याकरणशास्त्रेणैव समस्तानामभिधानशंसनस्य[ात्] संशयस्य निरस्तत्वात उभयनियमात्। उत्तरम्—संशयादप्रतिपत्तेः। वाच्यवाचकभावः सन्दिग्धश्चेत् शब्दार्थावगतिर्नास्तीत्यप्रामाण्यम्। न चाक्षादिशब्दवदुभयत्र शक्तिकल्पनायां प्रमाणमस्ति शिष्टानामशिष्टानां च अत्रैव शक्तिरितरत्र लक्षणेत्यभिधानात्। तत्र च क मुख्यः क गौण इति नाध्यवसीयते व्याकरणप्रामाण्येऽपि। ननु व्याकरणशास्त्रानभ्युपगमे यववराहादिशब्दानामुदाहरणत्वं न स्यात वाक्यशेषेणैव संशयव्यावृत्तेरित्याह—ननु च सन्दिग्धेषु वाक्यशेषादित्युद्धृतम् अप्रामाण्यम्। परिहरति—सत्यमुद्धृतम्। यत्रानेकार्थतयैव शब्दस्य सर्वत्र निमित्तभावः प्रसिद्धः तत्र किंपरत्वेनात्र प्रयुक्त इत्येतस्मिन् संशये वाक्यशेषान्निर्णय उक्तः यथा अक्षादिष्वनेकार्थेषु। यत्र पुनः विप्रतिपत्त्यैव लोके[1] क्वचिदर्थे कस्यचित् पदस्य निमित्तता नावगता, न तत्र प्रयोगात् संशयः, प्रयोगमधिकृत्य न तत्र संशयो भवति

---

(1) B. लौकिकानां

**केचिद्दीर्घशूकेषु यवशब्दं प्रयुञ्जते, केचित् प्रियङ्गुषु ; वराहशब्दं केचित् सूकरे, केचित् कृष्णशकुनौ ; वेतसशब्दं केचित् वञ्जुलके, केचित् जम्ब्वां ; तत्रोभयथा पदार्थावगमाद्विकल्पः ॥**

---

भवति । प्रयोगस्य च संशयं वाक्यशेषो व्यावर्तयति । नाभिधाने संशयम् । अभिधाने चायं संशयः । अभिधानसंशयश्च व्यवहार-विप्रतिपत्त्या । शब्दार्थव्यवहारमूलं च वेदार्थज्ञानमित्युक्तम् । तेन व्यवहारवद्वेदार्थेऽपि प्राप्ता विप्रतिपत्तिः । न चात्र वेदार्थस्य विरोधात् शक्यते निराकर्तुम् असौ विप्रतिपत्तिः । उभयथोपपत्तेर्वाक्यार्थस्य । तस्मात् निमित्तविप्रतिपत्त्याऽनध्यवसायः । अनध्यवसायाच्चाप्रामाण्यम् ।

---

कुत्रार्थे प्रयोगोऽयमिति । प्रयोगादिति ल्यब्लोपे पञ्चमी । तथापि किमित्याह—**प्रयोगस्य च संशयं वाक्यशेषो व्यावर्तयति ।** यस्मिन्नर्थे स्वीक्रियमाणे वाक्यशेषस्योपपत्तिः तत्र प्रयुक्त इति निश्चीयते । **नाभिधाने संशयं** वाक्यशेषो व्यावर्तयति । **अभिधाने चायं संशयः** अभिधानसंशयस्य व्यवहारविप्रतिपत्त्या केषाञ्चित् दीर्घशूके यवशब्दस्य व्यवहारः केषांचित् प्रियङ्गुषु; न च गौणमुख्यविशेषावधारणं उभयत्र तुल्यत्वात् शब्दव्यवहारस्य । **शब्दार्थव्यवहारमूलं च वेदार्थज्ञानमित्युक्तम्** संबन्धपरिहारे । **तेन व्यवहारवद्वेदार्थे प्राप्ता विप्रतिपत्तिः । न चात्र विरोधात् वेदार्थस्य शक्यते निराकर्तुं विप्रतिपत्तिः ।** यथा वेदार्थविरोधादौदुम्बरीस्पर्शनेन सर्ववेष्टनस्मृतिः निराक्रियते तथाऽत्र निराकरणकारणं नास्ति । **उभयथोपपत्तेः वाक्यार्थस्य । तस्मात् निमित्तविप्रतिपत्त्याऽनध्यवसायो** वाक्यार्थस्य । **अज्ञानं अनध्यवसायः अज्ञानाच्च अप्रामाण्यम् ।**

शास्त्रस्था वा तन्निमित्तत्वात् ॥ ९ ॥

वाशब्दः पक्षं व्यावर्तयति। यवशब्दो यदि दीर्घशूकेषु, सादृश्यात् प्रियङ्गुषु भविष्यति, यदि प्रियङ्गुषु, सादृश्यात् यवेषु। किं सादृश्यं?। पूर्वसस्ये क्षीणे भवन्ति दीर्घशूकाः प्रियङ्गवश्च,

---

शास्त्रस्था वा तन्निमित्तत्वात्। सत्यं यद्यविरोधः स्यात्। अपि तु कार्यत एव विरोधोऽवगम्यत एव। श्रूयते हि वराहं गावोऽनुधावन्तीत्येवमादिषु वाक्यशेषेषु। ततः किं? विशिष्टनिमित्तकान्वयोऽवगम्यते। ननु तदेवेदमापतितं वाक्यशेषान्निर्णय इति। नैवेदमापतितम् सन्दिग्धे हि निमित्ते तत्र निर्णयः। अत्र पुनर्विपर्यय एव निराक्रियते वराहाद्येवौत्पत्तिकं न कृष्णशकुनादीति।

---

शास्त्रस्था वा ॥ राद्धान्तमाह—सत्यं विप्रतिपत्तिर्निराकर्तुं न शक्यते यद्यविरोधः स्यात्, अत्रापि तु विरोधोऽवगम्यत[1] इत्येव। श्रूयते हि 'वराहं गावोऽनुधावन्ति' इत्येवमादिषु वाक्यशेषेषु वराहस्य गोसादृश्यम्। न च कृष्णशकुनेर्गोसादृश्यमस्ति इति वेदविरोधिनी म्लेच्छानां प्रतिपत्तिः। ततः किं? उत्तरम्—विशिष्टनिमित्तकोऽन्वयोऽवगम्यते। वेदविरोधेन म्लेच्छप्रतिपत्तौ निरस्तायां आर्य[2]प्रतिपत्त्यवधृतसूकरार्थप्रतिपादकतयैव वराहशब्दस्य वाक्यार्थे निमित्तभाव इति निश्चीयते तेनाध्यवसाय्येव वेदः। अत्र चोदयति—ननु तदेवेदमापतितं वाक्यशेषान्निर्णय इति। तेन यद्यप्यभिधानसंशयोऽयं तथापि वाक्यशेषान्निर्णय इति पौनरुक्त्यमेव। परिहरति—नैवेदमापतितम्। कुत इत्याह—सन्दिग्धे हि निमित्ते तत्र निर्णयः। अत्र पुनः विपर्यय एव निराक्रियते। वराहाद्येव सूकराद्येव औत्पत्तिकम्, न कृष्णशकुनादीति कृष्णशकुन्याद्येव मुख्यं वाच्यमिति योऽयं विपर्ययः स

---

(1) C. त एव (2) C. प्रतिपत्तिवशेन

एतत् तयोः सादृश्यम् । कः पुनरत्र निश्चयः ? । यः शास्त्रस्थानां,

---

ननु च वेदादेव निमित्तावगमोऽभ्युपगतो भवति । न लौकिकाद्व्यवहारात यूपादीनामिव । एवं सति को दोषः ? न खलु कश्चिदन्यो दोषः । तदेव हि वैदिकनिमित्तत्वं न सिद्ध्यति । कुतः ? अप्रतिपन्ने लौकिकनिमित्तभावे न वेदात प्रतिपत्तुं शक्यते । अत एव वैदिकत्वं न ब्रूमः किं तर्हि शिष्टप्रयोग एव बलवानित्युच्यते वाक्यशेषानुगुण्या र् । सिद्धे चास्यौत्पत्तिकत्वे प्रयागस्यान्यतो नैव तद्विरोधिनी प्रतिपत्तिरात्मानं लभते । औत्पत्तिक-

---

निराक्रियते न संशयः । ननु च वेदादेव निमित्तावगमो[1]ऽभ्युपगतो भवति न लौकिकव्यवहारात् यूपादीनामिव । राद्धान्त्येकदेश्याह---यदि यूपादिशब्दतुल्यता एवं सति को दोषः । आक्षेप्ता दूषयति—न खलु कश्चिदन्यो दोषः ब्रह्मवधादिः । तदेव हि वैदिकनिमित्तत्वं न सिद्ध्यति[2] । कुतः ? उत्तरम्—अप्रतिपन्ने लौकिकनिमित्तभावे न वेदात् प्रतिपत्तुं शक्यते । यद्यपि वेदादिदमवगतं गोसदृशो वराहशब्दवाच्य इति । तथापि सूकरप्रतिपत्तिः अशक्या । अन्यस्यापि सादृश्यसंभवात् । अन्ये तु प्रतिपन्न इति पठन्ति तेषामयमर्थः । युक्तो यूपादिषु वैदिको निमित्तभावः लोके अत्यन्ताप्रसिद्धत्वात् । इह पुनर्लोकेऽन्यत्र प्रसिद्धिरस्तीति न वेदान्निमित्तावगमः । तदिदमयुक्तम् । त्रिवृच्छब्दे प्रतिपक्षभूतेऽपि लौकिके प्रयोगे वेदादेव निमित्तभावावगमात् । परमसिद्धान्ती समर्थयते—यत एव वेदान्निमित्तभावावगमोऽयं दोषः अत एव च वैदिकत्वं न ब्रूमः । किं तर्हि शिष्टप्रयोग एव बलवानित्युच्यते वाक्यशेषानुगुण्यात् । सिद्धे चास्य शिष्टप्रयोगस्य अन्यतो वाक्यशेषानुगुण्यादौत्पत्तिकत्वे नैव तद्विरोधिनी म्लेच्छप्रतिपत्तिरा[3]मात्मानं लभते । औत्पत्तिक-

---

(1) A. & C. निमित्ताभावो (2) B. & C. कथं न सिध्यतीति (3) A. & B. add एव

स शब्दार्थः । के शास्त्रस्थाः ? । शिष्टाः, तेषामविच्छिन्ना स्मृतिः शब्देषु वेदेषु च; तेन शिष्टा निमित्तं श्रुतिस्मृत्यवधारणे । ते ह्येवं समामनन्ति, यवमयेषु करम्भपात्रेषु विहितेषु वाक्यशेषं,—'यत्रान्या ओषधयो म्लायन्ते, अथैते मोदमाना इवोत्तिष्ठन्ति' इति दीर्घशूकान् यवान् दर्शयति वेदः । वेदे दर्शनात् अविच्छिन्नपारम्पर्यो दीर्घशूकेषु यवशब्दः—इति गम्यते । तस्मात् प्रियङ्गुषु गौणः, तस्मात दीर्घशूकानां पुरोडाशः कर्त्तव्यः । 'तस्माद्वराहं गावोऽनुधावन्ति' इति सूकरे वराह-शब्दं दर्शयति, 'अप्सुजो वेदसः' इति वञ्जुले वेतसशब्दम् । सूकरं हि गावोऽनुधावन्ति, वञ्जुलोऽप्सु जायते, जम्बूवृक्षः स्थले गिरिनदीषु वा ॥

---

तथा गौणेनापि व्यवहारोपपत्तेः । यदि हि व्यवहारादेव द्वयोरौत्पत्तिकत्व-कल्पना स्यात् तत्रेतरेतराश्रयात् कल्पनाव्याघातः । अत्र त्वन्यतः शास्त्रीयस्य प्रयोगस्य सिद्धमौत्पत्तिकत्वमित्युक्तम् । सिद्धे च तस्मिन् प्रतिपक्ष-व्याघातोऽवगम्यते । अनुमानविरोधात् । तस्माद्गौणो नार्थव्यवहारः ।

---

तथा गौणेनाप्यर्थेन व्यवहारोपपत्तेः । ननु शिष्टप्रयोग एव किमिति गौणो न भवती-त्यत्राह—यदि व्यवहारादेव द्वयोरौत्पत्तिकत्वकल्पना स्यात् तत्रेतरेतराश्रयतया स्यात् कल्पनाव्याघातः । आर्यव्यवहारप्रामाण्यात् म्लेच्छव्यवहारस्य व्यामोहत्वम् । म्लेच्छव्यवहार-प्रामाण्याच्चार्यव्यवहारस्य व्यामोहत्वं इत्येवमितरेतराश्रयात् स्यात् सूकरादीनामौत्पत्तिकत्वकल्पना-व्याघातः । अत्र त्वन्यतः शास्त्रीयस्य प्रयोगस्य सिद्धमौत्पत्तिकत्वमित्युक्तम् । आर्यप्रयोगस्य बलीयस्त्वं वाक्यशेषानुगुण्यात् सिद्धम् । सिद्धे च तस्मिन् प्रतिपक्षव्याघातोऽव-गम्यते । शब्दस्य वाच्यवाचकशक्त्यनुमानविरोधात् । तस्मात् गौणो नार्यव्य-वहारः ।

अथ म्लेच्छप्रसिद्धार्थप्रामाण्याधिकरणम् ॥

चोदितन्तु प्रतीयेताविरोधात् प्रमाणेन ॥ १० ॥

अथ यान् शब्दान् आर्या न कस्मिंश्चिदर्थे आचरन्ति, म्लेच्छास्तु कस्मिंश्चित् प्रयुञ्जते, यथा पिक-नेम-सत-तामरसादि-शब्दाः, तेषु सन्देहः,—किं निगमनिरुक्तव्याकरणवशेन धातुतोऽर्थः कल्पयितव्यः, उत यत्र म्लेच्छा आचरन्ति, स शब्दार्थः ? इति ॥ शिष्टाचारस्य प्रामाण्यं उक्तं, नाशिष्टस्मृतेः ; तस्मान्निगमादि-वशेनार्थकल्पना, निगमादीनां चैवं अर्थवत्ता भविष्यति । अन-

---

चोदितन्तु प्रतीयेताविरोधात् प्रमाणेन । यद्येवमनार्यव्यवहारः गौणः । एवं तर्हि ये शब्दाः आर्यव्यवहारे निमित्ततया न प्रसिद्धो तेषामनिमित्ततैव वैदिके व्यवहारे यथा पिकनेमसततामरसादीनाम् । माभूदिति चेत् तदेवेदमप्रामाण्यं प्राप्नोति । निगमनिरुक्तव्याकरणादि-वशाद्भवत्वर्थावगतिरिति चेत , न ; तयोः प्रयोगमूलत्वात ।

---

चोदितन्तु । पूर्वाधिकरणोपजीवनेन पूर्वपक्षमाह—एवमुक्तेन न्यायेन यद्यनार्यव्यवहारो गौणः सिद्धः एवं तर्हि ये शब्दाः आर्यव्यवहारे निमित्ततया न प्रसिद्धाः तेषामनिमित्ततैव वैदिके व्यवहारे स्यात यथा पिकनेमसततामरसादीनां, अनार्यव्यवहारस्य शब्दार्थव्य-वस्थायामकारणत्वात । आर्यव्यवहारे च तेषामदर्शनात् । अनवधारितनिमित्तभावाच्च शब्दात् अर्थानवगतेः निमित्तता वेदव्यवहारे पिकादिशब्दानां न स्यात । माभून्निमित्ततेति चेत् । दूषणमाह—तदेवेदं चोदनाया अप्रामाण्यं प्राप्नोति, यत्पूर्वमुक्तमनध्यवसायलक्षणम् । निगमनिरुक्तव्याकरणदिवशात भवत्वर्थावगतिः नर्फरीप्रभृतीनामिवेति चेत् । दूषयति न तयोरर्थावगतिः तयोः निगमनिरुक्तव्याकरणयोः प्रयोगमूलत्वात्—प्रयोगादर्शने तयोरेव निर्मूलत्वेनानादरणीयत्वात ।

भियोगश्च शब्दार्थेष्वशिष्टानां, अभियोगश्चेतरेषाम्। तस्माद्धातुतोऽर्थः कल्पयितव्यः इत्येवं प्राप्ते ब्रूमः,—चोदितमशिष्टैरपि शिष्टानवगतं प्रतीयेत, यत् प्रमाणेनाविरुद्धं, तत अवगम्यमानं न न्याय्यं त्यक्तुम्। यत्तु शिष्टाचारः प्रमाणं इति, तत् प्रत्यक्षानवगतेऽर्थे। यत्तु अभियुक्ताः शब्दार्थेषु शिष्टाः इति, तत्रोच्यते,

---

कथं तर्हि प्रकृतिप्रत्ययार्थोहनं ? विनियोगवशात्। विनियुक्तस्य मन्त्रस्य वाक्यशेषीभूतस्य चार्थवादस्य वृद्धव्यवहारप्रसिद्धनिमित्तानुवर्ति प्रकृतिप्रत्ययोहनं न पुनरूह्यपदनिमित्तं विध्युद्देशवाक्यं भवितुमर्हति। तस्मादप्रामाण्यं चोदनायाः।

सत्यं यदि सामान्यतो दृष्टं कार्यानुमानविरोधि स्यात्।

---

यदि प्रयोगदर्शनमेव मूलं तयोः कथं तर्हि प्रकृतिप्रत्ययार्थोहनम्। येऽपि शब्दा लोके दृष्टार्थाः प्रयोगमूलत्वात् तेषामपि प्रकृतिप्रत्ययविभागाश्रयणेनार्थोहनं निगमनिरुक्तव्याकरणाभ्यां कथं क्रियते जर्फरीप्रभृतीनाम्। उत्तरम्—विनियोगवशादेव। एतदेव निवृणोति—विनियुक्तस्य हि मन्त्रस्यावधारितवाक्यतात्पर्यस्य वाक्यशेषीभूतस्य चार्थवादस्यावधारिततात्पर्यस्य वृद्धव्यवहारप्रयोगानुवर्ति प्रकृतिप्रत्ययोहनम्। न पुनरूह्यपदनिमित्तं विध्युद्देशवाक्यं भवितुमर्हति तस्य तात्पर्यस्यावधारणे प्रमाणाभावात्। यत्र पुनरूह्यपदनिमित्तं विध्युद्देशवाक्यं तत्राप्यनवस्थैव। तस्मात् पिकनेमादिपदमिश्रायाः चोदनायाः अप्रामाण्यम्। राद्धान्तमाह—सत्यमप्रामाण्यं स्यात् यदि सामान्यतो दृष्टं कार्यानुमानविरोधि स्यात्। पूर्वपक्षे हि सामान्यतोदृष्टमुपन्यस्तं पिकनेमादिविषयोऽनार्यव्यवहारः शब्दार्थव्यवस्थायां अनिमित्तं, अनार्यव्यवहारत्वात् यवादिशब्दविषयवदिति। तदेतद्यदि कार्यानुमानमर्थप्रतिपत्तिलक्षणात् कार्यात् अनार्यवर्तिनां यत्पिकादिशब्दानां कोकिलादिवाचकत्वानुमानं

अभियुक्ततराः पक्षिणां पोषणे बन्धने च म्लेच्छाः। यत्तु निगमनिरुक्तव्याकरणानामर्थवत्तेति, तत्रैषामर्थवत्ता भविष्यति, न यत्र म्लेच्छैरप्यवगतः शब्दार्थः। अपि च निगमादिभिरर्थे कल्प्यमानेऽव्यवस्थितः शब्दार्थो भवेत्, तत्र अनिश्चयः स्यात्। तस्मात् पिक इति कोकिलो ग्राह्यः, नेमोऽर्ध, तामरसं पद्मं, सत इति दारुमयं पात्रं, परिमण्डलं शतच्छिद्रम्॥

---

अथ तु यत्रैव प्रत्यर्थी विद्यते तत्रैव कार्यानुमानविरोधः तदा विहतप्रतिपक्षं केन वार्यते। किं पुनः कारणं सामान्यतो दृष्टं न भवतीति सामान्यमेव तन्न स्यात् अप्रतिपक्षसिद्धौ। तस्मादप्रतिपक्षम्लेच्छव्यवहारसिद्धमपि निमित्तमेव वेदार्थावगतौ। अतो विरोधाविरोधनिरस्तप्रतिपक्षं स्थितमनपेक्षत्वं चोदनायाः।

---

तन्निराकुर्यात् तदा स्यादप्रामाण्यम्? अथ तु यत्रैव यवादिविषये प्रत्यर्थी वेदवाक्यशेषो विद्यते तत्रैव कार्यानुमानविरोधः तदा विहतप्रतिपक्षं कार्यानुमानं केन वार्यते। यस्य कार्यानुमानस्य प्रतिपक्षो विहतः तस्य केन वारणं शक्यते कर्तुम्? ननु सामान्यतोदृष्टेनैवास्य निवारणं भविष्यति। [1]तदाह—किं पुनः कारणं सामान्यतो दृष्टं न भवतीति। उत्तरम्—सामान्यमेव हि तन्न स्यात् अप्रतिपक्षसिद्धौ। [2]सप्रतिपक्षानार्यव्यवहारत्वमनिमित्तत्वेनैव व्याप्तं, न केवलमनार्यव्यवहारत्वं, तेन सामान्यमेवाप्रतिपक्षस्य पिकादिविषयस्यानार्यव्यवहारस्य यवादिविषयेणानार्यव्यवहारेण सह नास्ति। तस्मादप्रतिपक्षम्लेच्छव्यवहारसिद्धमपि निमित्तमेव चोदनार्थावगतौ। अतो म्लेच्छार्यव्यवहारयोः विरोधे पूर्वाधिकरणे, अविरोधे च अत्र निरस्तः प्रतिपक्षः सापेक्षत्वलक्षणो यस्य तदनपेक्षत्वं सिद्धं चोदनायाः।

---

(1) A. तदापि (2) A. सतिप्रतिपक्षे अनार्थ

अथ कल्पसूत्राधिकरणम् ॥

प्रयोगशास्त्रमिति चेत् ॥ ११ ॥

इह कल्पसूत्राण्युदाहरणं,—'माशकं, हास्तिकं, कौण्डिन्यकं' इति, एवंलक्षणकानि किं प्रमाणमप्रमाणं वा ?—इति संदि-

---

प्रयोगशास्त्रमिति चेत् । किं पुनः करणं सिद्धस्य पौरुषेयतयाऽनपेक्षत्वमाशङ्क्यते । कार्यतः प्रमाणतश्चाशङ्क्यते कार्यं पठितस्य पाठः शाखान्तरवत्, प्रमाणं पुनः आचार्यवचः प्रमाणमिति । ननु विप्रतिषिद्धमिदं पौरुषेयत्वमनपेक्षत्वं चेति । किमत्र विप्रतिषिद्धम् ? यथाऽवगम्यन्तेऽर्थास्तथा भवन्ति । द्वयं चात्रावगम्यते पौरुषेयत्वमनपेक्षत्वं; स्मरणात् पौरुषेयत्वं, कार्यवचनाभ्यामनपेक्षत्वम् । तस्माद्द्वयमस्तु ।

---

प्रयोगशास्त्रमिति चेत् । किं पुनः कारणं पौरुषेयतया सिद्धस्य प्रयोगशास्त्रस्यानपेक्षत्वमाशङ्क्यते । माशकादीनि पौरुषेयत्वेनैव स्मर्यन्ते । यच्च पुरुषवाक्यं तत्सापेक्षं, अतः कथं तेषामनपेक्षत्वमाशङ्क्यते । उत्तरम्—कार्यतः प्रमाणतश्चाशङ्क्यते । एतदेव विवृणोति —कार्ये पठितस्य पाठः शाखान्तरवत् । प्रमाणं पुनः आचार्यवचः प्रमाणमिति । अस्यार्थः—यदिदं कार्यं पठितस्यैव वाक्यस्य पुनः पाठः यथा शाखान्तरे तदालोचनया अनपेक्षत्वमेवावगम्यते—वेदवाक्यमेवेदं मशकादिभिः पठ्यते तस्यानपेक्षत्वं युक्तमेव । न हि पुरुषेण पठितमित्येतावता सापेक्षं वेदवाक्यमेव भवति, आचार्यवचः प्रमाणमित्यनेनाप्यनपेक्षत्वमेव गम्यते । [2]न हि सापेक्षस्य प्रामाण्यमस्ति । ननु च विप्रतिषिद्धमिदं पौरुषेयमनपेक्षं चेति । परिहरति—किमत्र विप्रतिषिद्धम् ? यथावगम्यन्तेऽर्थाः तथा भवन्ति । द्वयं चात्रावगम्यते पौरुषेयत्वमनपेक्षत्वं चेति । स्मरणात् पौरुषेयत्वं तेनैव तदुपपद्यते कार्यवचनाभ्यामनपेक्षत्वम् । तस्माद्द्वयमस्तु ।

---

(1) A. सापेक्षत्वं (2) A. न हि प्रमाणस्य सापेक्षत्वमस्ति

**न्धानि। किं प्राप्तं ? प्रयोगस्य शास्त्रं प्रमाणमेवंजातीयकं इति ब्रूमः। सत्यवाचामेतानि वचनानि। कथमवगम्यते ?। वैदिकैरेषां संवादो भवति, य एव हि वेदे ग्रहाः, त एवेह, या एव वेदे इष्टकाः, ता एवेह। तस्मात् सत्यवाच आचार्याः, 'आचार्यवचः प्रमाणं' इति च श्रुतिः। प्रत्यक्षतः प्रामाण्यमनवगतं इति यद्यप्युच्येत, प्रमाणान्तरेण वचनेनावगतं इति न दोषः। वेदवाक्यैश्चैषां तुल्य आदरः; तस्मात् प्रमाणम्॥**

न, असन्नियमात्॥ १२॥

**नैतदेवं, असन्नियमात् नैतत्सम्यङ्निबन्धनं, स्वराभावात्॥**

---

**न, असन्नियमात्।** नैतदुपपद्यते पौरुषेयत्वमनपेक्षत्वं चेति। सिद्धं चास्य पौरुषेयत्वम्। न काठकादिवत् प्रवचनपरिहार्यम्। कृतिश्च प्रमाणान्तरदृष्टार्थाभिधानमेवोच्यते न वर्णादिकार्यता।

---

अत्रेदमभिप्रेतं—एकैकं वाक्यं वैदिकमेव तेनानपेक्षत्वं तानि तु नानाशाखाप्रकरणानारभ्यवादविप्रकीर्णानि पुरुषेण नैपुण्यात् अनुक्रमेण संहृत्य पठितानीति पौरुषेयत्वम्।

**नासन्नियमात्।** राद्धान्तमाह—**नैतदुपपद्यते पौरुषेयत्वमनपेक्षत्वं चेति। न** च वाच्यं भवत्वपौरुषेयत्वमेवेति यतः **सिद्धं चास्य** प्रयोगशास्त्रस्य **पौरुषेयत्वं** पुरुषकृतत्वेन स्मरणात्। **न च काठकादिवत् प्रवचनपरिहार्यम्।** यथा काठकादिसमाख्या प्रवचनवशेनोपपन्ना न तथा पुरुषकृतत्वस्मृतिः। भवतु पुरुषकृतत्वमेव तथापि किमित्याह— **कृतिश्चात्र प्रमाणान्तरदृष्टार्थाभिधानमेव, न वर्णादिकार्यता।** प्रमाणान्तरेण यो दृष्टोऽर्थः तस्य शब्देनाभिधानं तत्परत्वेन शब्दस्य प्रयोगो यः सैव कृतिः न पुनः वर्णादीनां कार्यतादि

अवाक्यशेषाच्च ॥ १३ ॥

'ऋत्विजो वृणीते, वृता यजन्ति, देवयजनमध्यवस्यन्ति' इति, नात्र विधिर्गम्यते वर्तमानकालप्रत्ययनिर्देशात्, न चात्र वाक्यशेषः स्तावकोऽस्ति; तस्मात् अप्रमाणम्। यश्च आदर उक्तः, स नान्तरीयकत्वात्, वेदवाक्यमिश्रसमाम्नानात्। यत्तु श्रुतिः इति, नैतत्, अर्थवादत्वात्। कथमर्थवादः ?। विध्यन्तरं हि अस्ति, 'आग्नेयोऽष्टाकपालः' इति। अत्राचार्यो

---

तस्मात्सापेक्षत्वम्। यत्पुनः कार्यमुपन्यस्तं पठितस्य पाठः शाखान्तरवदिति, नैतच्छाखान्तरतुल्यं; प्रयोगाभ्यासः कार्यगम्यस्यावगम्यते स्वरविध्यर्थवादपरित्यागात्। तदानन्तर्यप्रतिपत्तौ पदार्थानामव्यवधानमावहति।

---

नित्यत्वाद्वर्णानां वर्णपदानुपूर्व्ययोश्च वेदेपि ध्वनिनिबन्धनत्वात् पौरुषेयत्वमेव। तस्मात् पौरुषेयत्वे सिद्धे सापेक्षत्वं तावत् दुष्परिहरम्। यत्पुनः कार्यमुपन्यस्तं पठितस्य पाठः शाखान्तरवदिति तत्रोच्यते—नैतच्छाखान्तरतुल्यम्। यथा शाखान्तरेषु सर्वाण्येव वाक्यानि वैदिकानि तथैवेह न भवति वाक्यान्तरत्वात् प्रयोगशास्त्रवाक्यानाम्। कथं वाक्यान्तरत्वं इत्यत्राह—प्रयोगाभ्यासः कार्यमस्य स्वरविध्यर्थवादपरित्यागात् स्वरविध्यर्थवादान् परित्यज्य वाक्यान्तराणि कल्पसूत्रकारैः प्रणीयन्ते वेदावगतप्रयोगाभ्यासाय अनुष्ठातॄणाम्। तेन वाक्यान्तराण्येतानि अर्थवादस्य विधेः स्वराणां च परित्यागात्। सार्थवादविधिस्वरेण वाक्येन योऽर्थः प्रतिपन्नः तत्रैव तद्रहितानि वाक्यान्तराणि मशकादिभिः प्रणीतानि। प्रयोजनान्तरं चाह—[1]तदानन्तर्यप्रतीतौ पदार्थानामव्यवधानमावहति प्रयोगशास्त्रम्। पदस्वरादिपरित्यागे हि वाक्यस्य श्रवणानन्तरमेव पदार्थाः प्रतीयन्ते।

---

(1) B. adds प्रयोगशास्त्रं प्रयोगशास्त्रमिति

वेदोऽभिप्रेतः, आचिनोत्यस्य बुद्धिं इति। यद्वा आचार्यवचनं प्रमाणं तदपेक्षम्। कतरत्तत्?। यत् प्रमाणगम्यम्॥

यच्चोक्तं, सत्यवाचामेतानि वचनानि इति; तन्न,

सर्वत्र च प्रयोगात् सन्निधानशास्त्राच्च ॥ १४ ॥

आचार्यवचनं हि भवति पूर्वपक्षे 'सर्वासु तिथिष्वमावास्या' इति, संन्निहितश्च शास्त्रं, 'पौर्णमास्यां पौर्णमास्या यजेत,

---

अव्यवहिताश्च प्रतीयमानाः सुखमनुष्ठीयन्त इति पठितस्य पाठप्रयोजनमाचार्याणाम्। अत एव प्रयोगशास्त्रमिति व्यपदिश्यते, कल्पशब्दाभिधेयता; कल्पना ह्यत्र पदार्थानां न विधेयत्वम्। अवगतस्य क्लृप्तिर्भवति मणेरिव। यदुक्तमाचार्यवचः प्रमाणमिति प्रमाणादवगम्यत इति तन्न। अप्रमाणत्वादस्य वचनस्य। न हि स्वरूपे शब्द-

---

अव्यवहिताश्च प्रतीयमानाः सुखमनुष्ठीयन्ते इति पठितपाठप्रयोजनमाचार्याणाम्। यत एव च प्रयोगाभ्यासाय शीघ्रप्रतिपत्तये च शास्त्रमिदम्। अत एव च प्रयोगशास्त्रमिति व्यपदिश्यते[1]। अत एव च कल्पशब्दाभिधेयता। कल्पना ह्यत्र पदार्थानां न विधेयत्वं, रचना ह्यत्र पदार्थानां वेदविहितानामेव न पुनर्विधानम्। विधानपक्षे कल्पनाव्यवहारो नास्तीति दर्शयति—अवगतस्य हि क्लृप्तिर्भवति मणेरिव। यथा मणेर्विरचना हारग्रथनाय तथाऽत्रापि प्रयोगग्रथनाय रचना। यदुक्तं—आचार्यवचः प्रमाणमिति प्रमाणादवगम्यत इति। तन्न, अस्य वचनस्यासिन्नर्थेऽप्रमाणत्वात्। न हि वस्तुस्वरूपे शब्द-

---

(1) C. तथा चानन्तर्यं

अमावास्यायाममावास्यया यजेत'--इति, तेन श्रुतिविरुद्ध-वचनान्न सत्यवाचः, तस्मात् अप्रमाणम् ॥

---

स्यानपेक्षत्वमस्तीत्युक्तं किन्तु कार्ये। तस्मादन्यशेषत्वादस्य वाक्यस्य दृष्टानुसारिव्याख्यानं युक्तम्। वेदो वाऽऽचार्योऽभिप्रेतः।

यद्वा आचार्यवचः प्रमाणम् तद्वदपेक्ष्य। किं पुनः प्रयोजनं चिन्तष्याः? विहितकल्पनापरत्वादस्य शास्त्रस्य न विरोधमवगच्छामः। अस्त्यत्र विहितविरोधिनी कल्पना सर्वासु तिथिषु दर्शपूर्णमासादीनां कल्पना। सा च कालविशेषश्रवणाद्विरुध्यते विरुद्धं चानपेक्ष्यम्। अन्यथा ह्यादरे तेन व्याघातादप्रामाण्यं चोदनायाः।

---

स्यानपेक्षत्वमस्तीत्युक्तम्। किन्तु कार्ये। तस्मादन्यशेषत्वादस्य वाक्यस्य दृष्टानुसारि व्याख्यानम्। तत्र वेदो वा आचार्यः अभिप्रेतः, यद्वा आचार्याणां वचः प्रमाणमिति प्रमाणादवगम्यं सत्यार्थं तदभिप्रेतम्। ततश्चाचार्यवचो वेदवचः प्रमाणमित्युक्तम्। अथ वा आचार्यवचो मशकादिवचो यत् तत् प्रमाणम् सत्यमित्यर्थः। किं पुनश्चिन्तायाः प्रयोजनम्? एकग्रन्थेनाह—विहितकल्पनापरत्वादस्य शास्त्रस्य न विरोधमवगच्छामः य एव हि विहिताः पदार्थाः तेषामेव रचनापरत्वादस्य शास्त्रस्य न वेदविरोधः संभवति। उत्तरम्—अस्त्यत्र विहितविरोधिनी कल्पना सर्वासु तिथिषु दर्शपूर्णमासादीनां कल्पना। सा च कालविशेषस्य पौर्णमास्यादेः श्रवणाद्विरुद्धयते। विरुद्धं चानपेक्ष्यं अनादरणी-यम् अन्यथाह्यादरे तेन व्याघातादप्रामाण्यं चोदनायाः। तेन वेदविरोधेऽनादरणीयत्वं यथा स्यादिति सापेक्षत्वं कल्पसूत्राणामुच्यते। तदादरे हि एभिर्व्याघातेनाप्रामाण्यमापद्यते चोदनायाः।

### अथ होलाकाधिकरणम् ॥

( सामान्यश्रुतिकल्पनाधिकरणम् ) ॥

अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात् ॥ १५ ॥

**अनुमानात् स्मृतेराचाराणां च प्रामाण्यमिष्यते, येनैव हेतुना ते प्रमाणं, तेनैव व्यवस्थिताः प्रामाण्यमर्हन्ति । तस्मात् होलाकादयः प्राच्यैरेव कर्त्तव्याः, आह्नीनैबुकादयो दाक्षिणात्यैरेव, उद्वृषभयज्ञादय उदीच्यैरेव; यथा शिखाकल्पो व्यवतिष्ठते केचित् त्रिशिखाः, केचित् पञ्चशिखाः इति ॥**

---

**अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात्** । इह व्यवस्थितविषयमव्यवस्थितं चोदाहरणम् । किमिदं व्यवस्थितविषयमव्यवस्थितं चेति ? इदमिदं प्राच्योदीच्यदाक्षिणात्याभिमानिनः कुर्वते । होलाकादीनामेवेयं व्यवस्था । न चाभिमानस्य नियामकं किञ्चिदस्तीत्यव्यवस्था ।

---

**अनुमानव्यवस्थानात्** । इह तु व्यवस्थितविषयं अव्यवस्थितं च यत् तत्सर्वमुदाहरणम् । शाखागृह्यस्मृत्याचारगम्यं यत्किलानुष्ठानतो[1]व्यवस्थितविषयं कैश्चिदेवानुष्ठीयते न सर्वैः । परमार्थतश्चाव्यवस्थितम्, व्यवस्थायां कारणाभावात् तदिहोदाहरणम् । **किमिदं व्यवस्थितविषयमव्यवस्थितं चेति** । उत्तरम्—**इदमिदम्** । एकोऽत्रेदंशब्द उक्तपरः । अपरश्च वक्ष्यमाणपरः । यदिदमुक्तं तदिदं यद्वक्ष्यामः । **प्राच्योदीच्यदाक्षिणात्याभिमानिनः कुर्वते होलाकादीनि** । सेयं व्यवस्था-प्राच्यादीनामिदं कर्म, वयं च प्राच्यादयः इत्यनेनाभिमानेन होलाकादीनि कुर्वते । न चाभिमानस्य नियामकं किञ्चिदस्तीत्यव्यवस्था ।

---

(1) B. अनुष्ठानं

अपि वा सर्वधर्मः स्यात्, तन्न्यायत्वाद्विधानस्य ॥ १६ ॥

अपि वा—इति पक्षव्यावृत्तिः, एवंजातीयकः सर्वधर्मः स्यात्। कुतः?। तन्न्यायत्वात् विधानस्य, विधीयतेऽनेन इति विधानं शब्दः, सोऽनुमीयते स्मृत्या; न च तस्याऽऽकृतिवचनता न्याय्या, न च व्यक्तिवचनता, न सर्वेषामनुष्ठातॄणां यदेकं सामान्यं, तस्य वाचकः कश्चित् शब्दोऽस्ति, योऽनुमीयेत। तस्मात् सर्वधर्मता विधेर्न्याय्या। कुतः?। पदार्थाः कर्त्तव्याः इति प्रमाणमस्ति, व्यवस्थायान्तु न किञ्चित् प्रमाणमस्ति ॥

---

कथं पुनर्नियामकं नास्ति? विधिस्तावन्न नियामकः नियोग-मात्रपर्यवसायी हि सः। कर्मशब्दोऽपि होलाकादिर्न नियामकः कर्म-विशेषाभिधानात्। न चान्यत्किञ्चित् गुणो जातिः संस्थानं देशो वा तद-भावात्। समाख्यापि नैव। ननु यो यत्र जातः स तेन देशेन समाख्यायते प्राच्योदीच्यदाक्षिणात्या इति। न जन्ममात्रात्समाख्येयं आगतादिष्वपि

---

कथं पुनः नियामकं नास्ति? उत्तरं—विधिस्तावन्न नियामकः नियोगार्थमात्रपर्यवसायी-हि सः। अस्यार्थः—आचारदर्शनेन यद्वेदवाक्यमनुमीयते तद्गतस्तावद्विधिः न पुरुषविशेषं प्रति तन्नियामकः विधिमात्रपरत्वात्। कर्मशब्दोऽपि होलाकादिर्न नियामकः कर्मविशेषा-भिधानात्। न चान्यत् किञ्चित् गुणो जातिः संस्थानं देशो वा नियामकः, तदभावात्। यदीह अनुष्ठातृमात्रवर्ती इतरपुरुषव्यावृत्तो गुणो जातिर्वा शरीरसन्निवेशो वा भवेत् ततो भवेन्नि-यामकः। न चासावस्ति। तथा समाख्यापि दाक्षिणात्यादिका न नियामिका। ननु यो यत्र जातः स तेन देशविशेषेण समाख्यायते प्राच्य उदीच्यो दाक्षिणात्य इति तेन समाख्या नियामिका भवतु। परिहरति—न जन्ममात्रात् समाख्येयमागतादिष्वपि

अथ यदुक्तं,—यथा शिखाकल्पो व्यवतिष्ठते इति,

दर्शनाद्विनियोगः स्यात् ॥ १७ ॥

---

तुल्यत्वात् न नियामिका समाख्या। लोहिताक्षादयस्तु नियामकत्वव्यभिचरिताः। किं पुनरस्याश्चिन्तायाः प्रमाणलक्षणौपयिकत्वमस्ति ? कथं वा नास्ति ; न, यदि नियामकमस्ति यदि वा नास्ति किं जातमनपेक्षत्वस्य। इदमेव जातम्। अभिमानो विद्यते। न च तस्य मूलमुपलभ्यत इत्यप्रामाण्यं पूर्वपक्षवादी मन्यते।

---

तुल्यत्वात् न नियामिका समाख्या। ननु च दक्षिणापथे जात इत्येषा समाख्या जातमात्रे भवतीति सा नियामिकास्तु; उच्यते, इयमपि न नियामिका दाक्षिणात्यसुतः प्राक्क्वचित् जातः पैतृकमेवाचारमनुवर्तते न प्राच्यं; तथा इतरोऽपि इतरत्र जात इति। लोहिताक्षादयस्तु नियामकत्वेन व्यभिचरिताः। तस्मात् सिद्धमव्यवस्थितत्वम्।

किं पुनरस्याश्चिन्तायाः प्रमाणलक्षणौपयिकत्वमस्ति ? येयं होलाकादयः पदार्थाः प्राच्यादिभिरेव कर्तव्याः उत सर्वैरिति अस्याश्चिन्तायाः किं प्रमाणलक्षणं प्रत्युपायतास्ति येनात्रेयमारब्धा यावता तन्नास्त्येव। उत्तरम्—कथं वा नास्ति अपि त्वस्त्येव। आक्षेप्ता आह—यदि नियामकमस्ति यदि वा नास्ति किं जातमनपेक्षत्वस्य। समाधाता आह—इदमेव वक्ष्यमाणं जातम्। अभिमानो विद्यते न च तस्य मूलमुपलभ्यत इत्यप्रामाण्यं पूर्वपक्षी मन्यते। यथाभूतोऽयमाचारोऽभिमानालिङ्गितो दृश्यते तथाभूतस्य मूलं चोदना न संभवतीति केवलहोलाकादिप्रतिपादिका चोदना अयथाभूतार्थतया न प्रमाणम् चोदना तथाभूता न प्रमाणम्। अत्र चेयं चिन्ता—किं यद्येनानुष्ठीयमानं दृश्यते तत्तेनैव कर्तव्यं उतान्येनापि इति। सा विषयशुद्ध्यर्थत्वेन द्रष्टव्या। [1]सर्वेषामनुष्ठेयमिति विषयं शोधयित्वा

---

(1) A. तेषामेवाव्यवस्थितमिति

गोत्रव्यवस्थया शिखाकल्पव्यवस्थायां दर्शनं स्पष्टम् ॥

लिङ्गाभावाच्च नित्यस्य ॥ १८ ॥

इदं पदेभ्यः केभ्यश्चिदुत्तरं सूत्रं । कानि तानि पदानि ? अथ किमर्थं न लिङ्गाद्व्यवस्था ? यथा, 'शुक्लो होता' इति । नास्ति तत् नित्यमेषां लिङ्गं, यत् यथादर्शनमनुवर्तते । येऽपि श्यामा बृहन्तो लोहिताक्षाः, तेऽपि न सर्वे आह्वीनैवुकादीन् कुर्वते । अनेवंलिङ्गा अपि चानुतिष्ठन्ति । तस्मान्न व्यवस्था ; शुक्लो होता इति तु प्रत्यक्षा श्रुतिः ॥

आख्या हि देशसंयोगात् ॥ १९ ॥

अथ कस्मान्न समाख्यया नियमः ? ये 'दाक्षिणात्याः' इति समाख्याताः, ते आह्वीनैवुकादीन् करिष्यन्ति ; ये 'उदी-

---

राद्धान्ते तु नाभिमानप्रभवं वचनमिति परिहृतम् । यद्यभिमान-प्रभवं वैदिकं वचनं तदा भवेदप्रामाण्यं चोदनायाः अभिमानस्य च मूलं नास्तीति भवत्वसावयथार्थोऽभिमानः न पुनरयथार्थत्वं चोदनायाः शक्यते वक्तुम् ।

---

पूर्वपक्षो हृदि स्थितः यद्यव्यवस्था अप्रामाण्यं तर्हि वेदस्येति । राद्धान्ते तु नाभिमानप्रभवं वचनमिति परिहृतमप्रामाण्यम् । यदि हि अभिमानप्रभवं वैदिकं वचनं भवेत् यादृशोऽभिमानो दृश्यते तादृशो वचनेन प्रतिपादयितव्यः इति स्यात् । तदा भवेदप्रामाण्यं चोदनायाः । न चैतदस्ति स्वातन्त्र्याच्चोदनायाः । अभिमानस्य च मूलं नास्तीति । भवत्वसौ अयथार्थोऽभिमानः । तथापि कर्मस्वरूपे चोदनायाः प्रामाण्यमस्तु तदाह— न पुनरयथार्थत्वं चोदनायाः शक्यतेऽवगन्तुम्[1] ।

---

(1) वक्तुम

च्याः' इति समाख्याताः, ते उद्गृषभयज्ञादीन्; ये 'प्राच्याः' इति, ते होलाकादीन्; यथा, 'राजा राजसूयेन'–इति। नैतदेवं, देशसंयोगात् आख्या भवति, दक्षिणदेशान्निर्गतः प्राक्षु वा उदक्षु वाऽवस्थितः आह्नीनैबुकादीन् करोत्येव। उदीच्याश्च देशान्तरे उद्गृषभयज्ञादीन्, प्राच्याश्च होलाकादीन्, अन्यदेशाश्च देशान्तरगतो न नियोगतः परपदार्थान् करोति। तस्मान्न व्यवस्था। 'राजा राजसूयेन' इति तु नियता जातिः॥

न स्याद्देशान्तरेष्विति चेत्॥ २०॥

इति चेत् पश्यसि,—यदि देशसंयोगात् आख्या भवेत्, देशान्तरस्थस्य न भवेत्! भवति च देशान्तरस्थस्य 'माथुरः' इत्यसंबद्धस्यापि मथुरया; तस्मान्न देशसंयोगात् आख्या॥

स्याद्योगाख्या हि माथुरवत्॥ २१॥

देशसंयोगनिमित्तायामप्याख्यायां देशान्निर्गतस्य तदाख्या न विरुद्धा, यत एषा योगाख्या योगमात्रापेक्षा, न भूतवर्त्तमान-भविष्यत्संबन्धापेक्षा, यतो दृश्यते, मथुरामभिप्रस्थितो मा-थुरः इति, मथुरायां वसन्, माथुराया निर्गतश्च। यस्य तु अतोऽन्यतमः संबन्धो नास्ति, न स माथुरः, तस्मान्न समाख्यया व्यवस्था॥

कर्मधर्मो वा प्रवणवत्॥ २२॥

अथ कस्मान्न कर्माङ्गं देशः?—यः कृष्णमृत्तिकाप्रायः, स आह्नीनैबुकादीनां, यथा 'प्राचीनप्रवणे वैश्वदेवेन यजेत' इति॥

तुल्यन्तु कर्तृधर्मेण ॥ २३ ॥

यथा कर्त्तरि अव्यवस्थितं लिङ्गं श्यामादि न पदार्थैः संवादमुपैति, तद्वत् देशलिङ्गं अव्यवस्थितम्; कृष्णमृत्तिकाप्रायेऽप्यन्ये न कुर्वन्ति, तथा अन्यलिङ्गेऽपि कुर्वन्ति; तस्मान्न देशतो व्यवस्था। प्राचीनप्रवणन्तु श्रुत्या नियतं वैश्वदेवस्य ॥

व्याकरणाधिकरणम् ॥

प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात् ॥ २४ ॥

गौः गावी गोणी गोपोतलिका इत्येवमादयः शब्दा उदाहरणम्। गोशब्दो यथा सास्नादिमति प्रमाणं, किं तथा

---

प्रयोगोत्पत्त्यशास्त्रत्वात् शब्देषु न व्यवस्था स्यात्। कथं पुनर्व्याकरणस्मृतेर्निर्मूलत्वे सति वेदस्याप्रामाण्यमाशङ्क्यते? यदि गाव्यादीनामप्यनादिसत्ता स्यात किं जातं चोदनायाः; उच्यते; अश्वगोण्यादीनां नियतार्थत्वं स्मरन्ति वेदविदः नियतार्थतया च वेदव्याख्यानमपि कुर्वते।

---

प्रयोगोत्पत्त्यशास्त्रत्वात्। कथं पुनः व्याकरणस्मृतेर्निर्मूलत्वे सति वेदस्याप्रामाण्यं शक्यमाशङ्कितुं यन्निवृत्त्यर्थमिदमधिकरणमारभ्यते। एकग्रन्थेनाह—यदि गाव्यादीनामप्यनादिसत्ता स्यात् किं जातं चोदनायाः। गवादिशब्दा अप्यस्मिन् पक्षे वाचका एव सास्नादिमदादीनां, न केवलं गाव्यादिशब्दाः। ततश्च सिध्यत्येव वेदस्य प्रामाण्यम्। उच्यते—अश्वगोण्यादिशब्दानां नियतार्थत्वं स्मरन्ति वेदविदो वैयाकरणाः। अश्वशब्दो घोटकस्यैव वाचको न निःस्वस्य, गोणीशब्दश्चावपनस्यैव वाचकः न गोरिति वैयाकरणानां स्मृतिः। ततः किमित्याह—नियतार्थतया च वेदस्य व्याख्यानमपि कुर्वते। य एवासौ घोटकावपनादिः नियतोऽर्थस्तदर्थतयैव वेदगतानप्यश्वादिशब्दान् व्याचक्षते अश्वमा-

गाव्यादयोऽपि, उत न? इति सन्देहः, किमत्रैकः शब्दोऽविच्छिन्नपारम्पर्योऽर्थाभिधायी, इतरे अपभ्रंशाः उत सर्वेऽनादयः? सर्वे अनादय इति ब्रूमः। कुतः? प्रत्ययात्, प्रतीयते हि गाव्यादिभ्यः सास्नादिमान् अर्थः; तस्मात् इतो वर्षशतेऽप्यस्यार्थस्य संबन्ध आसीदेव, ततः परेण, ततश्च परतरेणेति अनादिता, कर्ता चाऽस्य सम्बन्धस्य नास्ति इति व्यवस्थित-

---

यदि च व्याकरणं प्रमाणं तदिदमुपपन्नं स्यात्। निर्मूलत्वे हि नियतार्थता निष्प्रमाणिका स्यात्। भवतु का नो बाधा। अनियतनिमित्तको वेदार्थः प्राप्नोति। ततश्चानध्यवसायादप्रामाण्यम्। न च शास्त्रस्थन्यायोऽत्र शक्यते

---

लभेतेत्यादिषु। यदि च व्याकरणं प्रमाणं भवेत् तदेदमुपपन्नं स्यात् निर्मूलत्वे तु सति नियतनिमित्तार्थता निष्प्रमाणिका प्राप्नोति। चोदयति—भवतु का नो बाधा। उत्तरं—अनियतनिमित्तको वेदार्थः प्राप्नोति ततश्चानध्यवसायादप्रामाण्यं स्यात्। अश्वादिशब्दो हि वेदे श्रूयते उपपदप्रकरणाद्यभावे प्रयोगसंशयः स्यात्। किं घोटकादिपरत्वेनायं प्रयुक्तः उत निस्वादिपरत्वेनेति। ततश्चानध्यवसायेनाप्रामाण्यं स्यात् व्याकरणस्मृतेर्निर्मूलत्वे। समूलत्वे तु घोटादिपरत्वेनैव निश्चयादध्यवसाये सति युक्तमेव प्रामाण्यं चोदनायाः। ननु चोभयत्र साधुत्वेपि शास्त्रस्थन्यायेन गौणो निस्वादिषु प्रयोगो भविष्यति, मुख्यश्च घोटादिषु, तेन मुख्यार्थग्रहणेनाध्यवसायो भविष्यतीत्यत्राह—न च शास्त्रस्थन्यायोऽत्र [1]संभवति गौणमुख्यविवेके कारणाभावात्। तत्र हि वाक्यशेषानुगुण्यादार्यव्यवहारस्य मुख्यत्वमितरस्य च गौणत्वमिति। इह तु वाक्यशेषोऽपि नास्ति। तथा तत्र सादृश्याद्गौणीवृत्तिः। इह तु आवपनादीनां गवादिभिस्सह सादृश्यं नोपलभ्यते[2]। तस्माच्छास्त्रस्थन्यायेनात्र दुर्लभः

---

(1) B. adds सादृश्याद्गौणोऽत्र (2) A. adds गौणमुख्यविवेको नोपलभ्यते।

मेव। तस्मात् सर्वे साधवः सर्वैः भाषितव्यम्। सर्वे हि साधयन्त्यर्थं, यथा, हस्तः करः पाणिः—इति। अर्थाय ह्येते उच्चार्यन्ते, न

---

वक्तुम्। तस्माद्व्याकरणनिबन्धन एवावाध्यवसाय इति। अतस्तदुपपत्ति-विचारणीया। तदिदं विचार्यते। किं गौरित्येवमादीनामनादित्वं सास्नादि-मति गाव्यादीनां चादिमत्त्वेति। किमियं स्मृतिः सम्भवन्मूला नेति विचार्यते। किं तावत्प्राप्तं? आस्तां तावन्मूलचिन्ता शब्दानुशासनं तावदनियतार्थम्।

केयमनियतार्थता? इयमनियतार्थता प्रयोगनियमार्थं हीदं शास्त्रम्। न चासौ प्रयोगो नियन्तुं शक्यते। अथ प्रयोगादेव नियमः सिद्धं तर्हि गाव्यादीनामपि सास्नादिमत्यनादित्वम्।

---

तस्माद्व्याकरणनिबन्धन एवाध्यवसायः। अतस्तस्य व्याकरणस्योपपत्तिः विचारणीया। तदिदं विचार्यते—किं गौरित्येवमादीनामनादित्वं सास्नादिमति, गाव्यादीनां चादिमत्त्वेति। प्रतियोगिनी चात्र वचनव्यक्तिः—उभयेषामप्यनादितेति। एतदेव भाष्यं व्याचष्टे—किमियं स्मृतिः संभवन्मूला नेति विचार्यते। यदि व्याकरणस्मृतिः संभवन्मूला तदा सास्नादि-मति गवादीनामेवानादिता। अथ न, तदा उभयेषामप्यनादितेति। किं तावत्प्राप्तं? पूर्वपक्षं परिगृह्णाति—आस्तां तावन्मूलमूलिचिन्ता, शब्दानुशासनमेव तावदनियतार्थम्। केयमनियतार्थताऽनुशासनस्य? उत्तरम्—इयमनियतार्थता प्रयोगनियमार्थं हीतं शास्त्रं, गवादीनामेव सास्नादिमति प्रयोगः साधुः न गाव्यादीनामिति नियमार्थमिदं शास्त्रम्। न चानेन प्रयोगो नियन्तु शक्यते। अथ प्रयोगादेव प्रयोगनियमः। यस्य प्रयोगो लोकेऽस्ति स एव साधुरिति चेत्। दूषयति—सिद्धं तर्हि गाव्यादीनामपि सास्नादिमत्यनादित्वम्।

अदृष्टाय, न हि एषामुच्चारणे शास्त्रमस्ति! तस्मान्न व्यवतिष्ठेत, कश्चिदेक एव साधुः, इतरेऽसाधवः इति ॥

शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम् ॥ २५ ॥

महता प्रयत्नेन शब्दं उच्चरन्ति,—वायुर्नाभेरुत्थितः, उरसि विस्तीर्णः, कण्ठे विवर्तितः, मूर्द्धानमाहत्य, परावृत्तः, वक्त्रे विचरन् विविधान् शब्दानभिव्यनक्ति। तत्रापराध्येताऽपि उच्चारयिता, यथा शुष्के पतिष्यामि इति कर्दमे पतति, सकृत् उपस्प्रक्ष्यामि इति द्विः उपस्पृशति। ततोऽपराधात् प्रवृत्ता गाव्यादयो भवेयुः, न नियोगतोऽविच्छिन्नपारम्पर्या एव इति ॥

---

कथं पुनः प्रयोगो नियन्तुं न शक्यते ? इत्थं न शक्यते प्रथमं तावदिदमनुशासनं, धातोः परे प्रत्यया भवन्तीति। तथा च केचित्कर्तरि, केचित्कर्मणि, केचित् कर्तृवर्जितेषु सर्वकारकेषु ; तच्चेदं सर्वमनुपपन्नम्। कथमनुपपन्नं ? एवमनुपपन्नं—धातोरित्युच्यते ; को नामायं धातुः ?

---

तेषामपि लोके प्रयुक्तत्वात् । कथं पुनः व्याकरणेन प्रयोगो नियन्तुं न शक्यते ? उत्तरं—इत्थं न शक्यते। प्रथमं तावदिदमनुशासनं धातोः परे प्रत्यया भवन्तीति। ते च केचित् कर्तरि यथा तृजादयः। केचित्कर्मणि यथा तव्यदादयः केचित् कर्तृवर्जितेषु सर्वकारकेषु यथा घञादयः । व्याकरणेचाध्यायद्वयेन पूर्वेण साक्षाच्छब्दानुशासनं न क्रियत इति मत्वोक्तम्। प्रथमं तावदिदमनुशासनमिति तच्चेदं सर्वमनुपपन्नम्। कथमनुपपन्नम् ? एवमनुपपन्नम्। धातोः परे प्रत्यया भवन्तीत्युच्यते। को नामायं धातुः यतः प्रत्यया भवन्ति। राद्धान्त्याह

अन्यायश्चानेकशब्दत्वम् ॥ २६ ॥

न चैष न्यायः,—यत्, 'सदृशाः शब्दाः एकमर्थं अभिनिविशमानाः, सर्वेऽविच्छिन्नपारम्पर्या एव' इति, प्रत्ययमात्रदर्शनादभ्युपगम्यते, सादृश्यात् साधुशब्देऽप्यवगते प्रत्ययोऽवकल्प्यते।

---

ननु भूवादयो धातव इति कांश्चिच्छब्दान् कया चित्परिपाट्या पठित्वा 'धातव' इति संज्ञा कृता। अतस्तया संज्ञया ये संज्ञिनो लक्ष्यन्ते तेभ्यः परे प्रत्यया भवन्तीति किं नोपपद्यते ? गण्डतीत्यादीनामपि साधुत्वं प्राप्नोति; घटं भूयत इति च। सत्तादीनामपि तार्तीयप्रत्ययप्रसङ्गः।

---

—ननु च भूवादयो धातव इत्यनेन सूत्रेण कांश्चिच्छब्दान् कयाचित् परिपाट्या पठित्वा धातव इति संज्ञा कृता। अतस्तया धातुसंज्ञया ये संज्ञिनो लक्ष्यन्ते तेभ्यः परे प्रत्यया भवन्तीति किं नोपपद्यते।

पूर्वपक्षी दूषयति—[1]गण्डतीत्येवमादीनामपि साधुत्वं प्राप्नोति। न चेष्यते। कथं पुनरस्य साधुत्वप्रसक्तिः ? उच्यते भवतीति भूः इति क्विप्। क्विन्वेति क्विपि कृते "क्विबन्ता धातुत्वं न जहति" इति स्मृतेः "धात्वर्थः केवलः शुद्धः भाव इत्यभिधीयते" इति स्मरणात् भावे लकारः प्राप्नोति। ततश्चात्मनेपदे यकि च कृते भूयत इति प्रसज्यते। घटशब्दस्य च धात्वर्थीभूत [2]भवितृविशेषणत्वात् क्रियाविशेषणानां कर्मत्वं नपुंसकत्वं चेति स्मरणात् [3]घटमिति प्रसज्यते। अत्र च यदि घटमिति न प्रदर्श्यते तदा भूयत इति साधुत्वप्रसङ्ग इत्युच्यमाने कस्यचिदियमाशङ्का स्यात् अस्त्येव भूयत इत्यस्य साधुत्वं भवतेः भावेलकारोत्पत्ताविति तन्निवृत्तये कर्तृसाधनक्विबन्तेऽपि भूयत इति प्राप्नोतीति दर्शयितुं घटमिति प्रयुक्तवान्। तथा सत्तादीनामपि तार्तीयप्रत्ययप्रसङ्गः। भू सत्तायामित्यत्र सत्ताशब्दस्यापि

(1) B. गण्डयति (2) B. reads कर्तृ (3) C. वेदमिति

तस्मात् अमीषामेकोऽनादिः, अन्येऽपभ्रंशाः। हस्तः करः पाणिः इत्येवमादिषु तु अभियुक्तोपदेशात् अनादिरमीषामर्थेन संबन्धः इति ॥

तत्र तत्त्वमभियोगविशेषात् स्यात् ॥ २७ ॥

कथं पुनः तत्र तत्त्वं शक्यं विज्ञातुम् ?। शक्यं इत्याह, अर्थिनो हि अभियुक्ता भवन्ति, दृश्यते चाभियुक्तानां गुणयताम-

---

अनार्षः पाठ इति चेत् । भवत्वप्ययं परिहारः गण्डत्यादीनां पुनरप्रयोग एव ।

अथ क्रियावचनो धातुरित्युच्यते, न, भवति तिष्ठतीत्यादीनामप्रयोगः गण्डतेश्चानर्थकः पाठः। अक्रियापि क्वचित् प्रतीयत इति चेत्

---

पठितत्वात् धातुसंज्ञायां सत्यां तृतीयाध्यायोक्तप्रत्ययप्रसङ्गः। अनार्षः सत्तादीनां पाठः भूशब्दादिमात्रस्यैव आर्षपाठे सति तेषामेव धातुसंज्ञा न सत्तादीनामिति चेत्। दूषयति —भवत्वप्ययं परिहारः सत्तादीनां तार्तीयप्रत्ययाप्रसङ्गे। गण्डति घटं भूयत इत्येवमादीनां पुनरप्रयोग एव परिहारः। अत्र च भवत्वपीत्यपिशब्दादेतद्दर्शयति—अनार्षत्वे प्रमाणाभावात् न भवत्येवायं परिहारः। तथाप्यभ्युपगम्याप्युच्यते गण्डत्यादिषु तावदयं परिहारो न संभवतीति। अथ क्रियावचनो धातुरित्युच्यते तेन गडेर्वेदनैकदेशे वर्तमानस्य धातुसंज्ञा न भवति तदभावाच्च गण्डतीति न साधुः स्यात्; तथा कर्तरि वर्तमानस्य क्विबन्तस्य भवतेः धातुसंज्ञाभावः। तथा सत्तादीनामपि इति न पूर्वोक्तदोषप्रसङ्गः। दूषणमाह—न, भवति तिष्ठतीत्येवमादीनामप्रयोगः। भवत्यादीनामक्रियार्थत्वात्, गण्डतेश्च पाठोऽनर्थकः। अक्रियावचनत्वेन धातुसंज्ञाऽभावात् तदर्थत्वाच्च गणपाठस्य। अक्रियापि क्वचित् प्रतीयत इति चेत्। अस्यार्थः—कचिदक्रियापि व्याकरणे क्रियावत् प्रतीयते स्वीक्रियते। तेन

विस्मरणं उपपन्नम्। प्रत्यक्षश्चैतत् गुण्यमानं न दृश्यते इति। तस्मात् यमभियुक्ता उपदिशन्ति, एष एव साधुः इति, साधुः— इत्यवगन्तव्यः ॥

तदशक्तिश्चानुरूपत्वात् ॥ २८ ॥

अथ यदुक्तं, 'अर्थोऽवगम्यते गाव्यादिभ्यः, अतः एषा-मप्यनादिरर्थेन संबन्धः' इति, तदशक्तिरेषां गम्यते, गोशब्द-मुच्चारयितुकामेन केनचित् अशक्त्या गावी इत्युच्चारितं, अपरेण ज्ञातं, सास्नादिमान् अस्य विवक्षितः, तदर्थं गौः इत्युच्चारयितुकामो

---

प्रयोगतस्तर्हि नियमः न क्रियातः प्रयोगः। क्रियावगतिमात्रं नियामकमिति चेत् नाध्यारोपानध्यारोपयोस्तुल्यतावगतिः संभवतीत्युक्तम्। तस्मादिद-मपि न नियामकम्। पाठक्रियावचनाभ्यां नियम इति चेत्

---

भवत्यादीनां [1]धातुत्वमिति चेत्। दूषयति—प्रयोगात्तर्हि नियमः न क्रियातः प्रयोगः। इयमक्रियापि क्रियावद्व्याकरणे स्वीक्रियत इति तावद्व्याकरणे स्मृतिर्नास्ति। किन्तु प्रयोगं दृष्ट्वेदमाश्रयणीयं न पुनः पूर्वसिद्धं क्रियात्वमाश्रित्य प्रयोगनियमः। क्रियावगतिमात्रं नियाम-कमिति चेत्। अस्यार्थः, क्रियावगतिमात्रं धातुसंज्ञायां हेतुः। वस्तुवृत्तेन क्रिया वा भवतु अक्रिया वा; तेन भवत्यादीनामपि धातुत्वमिति चेत्; नाध्यारोपानध्यारोपयोस्तुल्यतावगतिः उक्तं प्रथमपादे अध्यारोपे अवगतिरेव नास्तीति। अग्रहणमेव भ्रान्तिरिति। तेनाक्रियायां क्रियावगतिरेव नास्तीति अग्रहणमेव भ्रान्तिरिति। विपरीतख्यातिवादिमते स्यादप्येवम्। निराकृता च सा नयवीथीप्रकरणे। तस्मादिदमपि न नियामकम्। पाठक्रियावचनाभ्यां [2]नियम्यत इति चेत् एतच्च यथासंभवं विकल्पाभिप्रायेणाशङ्कितम्।

---

(1) B. reads साधुत्वं (2) C. नियम इति

गावी इति उच्चारयति, ततः शिक्षित्वा अपरेऽपि सास्नादिमति विवक्षिते गावी इति उच्चारयन्ति ; तेन गाव्यादिभ्यः सास्नादिमान् अवगम्यते ; अनुरूपो हि गाव्यादिर्गोशब्दस्य ।

एकदेशत्वाच्च विभक्तिव्यत्यये स्यात ॥ २९ ॥

अत एव हि विभक्तिव्यत्ययेऽपि प्रत्ययो भवति, अश्मकैरागच्छामि इति अश्मकशब्दैकदेशे उपलब्धे अश्मकेभ्यः—इत्येव

---

तत्रापि समुदितं व्यस्तमिति वक्तव्यम् । समुदितपक्षे गण्डतिभवत्यादीनां तथैव व्युदासः । प्रत्येकमिति चेत् पचत्यादीनां पाठानर्थक्यम् । आगमयत्यादीनां निवृत्त्यर्थमिति चेत् । उभयं तर्ह्याश्रितम् । एवं सति भवत्यादिषु स एव दोषः । तस्मात् पुनरपि प्रयोग एव शरणम् ।

---

दूषयति—तत्राप्येतद्द्वयं समुदितं सत् नियामकं उत व्यस्तमिति वक्तव्यम् । तत्र समुदितपक्षे गण्डतिभवत्यादीनां तथैव व्युदासः । सत्यपि पाठेऽक्रियावचनत्वात् । अथ प्रत्येकमिति चेत् पाठादपि धातुसंज्ञा । तथा क्रियावचनत्वादपीति चेत् । दूषयति—पचत्यादीनां पाठानर्थक्यम् । विनापि पाठेन क्रियावचनत्वेनापि धातुसंज्ञासिद्धेः । आगमयत्यादीनां निवृत्त्यर्थमिति चेत् सिद्धायामपि क्रियावचनत्वेन धातुसंज्ञायां यः पचत्यादीनां पाठः स नियमार्थः । क्रियावचनत्वेपि पठितानामेव धातुसंज्ञा यथा स्यात् नागमयत्यादीनामिति चेत् । दूषयति—उभयं [1]तर्ह्याश्रितं लक्षणम् । स एव भवत्यादिषु दोषः । उभयलक्षणत्वे । तस्माल्लक्षणस्यानियामकत्वे पुनरपि प्रयोग एव शरणम् । तस्य च तुल्यत्वान्न नियम इति ।

---

(1) C. तर्ह्येतल्लक्षणं

शब्दः स्मर्यते, ततः अश्मकेभ्यः इत्येषोऽर्थ उपलभ्यते इति, एवं गाव्यादिदर्शनात् गोशब्दस्मरणं, ततः सास्नादिमान् अवगम्यते ॥

---

तथा कारकनियमासिद्धिः। ध्रुवमपायेऽपादानमिति ध्रुवतयाऽपादानमुक्तम्। ध्रुवस्य कारकत्वमेव नोपपद्यते, मेषान्मेषोऽपसर्पति इति कारकम्। मेषादिति कस्याः क्रियायाः कारकमेतत्। यस्य हि यस्यां क्रियायां व्यापारो विद्यते स तस्यां कारकम्। न च ध्रुवस्य व्यापार उपलभ्यते।

अथायमभिप्रायः सार्थाद्धीनः रथात् पतितः इति सार्थरथयोः क्रियोपलभ्यत इति; नास्ति क्रिया सार्थस्य रथस्य च। अपि तु गमनरूपा न च क्रियान्तरे व्यापृतं क्रियान्तरे कारकं भवति। न च गमेः

---

तथाकारकनियमासिद्धिः। एकग्रन्थेनाह—ध्रुवमपायेऽपादानमिति ध्रुवतयाऽपादानमिति कारकमित्युक्तम् तत्र ध्रुवस्य कारकत्वमेव न विद्मः। कस्मादित्याह मेषो मेषादपसर्पतीति युक्तम्। अपसर्पतीति कारकमपसर्पितुरपसर्पणक्रियायोगात्। मेषादिति कस्याः क्रियायाः कारकमेतत्। ननु माभूत् कस्यांचित्क्रियायां कारकत्वं,[1] तथापि कथम—कारकत्व[2]मित्यत्राह[3]—यस्य हि यस्यां क्रियायां व्यापारो विद्यते तत् तस्यां क्रियायां कारकम्। न च ध्रुवस्य व्यापारमुपलभामहे। अतः कथं तत् कारकम्। अथायमभिप्रायः, 'सार्थाद्धीनः' 'रथात् पतित' इत्यत्र सार्थरथयोः क्रिया विद्यत इति कारकत्वमिति। दूषयति—नास्ति क्रिया सार्थस्य रथस्य च हाने पतने च। किन्तु गमनरूपा तयोः क्रिया देशान्तरप्राप्तिफला। न च क्रियान्तरे व्यापृतं क्रियान्तरे कारकं भवति। येन गमने व्यापृतयोरपि सार्थरथयोः हाने पतने च कारकत्वं स्यात्। न च गमेः

---

(1) B. C. कारकं　(2) B. C. अकारकं　(3) B. इत्याह

कर्ता पचतीत्यस्यावसीयते । तस्मान्निष्क्रियं कारकमिति वदतो व्यापृतादन्यत् सर्वं सर्वत्र कारकं स्यात् । पचतीत्यत्र पठति धावति भुङ्क्ते इत्येव माद्यपादानं स्यात् । एवं पचत्यादिषु कर्ता पठत्याद्यपादानं स्यात् ।

अयमपरः कारकनियमः । कर्मणा यमभिप्रैति स संप्रदानमिति कर्मणा चेदभिप्रेयते न कारकम् । कर्त्रा हि कर्मणा योऽभिप्रेयते स सम्प्रदानमित्युदाहरणाद्विप्रः उपाध्यायाय गां ददाति इति । कर्तृव्यापारानुनिष्पादि व्यापारं च कारकम् । यः पुनरभिप्रेयते न तस्याभिप्रयणे व्यापारः तेन तम् इति कर्मकरणनिर्देशात् फलं कर्म भवति न कारकं यजेरिव स्वर्गः ।

---

**कर्ता पचतीत्यस्य कारकमवसीयते** । **तस्मान्निष्क्रियं** कारकमिति वदतो वैयाकरणस्य **व्यापृतादन्यत् सर्वं सर्वत्रापादानं स्यात्** । तस्य सर्वस्य ध्रुवत्वेन कारकत्वात् । पचतीत्यत्र पठति धावति भुङ्क्ते इत्येवमादीनां **कर्ता अपादानं स्यात्** । **एवं पचतीत्यस्य कर्ता पठतीत्यादिषु अपादानं स्यात्** । **अयमपरः कारकनियमः, कर्मणा यमभिप्रैति स संप्रदानमिति** । अयुक्त इति वाक्यशेषः । एकग्रन्थेनाह—**कर्मणा चेदभिप्रेयते न कारकं**; कस्मात् ? **कर्त्रा हि कर्मणा योऽभिप्रेयते स संप्रदानमित्युदाहरणात् विप्रः उपाध्यायाय गां ददातीति** । तथापि किमित्यत आह—**कर्तृव्यापारानुनिष्पादिव्यापारं च कारकं**, यः कर्तृव्यापारमनुनिष्पादयति तत् कारकम् । **यः पुनरभिप्रेयते न तस्याभिप्रयणे व्यापारः** । कथं व्यापारो नास्तीत्यत्राह—**तेन तं इति कर्मकरणनिर्देशात्** । **फलं कर्म भवति न कारकं यजेरिव स्वर्गः** । तेन कर्मणा अभिप्रेतदानेन तं उपाध्यायं ईप्सति कर्ता इति क्रियायाः करणनिर्देशः । अतः कर्मभूतोऽभिप्रेयमाणः क्रियायाः फलं भवतीति न कारकं यथा स्वर्गो यागस्य फलं न तत्कारकम् । तथा कर्मापि न कारकं किन्तु फलम् ।

ननु च ' कर्मणा यमभिप्रैति ' इति कारकं कर्म परिगृह्यते ; सुतरामकारकत्वम् ; न हि कारकसंबन्धितया कारकव्यपदेशो भवति, करोतीति कारकशब्दव्युत्पादनात्। तस्मान्न शक्यते शास्त्रतः कारकनियमोऽवगन्तुम्। क्रियासंबन्धितया च [कारकत्वे] विशेषानुशासनं न सिद्ध्यति। षष्ठी च सर्वकारकाणां प्राप्नोति स्वर्गस्य च यागकारकत्वप्रसङ्गः प्रयाजादीनां च दर्शपूर्णमासयोः। प्रयोगप्रतिपत्तिभ्यां नियम इति चेन्न तर्हि शास्त्रतः। यदपि साधकतमं करणमित्युच्यते किं तत् साधकतममिति ?

---

**ननु च कर्मणा यमभिप्रैति इति कारकं कर्म परिगृह्यते** न क्रिया। तेन कारकेण कर्मणा यमभिप्रैति न क्रिययेति सूत्रार्थः। दूषयति—**सुतरामकारकत्वम्** क्रियासंबन्धाभावात्। पूर्वं क्रियासंबन्धोऽस्ति, किन्तु निष्पाद्यतये[1]त्यकारकत्वमुक्तम्। संप्रति क्रियासंबन्धोऽपि नास्ति इत्यातिशायनिकः, प्रयुक्तः। कस्मात् पुनरक्रियासंबन्धिनः कारकत्वानुपपत्तिरित्यत्र आह—**न हि कारकसंबन्धितया** कारकं कारकं भवति। क्रियासंबन्धितया हि कारकव्यपदेशः भवति। **करोतीति कारकशब्दव्युत्पादनात्। तस्मान्न शक्यते शास्त्रतः कारकनियमोऽवगन्तुम्।** अथ यथाकथञ्चिदपि यस्य क्रियासंबन्धोऽस्ति तत्कारकं तत्राह—**क्रियामात्रसंबन्धितया च कारकत्वे विशेषानुशासनं न सिद्ध्यति।** साक्षात् पारंपर्येण वा सर्वस्य क्रियासंबन्धित्वात् विशिष्टस्य च कारकत्वाभावात् विशेषानुशासनं न सिद्ध्यति। **षष्ठी च सर्वकारकाणां प्राप्नोति** क्रियासंबन्धमात्रत्वेनोपादानात्। सामान्यसम्बन्धे हि षष्ठी भवति। **स्वर्गस्य च** क्रियासंबन्धित्वात् **यजेः कारकत्वप्रसङ्गः** यजेः [2]कारकत्वं स्यादित्यर्थ.। **प्रयाजादीनां च दर्शपूर्णमासयोः** कारकत्वप्रसङ्गः। **प्रयोगप्रतिपत्तिभ्यां नियम इति चेत्** यत्र कारकवाची शब्दः प्रयुज्यते प्रतीतिश्च यत्रास्ति तत् कारकं इति चेत्। दूषयति—**तर्हि शास्त्रान्नियमो न भवति। यदपि च साधकतमं करणमित्युच्यते** तत्रापि न विद्मः **किं साधकतममिति।**

---

(1) C. adds निष्पादकृतयेति (2) C. कारकं

यस्य व्यापारानन्तरं क्रियानिष्पत्तिरिति, प्राप्तं तर्हि तण्डुलैरोदन-मिति। अथान्येन हेतुना साधकतमत्वं; तद्वक्तव्यम्; प्राचुर्यादिति चेत्, यस्य हि आफलनिष्पत्तेः पुनः पुनः व्यापारः। कस्य वा नास्तीति। आस्ते पक्ता स्थाल्यादिसभारसंभृतः सज्जः। प्रसक्तं तर्हि काष्ठैः पचतीति स्थाल्यामुदकेनेति। भवत्वेवमिति चेत्, न तर्हि काष्ठैः स्थाल्यामोदनं पचतीति प्रयोगनियमः। प्रयोगादिति चेत् नमः शास्त्राय।

आधारोऽधिकरणमिति चानुशासनम्। कस्याधारत्वं ? यत्राधीयते स आधार इति। यदि तावत् क्रिया सर्वकारकाणामधिकरणत्वप्रसङ्गः।

---

उत्तरम्—यस्य व्यापारानन्तरं [1]क्रियानिष्पत्तिः तत् साधकतममिति। प्रत्युत्तरम्—प्राप्तं तर्हि तण्डुलैरोदनमिति। तण्डुलव्यापापारानन्तरमेवोदननिष्पत्तेः अथान्येन हेतुना साधकतमत्वं, तद्वक्तव्यं हेत्वन्तरम्। व्यापारप्राचुर्यादिति चेत्। प्राचुर्यमेव व्याचष्टे—यस्य हि आफलनिष्पत्तेः पुनः पुनर्व्यापारः तस्य व्यापारप्राचुर्यम्। दूषयति—कस्य वा नास्त्याफलनिष्पत्तेर्व्यापारः। एकग्रन्थेनाह—आस्ते पक्ता स्थाल्यादिसंभार संभृतः [2]सज्जः। पुनरप्येकग्रन्थेनाह—प्रसक्तं तर्हि काष्ठैः पचति स्थाल्यां पचति उदकेन पचतीति। भवत्वेवं[3] प्रयोग इति चेत्। दूषयति—न तर्हि काष्ठैः स्थाल्यामोदनं पचतीति प्रयोगनियमः। प्रयोगान्नियमोऽयमेवंभूतः प्रयोगो यत इति चेत् दूषयति—नमः शास्त्राय।

आधारोऽधिकरणमिति चानुशासनमयुक्तम्। कथमित्याह—कस्याधारत्वं यस्याधिकरणत्वसंज्ञोक्ता। यत्राध्रियते[4] स आधार इति। प्रत्युत्तरम्—किं तत्राध्रियते[5]। एकग्रन्थेनाह—यदि तावत् क्रिया यत्राध्रियते तदा सर्वकारकाणां चाधिकरणत्वप्रसङ्गः

---

(1) A. प्रधानार्थनिष्पत्तिः (2) A. B. सन् कः (3) B. भवत्येव (4) A. आधीयते (5) A. आधीयते

अथ यत्र कर्म तदधिकरणमिति चेत्, समे पचतीति न प्राप्नोति अप्सु पचतीति प्राप्नोतीति। कटे भुङ्क्ते इति चापभ्रंशः। कर्तुर्हि तदधिकरणं न क्रियायाः, नापि कर्मणः। सर्वकारकव्यवस्थानं यत्रेति चेत् स्थाल्यामोदनं पचतीति न प्राप्नोति। अधिकरणस्य वा कारकत्वप्रसङ्गः। न ह्यधिकरणं अधिकरणव्यवस्थितमिति शक्यते वक्तुम्। संबन्धितया सर्वकारकाधिकरणता वाऽधिकरणत्वे हेतुरुक्तः निर्व्यापारत्वं च कालादिषूक्तम्। यदप्युच्यते कर्तुरीप्सिततमं कर्मेति, कोऽयमातिशायनिकः सर्वं

---

सर्वेषां क्रियासमवायात्, **अथ यत्र कर्माभ्रियते तदधिकरणमिति** चेत् दूषयति—**समे पचतीति न प्राप्नोति** [1]पाकस्य समे देशेऽसंबन्धात्। **अप्सु पचतीति च प्राप्नोति** अप्सु [2]पाकार्थानां तण्डुलानां स्थितेः। **कटे स्थितो भुङ्क्ते इति चापभ्रंशः**। कुत इत्याह—**कर्तुर्हि तदधिकरणं न क्रियायाः नापि कर्मणः**। तेन कारकत्वाभावान्नाधिकरणसंज्ञा स्यात्। न हि कारकान्तरसंबन्धिनः कारकत्वमित्युक्तम्। **सर्वकारकव्यवस्थानं यत्र तदधिकरणमिति चेत्** दूषयति—**स्थाल्यामोदनं पचतीति न प्राप्नोति** स्थाल्यां सर्वकारकाव्यवस्थानात्। **अधिकरणस्य चाकारकत्वप्रसङ्गः**। कुत इत्याह—**न ह्यधिकरणमधिकरणे व्यवस्थितमिति शक्यते वक्तुम्। संबन्धितया सर्वकारकाधिकरणत्वमधिकरणत्वे हेतुः**। अस्यार्थः अधिकरणमधिकरणे व्यवस्थितमित्येतत्पदजातं परस्परसंबन्धितया वक्तुं न शक्यते। वस्त्वेवेदं न संभवतीत्यर्थः। सर्वकारकाधिकरणता अधिकरणत्वे हेतुः। तत्र सर्वकारकाणामधिकरणत्वमुपपादयितुमधिकरणस्याकारकत्वं वक्तव्यम्। अन्यथाऽधिकरणस्यैव तत्रानवस्थानात्[3] सर्वशब्दानुपपत्तिः। निर्व्यापारत्वाच्च कालादिषु कारकत्वमेव नास्तीत्युक्तं निर्व्यापारस्य प्राक्कारकत्वनिराकरणात्। **यदप्युच्यते—कर्तुरीप्सिततमं कर्मेति**[4] तदयुक्तम्। कुत इत्याह—**कोऽयमातिशायनिकः प्रत्ययः**। एकग्रन्थेनाह—**सर्वं हि**

---

(1) A. & B. तण्डुलस्य (2) A. ओदनार्थानां (3) B. & C. तत्राव्यवस्थानात् (4) B. & C. कर्मेति कोयमातिश

क्रियार्थमीप्सिततमम् । अथायमभिप्रायः—यदर्था क्रिया तत् तमपाऽभिधीयते । प्राप्तमकारकत्वम् । उक्तं हि संप्रदानसूत्रे । तथा युक्तं चानीप्सितम् इति । कथं युक्तं ? तमबर्थेनेति चेत्, न तर्ह्यनीप्सितमिति शक्यते वक्तुं अन्यस्यातिशयिनोऽनुपादानात् । तस्मादन्धपदमेवेदम् ।

अकथितं च कथितमेव । तस्मात् प्रयोगादेव सर्वमुपपादनीयं न शास्त्रादित्यवगच्छामः । तथा स्वतन्त्रः कर्तेति किमिदं स्वातन्त्र्यम् ? यदीच्छातः प्रवृत्तिः ।

---

क्रियार्थतया कर्तुरीप्सिततमम् । अतो व्यावर्त्यमेव नास्त्यातिशायनिकस्य । अथायमभिप्रायः यदर्था क्रिया तत् तमपाऽभिधीयते तस्येप्सातिशयात्[1] । दूषयति—प्राप्तं तर्हि अकारकत्वं तस्य यदि तदर्था क्रिया स्वर्गस्येव । उक्तं हि संप्रदानसूत्रे दूष्यमाणे फलस्याकारकत्वम् । तथायुक्तं चानीप्सितमिति तत्रोच्यते । कथं युक्तं ? तथा शब्देन कः प्रकारः प्रत्यवमृश्यते येन युक्तं तथा युक्तमित्युच्यते । उत्तरं—तमबर्थेन युक्तं तथा युक्तमित्युच्यते इति चेत् । दूषयति—न तर्ह्यनीप्सितमिति शक्यते वक्तुम् । पूर्वसूत्रे तमबर्थमतिशयं प्रति अन्यस्यातिशयिनोऽनुपादानात् । ईप्सिततममिति ईप्सितमेव तमबर्थेन युक्तम् । तेनात्रापि पूर्वोक्ततमबर्थयुक्तं तथायुक्तमित्याश्रीयमाणे [2]ईप्सितत्वमायातमित्यनीप्सितत्वविरोधः । तस्मादनुपपन्नमेवेदं सूत्रम् ।

अकथितं च । कथितमेव अकथितं यत्कारकं तत् कर्मसंज्ञमित्युच्यमाने कस्य कर्मसंज्ञेति न ज्ञायते अकथितस्य [3]कथितत्वात् । तस्मात् प्रयोगादेवेदं सर्वमुपपादनीयं न शास्त्रादिति प्रयोग एव निरूप्यः । सर्वमिदमुपपादयितुं यस्य कर्मणि प्रयोगो दृश्यते तस्यात्र कर्मसंज्ञा अभिमतेत्याश्रयणीयम् । न शास्त्रादित्यवगच्छामः । स्वतन्त्रः कर्तेति दूष्यानुभाषणम् । दूषयति—किमिदं स्वातन्त्र्यम् । उत्तरं—यदीच्छातः प्रवृत्तिः क्रियायाः

---

(1) B. C. ईप्सिततातिशयात् (2) A. ईप्सिततमत्व (3) B. अकथितत्वात्

जायते म्रियते कूलं पततीत्यकर्तृता प्राप्नोति। ततश्चासाधुताप्रसङ्गः शब्दस्य।

अथ तद्व्यापाराधीनं कारकान्तरं मन्यसे केयं तदधीनता यस्मिन् सति यो निष्पद्यते तत तदधीनं; प्राप्तं तर्हि सर्वकारकाणं कर्तृत्वमितरेतराधीनत्वात्। न केनचिद्विना कस्यचित निष्पत्तिमुपलभामहे। यस्य हि येन विना व्यापारनिष्पत्तिः न तेन तदपेक्षते; परस्परापेक्षश्च कारकग्रामः तस्मान्न नियमः।

धातूपात्तव्यापारः कर्तेति चेत्। न विद्मः कस्य धातूपात्त इति सर्वेषां संबन्धितयाऽवगमात्। तथा च प्रयोगदर्शनं काष्ठानि

---

तत् स्वातन्त्र्यम्। दूषयति—जायते म्रियते कूलं पततीत्यत्राकर्तृकत्वं प्राप्नोति। जायमानस्य, म्रियमाणस्य, कूलस्य। ततश्चासाधुशब्दप्रसङ्गः। कर्तृसङ्ख्याभिधायिनी तिङ्विभक्तिर्न प्राप्नोतीत्यर्थः। कथं तत्स्वातन्त्र्यम्। अथ यः स्वतन्त्रः तद्व्यापाराधीनं कारकान्तरव्यापारं मन्यसे यद्व्यापाराधीनः कारकान्तरव्यापारः स स्वतन्त्र इति मन्यसे। दूषयति—केयं तदधीनता। उत्तरं—यस्मिन् सति यो निष्पद्यते स तदधीनः। प्रत्युत्तरम्—प्राप्तं तर्हि सर्वकारकाणां कर्तृत्वं इतरेतराधीनत्वात् सर्वकारकव्यापाराणाम्। कुत इत्याह—न केनचित् कारकव्यापारेण विना कस्यचित् कारकव्यापारस्य निष्पत्तिमुपलभामहे। एतदेव कुत इत्याह—यस्य हि येन विना व्यापारनिष्पत्तिः न तेन तदपेक्ष्यते। परस्परापेक्षश्च कारकग्रामः। तेन अन्योन्याधीनव्यापारत्वात् सर्वेषां कर्तृत्वप्रसङ्गः। तस्मान्न नियमः। धातूपात्तव्यापारः कर्तेति चेत्। यस्य हि व्यापारः धातुनोपादीयते इत्युच्यते स स्वतन्त्रः कर्तेति चेत्। दूषयति—न विद्मः कस्य व्यापारः धातुनोपात्त इति। सर्वेषां संबन्धितयाऽवगमात्। तथा च प्रयोगदर्शनं काष्ठादीनि

(1) Ms. लुप्तप्राश

पचन्तीति। यस्य विवक्षित इति चेत्; विवक्षायाः कारणं वक्तव्यम्। प्रयोग इति चेत्; प्रमाणं तर्हि शास्त्रं; तस्मान्निर्मूलेयं शास्त्रनियमात्कर्तुरवच्छित्तिः। तत्प्रयोजको हेतुश्चेति प्रयोज्येनैव व्याख्यातम्। ये चाप्यर्थोपपदोपाधयः तेऽपि क्रियाविशेषेण वाऽर्थविशेषेण वा नियामकाः। तद्यथा रुच्यर्थानां प्रीयमाण इति संप्रदाने। भीत्रार्थानां भयहेतुरित्यपादाने। अत्रापि न विद्मः किमर्थमपेक्षते संप्रदाननियमाय उत रुच्यर्थोच्चारणमिति। किञ्चातः

---

पचन्तीति। यस्य व्यापारो विवक्ष्यते तस्य व्यापारो धातुनोपादीयते[1] इति चेत्। दूषयति—विवक्षायाः कारणं वक्तव्यं यन्निबन्धना विशेषव्यापारविवक्षा। प्रयोगो विवक्षायाः कारणं यस्य प्रयोगो दृश्यते स विवक्षित इति चेत्। हासेन दूषयति—प्रमाणं तर्हि शास्त्रं, तस्मान्निर्मूलेयं शास्त्रनियमात् कर्तृव्यवस्थितिः।

तत्प्रयोजको हेतुश्चेति प्रयोज्येनैव व्याख्यातम्। कर्तुर्हि प्रयोजको हेतुः यदा प्रयोज्यभूतः कर्तैवाव्यवस्थितः तदा प्रयोजकोऽप्यव्यवस्थित एवेति। ये चाप्यर्थोपपदोपाधयः व्याकरणे प्रयोगनियामकाः तेपि क्रियाविशेषेण उपपदविशेषेण अर्थविशेषेण वा नियामकाः। अर्थो हि नियामको न केवल एव। किन्तु क्रियाविशेषेण वा उपपदविशेषेण वा अर्थविशेषेण वा। तथा हि भयहेतु. अर्थः अपादानत्वनियामको भवति क्रियाविशेषेण तथा क्रुधद्रुहोरुपसृष्टयोरिति क्रोधविषयोऽर्थः उपपदविशेषेण कर्मत्वनियामकः। तथा अर्थोऽप्यर्थविशेषेण नियामकः यथा अन्तर्धौ येनादर्शनमिच्छति इति। तथोपपदस्याप्यर्थविशेषेण चोपपदविशेषेण वा क्रियाविशेषेण वा नियामकमुदाहरणं तु क्रुधद्रुहोरुपसृष्टयोः इत्यादि। एवमुपाधिरपि क्रियाविशेषेण वा उपपदविशेषेण वा अर्थविशेषेण वा नियामकः यथा आख्यातोपयोग इति। क्रियाविशेषेण तावत् यथा रुच्यर्थानां प्रीयमाण इति संप्रदाने, भीत्रार्थानां भयहेतुरित्यपादाने। अत्रापि न विद्मः किमर्थमपेक्षते प्रीयमाणोऽर्थः संप्रदानत्वनियमाय, उत रुच्यर्थोच्चारणमीति। किं चातः ?

---

(1) B. adds इति सर्वेषां संबन्धितयाऽवगमात् तथा

यदि रुच्यर्थोच्चारणं देवदत्ताय मोदका दीयन्तामिति न प्राप्नोति। किमिति रुच्यर्था हि ते रुचिनिमित्तत्वात्। ननु च रुच्यर्थो धात्वर्थः परिगृह्यते किमसौ निर्विषय एव ? न निर्विषयः यद्यस्मै रोचते तद्विषयो रुच्यर्थः। अवगतस्तर्हि, मोदकाभिधानात् धातूच्चारणं निबन्धनमिति चेत् देवदत्ताय मोदकाः किं रोचन्त इति प्रश्नोत्तरानुपपत्तिः। तदपेक्षयैव प्रयुक्तिरिति चेत् न, प्रश्नोत्तरानुपपत्तेः।

---

दूषणमाह—**यदि रुच्यर्थोच्चारणमपेक्षते तदा देवदत्ताय मोदका दीयन्तामिति न प्राप्नोति। किमिति।** न प्राप्नोति। उत्तरमाह—**रुच्यर्था हि ते रुचिनिमित्तत्वात्। रुच्यर्था मोदकाः** रुचिहेतुत्वात् रुचिरिह प्रीतिः अभिप्रेता तदर्थता च मोदकादीनामिति भवन्ति ते रुच्यर्थाः अतस्तेषामुच्चारणात् तद्योग एवेयं चतुर्थी। दीयन्तामित्यनेन संबन्धो न प्राप्नोति। ततश्चान्वितत्वात् देवदत्ताय मोदका दीयन्तामिति न प्राप्नोति (इति) प्रयोगः। **ननु च रुच्यर्थो धात्वर्थः परिगृह्यते** रुचेर्धातोरर्थो रुच्यर्थ इति तद्योगे प्रीयमाणस्यार्थस्य संप्रदानसंज्ञा। तेन पूर्वोक्तो दोषो न भविष्यतीति। दूषयति—**किमसौ** [1]**रुच्यर्थो** निर्विषय एव। उत्तरं—**न निर्विषयः यद्यस्मै रोचते तस्य तद्विषयो रुच्यर्थः।** प्रत्युत्तरम्-**अवगतस्तर्हि; मोदकाभिधानात्।** मोदकेष्वभिहितेषु विषयभूतेषु विषयिणि रुच्यर्थावगतिरस्ति। अवगते च तस्मिन् तद्योग एव चतुर्थीति पुनरपि देवदत्ताय मोदका दीयन्तामिति न प्राप्नोति। धातूच्चारणं संप्रदानसंज्ञानिबन्धनमिति चेत्। दूषयति—**देवदत्ताय मोदकाः किं रोचन्ते इति प्रश्नोत्तरानुपपत्तिः** 'देवदत्ताय मोदकाः' इत्ययमपभ्रंश एव तदानीम्। ततश्च किं इति प्रश्नो नोपपद्यते। तथा रोचन्त इत्युत्तरानुपपत्तिः। **तदपेक्षयैव प्रयुक्तिरिति चेत्** उत्तरगतरुच्यर्थधातूच्चारणापेक्षयैव प्रयुक्तिः। तेनापभ्रंशता न प्राप्नोति[2] इति चेत् दूषयति —**न** तदपेक्षा प्रयुक्तिः। कुतः ? **प्रश्नोत्तरानुपपत्तेः।** यदि तदपेक्षैव प्रयुक्तिः तदा किं प्रश्नेन तदुत्तरेण वा। अथ चतुर्थीप्रयोगस्यासाधुत्वशङ्कया प्रश्नः तन्निराकरणाय चोत्तरमिति

---

(1) C. धात्वर्थः (2) B. नास्ति

प्रश्ननिराकरणार्थमेतदुच्चारणं न चतुर्थीप्रयोगस्य साधुत्वाय। तथा अपादानेऽपि भयहेतुत्वं भीतेः कारकमात्रस्यापादानतामापादयति, सर्वकारकव्यापाराधीनत्वाद्भीतेः। उपपदादिषु तु कारकतैव नास्ति। अनयैव दिशा विभक्तिविधानमपि प्रत्युक्तम्। विषयनिरूपणपूर्वकत्वात् विभक्तिविधानस्य। एवं वाक्यार्थावगमपूर्वकस्य नियमस्य न वाक्यार्थौपयिकत्वं तत्सिद्धेस्तदवगमात्। एवं कृत्प्रत्यया अपि व्याख्याताः। तिङ्प्रत्यया अपि कालाद्युपाधयो न तद्वचनाः। अप्रतीतैश्च नियमनिरूपणमशक्यम्। केन चोक्तं कालादयो

---

तत्राह—**प्रश्ननिराकरणार्थं हि तदुच्चारणं न चतुर्थीप्रयोगस्य साधुत्वाय।** तस्मात् प्रश्नोत्तरानुपपत्तिः। **तथा अपादानेपि भयहेतुत्वं भीतेः कारकमात्रस्यापादानतामापादयति सर्वकारकव्यापाराधीनत्वाद्भीतेः।** सर्वकारकाणामेव भीतिहेतुत्वमिति सर्वकारकाणामपादानत्वप्रसङ्गः। **उपपदादिषु तु कारकतैव नास्ति।** तेन कारकाधिकारे उपपदादिवशेन संज्ञानियमो न युक्तः। **अनयैव दिशा विभक्तिविधानमपि प्रत्युक्तं विषयनिरूपणपूर्वकत्वात् विभक्तिविधानस्य।** कर्मादिविषये हि विभक्तयो भवन्ति। अनिरूपितेषु कर्मादिषु तासां निरूपणमशक्यम्। **एवं वाक्यार्थावगमपूर्वकस्य नियमस्य न वाक्यार्थावगमौपयिकत्वम्;** वेदाङ्गं हि व्याकरणं तस्य च वाक्यार्थावगमोपायत्वेनाङ्गता। सा न स्यात। विभक्तिव्यत्ययानुशासनस्य [1]व्याकरणवाक्यार्थावगमपूर्वकत्वात **तत्सिद्धेः तदवगमात्।** वाक्यार्थे सिद्धे विभक्तिव्यत्ययविधानं नान्यथा यतः। **एवं कृत्प्रत्यया अपि व्याख्याताः।** तेषामपि कर्त्रादिषु विधानात्। तेषामनियमे कृत्प्रत्ययानामपि [2]न नियमनिरूपणशक्तिः। **तिङ्प्रत्यया अपि कालाद्युपाधयो न तद्वचनाः।** ततः किमित्याह—**अप्रतीतैश्च नियमनिरूपणमशक्यम्।** यदा च कालादयो न प्रतीयन्ते तदा नायं नियमो वक्तुं शक्यते वर्तमाने धात्वर्थे वर्तमानाद्धातोरयं प्रत्ययः, भूते अयं भविष्यति वेति। **केन चोक्तं कालादयः**

---

(1) A. reads व्याकरणे वेदवाक्यार्थं etc. (2) C. निरूपणाशक्तेः

नोच्यन्त इति ? उक्तं भगवता भाष्यकारेण भूते धात्वर्थे इति। न च धात्वर्थेनैव धात्वर्थनिरूपणं शक्यम्। तथा लिङादयोऽपि विध्याद्यर्थानिरूपणात्।

कथं पुनर्विध्यादेरनिरूपणं ? उपपदार्थवशात्वाद्भेदस्य। न स्वतो भेदः शक्यतेऽवगन्तुम्। अभिन्नस्वार्थानां च नियमो दुर्वचः अश्वगोण्यादीनामिव; तथा तद्धितसमासौ समर्थवचना[त] दुर्निरूपौ। किमिदं समर्थवचनादिति ? समर्थानां प्रथमाद्वा समर्थः पदविधिः इति चानुशासनम्।

---

लिङ्प्रत्ययेन नोच्यन्त इति। उत्तरं—उक्तं भगवता भाष्यकारेण पतञ्जलिना भूते धात्वर्थे वर्तमानाद्धातोरिति वदता। ननु चोच्यन्तां नाम प्रत्ययेन कालादयः तथापि धातुरेव भूतं धात्वर्थं प्रतिपादयिष्यति इत्यत्राह—न च धात्वर्थेनैव धात्वर्थनिरूपणं शक्यं, धात्वर्थस्यैव [1]त्रैकाल्येप्यविरोधात्। तस्मादप्रतीतेः नियमनिरूपणमशक्यमिति स्थितम्। तथा लिङादयोऽपि न नियन्तुं शक्यन्ते, विध्याद्यर्थानिरूपणात्। विध्यादिषु लिङादयोऽनुशिष्टाः। न च ते निरूपयितुं शक्यन्ते। अप्रतीतेश्च नियमनिरूपणमशक्यम्। कथं पुनः विध्यादेरनिरूपणम् ? उत्तरम्—उपपदार्थवशात्वाद्भेदस्य। विध्यादीनां भेदः उपपदार्थवशेन विज्ञेयः। विधिरयं प्रैषोऽयमिति उपपदार्थवशेन नियोज्यनियोजकपुरुषवाचकोपपदवशेन विज्ञेयः। न स्वतोभेदः शक्यतेऽवगन्तुम्। अभिन्नस्वार्थानां च नियमो दुर्वचः। यत्र स्वार्थभेदोऽस्ति तत्रैवं शक्यते वक्तुं प्रैषादिष्वेवाय नान्यत्रेति, अश्वगोण्यादीनामिव। यथा अश्वगोण्यादीनां शक्यते तथाऽत्र न शक्यत इत्यर्थः। एतच्च राद्धान्तदृष्ट्या दर्शितम्। तथा तद्धितसमासौ समर्थवचनाद्दुर्निरूपौ। किमिदं समर्थवचनादिति। उत्तरं—समर्थानां प्रथमाद्वा, समर्थः पदविधिः इति चानुशासनम्।

---

(1) B. त्रिकाले

एकार्थान्वयिता च सामर्थ्यम् । तल्लक्षणत्वार्थं च समासविशेषाभिधानं तद्धितविशेषाभिधानं च । तेन च तौ लक्ष्येते इति इतरेतराश्रयं तद्धितविशेषविधानम् । तथा असमर्थसमासोपसङ्ख्यानं समर्थाच्च तद्धितानुत्पत्तिः न प्रयोगात् ऋते शक्यतेऽवगन्तुम् । ततश्चेत् कृतं शास्त्रेण । असमर्थानां तावत्समासो अश्राद्धभोजी दधिघटो गोरथ इति । समर्थाच्चानुत्पत्तिस्तद्धितस्य अङ्गुल्या खनति वृक्षमूलादागत इति । तस्मात् प्रयोगशरणं शास्त्रं न प्रयोगनियमायालम् ।

---

कथमस्मात् तद्धितसमासयोः निरूपणमशक्यमित्यत्राह—एकार्थान्वयिता च सामर्थ्यम् । ये अर्थाः एकार्थान्वयिनः ते समर्थाः तेषां तद्धितसमासौ । तल्लक्षणत्वार्थं च समासविशेषाभिधानम्, तद्धितविशेषाभिधानं च । एकार्थान्वयितामेव दर्शयितुं समासतद्धितौ प्रयुज्येते । तेन च सामर्थ्येन तौ लक्ष्येते इति इतरेतराश्रयत्वम् । तथा असमर्थसमासोपसङ्ख्यानं, समर्थाच्च तद्धितानुत्पत्तिः न प्रयोगादृते शक्यते वक्तुम् । लक्षणवशेन हि असमर्थसमासो न युक्तः । तथा समर्थाच्च तद्धितानुत्पत्तिर्न युक्ता । इष्यते चैतद्द्वयम् । तस्मात् प्रयोगादेव नियमः ततश्चेन्नियमः कृतं शास्त्रेण स्वकार्यम् । अनेनैतद्दर्शयति निरर्थकं शास्त्रं न सार्थकमिति । येन हि स्वकार्यं कृतं तत् कृतकार्यत्वादनर्थकम् । कः पुनरसमर्थानां समास इत्याह—असमर्थानां तावत्समासः अश्राद्धभोजीति [1]भुजेर्नञा संबन्धात् तथा दधिघट इति दध्नः पूर्णार्थेन संबन्धात् । गोरथ इति गोर्युक्तार्थेन संबन्धात् । समर्थाच्च तद्धितानुत्पत्तिः अङ्गुल्या खनतीति तेन दीव्यति खनतीति ठकोऽनुत्पत्तिः । वृक्षमूलादागत इति । तत आगत इति प्राग्दीव्यतोऽण् इत्यणोऽनुत्पत्तिः । तस्मात् प्रयोगशरणं शास्त्रं न प्रयोगनियमायालं भवितु-

---

(1) B. & C. यस्य स्वार्थभेदो नास्ति न तत्रेदं शक्यतेऽवगन्तुम् ।

तथा 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' इत्यत्रापि किं कार्यमर्थवत्त्वं उतौत्पत्तिकमिति वक्तव्यम्। को वा विशेषः? यदि कार्यमर्थवत्त्वं 'सिद्धे शब्दार्थसंबन्धे' इति न घटते। अथौत्पत्तिकं तत्कथनोपायत्वाच्छास्त्रस्य न शास्त्रौपयिकत्वं सेत्स्यति। उपायत्वेनेदं शास्त्रं उपेयमूलं चेतीतरेतराश्रयम्। एवं च तन्निबन्धनं स्वरकार्यप्रत्ययविधानं च न सिद्ध्यति। अधातुरप्रत्यय इति चान्वयव्यतिरेकः।

---

मर्हतीति। तथा **अर्थवदधातुरप्रत्ययः प्रातिपदिकमित्यत्रापि किं कार्यमर्थवत्त्वं,** किमौत्पत्तिकमिति वक्तव्यम्। राद्धान्ती पृच्छति—को वा विशेषः? पूर्वपक्षी दूषयति—यदि कार्यमर्थवत्त्वं तर्हि **सिद्धे शब्दार्थसंबन्धे** [1]लोकतोऽर्थप्रयुक्ते शब्दे शास्त्रेण धर्मनियम इति वार्तिकं **न घटते। अथौत्पत्तिकमर्थवत्त्वं तत्कथनपरत्वाच्छास्त्रस्य न** [2]**शास्त्रार्थौपयिकत्वं सिद्ध्यति।** किमयं शब्दो गवादिरर्थवान् न गाव्यादिरित्येतत्कथनाय व्याकरणं कथं तस्यार्थवत्त्वमेवोपायो भवति। न हि यदेवोपेयं तदेवोपायं भवितुमर्हति। **उपायत्वेन चेदं सूत्रं उपेयमूलं चेतीतरेतराश्रयम्। एवं चेत्** प्रातिपदिकमेव न निर्णीतम्। **तन्निबन्धनं च स्वरकार्यप्रत्ययविधानं च न सिद्ध्यति। अधातुरप्रत्यय इति चान्वयव्यतिरेकः।** अस्यार्थः। अर्थवदधातुरप्रत्ययः प्रातिपदिकमित्यस्य सूत्रस्यायमर्थः। अर्थवच्छब्दरूपं धातुप्रत्ययव्यतिरिक्तं प्रातिपदिकसंज्ञं भवतीति। अत्र च अप्रत्यय इत्यनेन प्रत्ययमात्रस्य व्युदासः न प्रत्ययान्तस्य, अन्तग्रहणाभावात्। न च विशेषणत्वेन कस्यचित् प्रत्ययशब्दः प्रयुक्तः यतः येनविधिः इति तदन्तग्रहणं स्यात्, स्वरूपपरत्वेनापि प्रत्ययशब्दोपपत्तेः। संज्ञाविधौ च प्रत्ययग्रहणे तदन्तविधिर्नास्तीति सुप्तिङन्तं पदमित्यत्र प्रतिपादितम्। संज्ञाविधिरेवायं न संज्ञाप्रतिषेधः पर्युदासेनैकवाक्यत्वात्। तथा च वृत्तिकारोऽपि पर्युदासमेव दर्शयति पूर्वसूत्रेऽप्रत्यय इति पर्युदासात्। "कृदन्तस्य तद्धितान्तस्य चानेन प्रातिपदिकसंज्ञा विधीयत" इति कृत्तद्धितसूत्रे वदति।

---

(1) C. कार्यतो (2) शास्त्रार्थोपायत्वं

किमनेन निवर्त्यते ? धातोरर्थवत्त्वेऽपि प्रत्ययस्य च प्रातिपदिकसंज्ञा मा भूत् इत्येवमर्थमुक्तम् । यदि प्रातिस्विकमर्थवत्त्वमाश्रित्य अधातुरप्रत्यय इत्युक्तम् वाक्यस्य तर्हि प्रातिपदिकसंज्ञा प्राप्नोति । समासग्रहणं तन्निवृत्त्यर्थमिति चेत्; अधातुरप्रत्यय इत्यनर्थकम् । तस्यापि समासग्रहणान्निवृत्तिः । एकार्थत्वे सति निवर्तकं नार्थान्तरे

---

ननु यदि प्रत्ययमात्रपर्युदासोऽयं कथं तर्हि उत्तरसूत्रे अप्रत्यय इति पर्युदासात् कृदन्तस्य तद्धितान्तस्य च संज्ञाविधिः, प्रत्ययान्तस्य संज्ञाप्रतिषेधे हि प्रतिप्रसवोऽयं कृदन्तस्य तद्धितान्तस्य चेति भवेत् । उच्यते, इमामेवाशङ्कां निराकर्तुमिदमुक्तम् । "पूर्वसूत्रे अप्रत्यब इति पर्युदासात् कृदन्तस्य तद्धितान्तस्य चानेन संज्ञा विधीयत" इति । अस्यार्थः । यदि कृन्मात्रस्य तद्धितमात्रस्य च प्रातिपदिकसंज्ञा विधीयेत ततः पूर्वसूत्रेऽप्रत्ययग्रहणं न कर्तव्यं स्यात् नियमेनैव व्यावृत्तेः—यदि प्रत्ययस्य प्रातिपदिकसंज्ञा स्यात् तदा कृत्तद्धितस्यैवेति । कृतं चाप्रत्ययग्रहणम् । ततोऽवगच्छामः कृदन्तस्य तद्धितान्तस्य च संज्ञा विधीयते इति । येतु प्रत्ययान्तस्य संज्ञाप्रतिषेधं वर्णयन्ति तेषां प्रत्ययमात्रस्य प्रातिपदिकसंज्ञा प्रसज्यमाना केन वार्यते ।

तदेवं स्थिते सूत्रार्थे दूषणमुच्यते—अधातुरप्रत्यय इति चावयवातिरेकः इति । एकग्रन्थेनाह—किमनेन व्यावर्त्यते ? राद्धान्ती वदति—धातोरर्थवत्त्वेपि प्रत्ययस्य प्रातिपदिकसंज्ञा मा भूदित्येवमर्थवदधातुरप्रत्यय इत्युक्तम् । पूर्वपक्षी दूषयति — यद्येवं प्रातिस्विकमर्थवत्त्वमाश्रित्य आधातुरप्रत्यय इत्युक्तम् वाक्यस्य तर्हि प्रातिपदिकसंज्ञा प्राप्नोति । तस्यापि प्रातिस्विकार्थयोगित्वात् । समासग्रहणं तन्निवृत्त्यर्थमिति चेत् अर्थवत्त्वेन प्रातिपदिकत्वे सिद्धेपि यत् समासग्रहणं तन्नियमार्थम् तेन वाक्यस्य न भवतीति चेत् । दूषयति—अधातुरप्रत्ययग्रहणमनर्थकम् । तयोरपि नियमेन व्यावर्तितत्वात् । तदाह—तस्यापि समासग्रहणान्निवृत्तेः । एकार्थत्वे सति निवर्तकं नार्थान्तरे

इति चेत्; तदयुक्तम्, समासस्याप्यर्थान्तराभ्युपगमात् वावचनानर्थक्येन। अथ अर्थवत्समुदायनिराकरणतया समासग्रहणम्; कृत्ताद्धितग्रहणं तर्हि न कर्तव्यम्। तत्रापि कृदन्तास्तद्धितान्ताश्चेति समुदाय एवेष्यते। तस्मात् प्रयोगस्य तावदभ्युपायता दुर्घटा। दुघटेन चोपायेन दूरापेतमुपेयज्ञानम्।

---

इति चेत् समासपरिसङ्ख्यायां हि समानजातीयस्य निवृत्तिः वाक्यसमासयोश्चैकार्थत्वेन समासेन सजातीयत्वमिति वाक्यस्यैव तेन निवृत्तिः नार्थान्तरवादिनो धातोः प्रत्ययस्य चेत्यर्थवदधातुरप्रत्ययग्रहणमिति चेत्। दूषयति—**तदयुक्तम् समासस्याप्यर्थान्तराभ्युपगमात्।** वावचनानर्थक्यं मन्वानेन कात्यायनेन समासविकल्पार्थविभाषाग्रहणप्रत्याख्यानाय वाक्यसमासयोरनेकार्थत्वमुक्तम्। तेन वाक्यस्यापि निवृत्तिर्नोपपद्यते। अथ विजातीयस्य वाक्यस्य निवृत्तिः तदा धातुप्रत्यययोरपि स्यात्। **अथार्थवत्समुदायनिराकरणतया समासग्रहणं;** समासो हि अर्थवत्समुदायः तेन च समानजातीयं वाक्यं अर्थवत्समुदायं निवर्तयति, न धातुमात्रं प्रत्ययमात्रं वा। दूषयति—**कृत्तद्धितग्रहणं तर्हि न कर्तव्यम्।** तत्किल एवमर्थं क्रियते। समासग्रहणेनार्थवत्समुदाये निवर्तमाने कृदन्तस्य तद्धितान्तस्य च निवृत्तिः प्राप्नोति सा माभूदिति। यदि समानजातीयस्यैव निवृत्तिः तदा अर्थवत्समुदायात्मकत्वात् समासस्य अर्थवत्पदसमुदायात्मकवाक्यस्यैव निवृत्त्या भवितव्यम्। न कृदन्ततद्धितान्तयोः। ततश्च [1]कृत्तद्धितग्रहणमतिरिच्यत एव। ननु च कृत्तद्धितग्रहणं कृन्मात्रस्य तद्धितमात्रस्य च संज्ञार्थं भविष्यतीत्यत्राह—**तत्रापि कृदन्ताश्च तद्धितान्ताश्च** प्रातिपदिकसंज्ञा भवन्तीत्यभिधानात् **समुदाय एव संज्ञी इष्यते।** यथा च समुदायस्य संज्ञित्वसिद्धिः तथोक्तमेव। यत एव स्वयं व्याकरणस्य व्याकुलता अतः **प्रयोगस्याभ्युपायता दुर्घटा।** न केवलं व्याकरणं दुर्घटं उपायभावोऽपि तस्य प्रयोगं प्रति दुर्घटः। कस्मात् प्रयोगं प्रति दुर्घट इत्याह—**दुघटेन चोपायेन दूरापेतमुपेयज्ञानम्।** चशब्दोऽत्र हि-

---

(1) B. कृतं कृत्तद्धितग्रहणेन

उक्तानुक्तदुरुक्तनिरूपणं च व्याख्यातॄणां लक्षणे प्रयोगत एव प्रतिपत्तव्यम् । छन्दसि विशेषाभिधानं च तदर्थाज्ञानान्नोपपद्यते । तत् ज्ञानपूर्वकमिति चेत्, अनर्थकं तर्हि ; वेदार्थज्ञानाय हि अङ्गानि प्रयुज्यन्ते । नाङ्गज्ञानाय वेदार्थः तस्य कार्यार्थत्वात् । अतः शब्दस्य शासनं अनुशासनमेव । तथा च प्रातिशाख्यादीनां प्रणेतृभिः परस्पर-विरुद्धार्थप्रदर्शनेन प्रकटीकृत एव शास्त्रादनियमः । यदपीदमपरं

---

शब्दार्थे द्रष्टव्यः । दुरुक्तानुक्तनिरीक्षणं च व्याख्यातॄणां लक्षणे प्रयोग एव प्रयोगनियमं प्रकटयति । लक्षणमात्रशरणत्वे हि यावदेव यदेव लक्षणमुक्तं तावदेव तदेव चेति दुरुक्तानुक्तपरीक्षणं नोपपद्यते । प्रयोगे तु प्रयोगावगते घटेते दुरुक्तानुक्तपरीक्षणे । यदपि व्याख्यातृभिः मात्रावर्णाधिक्याल्लक्षणस्य व्यापित्वमित्युच्यते तदप्यवाचकाधिक्यात् प्रयोगत एव प्रतिपत्तव्यम् । नह्यतिरिक्तमात्रा वर्णो वा [1]इष्टार्थसाधकः तेन लक्षणतस्तावत्तस्यार्थस्या-प्रतीतिः । यदि परमन्यतः प्रयोगं विज्ञाय तदुपसंहारकत्वं मात्रावर्णाधिक्यस्याश्रयणीयं ततश्च प्रयोगत एव नियमो न लक्षणतः । तथा छन्दसि विशेषाभिधानं तदर्थाज्ञानान्नोपपद्यते । यदि हि तस्यार्थो ज्ञायेत तदा अस्मिन्नर्थे अयं साधुरिति स्मर्येत । न चाप्रसिद्धो लोके वैदिको विशेषोऽर्थावगमं कर्तुमर्हति । राद्धान्तिनः शङ्कामाह—तत् ज्ञानपूर्वकमिति चेत् न्यायबलेनैव वेदवाक्यस्यार्थमवगम्य तदर्थपरत्वेन छन्दसि विशेषाभिधानमिति यद्युच्येत तद्दूषयति—अनर्थकं तर्हि तद्विशेषानुशासनम् । एकग्रन्थेनाह-वेदार्थज्ञानाय ह्यङ्गानि व्याकरणादीनि प्रयुज्यन्ते । नाङ्गज्ञानाय वेदार्थः वेदार्थस्यैतत्प्रयोजनं न भवति । कथं नाम तस्मिन् ज्ञातेऽङ्गानि प्रयुज्यन्तामिति । अतः छन्दसि विशेषानुशासनं अनुशासनमेवेति उत्प्रासेनाननुशासनतां दर्शयति—तथा च प्रातिशाख्यादीनां प्रणेतृभिः परस्परविरुद्धार्थ-प्रदर्शनेन प्रकटीकृत एव शास्त्राद[2]नियमः । यदि हि शास्त्रान्नियमः स्यात् तदा प्राति-शाख्यप्रणेतॄणां परस्परविरुद्धार्थनिबन्धनं न स्यात् । तस्मान्न शास्त्रान्नियमः । यदपीदमपरं

---

(1) A. इष्टोऽर्थवाचकः (2) B. शास्त्रादिनियमः

अप्रयोगान्न भवति इति व्याख्यातृवचनं, तद्दर्शयति मूलपरिज्ञानं सूत्रप्रणेतृणाम् । अपरिज्ञातमूलस्य तस्य वचनान्मूलनियमो नियम एव । आकृतिगणाभिधानं च शास्त्रतो नियमस्य मातृका । बहुलग्रहणं च शास्त्रतोऽनियमस्य डिण्डिमः । एवमस्याः स्मृतेरनादित्वमभ्युपगच्छद्भिः अभ्युपगतमज्ञत्वम् । तस्मादनिर्णीतनिमित्ताद्वेदार्थज्ञानमिति वदद्भिः सन्मार्गानुसारी लोको व्यामोहितः । यद्वा श्रद्धाविजृम्भितमार्जवात् । तदिदमुक्तं 'प्रयोगोत्पत्त्यशास्त्रत्वात् शब्देषु न व्यवस्था स्यात्' इति । ननु चेयमनुपपत्तिः पाणिनीयस्योक्ता । अन्यस्मान्नियमं विद्मः ।

---

व्याख्यातृवचनं अप्रयोगान्न भवतीति तन्मूलापरिज्ञानं सूत्रप्रणेतॄणां दर्शयति । यदि ते मूलभूतं प्रयोगं जानीयुः कथमतिव्यापकं सूत्रं प्रणयेयुः । तेनातिव्यापकसूत्रप्रणयनाज्ज्ञायते नूनं सम्यक् प्रयोगं सूत्रकृतो न जानन्ती'ति । अपरिज्ञातमूलस्य च सूत्रकारस्य वचनान्मूले, प्रयोगनियमोऽनियम एवेत्युत्प्रासवचनमेतत् । आकृतिगणाभिधानं तु शास्त्रतो नियमस्य मातृका । सा हि शास्त्रतो नियमं जीवयति । तेन च जीव्यमानो नियमो जीवित एव । प्रयोगदर्शनपूर्वकं ह्याकृतिगणाभिधानम् । अन्यतश्चेत्प्रयोगावगमः कृतं शास्त्रेण । बहुलग्रहणं शास्त्रतोऽनियमस्य डिण्डिमः । यथा राजा डिण्डिमं दत्वा स्वच्छन्दप्रचारं करोति तथा सूत्रकारोऽपि बहुलग्रहणेनेति डिण्डिम इत्युक्तम् । न चैतत प्रयोगज्ञानमन्तरेण शिष्याः प्रत्येतुं शक्नुवन्ति । ज्ञातश्चेत्प्रयोगः किं व्याकरणेन । एवमस्याः स्मृतेः स्मरणादनादित्वपरिज्ञानं गवादिशब्दानामभ्युपगच्छद्भिः मीमांसकैरभ्युपगतमज्ञत्वम् । तस्मादनिर्णीतनिमित्ताद्वेदात् वेदार्थज्ञानं जातमिति वदद्भिः सन्मार्गानुसारी लोको व्यामोहितो मीमांसकैः । यद्वा लोकानामेवेदं स्वाभाविकं श्रद्धाविजृम्भितमार्जवात् । तदिदमुक्तं प्रयोगोत्पत्त्यशास्त्रत्वात् शब्देषु न व्यवस्था स्यात् इति । ननु चेयमनुपपत्तिः पाणिनीयस्य व्याकरणस्योक्ता अन्यस्मात् आपिशलादेः नियमं विद्मः । दूषयति—न ज्ञायते अन्यस्मादपि नियमः

---

(1) B. शास्त्रादिनियमः

न। अन्यस्याप्ययमेवोपदेशोपायः। शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वं आस्तां तावदुपदेशोपायः इदमेव तावद्विचार्यते किमादिमत्तयापि शब्दस्य व्यवहारः सिद्ध्यति नेति। किमिति न सिद्ध्यति ? एवं न सिद्ध्यति। वृद्धव्यवहारपरंपरया शब्दार्थव्यवहारसिद्धिः अविच्छिन्ना च सेत्युक्तम्। अविच्छेदे च कः खल्ववसरोऽपभ्रंशस्य। यदि परं स्वव्यवहारसिद्ध्यर्थं कस्य

---

अन्यस्यापिशलादेरयमेव धातुसंज्ञादिः शब्दानुशासनेऽभ्युपायः। अत्र चेदमपि वक्तव्यम्। केन प्रकारेण पाणिनिप्रभृतिभिः गवादीनामेव वाचकत्वं गाव्यादीनामपभ्रंशत्वमिति ज्ञातं? प्रयोगप्रतिपत्त्योरुभयेषामपि तुल्यत्वात्। अपरस्माद्व्याकरणादिदमवगतमिति चेत् न, अन्धपरंपरादोषसमापत्तेः। तदेवं व्याकरणमेव दुः श्लिष्टं प्रयोगनियमाय न समर्थम्। अथापि समर्थं तथापि निर्मूलत्वेनानादरणीयमिति। एतच्चास्तां तावत् मूलचिन्तेति सगर्वाभिधानेन सूचितम्। **शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम्। आस्तां तावदुपदेशोपायः। इदमेव तावद्विचार्यते किमादिमत्तयापि शब्दस्य व्यवहारः सिद्ध्यति न वेति।** अत्रायमाशयः। यद्यप्युपदेशोऽभ्युपायः [1]अजस्य इत्यपि समर्थितं भवति तथापि निर्मूलत्वात्स्मृतेरनादरणीयत्वमेवेति निष्फलं तत्समर्थनम्। तेन मूलसंभव एव तावच्चिन्त्यते। तत्सिद्ध्यर्थं विचार्यते। किमादिमत्तया शब्दस्याशक्तिजत्वेनापि व्यवहारः सिद्ध्यति नेति। तत्र यद्यशक्तिबलेनापि व्यवहारसिद्धिः तदा समूला व्याकरणस्मृतिः। अथ न तदा निर्मूलेति। राद्धान्ती पक्षं परिगृह्णाति—**किमिति न सिद्ध्यति ?** यावता सिद्ध्यत्येवादिमत्तया शब्दस्य व्यवहारः। पूर्वपक्षी त्वाह—**एवं न सिद्ध्यत्यादिमत्तया व्यवहारः। वृद्धव्यवहारपरंपरया हि शब्दार्थव्यवहारसिद्धिः अविच्छिन्ना च सा** व्यवहारपरंपरेत्युक्तं संबन्धपरिहारे। विमलाञ्जने चास्माभिः। **अविच्छेदे च सति कः खल्ववसरोऽपभ्रंशस्य।** सर्वशब्दानामनादिव्यवहारपरंपरया प्रसिद्धत्वात्। **यदि परं स्वसंव्यवहारसिद्ध्यर्थं कस्य**

---

(1) A. adds क्षुण्णः

चित् संज्ञा परिभाषा वा कृता, तत्र च कर्तृस्मरणं यथाऽस्मिन्नेव व्याकरणे। न च गाव्यादीनां घटादीनामिव संबन्धस्य कर्ता स्मर्यते। तस्मात् आदिमत्ताया अवसर एव नास्ति। सत्यं यद्यवसरो न; अस्ति त्वसौ, दृश्यते हि बालानामन्यशब्दोच्चारणेच्छायामपि शब्दान्तरोच्चारणम्। यथा कर्तैच्छायां कत्तेति विष्णुर्विण्णुरिति। सत्यम्। बालानां अन्यथोच्चारणमुपलभ्यते। तत्तु तद्व्यवहारावधिकमेव। यत्पुनः

---

चित्संज्ञा परिभाषा वा विशेषणमुद्दिश्य अनेन शब्देनायमर्थोऽभिलपनीय इति नियमः संज्ञा यथा वृद्धिरादैजिति। लक्षणद्वारेण वाच्यवाचकनियमः परिभाषा। यथा तत्पुरुषः समानाधिकरणः कर्मधारय इति। समानाधिकरणपदता हि तत्पुरुषस्य कर्मधारयशब्दवाच्यत्वे लक्षणम्। **तत्र च कर्तृस्मरणं यथास्मिन्नेव व्याकरणे। न च गाव्यादीनां संबन्धस्य कर्ता स्मर्यते** घटादीनामिव। **तस्मादादिमत्ताया अवसरो नास्ति।** राद्धान्ती त्वाह—सत्यं सर्वशब्दानामस्मर्यमाणसंबन्धकर्तृकाणां अनादिवृद्धव्यवहारपरंपरासिद्धत्वं स्यात्। **यद्यादिमत्ताया अवसरो नास्ति; अस्ति त्वसौ। दृश्यते हि बालानामन्यशब्दोच्चारणेच्छायामपि शब्दान्तरोच्चारणं** यथा कर्तैच्छायां कत्तेति विष्णाबुच्चिचारयिषिते विण्णुरिति च। इदमत्राभिप्रेतं—केनचित् गोशब्दमुच्चारयितुकामेन अपटुकरणेन[1] प्रमादादिना वा गावीत्युच्चारितम्। तत्र वृद्धान्तरेण केनचित् प्रकरणादिना तदीयां विवक्षामवगम्य गोशब्दादर्थं प्रतीत्य तेन व्यवहारः प्रवर्तितः। तत्रान्याभ्यामव्युत्पन्नाभ्यां भ्रान्त्यैवमवधारितम्। गावीशब्दादेवानेनायमर्थोऽव्यवधानेन प्रतिपन्न इति। ततश्च ताभ्यां साक्षादिमति वाचकत्वं गावीशब्दस्य भ्रान्त्यैवावसितम्। तथाऽवसायिनौ तेन शब्देन व्यवहृतवन्तौ तद्व्यवहारात् बालाः अपरेऽव्युत्पत्त्या व्यवहरन्तीत्यादिमत्तया व्यवहारसिद्धिः। पुनः पूर्वपक्ष्याह—**सत्यं बालानामन्यशब्दोच्चारणमुपलभ्यते। तच्च तद्व्यवहारावधिकमेव।** तस्य बालस्य व्यवहारादारभ्य प्रवृत्तमिति तत् स्मर्यते। **यत्पुनः**

---

(1) A. **कारणदोषेण**

स्मर्यमाणप्रभवं तदप्यशक्तिजमित्यशक्तिजमेवाभिधानम् । अत्रोच्यते —सत्यं यद्यशक्तिजदर्शनादशक्तिजत्वं गाव्यादेर्ब्रूमः । वयं तु पुनः स्मृतित उपलभ्य स्मृतेर्मूलसंभवमशक्तिजदर्शनेनोक्तवन्तः । ननु च तदेवेदमुक्तं ; न, तथोच्यमानमनुमानं भवति । तत्र च विरुद्धादेर-

---

**अस्मर्यमाणप्रभवं तदप्यशक्तिजमित्यशक्तिजमेवाभिधानम्** । तेन गाव्यादीनामशक्तिजत्वं न शक्यते वक्तुम् । तदिदं सामान्यतो दृष्टेनोच्यते—गाव्यादयः शब्दाः अन्यशब्दोच्चारणेच्छायामशक्तेन केनचिदुच्चारिताः व्यवहाराङ्गत्वात् [1]कर्कशब्दवदिति । न चेदं सामान्यतो दृष्टं घटते; स्मर्यमाणप्रभवस्य हि व्यवहाराङ्गता अशक्तिजत्वेन व्याप्ता, नास्मर्यमाणप्रभवस्य । तेन सामान्यमेव नास्ति । तथाऽनैकान्तिकता च तावत् गवादिशब्दैः । तथेष्टविघातकारिता, लक्षणाविरुद्धता च; गवादिशब्दानामप्यशक्तिजत्वापत्तेरिति । राद्धान्ती वदति —**अत्रोच्यते, सत्यं यद्यशक्तिजदर्शनात्** अशक्तिजकर्कादिदर्शनात् **अशक्तिजत्वं गाव्यादेः ब्रूमः वयं तु स्मृतितोऽशक्तिजत्वमुपलभ्य स्मृतेर्मूलसंभवमशक्तिजदर्शनेनोक्तवन्तः** । अस्यार्थः । स्मृतितस्तावत् गवादिशब्दा एव सास्नादिमतो वाचकाः न गाव्यादयः । किन्तु ते अशक्तिजाः भ्रान्तैः व्यवहारमार्गमवतार्यन्त इति गम्यते । न चेयं निर्मूला स्मृतिः, अशक्तिजेनापि शब्देन व्यवहारदर्शनादिति स्मृतेः निर्मूलत्वाशङ्कानिराकरणायाशक्तिजत्वदर्शनमुपयुज्यते । यदि हि अशक्तिजदर्शनं न स्यात् तदा यद्यपि स्मृतिदार्ढ्येन स्मृत्यन्तरमूलं कल्प्येत तथापि निर्मूलतैव स्यात् । यदा त्वशक्तिजदर्शनमस्ति तदा अनादिव्याकरणपरंपरास्थितस्यानादित्वं कल्प्यते । तेन गाव्यादीनामशक्तिजत्वादादिमत्ता । को हि नामानेकशब्दानामेकस्मिन्नर्थे संभाव्यमानाशक्तिजत्वानां सदृशानामनादितां कल्पयति । न चान्धपरंपरादोषः, अनेनैव प्रकारेण पूर्वव्याकरणप्रणेतॄणामपि मूलसंभवात् । एतदेव विवरीतुं चोद्यमाह—**ननु च तदेवेदमनुमानमुक्तमशक्तिजत्वदर्शनादपभ्रंशा गाव्यादयोऽशक्तिजा इति** । परिहरति—**न**, तदेवोक्तम् , **यस्मात्तथोच्यमानमनुमानं भवति । तत्र च विरुद्धादेर-**

---

(1) A. तर्क

वसरः । अत्र पुनः स्मृतेर्मूलाभावो न शक्यते वक्तुं इत्येतावता अशक्तिजदर्शनम् । संभवमात्रनिरसनश्चाभावो नाशक्तिजदर्शनमपेक्षते । अतोऽभियुक्तस्मरणमन्यथेति न शक्यते वक्तुम् । एवं तर्हि स्मरणमेवेदं न नियमायालं भवतीत्युक्तम् ; नियमायालं भवति । कथं पुनर्न भवतीति ज्ञातम् ? तत एव पूर्वोक्तव्यापकाव्यापकव्याख्यानात् तद्व्याख्यानं कथंचित्समाहितं व्याख्यातृभिः । यथा समाहितं कथंचित् तथैव परिगृह्यताम् । तदपि हि स्मरणमेव ।

---

वसरः । अत्र पुनः स्मृतेर्मूलाभावो न शक्यते वक्तुमित्येतावता प्रयोजनेन अशक्तिजदर्शनमुपन्यस्तम्[1] । कथं पुनरशक्तिजदर्शनेन मूलाभावनिराकरणमित्यत्राह— **संभवमात्रनिरसनश्चाभावो नाशक्तिजसिद्धिमपेक्षते** । अस्यार्थः—अशक्तिजत्वसंभवमात्रेणैव मूलाभावो निराक्रियते न पुनः गाव्यादीनामशक्तिजत्वसिद्ध्या । यदि हि अशक्तिजः शब्दो न भवेत् तदा सर्वेषामनादित्वाद्वाचकत्वस्थितेरिति स्मृतिर्निर्मूला भवेत् । यदा तु अशक्तिजोऽपि शब्दः संभवति तदा स्मृतेर्निर्मूलत्वं न शक्यते वक्तुम् । **अतोऽभियुक्तस्मरणमन्यथेति न शक्यते वक्तुम्** । अभियुक्तत्वेन व्याकरणान्तरमूलतां स्मृतेर्दर्शयति —**एवं तर्हि स्मरणमेवेदं न नियमायालं भवितुमर्हतीत्युक्तम्** । परिहरति—**भवति नियमायालम्** । एकग्रन्थेनाह—**कथं पुनः न नियमायालं भवतीति ज्ञातं भवता ?** पूर्वपक्ष्याह—**तत एव [2]पूर्वोक्तव्यापकाव्यापकव्याख्यानात्** । व्यापकशब्देनाभिमतार्थविषयातिरिक्तव्यापकोऽभिमतः । राद्धान्ती त्वाह—**तद्व्याख्यानं व्याकरणव्याख्यातृभिः कथञ्चित्समाहितम्** । यत्समाहितं कथञ्चित् तत् तथैव परिगृह्यताम् । कुत इत्याह—**तदपि हि स्मरणमेव** वृत्तिवार्तिकभाष्यकारादीनामप्यभियुक्तानां यत्स्मरणं तदपि हि स्मरणमेव न केवलं

---

(1) B. adds अथ पुनरशक्तिजदर्शनमुपन्यस्य (2) पूर्वोक्ताद्व्यापकव्याख्यानात्

अथ लोकवेदयोः शब्दैक्याधिकरणम् ॥

प्रयोगचोदनाभावादर्थैकत्वमविभागात् ॥ ३० ॥

**अथ गौः इत्येवमादयः शब्दाः किमाकृतेः प्रमाणं, उत**

---

एवं कृत्वा सदृशानां शब्दानामेकस्मिन्नर्थे शक्तिभेदो न कल्पितः । दृश्यते हि अद्यत्वेप्येतच्छब्दस्य शब्दान्तरस्मरण-व्यवहितमर्थावगमहेतुत्वम् यथा अद्रितुन्न[ङ्ग]मिति । अत एव विभक्तिव्यत्ययं शब्दविदोऽभ्युपगच्छन्ति । अश्मकैरायात इत्युक्ते अश्मकेभ्य इति प्रतिपद्यते । तस्मादनेनापि प्रकारेणाक्षेप्तुं न शक्यते प्रामाण्यं चोदनायाः ।

**प्रयोगचोदनाभावादर्थैकत्वम् । किं य एव**

---

सूत्रकारस्य । तेन सर्वामियुक्तवचनानुसारेण शक्यते नियमोऽध्यवसातुम् । **एवं च कृत्वा सदृशानां शब्दानामेकस्मिन्नर्थे शक्तिभेदो न कल्पितः स्यात्** अनेकशक्तिकल्पना-गौरवं परिहृतं भवति । **दृश्यते ह्यद्यत्वेप्येतच्छब्दस्य शब्दान्तरस्मरणव्यवहितस्यार्था-वगमहेतुत्वं, यथा [1]अद्रितुन्न[ङ्ग]मिति ।** तेन वृद्धान्तरस्य गावीशब्दव्यवहितोऽपि गोशब्द एवार्थावगमं कृतवान् यद्दर्शनादेव सा [2]स्मृतिरुत्पन्ना [3]गोशब्द एव वाचक इति । यत एव च प्रमाणान्तरेण अन्यशब्दोच्चारणेप्यन्यशब्दविवक्षाया अवगमः **अत एव विभक्ति-व्यत्ययं शब्दविदोऽभ्युपगच्छन्ति । अश्मकैरायात इत्युक्ते अश्मकेभ्य इति प्रतिपद्यन्ते** अन्यथा कथं व्यत्ययो ज्ञायेत यदि प्रमाणान्तरेण विवक्षा नावगम्यते । **तस्मादनेनापि प्रकारेण चोदनायाः प्रामाण्यमाक्षेप्तुं न शक्यते ।**

**प्रयोगचोदनाभावात् ।** अत्र भाष्यकारेण अथ गौरित्येवमादयः शब्दाः किमाकृतेः

---

(1) C. विनुन्नमिति (2) A. भ्रान्ति (3) गावी शब्द एव

व्यक्तेः ? इति सन्देहः । उच्यते ; इदं तावत् परीक्ष्यतां, किं य एव लौकिकाः शब्दाः, त एव वैदिकाः, उतान्ये ? इति ; यदा त एव, तदाऽपि किं त एवैषामर्थाः, ये लोके, उतान्ये ? इति संशयः । तत्रान्ये लौकिकाः शब्दाः, अन्ये वैदिकाः, अन्ये चैषामर्थाः इति ब्रूमः । कुतः ? । व्यपदेशभेदात्, रूपभेदाच ; इमे लौकिकाः, इमे वैदिकाः इति व्यपदेशभेदः । 'अग्नि र्वृत्राणि जङ्घनत्' इत्यन्यत् इदं रूपं लौकिकात अग्निशब्दात् ; शब्दान्यत्वाच न त एवार्थाः । अपि च समामनन्ति, 'उत्ताना वै देवगवा वहन्ति' इति, ये देवानां गावः, त उत्ताना वहन्ति

---

लौकिकाः शब्दाः त एव वैदिकाः, किं त एव चैषामर्थाः इत्यस्याः चिन्तायाः प्रयोजनम् । ननु चाकृत्यधिकरणस्यायमुपोद्घातः । कथमुपोद्घातः ? यदि त एव शब्दाः त एवार्थाः तदा व्यक्त्यभिधानमुखेन शक्यते प्रामाण्याक्षेपः कर्तुं ; यदि त्वन्य एव शब्दा अर्थाश्चान्य-त्वादेवाप्रामाण्यं किं व्यक्त्यभिधानमुखेनाप्रामाण्योपन्यासेन ।

---

प्रमाणमुत व्यक्तेरिति चिन्तामुपन्यस्य मध्ये किं य एव लौकिकाः शब्दाः त एव वैदिकाः त एव चैषामर्थाः उत अन्ये वैदिकाः शब्दाः अन्ये चैषामर्था इति चिन्ता प्रारब्धा । तदस्या मध्ये उपन्यासे किं प्रयोजनमिति पृच्छति—किं य एव लौकिकाः शब्दाः त एव वैदिकाः त एव चैषामर्था इत्यस्याश्चिन्तायाः मध्योपन्यस्तायाः किं प्रयोजनम् ? । उत्तरम् —ननु चायमाकृत्यधिकरणविचारस्योपोद्घातः । कथमुपोद्घात इत्यत्राह—यदि त एव शब्दाः त एव चैषामर्थाः ततो व्यक्त्यभिधानमुखेन शक्यते प्रामाण्याक्षेपः कर्तुम् । यदि त्वन्य एव शब्दाः अर्थाश्च ततोऽन्यत्वादेवाप्रामाण्यं, वृद्धव्यवहारेऽनवधृतवाच्य-वाचकभावत्वादेवानवबोधकत्वादेवाप्रामाण्यसिद्धिः । किं व्यक्त्यभिधानमुखेनाप्रामाण्यो-पन्यासेन । न हि तदानीं व्यक्त्यमिधायित्वमेव संभवति । अतः किमनेन अर्थासंस्पर्शिना

इत्युक्ते गम्यते एव, ये उत्ताना वहन्ति, ते गोशब्देन उच्यन्ते इति। तस्मात् अन्यो वैदिकगोशब्दस्यार्थः। तथा 'देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण प्रदिवस्ते अर्थं' इति, हिरण्य-

---

अत इदमुक्तं—इदं तावत्परीक्ष्यमिति। कथमन्यत्वाशङ्का; व्यपदेशभेदात्; लौकिकानां वैदिकानां चेत्यभियुक्ता व्यपदिशन्ति। कृतणत्वमग्निशब्दं पठन्ति। तथा देवासः त्मनेत्येवमादेश्च दर्शनात्। तथा अर्थान्यत्वमपि वेदादेव प्रतिभाति। उत्ताना वै देवगवा वहन्ति, हिरण्यपर्णोः वनस्पतिः। घृतं मध्विति च। ननु चैवं वेदार्थावगमो नोपपद्यते लौकिकशब्दार्थपूर्वकत्वाद्वेदार्थस्य। स एव माभूदित्याक्षिप्तम्।

---

व्यक्त्यभिधानोपन्यासेन। यतोऽयमुपोद्घातः अत इदमुक्तं इदं तावत्परीक्षितव्यमिति। पूर्वपक्षमाक्षिपति—[1]कथमन्यत्वाशङ्का। उत्तरं—व्यपदेशभेदात्। एतदेव विवृणोति—अथ शब्दानुशासनं केषां शब्दानां लौकिकानां वैदिकानां चेति भेदेन अभियुक्ता व्यपदिशन्ति। तेन भेदोऽवगम्यते। तथा रूपान्यत्वमपि व्यपदिशन्ति। कृतणत्वमग्निशब्दं पठन्ति। तथा देवासः त्मनेत्येवमादेश्च दर्शनाद्रूपान्यत्वमवगम्यते। लोके हि देवा इति भवति आत्मनेत्यपि च। तथा अर्थान्यत्वमपि वेदादेव प्रतिभाति। उत्ताना वै देवगवा वहन्ति हिरण्यपर्णो वनस्पतिः घृतं मध्विति च। लोके हि गवादीनां शब्दानां नैवंविधाऽर्थाः। ननु चैवं यद्यन्ये शब्दाः अन्ये अर्थाश्च तदा वेदादर्थावगमो नोपपद्यते। लौकिकशब्दार्थव्यवहारनिमित्तत्वाद्वेदार्थस्य। परिहरति—स एव मा भूदित्याक्षिप्तम्। अस्यार्थः—स एवार्थावगमो माभूत् इत्यस्माकमाक्षेप्तुमभिप्रेतम्। तेनेष्टसिद्धिरेव

---

(1) B. कथं पुनर

पर्णो देवो वनस्पतिर्वेदे ; 'एतत् वै दैव्यं मधु, यत् घृतं' इति वेदे घृते मधुशब्दः तस्मादमीषामन्येऽर्थाः—इति प्राप्ते,

ब्रूमः,—य एव लौकिकाः शब्दाः, त एव वैदिकाः, त एवैषामर्था इति । कुतः ? । प्रयोगचोदनाभावात्, एवं, प्रयोगचोदना संभवति, यदि त एव शब्दाः; त एवार्थाः, इतरथा शब्दान्यत्वेऽर्थो न प्रतीयेत । तस्मादेकशब्दत्वमिति । उच्यते, प्रयोजन-

---

अप्रतिपादकस्तर्हि वेदः ? ओमित्युच्यते न प्रयोजनानुवर्ति प्रमाणं भवितुमर्हति । एवं तर्हि प्रमाणादेव प्रयोजनमवगच्छामः । किं तत्प्रमाणं ? शब्दार्थयोरनन्यत्वावगतिः । भेदो हि स्वरूपतः कार्यतो वा स्यात् स्वरूपं तावत् तदेव वर्णात्मकं गवादीनां; कार्यमपि तदेव सास्नादिमत्प्रतिपत्तिहेतुत्वम् । केनान्यत्वमवगच्छामः ? ननु च णत्वादिभिः,

---

दोषत्वेन वक्तुं न युज्यते । पुनः राद्धान्ती वदति—अप्रतिपादकस्तर्हि वेदः । प्रतिपत्तिरनुष्ठानमभिप्रेतं तेनायमर्थो भवति अप्रतिपादकोऽननुष्ठापको वेदस्तर्हि प्राप्नोति यद्यर्थानवगतिः । पूर्वपक्षी त्वाह—ओमित्युच्यते । कस्मादित्याह—यस्मात् न प्रयोजनानुवर्ति प्रमाणं भवितुमर्हति । तेन यदि प्रयोजनभूतमनुष्ठानं न घटते मा घटिष्ट न पुनस्तद्वशेन प्रमाणं कल्पयितुं न्याय्यम् । राद्धान्तमाह—एवं तर्हि प्रमाणादेव प्रयोजनमवगच्छामः । किं तत्प्रमाणम् । उत्तरम्—शब्दार्थयोरनन्यत्वावगतिः । कस्मादित्याह—भेदो हि कार्यतः स्वरूपतो वा भवति । एकग्रन्थेनाह—स्वरूपं तावत् तदेव वर्णात्मकं गवादीनां प्रत्यभिज्ञानात् । कार्यमप्येकं सास्नादिमत्प्रतिपत्तिहेतुत्वं च यतः स्वरूपभेदः कार्यभेदश्च नोपपद्यते । अत एव केनान्यत्वमवगच्छामः । पूर्वपक्ष्याह—ननु च णत्वादिभिरन्यत्व-

मिदं, हेतुर्व्यपदिश्यतां ? इति, ततो हेतुः उच्यते, 'अवि भागात्' इति, न तेषां एषाञ्च विभागं उपलभामहे। अत एव एकशब्दत्वं, तांश्च तांश्चार्थान् अवगच्छामः ; अतो नान्यत्वञ्च वदामः। यच्चोक्तं ये उत्ताना वहन्ति, ते देवगवाः, यत् घृतं, तन्मधु, यो हिरण्यपर्णः, स वनस्पतिः इति ; नास्ति वचनं, यत्

---

वर्णान्यत्वं हि तत् न पदान्यत्वं, अर्थप्रतिपत्तिहेतुत्वं, तस्य चैकत्वम्।

---

मवगच्छामः अग्निशब्दस्य णत्वेना[1]भिधानादन्यत्वं, देवास इति वर्णान्तरोपजनात, त्मनेति वर्णलोपेन। राद्धान्तमाह—**वर्णान्यत्वं हि तत् न पदान्यत्वं** ; वर्णमात्रस्य तत्राऽन्यत्वं न पदस्य पदं हि तदेवावगम्यते। ननु च स्फोटनिराकरणेन वर्णात्मकमेव पदं स्थापितं तेन वर्णान्यत्वे पदान्यत्वमेव प्रतीयते इत्यत्राह—**अर्थप्रतिपत्तिहेतुत्वं हि पदत्वं तस्य चैकत्वम्**। अस्यार्थः—एकार्थप्रतिपत्तिलक्षणकार्यवशीकृता वर्णाः क्वचित् तावत् लोके पदतामापन्नाः तेषु वेदेषु श्रूयमाणेषु तदेवेदं पदमिति मतिराविर्भवति। तत्र यदि कस्यचिद्वर्णस्य पदस्यापायो भवति वर्णान्तरं वाऽनुप्रविशति तथापि तदेवेदं पदं विकृतमिति प्रतीतिरुपजायते नान्यदिति। लोकेपि भवत्येवेयमवगतिः तदेव पदं विकृतं सदनेनाशक्त्योच्चरितमिति। अशक्तिश्च पुरुषदोष इति तत्परिहाराय अप्रमत्ता अविकृतमेव पदमुच्चारयन्ति। वेदे तु वक्तुरभावान्नास्युपालम्भः पदैक्ये चावगते वाक्यार्थोऽपि स एवावगम्यते। तस्य पदस्य तदर्थवाचित्वेनावगमात्। लोकेपि भवत्येव विवक्षितपदप्रत्यभिज्ञानेनार्थावगतिः। यदि परं पुरुषस्याशक्तिदोषो भवति विकृतपदोच्चारणात। यत्र वा विकृतप्रचुरवर्णसद्भावः तत्र पदप्रत्यभिज्ञा। यत्र त्वल्पवर्णोच्चारणं तत्रावयवेन समुदायलक्षणा लोके विकृतिरिति। तथा वेदे द्रष्टव्या। यथा उरूकमित्यत्र कशब्देन[2] कसशब्दलक्षणा। लोके विकृतिरेषेति विशब्देन यथा।

---

(1) B. भिधानान्य (2) कसः मेदः जै. सू. 9-4-22.

उत्तानानां वहतां गोत्वं ब्रूयात्, ये गावः, ते उत्तानां वहन्ति इत्येवं ततु; यदि च अनेन वचनेन गोत्वं विधीयते, 'उत्ताना वहन्ति'—इत्यनुवादः स्यात्; न च, उत्ताना वहन्तः प्रसिद्धाः केचित्। ते नियोगतो विधातव्याः, तेषु विधीयमानेषु न शक्यं गोत्वं विधातुं, भिद्यते हि तथा वाक्यम्। यदि चान्ये वैदिकाः, तत उत्तानादीनामर्थो न गम्येत, तत्र नतरां शक्येताऽविज्ञातलक्षणं गोत्वं विज्ञातुम्। न चोत्तानवहनवचनमप्यनर्थकं, स्तुत्यर्थेनार्थवत् भविष्यति इति। एवं घृतस्य मधुत्वं, हिरण्यपर्णता च वनस्पतेः। तस्मात् त एव शब्दा अर्थाश्च ॥

---

ननु चार्थान्यत्वात् पदान्यत्वं; अर्थान्यत्वमेव ह्यसिद्धम्। उत्ताना वहन्तीत्यस्यार्थस्यासिद्धेः। न चायमर्थोऽर्थान्यत्वे उत्तानशब्दात् प्रतिपत्तुं शक्यते। तस्मात् द्वयाभावात् सिद्धमेकत्वम्। कथं तर्हि उत्ताना वै देवगवा वहन्तीति?। उक्तं

---

—ननु चार्थान्यत्वात् कार्यान्यत्वेन पदान्यत्वसिद्धिः। परिहरति—अर्थान्यत्वमेव ह्यसिद्धम्। उत्ताना वहन्तीत्यस्यार्थस्यानुपलब्धेः। यदि ह्युत्ताना वहन्तः केचित्सिद्धाः स्युः ततस्तेषां गोशब्दवाच्यता स्यात्। न च तेषां सिद्धिरस्ति। न चायमर्थोऽर्थान्यत्वे सत्युत्तानशब्दस्य उत्तानशब्दात् प्रतिपत्तुं शक्यते। तेनार्थान्यत्वमिच्छता उत्तानशब्दस्य लोकसिद्धोऽर्थोऽभ्युपेयः। एवं चेदविशेषात् सर्वशब्दानामपि तथैवास्तु। तस्मात् द्वयाभावात् स्वरूपभेदकार्यभेदात्मकद्वयाभावात् सिद्धं [1]पदपदार्थानामेकत्वम्। चोदयति-यद्यर्थान्यत्वं नास्ति कथं तर्हि उत्ताना वै देवगवा वहन्तीति वर्णनीयम्। उत्तरम्—उक्तं

---

(1) B. पदानामेकत्वं

आकृत्यधिकरणम् ॥

**यदि लौकिकास्त एवार्थाः, तदा सन्देहः,—किमाकृतिः शब्दार्थोऽथ व्यक्तिः ?—इति। का पुनराकृतिः, का व्यक्तिः ?**

---

स्तुत्यर्थत्वेन प्रामाण्यं गुणवादेन व्यख्यातम् । कथं तर्हि व्यपदेशः ? अनुशासनविषयान्यत्वसिद्ध्यर्थः । सापेक्षानपेक्षत्वेन विषयभेदः सिद्ध्यति ।

**प्रयोगचोदना ।** उक्तं तद्भूतानां क्रियार्थत्वेन समाम्नाय इति तदिदानीं विचार्यते। किमिदं भूतानामिति न विद्मः किमाकृतौ भूतानां उत व्यक्ताविति ।

---

**स्तुत्यर्थत्वेन** [1]विधीनां स्युरिति गुणवादेन च व्याख्यातं स्तुत्यर्थत्वेन प्रामाण्यादन्य-परत्वेन यथा कथञ्चित् प्रमाणान्तरसिद्धार्थपरत्वेन वर्णनं कार्यमित्यर्थः । यद्येकत्वं **कथं तर्हि भेदेनास्य व्यपदेशः ?** उत्तरम्—**अनुशासनविषयान्यत्वसिद्ध्यर्थः।** अनु-शासनस्य भिन्नविषयत्वं दर्शयितुं भेदेन व्यपदेशः । अनुशासनविषयभेद एव कुत इत्याह—**सापेक्षानपेक्षत्वेन विषयभेदः सिद्ध्यति।** तान्येव पदानि यदा प्रमाणान्तरा-पेक्षाणि सन्ति स्वार्थे प्रयुज्यन्ते तदा लौकिकान्युच्यन्ते । यदा निरपेक्षाणि तदा वैदिकानि इत्यनेन भेदमाश्रित्यानुशासनं व्याकरणे श्रूयते "भाषायां" "छन्दसी"ति च ।

**प्रयोगचोदना।** अत्र भाष्यकारः एवं विचारं वर्णयति । किमाकृतिः शब्दार्थः उत व्यक्तिरिति । तदयुक्तम्—यत्परो हि शब्दः स शब्दार्थः कार्यपरत्वं च सर्वशब्दा-नामिति तत्राह—**उक्तं तद्भूतानां क्रियार्थेन समाम्नाय इति** तदिदं विचार्यते—**क भूताना-मिति न विद्मः किमाकृतौ भूतानां** कार्यपरत्वं **उत व्यक्तौ भूतानामिति ।** स्वार्थे हि वर्तमानानि पदानि कार्यमर्थं प्रति तात्पर्यं भजन्ते तत्र विचार्यते कुत्र वर्तमानानां कार्यपरता

---

(1) B. प्रामाण्यं

इति। द्रव्यगुणकर्मणां सामान्यमात्रमाकृतिः, असाधारणविशेषा व्यक्तिः। कुतः संशयः?। गौः इत्युक्ते सामान्यप्रत्ययात्, व्यक्तौ च क्रियासंबन्धात्।

तदुच्यते,—व्यक्तिः शब्दार्थः इति। कुतः?। प्रयोग-चोदनाभावात्, आलम्भनप्रोक्षणविशसनादीनां प्रयोगचोदना आकृत्यर्थे न संभवेयुः। यत्रोच्चारणानर्थक्यं, तत्र व्यक्त्यर्थः,

---

ननु यद्यस्मात् प्रतीयते स तद्भूतः। उभयं चास्मात् प्रतीयते। कथं तर्हि सामान्येन प्रत्ययात् व्यक्तौ च क्रियासंभवादिति। किं चात्र नोपपद्यते? इदं चात्र नोपपद्यते व्यक्तौ च क्रियासंभवादिति। क्रियासंभवो हि व्यक्तौ तद्भूतत्वे हेतुरुक्तः। व्यक्तौ किमनेनावगमो निरस्तः? ओमित्युच्यते; आकृतावगमा-भिधानात्।

---

किमाकृतौ वर्तमानानां उत व्यक्तानिति। निमित्तभूतार्थचिन्तेयम्—किमाकृतिः शब्दार्थः उत व्यक्तिरिति। **ननु च यद्यस्मात्प्रतीयते स तद्भूतः** आकृतिश्चात्रावगम्यते इति भाष्यकारो वक्ति। तेन आकृतिभूतत्वमेव। कथमत्र संशयः? समाधत्ते—**उभयं चास्मात् प्रतीयते** आकृतिव्यक्त्यात्मकम्। यद्युभयमस्मात्प्रतीयते **कथं तर्हि** भाष्यकारेणोक्तं **सामान्यप्रत्ययाद्व्यक्तौ च क्रियासंभवादिति**। समाधाता आह—**किंचात्र नोपपद्यते** येन पृच्छसि? आक्षेप्ता आह—**इदं नोपपद्यते व्यक्तौ च क्रियासंभवादिति। क्रियासंभवो हि व्यक्तौ तद्भूतत्वे हेतुरुक्तः** न पुनः प्रत्ययः। समाधाता आह--**किमनेनावगमो निरस्तः?** न निरस्त इति भावः। अक्षेप्ता आह—**ओमित्युच्यते**। निरस्त एव व्यक्तावगमः **आकृतावगमाभिधानात्**। यदि हि उभयोरप्यवगमः स्यात् तदा आकृतिभूतत्वे अवगमो

अतोऽन्यत्राकृतिवचनः इति चेत् । उक्तं अन्याय्यश्चानेकार्थत्वं इति। कथं सामान्यावगतिः इति चेत्। व्यक्तिपदार्थकस्याकृतिश्चिह्नभूता भविष्यति,--य एवमाकृतिकः, स गौरिति, यथा यस्य दण्डोऽस्ति, स दण्डी इति, न च दण्डवचनो दण्डिशब्दः, एवं इहाऽपि ।

अद्रव्यशब्दत्वात् ॥ ३१ ॥

द्रव्याश्रयस्य शब्दो द्रव्यशब्दः, न तत्र द्रव्याश्रयवचनः शब्दो

---

अग्रन्थज्ञो हि देवानां प्रियः । काऽत्राग्रन्थज्ञता ? इयमत्राग्रन्थज्ञता। क्रियार्थेन समाम्नाय इत्युक्तम्। क्रियार्थतया च तद्भूतत्वं निरूपितम् । नाप्रतीतं क्रियार्थं भवतीति व्यक्तावेव तद्भूतत्वम्। सामान्यावगतिस्तर्हि कथं, अस्तीत्येतावच्छक्यते वक्तुम्। न पुनः क्रियार्थतया तद्भूतत्वम्।

---

हेतुत्वेन नोक्तः स्यात , अनैकान्तिकत्वात् । समाधाता आह—अग्रन्थज्ञो देवानां प्रियः आक्षेप्ता पृच्छति—काऽत्राग्रन्थज्ञता ? उत्तरं समाधातुः—इयमग्रन्थज्ञतेति। एकग्रन्थेनाह—क्रियार्थेन समाम्नायः सर्वपदानामित्युक्तम्। क्रियार्थतया च तद्भूतत्वं निरूपितम्। यदपि स्वार्थवर्तित्वं तदपि क्रियार्थतया, स्वार्थाभिधानद्वारकं हि क्रियार्थत्वमिति। स्वार्थाभिधानं पदैः क्रियते ; व्यक्तेश्च क्रियार्थता संभवति नाकृतेः न चाप्रतीतं क्रियार्थं भवतीति व्यक्तावेव तद्भूतत्वम् व्यक्तिमेव गवादिशब्दः प्रतिपादयतीत्यर्थः। इदमत्राकूतम्—व्यक्तौ च क्रियासंभवादित्यनेन भाष्येण क्रियासंभवप्रदर्शनेन व्यक्तेरेवप्रतिपाद्यत्वमिति दर्शितम्। न पुनः क्रियासंभवमात्रम्। यदि व्यक्तेरेव क्रियासंभवः अवगतिश्च, सामान्यावगमस्तर्हि कथं ? उत्तरम्—अस्तीत्यनेन भाष्येण क्रियार्थत्वसंभवप्रदर्शनेन अस्ती-

भवेत्, यद्याकृतिः शब्दार्थो भवेत्, षड्देया द्वादश देयाः चतुर्विंशतिर्देया इति; न हि आकृतिः षडादिभिः संख्याभिर्युज्यते। तस्मान्नाकृतिवचनः।

अन्यदर्शनाच्च ॥ ३२ ॥

---

ननु च सामान्यावगतौ सत्यां व्यक्त्यवगमो न प्राप्नोति। अहो बतानुभवेप्यनवमर्शः! कस्य सामान्यस्यावगमः? सम्बन्धितया ह्यनवगम्यमानं सामान्यं सामान्यमिति नावगम्यते। सम्बन्ध्यन्तरसापेक्षा हि सम्बन्धिनि बुद्धिर्भवति। विशेषतश्चात्र रूपरूपितया नावगम्यते। न हि रूपिशून्या रूपबुद्धिरस्ति। यदि स्यात् रूपतैव न स्यात्। किमिति

---

त्येतावच्छक्यते वक्तुं न पुनः क्रियार्थतया तद्भूतत्वम्। ननु सामान्यावगतौ सत्यां व्यक्तावबगमो न प्राप्नोति भिन्नत्वात्तयोः यदि शब्दात् सामान्यावगमः तर्हि व्यक्त्यवगमो न प्राप्नोति भिन्नत्वात्तयोः। परिहरति—अहो बतानुभवेप्यनवमर्शः! एतदेव विवृणोति —यदि व्यक्तिर्नावगम्यते कस्य संबन्धिनः सामान्यमिति नावगम्यते। कस्मादित्याह —संबन्ध्यन्तरसव्यपेक्षस्यावगमः। न कस्यचित्संबन्धितया सामान्यमवगम्यत इत्यर्थः। ननु मा नाम संबन्धितयावगम्यतां तथापि का क्षतिरित्यत्राह—संबन्धितया ह्यनवगम्यमानं सामान्यं सामान्यमिति नावगम्यते। कस्मादित्याह—सम्बन्ध्यन्तरसापेक्षा हि संबन्धिनि बुद्धिर्भवति संबन्धिस्वभावं च सामान्यमिति संबन्धित्वेनानवगम्यमानमनवगम्यमानमेव[1] स्यात्। विशेषतस्त्वत्र रूपरूपितया संबन्धिता नावगम्यते सामान्यं हि रूपं तेन व्यक्तेः रूप्यमाणत्वात् रूपिणी व्यक्तिः। न हि रूपिशून्या रूपे बुद्धिरस्ति। यदि स्यात् रूपतैव न स्यात्। स्वतन्त्रपदार्थात्मकता आपद्येतेत्यर्थः। यदि व्यक्तावप्यवगमोऽस्ति किमिति

---

(1) B. अनवगतमेन

'यदि पशुरुपाकृतः पलायेत, अन्यं तद्वर्णं तद्वयसमालभेत' इति ; यद्याकृतिवचनः शब्दो भवेत् , अन्यस्यालम्भो नोपपद्येत । अन्यस्यापि पशुद्रव्यस्य सैवाकृतिः ; तस्मात् व्यक्तिवचन इति ॥

---

तर्हि भेदेनोपन्यासः ? क्रियार्थेन रूपस्यानन्वयप्रदर्शनार्थम् । न चानन्वितस्य शब्दार्थत्वं युक्तम् पञ्जरस्येव सिंहमानयेति पञ्जरस्थावगतौ । किमिति तर्ह्युपन्यासः ? अमुमेवार्थं प्रदर्शयितुम् । किमर्थम् ? अनन्वितनिमित्ततया अप्रामाण्याभिधानं आकृतिवादिनः । व्यक्तेश्चान्वयमिच्छन्ति व्रीहिन् प्रोक्षतीत्येवमादिषु ।

---

**तर्हि भेदेनोपन्यासः** सामान्ये प्रत्ययात् व्यक्तौ च क्रियासंभवादिति । उत्तरम्— **क्रियार्थत्वेन रूपस्यानन्वयप्रदर्शनार्थः** व्यक्तावेव क्रिया संभवति नाकृतौ केवलं तत्रावगममात्रमिति भेदेनोपन्यासः । सामान्ये प्रत्ययात व्यक्तौ क्रियासंभवादिति । भवतु [1]क्रियार्थत्वेनानन्वयः तथापि किमित्याह— **न चानन्वितस्य शब्दार्थत्वं युक्तम् पञ्जरस्येव सिंहमानयेति पञ्जरस्थावगतौ।** येन हि पञ्जरस्थ एव सिंहोऽवगतः तस्य सिंहमानयेति यद्यपि पञ्जरावगतिर्भवति तथापि पञ्जरस्य न शब्दार्थत्वं, आनयतौ तस्यानन्वितत्वात् । एवमत्रापि क्रियार्थानन्वितत्वेनाकृतेः न शब्दार्थत्वम् । यद्यनन्वितस्य शब्दार्थत्वं न संभवति **किमिति तर्हि** सामान्ये प्रत्ययादित्युपन्यासः ? उत्तरं— **अमुमेव** वक्ष्यमाणमर्थं **प्रदर्शयितुम्।** न त्वाकृतेः । **कमर्थम् ?** उत्तरम्— **अनन्वितनिमित्ततया अप्रामाण्याभिधानमाकृतिवादिनां** ये सामान्यस्यावगममात्रेण शब्दार्थत्वमिच्छन्ति तैरेवावगममात्रेणान्वयमन्तरेणा[2]-अशब्दार्थत्वादनन्वितनिमित्ततया चोदनाया अप्रामाण्यमभिहितं भवतीति दर्शयितुम् । नन्वाकृतेरेव क्रियान्वयः इत्यत्राह— **व्यक्तेश्चान्वयमिच्छन्ति व्रीहीन् प्रोक्षतीत्येवमादिषु**

---

(1) क्रियार्थेन (2) अन्वयेऽनादरेण

व्यक्तितद्भूतपक्षे वा किमनपेक्षत्वं सिद्ध्यति ?। सिद्ध्यतु मा वा अपन्यायाश्रयणं तावज्जातिवादिनः। व्यक्तिपक्षे तु कार्यानुरूपा करणकल्पना न्याय्या। ननु च कथमयं न्याय्यः पक्षः यस्मात् वृद्धव्यवहारपरंपरा न व्युत्पत्तौ कारणतां प्रतिपत्तुं शक्नोति। कथं न शक्नोति ? अन्वयव्यतिरेकाश्रयो हि वृद्धव्यवहारः। अन्वयव्यतिरेकौ च सामान्यनिबन्धनौ। न च वृद्धव्यवहारादन्यद्व्युत्पत्तौ कारणमुपलभामहे। कर्तुरस्मरणादित्युक्तम्।

---

आकृतिवादिनोऽपि। ननु यथा आकृतिवादिनामप्रामाण्यं तथा व्यक्तिवादिनामपीत्याह —**व्यक्तितद्भूतपक्षे वा किमनपेक्षत्वं सिद्ध्यति ?** न सिद्ध्यत्येवेति भावः। उत्तरम्—**सिद्ध्यतु वा मावा अपन्यायाश्रयणं तावज्जातिवादिनः** अनन्विताया जातेः शब्दार्थत्वाभ्युपगमात्। **व्यक्तिपक्षे तु कार्यानुरूपा कारणकल्पना न्याय्या।** व्यक्तिप्रतिपत्तिः कार्यभूता यथा शब्दान्निर्वहति तथा कारणं कल्पयितुं न्याय्यम्। **ननु च कथमयं** व्यक्त्यभिधानपक्षो **न्याय्यः यस्मात्[1] वृद्धव्यवहारपरंपरा न व्युत्पत्तौ कारणतां प्रतिपत्तुं शक्नोति। कथं न शक्नोति ?** उत्तरम्—**अन्वयव्यतिरेकाश्रयो हि वृद्धव्यवहारो**ऽवगम्यते। अन्वयव्यतिरेकाभ्यां हि शब्दार्थनिश्चयः यस्यार्थस्यान्वये यः शब्दः प्रयुज्यते व्यतिरेके च न प्रयुज्यते स तस्य शब्दस्यार्थः। तथा यस्य शब्दस्यान्वये योऽर्थः प्रतीयते व्यतिरेके च न प्रतीयते तस्य शब्दस्यासावर्थोऽवगम्यते। **तौ चावयव्यतिरेकौ** वृद्धव्यवहाराश्रयौ वृद्धव्यवहारे चान्वयव्यतिरेकौ **सामान्यनिबन्धनौ** न व्यक्तिनिबन्धनौ व्यक्त्यन्तरेपि शब्दप्रयोगात् शब्दप्रयोगे च व्यक्त्यन्तरप्रतीतेः। सामान्ये च सति शब्दाप्रयोगात, शब्दे च प्रयुक्ते सामान्यं प्रतीयते। तेन वृद्धव्यवहारे तावद्व्यक्तिनिमित्तता नावगन्तुं शक्यते। **न च वृद्धव्यवहारादन्यत् व्युत्पत्तिकारणमुपलभामहे कर्तुरस्मरणा**त्संबन्धस्य। यदि हि संबन्धस्य कर्ता स्मर्येत तदा सङ्केतवशेनैव व्युत्पत्तिः स्यात्। न च कर्ता स्मर्यत **इत्युक्तम्।**

---

(1) C. यस्य

ननु चाकृतावपि तद्भूतत्वं निरस्तम् । आम्नायस्य क्रियार्थत्वादिति । किं पुनरनयोर्बलीयः ? कार्यमिति ब्रूमः । तद्धि कल्पनाबीजं कारणचक्रस्य, वृद्धव्यवहारादि सह तद्भूततया कारणं कार्यतश्चासन्नतरं तद्भूतत्वमवगम्यते तदनुरूपा च व्युत्पत्तिः कल्पनीया । सा चेन्न वृद्धव्यवहारपूर्विका संभवति कल्प्यतां वा समयः कृतकत्वं वा व्यामोहो वा । ननु च वृद्धव्यवहारादेवावगतिर्दृष्टा बालानां; न हि दृष्टेऽनुपपन्नं नामेति । उपपन्ना तर्हि ! सत्यं दर्शनत उपपन्ना, निमित्ततस्तु नोपपद्यते ।

---

**ननु चाकृतावपि तद्भूतत्वं** पदानामाम्नायस्य क्रियार्थत्वादिति निराकृतम् आकृतेः क्रियान्वयित्वाभावादिति । एकग्रन्थेनाह—**किं पुनरनयो**रक्रियार्थत्ववृद्धव्यवहारा-[1]ननुयायित्वयोः **बलीयः ?** अक्रियार्थत्वादाकृतेरशब्दार्थत्वं प्रतिभाति । वृद्धव्यवहाराननु[2]-यायित्वाद्व्यक्तेः तत्र कस्य बलीयस्त्वम् ? उत्तरं—**कार्यं बलीय इति ब्रूमः** कस्मादित्याह— **तद्धि कल्पनाबीजं कारणचक्रस्य** सर्वत्र हि कार्यवशात् कारणकल्पना । नान्यत् कारण-कल्पनायां प्रमाणं, अनेकार्थान्वितकार्यप्रतिपत्तिश्च शब्दानां कार्यम् तदानुगुण्येन कारणकल्पना न्याय्या । **वृद्धव्यवहारादि च तद्भूततया सह कारणं** वृद्धव्यवहारादिकं तद्भूतत्वं च कारणकोटिनिक्षिप्तं **कार्यतश्चासन्नतरं तद्भूतत्वमवगम्यते** कार्यं चालोच्य कार्यसमनन्तरं व्यक्तितस्तद्भूतत्वमेवावगम्यते **तदनुरूपा च व्युत्पत्तिः कल्पनीया** । एकग्रन्थेनाह—**सा चेन्न वृद्धव्यवहारपूर्विका संभवति तर्हि समयः कल्प्यतां कृतकत्वं वा ।**

अत्र चोदयति—**ननु वृद्धव्यवहारादेव** ,बालानां कार्यावगतिः **दृष्टा** । तेन तत एव कार्यावगतावुपपन्नायां समयस्य कृतेर्वा कल्पना नोपपद्यते । [3]उत्तरम्—**न हि दृष्टेऽनुपपन्नं नामेति** । परिहरति—**उपपन्ना तर्हि** व्युत्पत्तिः । पुनश्चोदयति—**सत्यं दर्शनत उपपन्ना** दर्शनं पर्यालोच्य यथा दृश्यते तदनुसारेणोपपन्नेव[4] प्रतिभाति **निमित्ततस्तु नोपपद्यते**

(1) C. रानुयायित्व (2) C. नुपायित्व (3) उक्तं च (4) A. उपपन्नैव

न च समयः कृतकत्वं वोपलभ्यते। तस्मान्निमित्तकल्पना नयान्निरस्तेव लक्ष्यते।

यदि पुनः सामान्योपलक्षितं व्यक्तिद्रव्यमेव निमित्ततामापद्यते वाक्यार्थप्रतिपत्तौ ततः को दोषः? नैव कश्चित् न खलु कश्चिद्दोषः, उपलक्षणत्वे तु प्रमाणं वक्तव्यम्। कार्यप्रतिपत्तिरेवात्र प्रमाणम्। न हि व्यक्तावप्रतिपन्नायां कार्यप्रतिपत्तिर्घटते। न हि सामान्येनानुपलक्षितो व्यक्तिविशेषः शक्यते प्रतिपादयितुमिति सर्वमुपपन्नम। अतो व्यक्त्यभिधानं मन्यते व्याडिरिति प्रदर्शितम्। अत एव सङ्ख्यादीनां विनियोज्योपादेयत्वमुपपन्नं

---

वृद्धव्यवहारस्य व्युत्पत्तौ निमित्तत्वाभावात् निमित्तपर्यालोचनया व्युत्पत्तिर्नोपपद्यते। **न च समयः कार्यं वोपलभ्यते। तस्मात्** व्युत्पत्तौ **निमित्तकल्पना नयान्निरस्तेव**[1]**लक्ष्यते।** परिहरति—**यदि पुनः सामान्योपलक्षितं व्यक्तिद्रव्यमेव** वाक्यार्थप्रतिपत्तौ **निमित्ततामापद्यते ततः को दोषः? नैव कश्चित्**, एकेनोपलक्षणेन संबन्धग्रहणस्य सुकरत्वात्। पुनश्चोदयति—**न खलु कश्चिद्दोषो** भवति, **उपलक्षणत्वे तु प्रमाणं वक्तव्यं** किमिति जातिरुपलक्षणमेव अभिधेयैव कस्मान्न भवति? परिहरति—**कार्यप्रतिपत्तिरेवात्र**ोपलक्षणत्वे कारणं; **न हि व्यक्तावप्रतिपन्नायां कार्यप्रतिपत्तिः घटते।** यदि हि व्यक्तिर्न प्रतीयते तदा तदन्वितकार्यप्रतिपत्तिर्नोपपद्यते। तस्मादुपलक्षणमात्रं तत्। ननु किं तयोपलक्षणभूतयेत्यत्राह—**न हि सामान्येनानुपलक्षितो व्यक्तिविशेषः शक्यते प्रतिपादयितुं** संबन्धग्रहणस्याभावादिति सर्वमुपपन्नं कार्यान्विताभिधानम्। व्युत्पत्तिकारणत्वं [2]उपलक्षणत्वं चाकृतेरिति सर्वमुपपन्नमित्यर्थः। **अतो व्यक्त्यभिधानं मन्यते व्याडिरिति प्रदर्शितम।** यत एव च व्यक्तिरर्थः **अत एव विनियोज्यत्वमुपादेयत्वं सङ्ख्यादीनामुपपन्नं**, आकृतौ तु शब्दार्थे तस्याः सङ्ख्याद्यनाश्रयत्वात् 'एका देया' इत्यादौ सङ्ख्याया विनियोज्यत्वं न स्यात्। सङ्ख्या हि

---

(1) A. निरस्तै व। C. नयनिरस्तेव (2) A. reads वाक्यार्थावगतिरिति

आकृतिस्तु क्रियार्थत्वात् ॥ ३२ ॥

तुशब्दः पक्षं व्यावर्तयति । आकृतिः शब्दार्थः । कुतः ? । क्रियार्थत्वात्, 'श्येनचितं चिन्वीत' इति वचनमाकृतौ संभवति, यद्याकृत्यर्थः श्येनशब्दः ; व्यक्तिवचने तु न चयनेन श्येनव्यक्ति-रुत्पादयितुं शक्यते इति अशक्यार्थवचनात् अनर्थकः । तस्मात् आकृतिवचनः ।

---

भवति । न ह्यनाश्रितो गुणान्वयभाग्भवति । अन्यत्वव्यपदेशश्च न जातिपक्षे उपपद्यते । अतो व्यक्तिनिमित्ततैव च तद्भूततेति द्रष्टव्यम् ।

आकृतिस्तु क्रियार्थत्वात् । अत्रोच्यते । सिद्ध्यत्यपि कदाचिदयं पक्षः कार्यावगतिरेव ह्यनैकान्तिकी, श्येनचितं

---

साधनत्वेन विनियुज्यते । साधनपरिच्छेदेन च तस्याः साधनभावः, यदि चाकृतिरेव शब्द-वाच्यः स्यात् तदा तस्या एव विनियोगात् साधनभावः[1] । न च तस्यां सङ्ख्यया अवच्छेदो घटते इति संख्याविनियोगो न घटत इति । तथा पशुनेत्यादौ अनेनैव प्रकारेण सङ्ख्याया उपादेयत्वं न स्यात । एतदेवाह—**न ह्यनाश्रितो गुणोऽन्वयभाग्भवति अन्यत्वव्यपदेशश्च न जातिपक्षे उपपद्यते ।** अन्यं तद्वर्णं तद्वयसमित्यन्यत्वव्यपदेशश्च न जातिपक्षे उपपद्यते जातेरेकत्वात । **तस्मात् व्यक्तिनिमित्ततैव तद्भूततेति द्रष्टव्यम ।**

**आकृतिस्तु ॥ अत्रोच्यते । सिद्ध्यत्यपि** कदाचिदयं पक्षः यदि कार्यावगतिरन्यथा-न स्यात् । **कार्यावगतिरेवानैकान्तिकी** । कथमनैकान्तिकी ? उत्तरं—**श्येनचितं**

---

(1) B. साधनत्वाच्च

ननु श्येनव्यक्तिभिश्चयनमनुष्ठास्यते। न साधकतमः श्येन-शब्दार्थः, ईप्सिततमो ह्यसौ श्येनशब्देन निर्दिश्यते; अतश्चयनेन श्येनो निर्वर्तयितव्यः, स आकृतिवचनत्वेऽवकल्प्यते।

ननु उभयत्र क्रियाया असम्भव एव व्यपदिश्यते, नाकृतिः शब्दार्थः, कुतः? क्रिया न सम्भवेदाकृतौ शब्दार्थे 'व्रीहीन् प्रोक्षति' इति। तथा न व्यक्तिः शब्दार्थः, क्रियैव न सम्भवेत् व्यक्तेः शब्दार्थत्वे 'श्येनचितं चिन्वीत' इति। यदप्युच्येत,

---

चिन्वीतेति नात्र व्यक्तिवचनता[तद्भूतता]शक्यते वक्तुम्। न ह्यत्र व्यक्तिगतं कार्यं प्रतीयते। किमिति न प्रतीयते? नायं वाक्यार्थः श्येनैश्चितं श्येनचितमिति। कर्मण्यग्न्याख्यायामिति स्मरणात्। अभिधानस्मरणं च यथार्थमित्युक्तम्। अतः श्येनशब्दोऽयं चितौ वर्तते। तस्मात् द्रव्यान्तरसाध्यायां चितौ श्येनशब्दः उपमार्थे वृत्तः।

---

चिन्वीतेति नात्र व्यक्तितद्भूतता शक्यते प्रत्येतुम्। कस्मादित्याह—नह्यत्र व्यक्तिगतं कार्यं प्रतीयते। [1]किमिति न प्रतीयते? नायं वाक्यार्थः श्येनैश्चितं श्येनचितमिति प्रतीयते। तस्मिन् वाक्यार्थे हि व्यक्तिगतमेव कार्यं स्यात् व्यक्तेरेव चयनं प्रति करण-त्वोपपत्तेः। किमित्येष एव वाक्यार्थो न प्रतीयते। उत्तरं—कर्मण्यग्न्याख्यायामिति स्मरणात्। कर्मण्युपपदे चिनोतेर्धातोरयं क्विप्प्रत्ययः। तेन श्येनश्चीयते इति श्येन-चिदित्यर्थः। अभिधानस्मरणं च यथार्थमित्युक्तं साधुशब्दाधिकरणे। अतः श्येन-शब्दोऽयं चितौ चीयमाने स्थले वर्तते। तस्मात् द्रव्यान्तरसाध्यायां रसलोहित-मांसादिभ्यो यद्द्रव्यान्तरमिष्टकाख्यं तत्साध्यायां चितौ श्येनशब्दः उपमार्थे वृत्तः श्येन-

(1) A. कस्मादित्याह

'व्रीहीन्प्रोक्षति' इति व्यक्तिलक्षणार्था आकृतिः इति ; शक्य-मन्यत्रापि 'श्येनचितं चिन्वीत' इति वदितुम् आकृतिलक्षणार्था व्यक्तिः इति। किं पुनरत्र न्यायः ?

आकृतिः शब्दार्थः इति; यदि व्यक्तिः शब्दार्थो भवेत्, व्य-क्त्यन्तरे न प्रयुज्येत। अथ व्यक्त्यन्तरे प्रयुज्यते, न तर्हि व्यक्तिः शब्दार्थः, सर्वसामान्यविशेषविनिर्मुक्ता हि व्यक्तिरिति। उच्यते,—नैष दोषः,—व्यक्त्यन्तरे सर्वसामान्यविशेषविनिर्मुक्ते एव प्रव-र्तिष्यते। यदि व्यक्त्यन्तरे सर्वसामान्यविशेषवियुक्ते प्रवर्ति-ष्यते, सामान्यमेव तर्हि तत्। नेत्युच्यते,—यो हि अर्थः सामान्यस्य विशेषाणाञ्चाश्रयः, सा व्यक्तिः, व्यक्तिवचनश्च शब्दो

---

न हि व्यक्तिसादृश्यमुपपादयितुं शक्यते। तस्मात् सामान्यान्वयो दृश्यते न व्यक्तेः। अन्वयिनश्च पदार्था इत्युक्तम्। तस्मान्नोपलक्षण-तयैव सामान्यस्यान्वयोऽवगम्यते। किन्तु कार्यतः।

---

सदृशे वर्तते इत्यर्थः। तथापि किमित्याह—न हि व्यक्तिसादृश्यमुपपादयितुं शक्यते तथा आहुर्वार्तिककारपादाः

एकव्यक्तिसदृक्षत्वं द्विजाः कुर्युर्महीतले।

किञ्चिदालेख्यलेख्याभ्यां नेष्टकाभिः कथञ्चन ॥

इति। तस्मात् सामान्यस्यैवान्वयो दृश्यते न व्यक्तेः सामान्यसादृश्यस्योपपादयितुं शक्य-त्वात्। अन्वयिनश्च पदार्थत्वमुक्तम्। तस्मान्नोपलक्षणतयैव [1]सामान्यस्यान्वयोऽव-गम्यते। किन्तु कार्यतः। क्वचित् स्वयमेव कार्यान्वयित्वात्। अन्वयिनश्च पदार्थत्वमुक्तम्।

---

(1) B. reads उपलक्षणतैव सामान्यस्यावगम्यते

न सामान्ये, न विशेषे वर्तते ; तेषां त्वाश्रयमेवाभिदधाति, तेन व्यक्त्यन्तरे वृत्तिरदोषः, न हि तत् सामान्यम् ।

यदि व्यक्त्यन्तरेष्वपि भवति, सर्वसामान्यविशेषवियुक्तायां अश्वव्यक्तौ गोशब्दः किमिति न वर्तते ? आह, येष्वेव प्रयोगो दृष्टः, तेषु वर्त्तिष्यते, न सर्वत्र ; न च, अश्वव्यक्तौ गोशब्दस्य प्रयोगो दृष्टः । तस्मात्तत्र न वर्त्तिष्यते । यदि यत्र प्रयोगो दृष्टः, तत्र वृत्तिः ; अद्यजातायां गवि प्रथमप्रयोगो न प्राप्नोति । तत्रादृष्टत्वात । सामान्यप्रत्ययश्च न प्राप्नोति, इय-

---

किञ्चोपमानोपसर्जनार्थानामप्यन्वयित्वमस्ति । बाढमस्ति प्रतिपत्तौ, न कार्ये । किं कार्यानन्वयिनोऽपि अन्वयिता भवति ? उक्तमर्थवादानां मन्त्रपदानां च । आकृतेः तर्हि किमिति नेष्यते ? व्रीहीन् प्रोक्षतीति कार्यप्रतिपत्तावनङ्गत्वात ।

---

अत्र पृच्छति—किं चोपमानोपसर्जनार्थानामप्यन्वयित्वमस्ति ? येप्युपमाने उपसर्जनीभूता अर्थाः तेषामपि किमन्वयित्वमस्ति येन श्येनाकृतेरपि [2]भवानन्वयित्वमिच्छति । अनुष्ठानाननुप्रविष्टत्वाच्छ्येनाकृतेरन्वयिता नास्तीति । अत्रोत्तरं—बाढमन्वयित्वमस्ति प्रतीतौ[प्रतिपत्तौ] न कार्ये ; श्येनाकृतिसदृशस्थलस्यानुष्ठेयस्य प्रतीतेः प्रतीत्यन्वयित्वमस्तीति नानुष्ठानान्वयित्वम् । पुनः पृच्छति—किं कार्यानन्वयिनोप्यन्वयिता भवति येनाकृतेरन्वयित्वम् । उत्तरम्—उक्तमर्थवादपदानां मन्त्रपदानां च कार्यानन्वयिनामप्यन्वयित्वम् । एवमुक्ते कश्चिच्चोदयदि—यदि प्रतिपत्तिमात्रान्वयित्वेनाप्यन्वयित्वमाकृतेस्तर्हि गवा यजेतेत्यादिषु [4]स्वार्थान्वयित्वं किमिति नेष्यते । उत्तरम्—कार्यप्रतिपत्तावाकृतेरनङ्गत्वात् । यागादिकार्यप्रतिपत्तावाकृतेः अनङ्गत्वात । कार्यप्रतिपत्तिकाले व्यक्तिरेव कार्यान्वयिनी प्रतीयते । केवलं व्युत्पत्तिकाले

---

(1) B. भवाननन्वयित्वं (2) C. कार्यान्वयिना (3) C. तत्किमिति

**मपि गौः इति इयमपि गौः इति। इयं वा गौः इति, इयं वा गौः इति स्यात्; भवति तु सामान्यप्रत्ययः अदृष्टपूर्वायामपि गोव्यक्तौ तस्मान्न प्रयोगापेक्षो गोशब्दो व्यक्तिवचनः इति शक्यते आश्रयितुम्। एवं तर्हि शक्तेः स्वभाव एषः, यत्, कस्याञ्चित् व्यक्तौ वर्त्तते, कस्याञ्चिन्न; यथा, अग्निरुष्णः,**

---

ननु चोपलक्षणत्वे नाङ्गं भवति; नोपलक्षणमङ्गं वासोवद्विशेषावगतौ। तस्मात्कचिद्व्यक्तिरन्वयिनी कचित्सामान्यमिति न विद्मः क्व तद्भूतत्वं न्याय्यमिति। तस्मादनवधृत[ति]निमित्तं पुनरप्रामाण्यं प्रसक्तम्। अत्रोच्यते—न तद्भूततया व्यक्तेरन्वयोऽवसीयते। यदि ह्यन्वयिनी व्यक्तिस्तदा व्यक्तिमात्रान्वयः एकस्या वा व्यक्तेः

---

[1]आकृतिरुपाधिभूतेति भावः। एतदेव विवरीतुं चोद्यमाह—**ननु चोपलक्षणत्वे** नाकृतिः कार्य-**प्रतिपत्तावङ्गं भवति**। उत्तरम्—**नोपलक्षणमङ्गं वासोवद्विशेषावगतौ**। अस्यार्थः—न विशेषावगतावुपलक्षणमङ्गं भवति; वासोवत्। यथा योऽयं [2]शुक्लवासाः स देवदत्त इति व्युत्पत्तिसमये उपलक्षणभूतं वासः पुनः कार्यकाले देवदत्तमानयेत्युक्ते पुरुषविशेषप्रतिपत्तावङ्गं न भवति। तथा आकृतिरपि। एवं तावत् गवा यजेतेति व्यक्तेरन्वयित्वं श्येनचितं चिन्वीतेत्यादावाकृतेरिति साधयित्वा संप्रति पूर्वपक्षमाह—**तस्मात् कचिद्व्यक्तिरन्वयिनी कचित् सामान्यमिति** हेतोः **न विद्मः क्व तद्भूतत्वं न्याय्यमिति। तस्मादनवधृत-निमित्तं पुनरप्यप्रामाण्यं प्रसक्तम्।**

राद्धान्तमाह—**अत्रोच्यते। न तद्भूततया व्यक्तेरन्वयोऽवसीयते** शब्दवाच्यतया व्यक्तेरन्वयो नावगम्यते। कुत इत्याह—**यदि ह्यन्वयिनी व्यक्तिः तदा व्यक्तिमात्रान्वयो वा एकस्या वा व्यक्तेः** अन्वयः। मात्रशब्दः साकल्यार्थः। सर्वासां व्यक्तीनामन्वयो

---

(1) A. **आकृतिरूपोपि प्रतिभातीति भावः** (2) B. **वासस्वी**

उदकं शीतम्, एवमेतत् भविष्यति इति। नैवं सिद्ध्यति, न हि एतत् गम्यते कस्याञ्चिद्व्यक्तौ वर्तते, कस्याञ्चित् नेति।

सत्यमेतत्, गोत्वं लक्षणं भविष्यतीति, यत्र गोत्वं तस्यां व्यक्ताविति। एवं तर्हि विशिष्टा व्यक्तिः प्रतीयेत। यदि च विशिष्टा, पूर्वतरं विशेषणं अवगम्येत। न हि अप्रतीते विशेषणे

---

न चोभयं प्रतीयते। अनुत्सृष्टसामान्यप्रत्ययो हि सर्वत्रान्वय उपलभ्यते। ननु चोपलक्षणतया सामान्यप्रत्ययोऽस्तीत्युक्तम्। तदेव तु नावगम्यते। उपलक्षणं हि नाम नात्माकारतयोपलक्ष्यमुपलक्षयति यथा यत्रायं काकः अदो देवदत्तस्य गृहमिति, न काकाकारं गृहमवसीयते।

---

भवेत् एकस्या वा व्यक्तेः। **न चोभयं प्रतीयते।** कस्मादित्याह—**अनुत्सृष्टसामान्यप्रत्ययो हि सर्वत्रान्वयः उपलभ्यते।** अस्यार्थः— गवा यजेतेति सामान्याकारेणैवान्वयः प्रतीयते व्यक्तेरपि, नान्येनाकारेणान्वयः प्रतीयते। सर्वो हि धर्मी केनचिद्धर्मेणाभिव्यज्यते[1] नान्यथा; शब्दोच्चारणे च केवलेन सामान्येन धर्मेण [2]धर्मवती व्यक्तिः प्रतिभासते नान्येन। **ननु चोपलक्षणतया सामान्यप्रत्ययोऽस्तीत्युक्तम्।** तेन शब्दवाच्यतया व्यक्तेः अशब्दवाच्यं सामान्यं न भवतीति भावः। उत्तरम्—**तदेव तु उपलक्षणत्वं नावगम्यते।** कस्मादित्याह—**उपलक्षणं हि नाम न आत्माकारतया उपलक्ष्यमुपलक्षयति, यथा यत्रायं** काकस्तिष्ठति **अदो देवदत्तस्य गृहमिति। न काकाकारं गृहमवसीयते।** अयमाशयः तदुपलक्षणमात्रपर्यवसायिनां भवति उपलक्ष्याभिमतार्थप्रतिपत्तिः येनाकारेण न भवति यथा काको गृहविशेषावगतौ। [3]शब्दार्थत्वेन व्यक्तिः प्रतीयमाना नाकारान्तरेण प्रतीयते। किन्तु

---

(1) C. आवेद्यते　(2) A. भिन्ना व्य　(3) C. शब्दात्तु

विशिष्टं केचन प्रत्येतुमर्हन्ति इति। अस्तु विशेषणत्वेनाकृतिं वक्ष्यति, विशेष्यत्वेन व्यक्तिं, न हि आकृतिपदार्थकस्य व्यक्तिर्न पदार्थः, व्यक्तिपदार्थकस्य वा न आकृतिः। उभय-

---

यदपि चोक्तम् येन पञ्जरस्थः सिंहो दृष्टः तस्य सिंहावगमादेव पञ्जरावगमः, तद्वलादाकृतेः व्यक्त्यवगमादेवावगम इति। तदप्ययुक्तम्। कुतः? सिंहाकारादाकारान्तरतया पञ्जरमवगच्छन्ति, नैवं गामानयेत्याकारान्तरमवगम्यते। तस्मादप्रतीयमानाकारान्तरतया व्यक्तिरन्वेति इति दुश्शकं वक्तुम्। ननु च कार्यार्थत्वादन्वयस्य आकारमात्रस्य च तदनुपपत्तेः व्यक्तिपुरस्सरैव सामान्यावगतिः निमित्तानुसारेण; सत्यं यथाह

---

सामान्येनैवाकारेण। [1]तत्प्रतीतेः तद्रूपपर्यवसायित्वात् तस्यैव शब्दवाच्यता। यदपि चोक्तं येन पञ्जरस्थ एव सिंहो दृष्टः तस्य सिंहावगमादेव पञ्जरावगमः तद्वत् आकृतेः व्यक्त्यवगमादेवावगमः अशब्दवाच्याया अपीति। तदप्ययुक्तम्। कुतः? सिंहाकारादाकारान्तरतया पञ्जरमवगच्छन्ति। नैव गामानयेत्याकारान्तरमवगम्यते। अर्थसंबन्धेनैव हि यथा सिंहावगमेन पञ्जरावगमः तथा यदीह स्यात् तदा अन्येन रूपेण प्रतीता सती व्यक्तिः आकृतिप्रतिपत्तेर्निमित्तं भवति। न चैतदस्ति। न ह्याकृतिव्यतिरिक्तेनापरेण प्रकारेण शब्दे समुच्चारिते व्यक्तिः प्रतिभाति। तस्माच्छब्दात् तेनैव रूपेणावगमात आकृतिरेव शब्दवाच्या। तस्मादप्रतीयमानाकारान्तरतया व्यक्तिरन्वेतीति दुश्शकं वक्तुम्। ननु च कार्यार्थत्वादन्वयस्य आकारमात्रस्य च तदनुपपत्तेः व्यक्तिपुरस्सरैव सामान्यावगतिः निमित्तानुसारेण। अस्यार्थः—यस्यैव कार्येणान्वयः तस्यैव शब्देनाभिधानं नान्यस्य। व्यक्तिश्चान्विता, नाकारमात्रं, तेन व्यक्तेरेवाभिधानं शब्देन। तस्यां चावगतायां सत्यां सिंहपञ्जरन्यायेनाकृतिरवगम्यते, इति निमित्तानुसरणादेवं प्रतीयते। परिहरति—सत्यं यथाह

---

(1) B. तत्प्रतिपत्तेः

त्युभयस्य पदार्थः, कस्यचित् किञ्चित्प्राधान्येन विवक्षितं भवति, तेन अत्राकृतिर्गुणभावेन, व्यक्तिः प्रधानभावेन विवक्ष्यते इति।

नैतदेवम्, उभयोरुच्यमानयोर्गुणप्रधानभावः स्यात्, यदि चात्राकृतिः प्रतीयते शब्देन, तदा व्यक्तिरपि पदार्थः इति

---

पितृमान्। तथाप्याकारावगतिपर्यन्तैवान्वयावगतिः। अथाकारः पञ्जरस्थानीयः कल्प्यः, ततो व्यक्तिमात्रान्वयः एकव्यक्त्यन्वयो वा स्यात्। भवतु का नो बाधा। अनध्यवसायी शब्दः स्यात। केन चोक्तं नेति? अनध्यवसाये हि कथमाकृतेरनन्वयः शक्यते वक्तुम्। यथा गामानयेत्यश्वस्य,

---

पितृमान्। पित्रा विद्यासु सम्यग्विनीतः। तथाप्याकारावगतिपर्यन्तैवान्वयावगतिः सामान्याकार एवान्वयी प्रतीयते न व्यक्तिः। न व्यक्तिं यावत् अन्वयावगतिः प्रवर्तते। किन्त्वाकारमात्र एव पर्यवस्यति। अथाकारः पञ्जरस्थानीयः कल्प्यः। यदि पुनः आकारः सिंहावगमः पञ्जरतुल्यो व्यक्त्यवगमः कल्प्येत ततो व्यक्तिमात्रान्वय एकव्यक्त्यन्वयो वा स्यात्। न चासावस्ति। पूर्वपक्ष्याह—भवतु व्यक्तिमात्रान्वयः एकव्यक्त्यन्वया वा का नो बाधा। राद्धान्त्युत्तरमाह—[1]अनध्यवसायी शब्दः स्यात्। सर्वव्यक्त्यन्वयस्या[2]शक्त्याऽनुष्ठानं न स्यात्। अनेकव्यक्त्यन्वये परिगृह्यमाणे नास्त्यध्यवसायः कस्या व्यक्तेरन्वयः कस्या नेति। पुनः पूर्वपक्षवाद्याह—केन चोक्तमनध्यवसायि-शब्दं न भवतीति इष्यत एवानध्यवसायितेत्यर्थः। [3]राद्धान्तमाह—अध्यवसाय्येव त्वया शाब्दमभ्युपगमनीयम्। अनध्यवसाये हि कथमाकृतेरनन्वयः शक्यते वक्तुम्। [4]अर्थान्तरान्वये ह्यर्थान्तराननन्वयः शक्यते वक्तुं यथा—गामानयेत्यश्वस्य व्यक्त्यन्वये हि निश्चिते

---

(1) B. अनध्यवसाय शब्दः (2) अशक्यानुष्ठानत्वात् (3) A. राद्धान्त्याह
(4) B. अर्थान्वये C. अर्थान्तरान्वयः

न शक्यते वदितुम्। कुतः ?। आकृतिर्हि व्यक्त्या नित्यसंबद्धा, संबन्धिन्याश्च तस्यामवगतायां संबन्ध्यरमवगम्यते; तदेतत् आत्मप्रत्यक्षं,—यत्, शब्दे उच्चरिते व्यक्तिः प्रतीयते इति किं

---

न पुनरनध्यवसितान्वये, यथा अक्ताः शर्करा इति घृतस्य। तस्मादुपलक्षणपक्षस्तावदसम्बद्धः। अथेदमुच्येत स्वाभाविकी शब्दशक्तिः। कार्यतश्चान्वयः। व्यक्तिस्थं च कार्यम्। न च व्यक्तिमात्रं विशेषो वाऽवसीयते। गोत्वसम्बद्धमेव द्रव्यं प्रतीयते। प्रतिपन्नं तर्हि गोत्वसम्बद्धा व्यक्तयः प्रतीयन्त इति। मैवं वोचः। कार्यावसायी ह्यन्वयः न पुनः प्रतिपत्तिमात्रपर्यवसायी। यथा दण्डिनमानयेति न दण्डस्यानयनम-

---

सति आकृतेरन्वयो न शक्यतेऽवगन्तुम्। न पुनरनध्यवसितान्वये। यथा अक्ताः शर्करा उपदधातीति घृतस्य। यथा अक्ताः शर्करा इत्यनध्यवसितेऽन्वये घृतस्यान्वयोऽभ्युपगम्यमानो नानुपपन्नः। तथाऽनध्यवसितेऽन्वये आकृतेरपीति। तस्मादुपलक्षणपक्षस्तावदसंबद्धः।

अथेदमुच्येत स्वाभाविकी शब्दशक्तिः कार्यतश्चान्वयः, व्यक्तिस्थं च कार्यं; न च व्यक्तिमात्रं विशेषो वाऽवसीयते गोत्वसंबद्धमेव व्यक्तिद्रव्यं प्रतीयते। अस्यार्थः—कार्यान्वितं शब्दाभिधेयम्। व्यक्तिश्च कार्यान्वयिनी। तत्र शब्दशक्तिस्वभावेन गोशब्दो न व्यक्तिमात्रं सजातीयं वा विजातीयं वा प्रतिपादयति। नापि व्यक्तिविशेषं किञ्चिच्छाबलेयमशाबलेयं वा। किन्तु गोत्वसंबद्धं व्यक्तिमात्रम्। तेन न कश्चिद्विरोधः। दूषयति—प्रतिपन्नं तर्हि गोत्वसंबद्धा व्यक्तयः प्रतीयन्त इति। गोत्वाकारेण गोव्यक्तिमात्रेणाभ्युगतम्। ततश्च गोत्वमेवाभिधेयम्। पुनः पूर्वपक्ष्याह—मैवं वोचः कार्यपर्यवसायी ह्यन्वयः न प्रतिपत्तिपर्यवसायी; यथा—दण्डिनमानयेति न दण्डस्यानयनम-

शब्दात् उत आकृतेः इति विभागो न प्रत्यक्षः; सोऽन्वय-व्यतिरेकाभ्यामवगम्यते, अन्तरेणापि शब्दं, य आकृतिमवबुध्येत, अवबुध्येतैवासौ व्यक्तिं; यस्तु उच्चरितेऽपि शब्दे मानसादपचारात् कदाचिदाकृतिं नोपलभेत, न जातुचिदसौ इमां व्यक्तिमवगच्छेत। ननु व्यक्तिविशिष्टायां आकृतौ वर्त्तते। व्यक्तिविशिष्टायाञ्चेत् वर्त्तते, व्यक्त्यन्तरविशिष्टा न प्रतीयेत। तस्मात् शब्द आकृतिप्रत्ययस्य निमित्तं, आकृतिप्रत्ययो व्यक्ति-प्रत्ययस्य इति।

ननु गुणभूता प्रतीयते इत्युक्तम्। न गुणभावोऽस्मत्पक्षस्य बाधकः, सर्वथा तावत् प्रतीयते। अर्थात् गुणभावः प्रधान-

---

वसीयते विद्यते च प्रतीतिः एवं गवादेरपि। अविवेकज्ञो भवान् उक्तं विवेकं न गृहीतवानसि। किमुक्तम्? इदमुक्तम्। यत्राकारान्तर-विवेकः तत्राकारान्तरमुपलक्षणम्। यथा दण्डीत्येव दण्डिविशेषावगतौ नानयने दण्डस्यान्वयः। यत्र पुनः दण्डितयैवावगम्यते न विशेषतः

---

वसीयते विद्यते च प्रतीतिः। एवं गवादेरपि यद्यपि गोत्वपुरस्सरा व्यक्तिप्रतिपत्तिः तथापि गोत्वस्य कार्यानन्वयित्वात कार्यान्वयिताभिधायिताशब्देन व्यक्तिरेवाभिधेया यथा दण्डिनमानयेति दण्डिशब्देन पुरुषस्यैवाभिधानं न दण्डस्य। राद्धान्ती वदति—अविवेकज्ञो भवान् दण्डगोत्वयोर्विवेकं न जानाति। उक्तमपि विवेकं न गृहीतवानसि। किमुक्तम्? उत्तरं—इदमुक्तम् यत्राकारान्तरविवेकः तत्राकारान्तरमुपलक्षणम्। यथा दण्डिन्येव दण्डिविशेषावगतौ पुरुषाकारो दण्डाकाराद्विविक्तः प्रतीयत इति भवति दण्ड उपलक्षणम् [1]दण्डवियुक्तपुरुषविशेषावगतेरानयने न दण्डस्यान्वयः। यत्र पुनर्दण्डितयैवावगम्यते न विशेषतः

---

(1) A. अतोदण्डयुक्त

भावो वा। स्वार्थं चेत् उच्चार्यते, प्रधानभूता। अथ न स्वार्थं, परार्थमेव ततो गुणभूता, न तत्र शब्दव्यापारोऽस्ति।

---

तत्र तथाभूतस्यैवान्वयः शक्यते वक्तुम्। विशेषावगतौ तु दण्डिशब्दो न दण्डे वर्तते। अविशेषावगतौ वा किं दण्डिशब्दो दण्डे वर्तते? सत्यम्। न निमित्ततो वर्तते। अर्थान्तरसहितस्यैव निमित्तत्वसिद्धेर्व्यवहारात्। न पुनः कार्यतो विवेकावगतिः। गवादीनां पुनः निमित्तभेदानवगमात् सम्बन्धिषु निमित्ततया भेदो न घटते किं पुनः कार्यतः। कथं तर्हि व्रीहीन् प्रोक्षतीति विशेषावगतिः न चेन्निमित्ततो भेदः? कार्यतो विशेषावगतिः कार्यं हि

---

तत्र तथाभूतस्यैव दण्डविशिष्टस्यैवान्वयः शक्यते वक्तुम्। विशेषावगतौ तु न दण्डिशब्दो दण्डे वर्तत इति। अत्र चोदयति—अविशेषावगतौ वा किं दण्डिशब्दो दण्डे वर्तते यत्र दण्डितयैवावगम्यते न पुरुषविशेषतया तत्रापि न दण्डिशब्दो दण्डे वर्तते मत्वर्थीयप्रत्यययोगात्। परिहरति—न निमित्ततो वर्तते। निमित्तमात्रमालोच्य न वर्तते मत्वर्थीयप्रत्ययावगमात्[1]। तथा अर्थान्तरसहितस्यैव पुरुषस्य निमित्तत्वसिद्धेर्व्यवहारात्। न पुनः कार्यतो विवेकावगतिः। कार्यमालोच्य दण्डिशब्दोऽपि दण्डे वर्तते। यत्र दण्डितयैवान्वयः तत्र रूपान्तरेणानवगमादुपपन्नत्वमेव। गवादीनां पुनः निमित्तभेदानवगमात् संबन्धिषु निमित्ततयापि भेदो न घटते। किं पुनः कार्यतः। गोत्वमेव निमित्तं[2] गवादिशब्दानामखण्डत्वात्। कार्यं च सुतरामेव गोत्वान्वयप्रतिपत्तिरूपम्। कथं तर्हि व्रीहीन् प्रोक्षतीति विशेषावगतिः, न चेन्निमित्ततो भेदः। स एव शब्दः कथं कचिद्व्यक्त्यवगमपर्यन्तः कचित् सामान्यावगमपर्यन्तः इत्यर्थः। उत्तरं—कार्यतो विशेषावगमः। प्रोक्षणादीनां कार्यपर्यालोचनया विशेषावगमः। कस्मादित्याह—कार्यं हि

---

(1) B. प्रत्ययोगात् (2) B. निमित्तत्वं

ननु च दण्डीति न तावत् दण्डिशब्देन दण्डोऽभिधीयते, अथ च दण्डविशिष्टोऽवगम्यते, एवमिहापि न तावदाकृतिरभि-

---

प्रयोजने पर्यवस्यति तद्वति वा तद्वत्सु व्रीहिषु। कथं पुनः तद्वन्तो व्रीहयः प्रतीयन्ते ? प्रकरणात्। तस्मान्न समोऽयमुपन्यासो दण्डिवदिति। अतोऽनन्विते सामान्ये कार्यस्यैवापर्यवसानं; न च सम्भवति पर्यवसानेऽपर्यवसानं शक्यते वक्तुम्। ननु च कार्यविषयत्वादपर्यवसानमुक्तम्। सत्यमुक्तम् यद्यसम्भवः कार्यस्य। यथासम्भवं हि कार्यविषयत्वं न विकारवत्तयैव करणादीनामिव। ननु च तेषामपि स्वव्यापारे विकारो विद्यत

---

प्रयोजने पर्यवस्यति, तद्वति वा येन प्रयुक्तं प्रोक्षणं तस्मिंस्तावदुत्सर्गतः पदार्थानां कार्यं पर्यवस्यति। तस्मिंस्त्वसंभवति तद्वति प्रयोजकापूर्वसंबन्धिनि पर्यवस्यति। इति [1]यत एव ततः साक्षादपूर्वप्रोक्षणकार्यासंभवात् तद्वत्सु[2] प्रयोजकापूर्वसंबन्धिषु व्रीहिषु कार्यप्रतीतिः। कथं पुनः तद्वन्तो व्रीहयः प्रतीयन्ते। उत्तरं—प्रकरणात्। अपूर्वप्रकरणे पतितत्वात् अपूर्वेण गृहीतत्वात् [3]साक्षादपूर्वसंबन्धिव्रीह्यादिवर्तित्वमेव प्रोक्षणकार्यस्य प्रतीयते। तस्मान्न समोऽयं वादो दण्डिवदिति पूर्वपक्षिणः। अतोऽनन्विते सामान्ये कार्यस्यैवापर्यवसानं भवति। न च संभवति कार्यपर्यवसाने अकार्यपर्यवसानं शक्यते वक्तुम्। तेन सामान्यमेवान्वितं सदभिधेयम्। ननु च कार्यविषयत्वाच्छब्दानां व्यक्तेश्च कार्यान्वितत्वात् तस्या एवाभिधेयत्वे स्थिते तत्र यद्यपर्यवसानं भवति भवतु। परिहरति—सत्यमपर्यवसानं भवेत् यदि जातावपि कार्यस्यासंभवो भवेत्। यथासंभवं हि कार्यविषयत्वं न विकारवत्तयैव करणादीनामिव। यथा करणादीनां विकारापत्त्या विनापि कार्यविषयत्वं तथा आकृतेरपि। ननु च तेषामपि करणादीनां स्वव्यापारे विकारो विद्यते।

---

(1) A. यतोवगति (2) A. प्रयोजनाभिव्यक्तिमात्र (3) A. साक्षादपूर्वेणा संबन्धादपूर्व

धीयेत, अथ चाकृतिविशिष्टा व्यक्तिर्गम्येत इति। नैतत् साधु उच्यते। सत्यं दण्डिशब्देन दण्डो नाभिधीयते, न त्वप्रतीते दण्डे दण्डिप्रत्ययोऽस्ति, अस्ति तु दण्डिशब्दैकदेशभूतो दण्ड-शब्दः, येन दण्डः प्रत्यायितः; तस्मात् साधु एतत् यत् प्रतीते विशेषणे विशिष्टः प्रतीयत इति। न तु गोशब्दावयवः कश्चिदाकृतेः प्रत्यायकः, अन्यो व्यक्तेः; यत उच्येत तत आकृतिरवगता; न

---

एव। गोत्वादेरपि तुल्यम्। तदपि हि व्यापारसिद्धौ व्यापृतमेव। ननु च न किञ्चित् प्राग्व्यापारं निर्वृत्त्युत्तरकालं च करणादीनामिव विकारमुपलभामहे सामान्ये। न विकारिता व्यापारसिद्धौ हेतुः। किन्तु सति तस्मिन् भावः। न च सामान्यावगमशून्या नियोगार्थनिर्वृत्तिरि-त्युक्तम्। यथाप्रतीयमानस्यैवार्थस्य निर्वृत्तिः प्रतीयमानज्ञाना-दुपपद्यते। तस्मादुपपन्नः सामान्यस्य कार्यान्वयः। अन्यत्वाभिधेयत्वं तु

---

अवान्तर[1]व्यापारयोगित्वमेव करणादीनां विकारो विद्यत एव। उत्तरं—गोत्वादेरपि तुल्यम्। तदपि हि व्यापारसिद्धौ व्यापारसिद्ध्यर्थं व्यापृतमेव। ननु च न किञ्चित् प्राग्व्यापारात् निर्वृत्त्युत्तरकालं च करणादीनामिव विकारमुपलभामहे सामान्ये[2]। उत्तरं—न विका-रिता व्यापारसिद्धौ हेतुः; किन्तु सति तस्मिन् भावः, असति तस्मिन्नभावः। भवत्वेवं तथापि किमित्याह—न च सामान्यावगमशून्या नियोगार्थनिर्वृत्तिः प्रतीयत इत्युक्तम्। तेन प्रतीतिरेव सामान्यहेतुका नियोगस्य। तथापि कथमनुष्ठानोपयोगित्वमित्यत आह—यथा प्रतीयमानस्य चार्थस्य निर्वृत्तिः[3] प्रतीयमानज्ञानादुपपद्यते; प्रतीतो हि विध्यर्थोऽनु-ष्ठातुं शक्यत इति प्रतीतिहेतुरप्यनुष्ठानोपयोगि। तस्मादुपपन्नः सामान्यस्य कार्यान्वयः। यदि सामान्यस्याभिधेयत्वं कथं तर्हि अन्यत्वव्यपदेशः इत्यत्राह—अन्यत्वाभिधेयत्वं तु

---

(1) A. reads विकार (2) A. सामान्यस्य (3) B. adds न

गोशब्द आकृतिवचनः इति। न च, यथा दण्डिशब्दो न दण्डे प्रयुक्तः, एवं गोशब्दो न आकृतौ; तदर्थमेव निदर्शितं, केवलाकृत्यभिधानः श्येनशब्दः इति, तदेवमन्वयव्यतिरेकाभ्यां असति श्येनव्यक्तिसंबन्धे श्येनशब्दोच्चारणात् आकृतिवचन इति गम्यते; न तु व्रीह्याकृतिसंबन्धमन्तरेण व्रीहिव्यक्तौ शब्दस्य प्रयोगो दृष्टः।

---

उपादानतः सिद्ध्यति। तस्मात् सामान्यपुरस्सरैवान्वयावगतिः। उद्देश्ये तु कार्यत उपलक्षणत्वं नातद्भूततया। अतः सिद्धं यथावगम्यमानार्थभूतैः तद्भूतैरिति। एतच्चोक्तमेव सामान्याकारेण शब्दात् प्रतीतिरिति। अत्राकृतिग्रहणमुपलक्षणतयोपन्यस्तम्। अनाकृतावपि नागृहीतविशेषणा विशिष्टे बुद्धिरिति। "अथ व्यक्त्यन्तरेपि प्रयुज्यते न तर्हि व्यक्तिः पदार्थः"[1]

---

उपादानतः सिद्ध्यतीति। उपादेयभूतां व्यक्तिमपेक्ष्यान्यत्वव्यपदेशः सिद्ध्यति। तस्मात् सामान्यपुरस्सरैवान्वयावगतिः। उद्देश्ये तु कार्यत उपलक्षणत्वं नातद्भूततया नाकृताववर्तमानत्वेनेत्यर्थः। अतः सिद्धं यथावगम्यमानार्थभूतैः तद्भूतैरिति। एतच्चोक्तमेव सामान्याकारेण शब्दात् प्रतीतिरिति। [2]अत्र चाभिधेययोः आकृतिग्रहणमुपलक्षणं उदाहरणतयोपन्यस्तम्, न पुनस्तदेव विवक्षितम्। अनाकृतावपि नागृहीतविशेषणस्यानन्वयोऽस्तीत्यधिकरणार्थः क्रियागुणयोरप्येवमेवाभिधेयत्वम्; यथा—सामशब्दस्यारुणाशब्दस्य च क्रियागुणौ वाच्यौ सामशब्दात्तु तद्रूपतयैव प्रतीयते अरुणाशब्दाच्च। यत एव सर्वत्रैवायं न्यायः अत इदमुक्तं सामान्येनैव नागृहीतविशेषणा विशेष्ये बुद्धिः प्रवर्तत इति। अन्यथा नागृहीताकृतिर्व्यक्तौ बुद्धिः प्रवर्तत इत्युक्तं स्यात्। "अथ व्यक्त्यन्तरेपि प्रयुज्यते न तर्हि व्यक्तिः शब्दार्थः। सर्वसामान्यविशेषवियुक्ता हि व्यक्तिः इत्युच्यत" इति भाष्यम्। तद्व्याख्यातुमाह—अथ व्यक्त्यन्तरेपि प्रयुज्यते न तर्हि व्यक्तिः शब्दार्थ

---

(1) p. 162. (2) A. अत्र चाधिकरणे

तस्मात् अकृतिवचनः शब्दः इत्येतज्ज्यायः ॥

न क्रिया स्यादिति चेदर्थान्तरे विधानं न द्रव्यमिति चेत् ॥ ३४ ॥

अथ यदुक्तं न क्रिया सम्भवेत्, 'व्रीहीन् प्रोक्षति' इति न द्रव्यशब्दः स्यात्, 'षड देया' इति। अन्यदर्शनवचनश्च न स्यात् 'अन्यं तद्द्रूपं' इति तत् परिहर्तव्यम् ॥

तदर्थत्वात प्रयोगस्याविभागः ॥ ३५ ॥

---

इति कोऽभिप्रायः। अयमभिप्रायः। न ह्येकं धर्ममनाश्रित्य वस्त्वन्तरे ज्ञातसम्बन्धस्य वस्त्वन्तरसंबन्धिता शक्यतेऽवगन्तुम्। न चासंबन्धिनः प्रयोगः। प्रयुज्यते चेदाश्रितं तर्हि व्यतिरिक्तं किञ्चित्। व्यक्तेरसाधारणतैव रूपं सर्वसामान्यविशेषवियुक्ता हि व्यक्तिरिति दर्शितम्।

---

इति। कोऽभिप्रायः? प्रष्टुश्चायमाशयः यद्यपि व्यक्त्यन्तरे प्रयुज्यते तथापि किमिति व्यक्तिः शब्दार्थो न भवतीति। अभिप्रायं दर्शयति—न ह्येकं धर्ममनाश्रित्य[1]वस्त्वन्तरे ज्ञाततरसंबन्धस्य वस्त्वन्तरसंबन्धिता शक्यतेऽवगन्तुम्। न चासंबन्धिनः प्रयोगः। प्रयुज्यते चेदाश्रितं तर्हि व्यक्तिव्यतिरिक्तं किञ्चित्। व्यक्तेरसाधारणतैव रूपम् सर्वसामान्यविशेषवियुक्ता हि व्यक्तिरित्यनेन दर्शितम। अस्यार्थः—यदि सामान्यं वाच्यं नाङ्गीक्रियते तदा एकत्र व्यक्तौ ज्ञातसंबन्धे गोशब्दे न व्यक्त्यन्तरेण सह ज्ञातसंबन्धिता शक्यते वक्तुम्। अज्ञातसंबन्धः शब्दो न शक्यते प्रयोक्तुम्। यदि च प्रयुज्यते तदा एकं वस्तु व्यक्त्यन्तरवर्ति समाश्रित्य तर्हि संबन्धो ज्ञातव्यः तच्च वस्तु व्यक्तितो भिन्नं तस्य व्यक्त्यन्तरे सत्वात्। न तु सा व्यक्तिः व्यक्तेरसर्वगतत्वात्। यदि व्यक्त्यन्तरेपि स्यात, व्यक्तिरूपतैव विघटेत। असाधारणरूपत्वाद्व्यक्तेः। एतच्च दर्शितं भाष्ये सर्वसामान्यविशेषवियुक्तेत्यनेन।

---

(1) C. वस्त्वन्तरज्ञातसंबन्धस्य

आकृत्यर्थत्वात् शब्दस्य, यस्याः व्यक्तेराकृत्या संबन्धः, तत्र प्रयोगः, प्रोक्षणं हि द्रव्यस्य कर्तव्यतया श्रूयते, कतमस्य? यत् यजतिसाधनम्। अपूर्वप्रयुक्तत्वात्तस्य, न आकृतेः, अशक्यत्वात्। तत्र व्रीहिशब्द आकृतिवचनः प्रयुज्यते प्रोक्षणाश्रयविशेषणाय;

---

[1]"नैष दोषः" इति सर्वसामान्या त्वियं वियुक्तिरिति। एवं तर्हि वियुक्तिर्वाच्यतयोक्ता न व्यक्तिः तदिदं सामान्यमेवापतितम्। "नेत्युच्यते योऽर्थः सामान्यविशेषाणां चाश्रयः सा व्यक्तिरिति"। कस्येदमुत्तरं दीयते?। वियुक्तिमात्रं सामान्यमापादयतः। कथं पुनः तस्येदमुत्तरं? न किञ्चिदुपलक्षणत्वेन सामान्यंविशेषं वा गृह्णाति आश्रयमात्राभिधानं शब्दस्य।

---

"नैषदोषः, व्यक्त्यन्तरेपि सर्वसामान्यविशेषवियुक्त एव वर्तिष्यत" इति भाष्यम्। अस्याभिप्रायमाह—नैष दोषः इति वदतो भाष्यकारस्य सर्वसामान्यविशेषवियुक्तिरेवोपलक्षणं भविष्यति। तेन तदुपलक्षितव्यक्त्यन्तरेपि प्रयोगो नानुपपन्न इत्यभिप्रायः। अत्रोत्तरं भाष्यं "यदि सर्वसामान्यविशेषवियुक्तं सामान्यमेव तत्" इति [2]तद्व्याख्यातुमाह—यदि सर्वसामान्यविशेषवियुक्तमिति एवं तर्हि वियुक्तिर्वाच्यतयोपन्यस्ता न व्यक्तिः वियुक्तिरूपेणैव प्रतीतेः वियुक्तिरेव वाच्या स्यात् न व्यक्तिः। तदिदमुक्तं सामान्यमेव वाच्यमापतति। गोत्वं वा भवतु सर्वसामान्यविशेषवियुक्तिर्वा। अत्र भाष्यं "नेत्युच्यते" इति। तदाक्षिपति नेत्युच्यते योऽर्थः सामान्यस्य साधारणस्य धर्मस्य विशेषाणां वाऽसाधारणानां धर्माणां आश्रयः सा व्यक्तिरिति कस्येदमुत्तरं दीयते। समाधत्ते—वियुक्तिमात्रं सामान्यमापादयतः। कथं पुनस्तस्येदमुत्तरम्? इत्थम्—न किञ्चिदुपलक्षणत्वेन सामान्यं विशेषं वा गृह्णाति शब्दः किं तर्हि? आश्रयमात्राभिधानं शब्दस्य सामान्यविशेषा-

---

(1) p. 162. (2) B. तद्व्याचष्टे

स हि आकृतिं प्रत्याययिष्यति, आकृतिः प्रतीता सती प्रोक्षणाश्रयं विशेक्ष्यति-इति, तेनाकृतिवचनं न विरुध्यते इति। एवं 'षड् देया' 'गावो दक्षिणा' इति दक्षिणाद्रव्ये संख्याया प्रयोक्तव्ये गाव इत्याकृतिवचनो विशेषकः। तथा 'अन्यं'-इति

---

ननु चाश्रयमात्रतापि सामान्यं; नेत्युच्यते; सामान्यं हि आकारान्तरवतामेकरूपता। आश्रयो नाम न चाश्रयिभ्यः आकारान्तरम्। तस्मादनन्यत्वावगतेः प्रयोगः सिद्ध्यतीत्यभिप्रायः। यद्येवं प्रयोगे तर्हि विरोधः। नह्यश्वव्यक्तौ गोशब्दप्रयोगो दृश्यते, प्राप्नोति च युष्मत्कल्पनायाम्। ननु चादर्शनं भवतैवोक्तम्। एवं तर्हि प्रयोगदर्शनं

---

श्रयं द्रव्यमेव शब्दोऽभिधत्ते। ननु चाश्रयमात्रतापि सामान्यं तेन तदभिधाने पुनरपि सामान्याभिधानप्रसङ्गः। परिहरति—नेत्युच्यते सामान्यं हि आकारान्तरवतामेकरूपता। न चाश्रयो नामाश्रयिभ्यः आकारान्तरम्। न वाऽऽश्रयो नामानुवृत्तं गोत्वादिव्यतिरिक्तं, गोत्वादीन्येव परं साधारणानि प्रतिभान्ति न पुनराश्रयत्वं नाम। तस्मादनन्यत्वावगतेः प्रयोगः सिद्ध्यति। व्यक्त्यन्तरमपि[1] व्यक्तेरनन्यत्वेन नावगम्यत इति तत्रापि शब्दः प्रयुज्यते। अत्रोत्तरं—यद्येवं प्रयोगे तर्हि विरोधः। कुत इत्याह—न ह्यश्वव्यक्तौ गोशब्दः प्रयुज्यते[2]। प्राप्नोति च युष्मत्कल्पनायाम्। [3]अनन्यत्वावगमस्य तुल्यत्वात्। तदिदं यदि व्यक्त्यन्तरेपि भवतीत्यादिना भाष्येणोक्तम्। अत्र चोदयति—ननु चादर्शनं भवतैवोक्तम्। तेन यत्र प्रयोगो न दृश्यते तत्र शब्दो न प्रयुज्यत इति अश्वव्यक्तौ गोशब्दो(प्रयोगो) न दृश्यत इति तत्र प्रयोक्ष्यत इति। एतच्चाह—यस्यैव प्रयोगो दृष्ट इत्यादिना भाष्येणोक्तम्। परिहरति—एवं तर्हि प्रयोगदर्शनं शब्दप्रयोगे

---

(1) B. reads व्यक्त्यन्तरत्वेन नाव (2) B. ब्दप्रयोगो दृश्यते (3) B. अन्यत्वावगमाभावस्य

विनष्टस्य प्रतिनिधेरन्यत्वसंबन्धः, तत्र पशुशब्द आकृतिवचनः,

---

माश्रितम् । ओमित्युच्यते । कथं तर्ह्यद्यजातायां गवि प्रथम-प्रयोगः सिध्यति ? दृश्यते च । किञ्च व्यक्तावेव प्रयोगः इति प्रतिज्ञान-मात्रमिदं, यदि व्यक्तावेव प्रयोगः स्यात् व्यक्त्यन्तरनिरपेक्षाद्व्यवहारा-द्व्युत्पत्तिः स्यात् ततो व्यक्त्यन्तरे व्युत्पत्त्यन्तरं प्राप्नोति । तद्भेदे च इयं वा गौः इयं वा गौःइत्युक्तं स्यात् । यथा अयं वा अक्षोऽयं वा अक्ष इति । न पुनः एकव्युत्पत्तिनिबन्धनं 'इयं गौः इयमपि गौः इयमपि' इति स्यात् । तस्मान्न व्यक्त्यभिधानपक्षः सम्भवति व्युत्पत्त्यन्तरानवगमात् ।

---

हेतुरित्याश्रितम् । चोदयिता आह—ओमित्युच्यते । परिहर्ता आह—यदि प्रयोग-दर्शनमाश्रितं कथं तर्हि अद्य जातायां गवि गोशब्दप्रयोगः सिद्ध्यति तत्र प्रयोगा-दर्शनात् । दृश्यते च तस्यामपि प्रयोगः शब्दस्य । तस्मान्न व्यक्तिः पदार्थः । अयं च [2]'यदि यत्र प्रयोग' इत्यादिभाष्यस्यार्थः ।

किञ्च व्यक्तावेव प्रयोग इति प्रतिज्ञामात्रमिदम् । यदि व्यक्तावेव प्रयोगः स्यात् व्यक्त्यन्तरनिरपेक्षात् व्यवहारात् व्युत्पत्तिस्स्यात् । एकव्यक्तिनिष्ठैव व्युत्पत्तिः स्यात् । ततो व्यक्त्यन्तरे व्युत्पत्त्यन्तरं प्राप्नोति । तद्भेदे च व्युत्पत्ति-भेदे च इयं वा गौः इयं वेति ज्ञानं स्यात् । यथा अयं वा अक्षोऽयं वा अक्ष इति । न पुनरेकव्यक्तिनिष्ठैकव्युत्पत्तिनिबन्धनं इयमपि गौः इयमपि गोरिति स्यात् । एष च "सामान्यप्रत्ययश्च न प्राप्नोति"[2] इति भाष्येणोक्तार्थः । तस्मान्न व्यक्त्यभि-धानपक्षः संभवति व्युत्पत्त्यन्तरानवगमात् एकयैव व्युत्पत्त्याऽर्थाप्रतीतेः[1] । अत्र चोदयति

---

(1) B. reads अर्थान्तराप्रतिपत्तेः　2. p. 163.

उभयं तर्हि भवतु गुणप्रधानभावस्तु कार्यतो निर्णयः। तथा च प्रधानपक्षे लौकिकं वैदिकं वेति सन्दिह्यते। उपादानपक्षे पुनः सामान्यमेव। तदिदमुक्तं उभयं भगवतः पाणिनेः इति। नायमपि पक्षः संभवति। कार्यतो ह्युपादानलक्षणत्वं न पुनः प्रतिपत्तितः। प्रतिपत्तिश्च सामान्यनिबन्धना। कुतः? अन्वयव्यतिरेकाभ्यां, व्रीहीन् प्रोक्षति इति व्यक्तिनिष्ठेऽपि प्रयोगे सामान्याकारतयैव ह्यभिधानमभिधत्ते।

---

—**उभयं तर्हि** वाच्यं **भवतु** व्यक्तिजातिरूपं; **गुणप्रधानभावस्तु कार्यतो निर्णयः।** कार्यमालोच्य[1] व्यक्तिः प्रधानभूता क्वचित्। क्वचिच्चाकृतिरिति निर्णेतव्यं, **तथाच प्रधानपक्षे लौकिकं वैदिकं वा** संस्कार्यमिति **सन्दिह्यते।** अस्यार्थः—यत्र प्रधानकोटौ गवादिशब्दो वर्तते तत्र द्रव्यं व्यक्तिरर्थः यथा 'व्रीहीन् प्रोक्षति' इति। अत एव सन्देहो भवति किं लौकिकं व्रीहिद्रव्यं प्रोक्षितव्यं, अथ वा वैदिकमिति। जात्यभिधाने तु जातेरेकत्वात् सन्देहो नोपपद्यते। **उपादानपक्षे पुनः सामान्यमेव** शब्दार्थः। यत्रोपादेयत्वेन चोदितं तत्र सामान्यमेव शब्देनोच्यते; यथा गवा यजेतेति। **तदिदमुक्तं उभयं भगवतः पाणिने**रिति। [2]दूषयति—**नायमपि पक्षः संभवति।** कस्मादित्याह—**कार्यतो ह्युपादानलक्षणत्वम्। न पुनः प्रतिपत्तितः।** अस्यार्थः—कार्यमालोच्यैतदवगम्यते अस्योपादानत्वम्, अस्य लक्षणत्वमिति; न पुनः प्रतिपत्तित एवेदं ज्ञायते। प्रतिपत्तौ विशेषानवगमात्। यत्रापि लक्षणत्वं तत्रापि प्रयोगे सामान्यमेवाभिधेयम्। तद्बलेन व्यक्तिप्रतिपत्तिः। यत्राप्युपादानत्वं तत्रापि तथैव प्रतिपत्तिरिति सामान्यमेव शब्दवाच्यम्। तदाह—**प्रतिपत्तिश्च सामान्यनिबन्धना।** कुतः? उत्तरम्—**अन्वयव्यतिरेकाभ्यां** विनापि शब्देन य आकृतिमवबुद्ध्यते बुद्ध्यतेवासौ व्यक्तिमिति। यस्तु उच्चारितेपि शब्दे आकृतिं नावबुद्ध्यते न तस्य व्यक्तिप्रतिपत्तिः। कस्मादित्याह—**व्रीहीन् प्रोक्षतीति व्यक्तिनिष्ठेपि प्रयोगे सामान्याकारतयाऽभिधानमभिधत्ते।** तेन तदाकारेण प्रतीतेः तदेव शब्दवाच्यम्। तद्बलेन

---

(1) B. कार्यमाश्रित्य (2) B. & C. दूषणमाह

**आकृत्या विशेक्ष्यति—इति। तस्माद्गौरश्वः इत्येवमादयः शब्दाः आकृतेरभिधायका इति सिद्धम् ॥**

इति श्रीशबरस्वामिकृतौ मीमांसाभाष्ये प्रथमस्याध्यायस्य
तृतीयः पादः ॥

---

व्यक्तितोऽवसीयत इति चेन्न। व्यक्त्यन्तरगतत्वेनानवगतेः। सामान्यनिष्ठे पुनः प्रयोगे एकाकारतयैव द्रव्यमवसीयत इत्युक्तम्। तदिदमाह—मानसादपचारादिति। तस्मान्नानध्यवसायः सामान्यप्रत्ययादध्यवसाय्येव शाब्दम्।

इति बृहत्यां प्रथमाध्यायस्य
तृतीयः पादः

---

तु व्यक्तिप्रत्ययः। अत्र चोदयति—**व्यक्तितोऽवसीयत इति चेत्** इति। अस्यार्थः—यद्यपि सामान्याकारेणाभिधानमभिधत्ते तथापि व्यक्तित एव तद्द्रव्यमवसीयत इति व्यक्तिरेव वाच्या। परिहरति—**न, व्यक्त्यन्तरगतत्वेनानवगतेः** कार्यस्य, यदि [1]व्यक्तिमात्रमवगम्यते तदा जात्यन्तरसंबन्धिव्यक्तिमपि गतं कार्यमवगम्येत, न चैवं, तस्मात् सामान्याकारेण व्यक्तिनिष्ठेपि प्रयोगे द्रव्यमेवावगम्यते। नान्यथा, **सामान्यनिष्ठे पुनः प्रयोगे एकाकारतयैव द्रव्यमवसीयत इत्युक्तम्। तदिदं मानसादपचारादिति** भाष्येण दर्शितम्। **तस्मान्नानध्यवसायः**—किं व्यक्तिरन्वयिनी उताकृतिरिति। कुत इत्याह—**सामान्यप्रत्ययात्** सामान्येनाकारेण प्रत्ययात् सामान्यस्यैव शब्दार्थत्वनियमात्—**अध्यवसाय्येव शाब्दम्।**

**इति महामहोपाध्यायशालिकनाथमिश्रकृतायां ऋजुविमलायां
पञ्चिकायां प्रथमाध्यायस्य
तृतीयः पादः**

---

(1) A. यदिव्यक्तिमात्रतया-द्रव्यमवगम्येतं

# चतुर्थः पादः ॥

उद्भिदादिशब्दानां यागनामताधिकरणम् ॥

उक्तं समाम्नायैदमर्थ्यं तस्मात् सर्वं तदर्थं स्यात् ॥ १ ॥

'उद्भिदा यजेत' 'बलभिदा यजेत' 'अभिजिता यजेत' "विश्वजिता यजेत' इति समामनन्ति; तत्र सन्देहः, किं

---

## बृहती

प्रथमाध्यायस्य चतुर्थः पादः

**उक्तं समाम्नायैदमर्थ्यं तस्मात्सर्वं तदर्थं स्यात्।** ननु चेदं प्रमाणलक्षणं; वक्ष्यति च द्वितीयादौ—उक्तं प्रमाणलक्षणमिति; किमिदमुपन्यस्तं किमुद्भिदादयो गुणविधयः आहोस्वित् कर्मनामधेयानीति। किं वा प्रमाणलक्षणेऽयमुपन्यासो न घटते? बाढम्, स्थिते प्रामाण्येऽर्थविशेषावधारणचिन्तोपपद्यते। अप्रामाण्ये पुनः अर्थाभावात्

---

अथ चतुर्थः पादः

**उक्तं समाम्नायैदमर्थ्यम्। ननु चेदं प्रमाणलक्षणम्।** अस्मिन्नध्याये 'यथाप्रमाणं शब्दास्तथोच्यते' 'तस्य निमित्तपरीष्टि'रिति प्रतिज्ञानात् वक्ष्यति च द्वितीयादौ—प्रमाणलक्षणमुक्तमिति। अतः [1]किमिदमुच्यते किमुद्भिदादयो गुणविधयः आहोस्वित् कर्मनामधेयानीति। समाधाता पृच्छति—किंवा प्रमाणलक्षणेऽयमुपन्यासो न घटते। आक्षेप्ता उत्तरमाह—बाढम् न घटत एव। स्थिते हि प्रामाण्ये अर्थविशेषावधारणचिन्तोपपद्यते। अर्थविशेषावधारणी [2]या चिन्ता सा अर्थविशेषावधारणचिन्ता। अप्रामाण्ये पुनः अर्थाभावात्

(1) B. किमिदमुपन्यस्तं (2) B. धारणाय या चिन्ता

उद्भिदादयो गुणविधयः, आहोस्वित् कर्मनामधेयानि ? इति। कुतः संशयः ?। उभयथाऽपि प्रतिभातो वाक्यात्, उद्भिदा इत्येष शब्दो यजेत इत्यनेन संबध्यते, स किं वैयधिकरण्येन संबन्धमुपैति, उद्भिदा द्रव्येण यागमभिनिर्वर्तयेदिति, उत सामानाधिकरण्येन,—उद्भिदा यागेन यजेत इति। द्वेधाऽपि एतस्मिन् प्रतिभाति वाक्ये, सम्भवति संशयः।

---

केयं विशेषचिन्ता। उक्तं समाम्नायैदमर्थ्यमिति च यत् गुणविधानोपपत्तितया व्याख्यातं तदपि नोपपद्यते। न हि मन्त्रार्थ-वादत्वासंभवो गुणविधित्वे हेतुः। किं तर्हि ? क्रियाप्राप्तिर्गुण-विधानत्वे हेतुः। तथा च स्वयमुदितम्—अविहिते कर्मणि गुण-विधानमनर्थकमिति। यदि च मन्त्रार्थवादत्वासम्भवो गुणविधित्वे हेतुः स्वर्गकामो यजेतेत्यपि गुणविधिः स्यात्।

---

केयमर्थविशेषचिन्ता। आक्षेपान्तरमाह—उक्तं समाम्नायैदमर्थ्यमिति च। यद्गुणविधानोप-पत्तितया व्याख्यातं तदपि नोपपद्यते। न हि मन्त्रार्थवादत्वासंभवो गुणविधित्वे हेतुः। कि तर्हि ? क्रियाप्राप्तिरेव गुणविधित्वे हेतुः। उद्भिदेत्यस्य स्मारक-त्वासंभवात् अर्थवादत्वासंभवाच्च गुणविधिपरत्वमिति सूत्रं व्याख्यातम्। तदनुपपन्नं; न हि यस्य स्मारकता वा स्तुत्यर्थता वा न संभवति स गुणविधिः। किन्तर्हि ? क्रियायां प्राप्तायां यद्गुणश्रवणं तद्गुणविधित्वे हेतुः तथा स्वयमुदितं भाष्यकारेण—"अविहिते कर्मणि गुणविधानमनर्थकम्" इति। एवं हि वदता इदमुक्तं—विहिते कर्मणि गुण-विधानं संभवतीति। तेन क्रियाप्राप्तिरेव गुणविधित्वे हेतुः। यदि च मन्त्रार्थवाद-त्वासंभवो गुणविधित्वे हेतुः तदा स्वर्गकामो यजेतेत्यपि गुणविधिः स्यात्

किं तावत् प्राप्तम्? उक्तमस्माभिः, समाम्नायस्यैदमर्थ्यं, कश्चिदस्य भागो विधिः, योऽविदितमर्थं वेदयति, यथा 'सोमेन यजेत' इति; कश्चिदर्थवादः, यः प्ररोचयन् विधिं स्तौति, यथा 'वायुर्वै क्षेपिष्ठा देवता' इति; कश्चिन्मन्त्रः, यो विहित-मर्थं प्रयोगकाले प्रकाशयति, यथा 'बर्हिर्देवसदनन्दामि' इत्येव मादिः; तस्मादुद्भिदादयोऽमीषां प्रयोजनानामन्यतमाय प्रयोजनाय भवेयुः; तत्र तावन्नार्थवादः, वाक्यशेषो हि स भवति विधातव्यस्य; न च मन्त्रः, एवं जातीयकस्य प्रकाशयितव्यस्य अभावात्, पारिशेष्यात् गुणविधिः, उद्भिद्गुणता यागस्य विधीयते। कुतः?। प्रसिद्धेरनुग्रहात्, गुणविधेरर्थवत्त्वात्, प्रवृत्तिविशेष-

---

यदप्युक्तम्—प्रकृतौ ज्योतिष्टोमे गुणविधानमर्थवद्भविष्यति इति। तदप्ययुक्तं, तत्रापि गुणपदं श्रूयत एव ज्योतिष्टोमेनेति। अथ तत्र विशिष्टविधानं भविष्यतीत्यभिप्रायः इह कस्मान्न भवतीति। अथै-कस्मिन् सिद्धे कर्मणि इतरत्तत्रैव गुणविधानमिति, इह सिद्धे तद्गुणविधानं

---

स्वर्गकामस्यापि मन्त्रार्थवादत्वासंभवात्। अपरमप्याक्षेपमाह—यदप्युक्तं प्रकृतौ ज्योतिष्टोमे गुणविधानमर्थवद्भविष्यतीति तदप्ययुक्तं, तत्रापि हि गुणपदं श्रूयत एव ज्योतिष्टोमेनेति। तेन सोऽपि गुणविधिरिति तत्रापि कर्मविधानासंभवात् अत्र कथं तदाश्रित उद्भिदादिगुणविधिरिति। अथ तत्र ज्योतिष्टोमे विशिष्टविधानं भवि-ष्यति तेन तत्र कर्मणोऽपि विधानात् तदाश्रितो गुणविधिर्भविष्यतीत्यभिप्रायः। दूषयति—अथ इहोद्भिदेत्यत्रापि विशिष्टविधानं कस्मान्न भवति? आशङ्कान्तरमुपन्यस्यति—अथैकस्मिन् ज्योयिष्टोमेनेत्यत्र सिद्धे कर्मणि इतरत् उद्भिदेति तत्रैव गुणविधानमिति। दूषयति—इहोद्भिदेत्यत्र विशिष्टविधानेन सिद्धे कर्मणि तत्र ज्योतिष्टोमेनेति गुणविधानं

किमिति न भवति। न च नियमे हेतुं पश्यामः। विशिष्टविधानं च विशिष्टकर्मोत्पत्तौ प्रतीयते। न हि विशिष्ट उत्पन्ने कर्मणि गुणान्तर-विधानं युक्तम्; "गुणश्चापूर्वसंयोगे वाक्ययोः समत्वात्" इति न्याया-भिधानात्। तस्मान्न लक्षणान्तर्गतत्वं नापि न्यायाभिधानम्। अत्रोच्यते —प्रमाणलक्षणमेवेदम्। ननु प्रमाणलक्षणेऽर्थविशेषावधारणचिन्ता नोपपद्यत इत्युक्तम्। नैवेदमर्थविशेषावधारणमुपन्यस्तम्। किं तर्हि, कर्मविधानमत्र सम्भवति उत गुणविधानमात्रमेवेति। गुणविधौ च संभवति न कर्मविधानं न्याय्यम् गुणपरत्वाद्वाक्यस्य रक्तपटवत्।

---

**किमिति न संभवति। न च नियमे हेतुं पश्यामः।** आक्षेपान्तरमाह—**विशिष्ट-विधानं च विशिष्ट**[1]**कर्मोत्पत्तौ प्रतीयते** [2]ज्योतिष्टोमगुणविशिष्टे च कर्मण्युत्पन्ने उद्भिदेत्यपि विशिष्टविधानमेव प्रतीयते, न गुणविधानम्। कुत इत्याह—**न च विशिष्टे उत्पन्ने कर्मणि गुणान्तरविधानं युक्तम्।** उत्पत्तिशिष्टगुणा-वरोधात् **'गुणश्चापूर्वसंयोगे वाक्ययोः समत्वात्' इति न्यायाभिधानात्।** उपसंहरति—**तस्मान्न लक्षणान्तर्गतत्वं नापि न्यायाभिधानं** गुणविधाने सम्भवति इति [3]कथमिदं भाष्यमायातमिति न विद्मः। समाधाता आह—**अत्रोच्यते। प्रमाण-लक्षणमेवेदम्। ननु प्रमाणलक्षणे अर्थविशेषावधारणचिन्ता**[4] **नोपपद्यत इत्युक्तम्।** परिहरति—**नैवेदमर्थविशेषावधारणमुपन्यस्तम्। किं तर्हि** उपन्यस्तम्?। उत्तरं—**किं कर्मविधानमत्र संभवति उत गुणविधानमात्रमेवेति।** नामधेयपक्षे कर्मविधानं गुणविधिपक्षे गुणविधानमेव न कर्मविधानमित्यत्रोपन्यस्तम्। तत्र पूर्वपक्षं परिगृह्णाति—**गुणविधौ च संभवति न कर्मविधानं न्याय्यम्। गुणपरत्वाद्वाक्यस्य रक्तपटवत्।** अस्यार्थः—यथाविनियोग नियोगः [5]विनियोगाधीनत्वात्तदवगतेः। विनियोगवशेन चोद्भिदे-

---

(1) B. reads विशिष्टधर्मोत्पत्तौ (2) A. ज्योतिष्टोमे (3) B. कथमिदं तत्किमिति न विद्मः (4) C. वधारणं नोपप (5) B. विषयाधीनत्वादवगम्यते

तस्मात् कर्मविधानासम्भवात् अप्रामाण्यम्। गुणविधिपक्षे कथं ? लौकिक-कर्माश्रयणात्। अवश्यं हि गुणविधिपरे वाक्ये लौकिकं कर्माश्रयणीयम्। वैदिके वा को दोषः ? न खलु कश्चित्। किन्तु असम्भवः वैदिकस्य। कथमसम्भवः ? सर्वत्रोपपदश्रुतेः। एवमपि किमित्यप्रामाण्यं, धात्वर्थेऽन्यतः प्रवृत्तिर्मृग्या। अन्यतश्चेत् सापेक्षत्वप्रसङ्गः सापेक्षत्वाच्चाप्रामाण्यं प्रसक्तम्। यदि पुनः स्त्र्युपगमादिष्विव नियमविधानान्निरपेक्षत्वं तदा कथमप्रामाण्यं स्यात् ? स्यादेतदेवं यदि सर्वत्र पुरुषार्था एव विधयः स्युः। कर्मार्था अपि

---

त्यादिषु गुणविधानमेव प्रतीयते। ततश्च यथा रक्तः पटो भवतीति रक्तगुणमात्रसंबन्धार्थं वाक्यं तथेहाप्युद्भिदा यजेतेति उद्भिदादिविधानपरत्वेन न कर्मविधिनिष्ठता। **तस्मात् कर्मविधानासंभवादप्रामाण्यम्। गुणविधिपक्षे कथं ?** उत्तरं—**लौकिक-कर्माश्रयणात्। अवश्यं हि गुणविधिपरे वाक्ये लौकिकं कर्माश्रयणीयम्।** अत्र चोदयति—**वैदिके** वा कर्मण्याश्रीयमाणे **को दोषः ?** येन लौकिकं किमप्याश्रयणीयम्। **न खलु कश्चिद्दोषः। किन्त्वसंभवो वैदिकस्य** कर्मणः। **कथमसंभवः ? सर्वत्रोपपदश्रुते**रेक-पदस्याप्रयोगात्। सर्वत्रोपपदश्रुतेरुपपदार्थविधानपरत्वाद्वाक्यस्य कर्मविधानासंभवाद्वैदिक-कर्मासंभवः। अत्र चोदयति—**एवमपि किमित्यप्रामाण्यं ?** उत्तरं—**धात्वर्थे अन्यतः** प्रमाणान्तरात् **प्रवृत्तिर्मृग्या। अन्यतश्चेत्** प्रवृत्तिर्मृग्या तर्हि **सापेक्षत्व-प्रसङ्गः** [1]**सापेक्षत्वाच्चाप्रामाण्यं प्रसक्त**मेव। चोद्यवाद्याह—**यदि पुन**र्भोजन**स्त्र्यु-पगम**नादि**ष्विव नियमविधानान्निरपेक्षत्वं स्यात् तदा कथमप्रामाण्यम्।** यथाऽन्य-तः प्रवृत्त एव भोजने 'प्राङ्मुखोऽन्नानि भुञ्जीत' इति; यथा 'ऋतावुपेयात्' इति स्त्र्युपगमने। अथ चोभयत्राप्यनपेक्षत्वं तथेहापि भविष्यतीति नाप्रामाण्यं भविष्यती-त्यर्थः। परिहरति—**स्यादेतदेवं यदि पुरुषार्था एव सर्वत्र विधयः स्युः। कर्मार्था अपि**

---

(1) R. धात्वर्थप्रवृत्तेः प्रमाणसापेक्षत्वाच्च

वैदिके वा[को] दोषः ? न खलु कश्चित्। किन्तु असंभवः वैदिकस्य। कथमसम्भवः ? सर्वत्रोपपदश्रुतेः। एवमपि किमित्यप्रामाण्यं ? धात्वर्थान्यतः प्रवृत्तिर्मृग्या, अन्यनश्चेत् सापेक्षत्वप्रसङ्गः। सापेक्षत्वाच्चाप्रामाण्यं प्रसक्तम्। यदि पुनरभ्युपगमादिष्विव नियमविधानान्निरपेक्षत्वं कथमप्रामाण्यं स्यात्। स्यादेतदेवं यदि सर्वत्र पुरुषार्था एव विधयः स्युः कर्मार्था अपि तु केचित् विधयः प्रतीयन्ते। न तत्र नियमः सम्भवति। किं च स्वर्गकामो यजेत इति किं नियम्यते ? ननु च कर्ता, यथैतत्कर्तृविशेषणं न घटते तथा प्रदर्शितमेकादशे। फलस्य त्वविधेयत्वादेव नियमासम्भवः। फले कर्म नियम्यत इति चेत्; उक्तमविधेयत्वं कर्मणां पदार्थान्तरपरत्वाद्वाक्यानां, तस्मात्प्रमाणान्तरं मृग्यं अन्धप्रतिभा वेति प्रतिपत्तव्यम्। गुणवत्कर्मविधानं किमिति न दण्डिनमानयेति। अनवगमात्। न ह्यत्र तृतीयादिभिर्मत्वर्थः भवति यथा प्रतिपाद्यते। मत्वन्तानामेव हि सोऽर्थः।

---

...अपि तु केचिद्विधयः प्रतीयन्ते। न तत्र नियमः संभवति। अस्यार्थः—यदि तावत् सर्वत्रैव पुरुषार्थत्वं स्यात् यथा प्राङ्मुखोऽन्नानि भुञ्जीत इति तदा निरपेक्षता स्यात्। कर्मार्था अपि तु केचित् विधयः प्रतीयन्ते। तेन कर्मस्वरूपसिद्धेरन्यैरपि गुणैः दर्शनात् न नियमः संभवति। ततश्च नियमसिद्धये प्रमाणान्तरापेक्षा। चोदयति—किं च स्वर्गकामो यजेतेति किं नियम्यते ? ननु कर्ता नियम्यते। परिहरति—यथैतत्कर्तृविशेषणं न घटते तथा प्रदर्शितमेकादशे। फलस्य त्वविधेयत्वादेव नियमासंभवः प्रधानभूतत्वादेवानुपादेयत्वात् फलं न विधीयत इति तन्नियमो न संभवति। फले कर्म नियम्यत इति चेत्। दूषयति—उक्तमविधेयत्वं कर्मणां, पदार्थान्तरपरत्वाद्वाक्यानाम्। तस्मात् प्रमाणान्तरं मृग्यं अन्धप्रतिभा वा इति प्रतिपत्तव्यम्। प्रमाणान्तरासंभवेनानन्वये अन्धप्रतिभेयमिति मन्तव्यम्। अत्र चोदयति—गुणवत्कर्मविधानं किमिति न भवति। गुणविशिष्टं कर्मैव किमिति न विधीयते। यथा दण्डिनमानयेति दण्डविशिष्टपुरुषप्रत्ययः तथेहापि गुणविशिष्टकर्मप्रत्ययात् तथाभूतस्यैव विधेयत्वम्। उत्तरं—अनवगमात् गुणवतः कर्मणः। कस्मादित्याह—न ह्यत्र तृतीयादिभिः मत्वर्थः प्रतिपाद्यते। मत्वन्तानामेव हि सोऽर्थः तद्वत्ता नाम; न सुबन्तानाम्। अथोद्भि-

लक्षणया परिगृह्यत इति चेत्। प्राप्तं तर्हि सापेक्षत्वम्। न श्रुतितो हि लक्षणा शक्याऽवगन्तुम्। तस्मात् प्रमाणान्तरमेयता।

यदुक्तं—उक्तं समाम्नायैदमर्थ्यं तस्मात् सर्वं तदर्थं स्यात् इति न गुणविधौ हेतुरिति। भवति हि नामनिराकरणतया हेतुः। कथं पुनरनेन नाम निराक्रियते। ऐदमर्थ्यासम्भवात्। कथमैदमर्थ्यं न संभवति? नियोगार्थतया विध्युद्देशमन्त्रार्थवादानामर्थवत्तोक्ता। तच्चैतत् अविधेयत्वान्नाम्नो न संभवतीति। ननु अविधेयानां हि श्रुत्या स्मृत्या वाऽर्थवत्तोक्ता। तच्च द्वयमस्य न संभवति। तस्मात्

---

देति लक्षणया परिगृह्यत इति चेत्। दूषयति—प्राप्तं तर्हि सापेक्षत्वम्। कस्मादित्याह—श्रुतितो हि न लक्षणा शक्यते वक्तुम्। उद्भिदादिशब्दः उद्भिद्दर्थे लक्षणया वर्तत इति न श्रुत्युपनिपातादिदं ज्ञायते। किन्तु प्रमाणान्तरेण तद्वृति प्रयुक्त्यवगमात्। तस्मात् प्रमाणान्तरप्रमेयता।

यदुक्तं उक्तं समाम्नायैदमर्थ्यं तस्मात् सर्वं तदर्थं स्यात् इति [1]न गुणविधौ हेतुरिति। अत्रोच्यते—भवत्ययं हेतुर्नामनिराकरणतया। कथं पुनरनेन नाम निराक्रियते? ऐदमर्थ्यासंभवात् नियोगार्थत्वासंभवात। कथमैदमर्थ्यं न संभवति? उत्तरं—नियोगार्थतयां हि विध्युद्देशमन्त्रार्थवादपदानामर्थवत्तोक्ता। नियोगार्थतया या अर्थवत्ता उक्ता सा विध्युद्देशार्थवादमन्त्रपदानाम्। तच्चैतन्नियोगार्थत्वं नाम्नो न संभवति अविधेयत्वात्। ननु मा नाम अविधेयतया विधेयत्वेन नियोगादैदमर्थ्यं भवतु किन्तु श्रुत्या स्मृत्या वा भविष्यतीत्यत्राह—ननु अविधेयानां हि श्रुत्या स्मृत्या वाऽर्थवत्तोक्ता। तच्चैतद्द्वयमपि नामधेयत्वे न संभवति तस्मान्नामधेयपक्षे नियो—

---

(1) B. C. तद्गुणविधौ

विधेयत्वम् । विधेयश्चेद्गुणः । तस्माद्गुणविधिः । कथं पुनः 'सोमेन यजेत' इति विध्युद्देश उदाहरणं ? । कथं वा न संभवति ? तत्रापि यागस्याविधानात् । माभूद्यागस्य विधानं गुणस्तावद्विधीयते ।

ननु च गुणविधिरपि नैव संभवति नामतया प्रसिद्धेः । वृद्धव्यवहारे हि प्रसिद्धिः प्रसिद्धिरित्युच्यते । ननु याज्ञिकव्यवहारोऽपि वृद्धव्यवहार एव । न, लौकिकव्यवहारपूर्वकत्वात् याज्ञिकव्यवहारस्य न च लोके नामतया प्रसिद्धिरुद्भिदः अर्थान्तराभिधानतया प्रसिद्धेः । तस्माद्गुणविधिः ।

---

गैदमर्थासंभवात् उद्भिदाद्यर्थस्य विधेयत्वम् विधेयश्चेद्गुणविधिः । अत्र भाष्य-कारेणोक्तम्—"[1]कश्चिदस्य भागो विधिः योऽविदितमर्थं [2]वेदयति यथा सोमेन यजेत" इति । तदाक्षिपति—कथं पुनः सोमेन यजेतेति विध्युद्देश उदाहरणम् ? समाधाता आह—कथं वा न संभवति । आक्षेप्ताऽऽह—अत्रापि यागस्याविधानात् उपपदश्रवणात् । समाधाता अह—माभूद्यागस्य विधानं, गुणस्तावद्विधीयते । तेन तद-भिप्रायेण भाष्यकारेण[3] उक्तं—कश्चिदस्य भागो विधिः । ननु गुणविधिरपि नैव संभवति उद्भिदादिशब्दानां यागनामधेयतया प्रसिद्धेः । उच्यते—वृद्धव्यवहारे हि प्रसिद्धिः प्रसिद्धिरित्युच्यते । न च वृद्धव्यवहारे [4]उद्भिच्छब्दो यागवचनः । अत्र चोदयति —ननु याज्ञिकव्यवहारोऽपि वृद्धव्यवहार एव याज्ञिका हि उद्भिदादयः शब्दाः कर्मवचना इत्युक्तवन्तः । तेन तत्प्रसिद्धिरपि प्रसिद्धिरेव[5] । परिहरति—न तत्प्रसिद्धिः प्रसिद्धिः । लौकिकव्यवहारपूर्वकत्वाद्याज्ञिकव्यवहारस्य । नहि लोके कर्मनामधेय-तया प्रसिद्धिरुद्भिदादिशब्दानां, प्रत्युतार्थान्तराभिधेयतया चोद्भिदादयः प्रसिद्धाः खनित्रवचनतया प्रसिद्धेः तस्माद्गुणविधिः ।

---

(1) p. 182. (2) विदधाति (3) A. reads कारेण विध्युद्देशपदमुक्तम् (4) सोमशब्दो (5) A. adds यदि कर्मवचनत्वं प्रसिद्धं तेषां किमिति गुणज्ञानम्

**करत्वाच्च। न च एषां यागार्थता लोकेऽवगम्यते। न च वेदेन परिभाष्यते। अतो गुणविधयः। यदि गुणविधिः न तर्हि कर्म विधीयते, अविहिते च कर्मणि तत्र गुणविधानमनर्थकम्। नेति ब्रूमः, प्रकृतौ ज्योतिष्टोमे गुणविधानमर्थवद्भविष्यति, यदि नामधेयं स्यात् यावदेव यजेत इति, तावदेव उद्भिदा यजेतेति न प्रवृत्तौ कश्चित् गुणविशेषः स्यात्। गुणविधौ च गुणसंयोगात् अभ्यधिकमर्थं विदधत उद्भिदादयः शब्दा**

---

एवमपि प्रकृतौ ज्योतिष्टोमे गुणविधानमर्थवद्भविष्यतीति। अयुक्तमेवेदं भाष्यं प्रतिभाति। किमिति ? ज्योतिष्टोमेपि ज्योतिष्टोमपदं विधायकमेव। तत्रापि यज्यर्थो मृग्यः। केन वोक्तं नेति ? यद्येवं तत्र विधानं नोपपद्यते गुणविधिप्रकृतिता तत्र लक्षिता। एतदुक्तं भवति—सोमेन यजेतेति गुणं विदधता प्रतिपन्नाऽन्यतो यागसिद्धिः। प्रतिपन्ना चेत् तत्रैवेदमप्युपपन्नं भविष्यति।

---

"प्रकृतौ ज्योतिष्टोमे गुणविधानमर्थवद्भविष्यति" इत्ययुक्तमिदं भाष्यं प्रतिभाति। किमित्ययुक्तम् ? उत्तरं—ज्योतिष्टोमेपि ज्योतिष्टोमपदं विधायकमेव। तत्रापि हि यज्यर्थोऽन्यतो मृग्य इति आभाषान्नो ग्रन्थः केन वोक्तं तत्रापि यज्यर्थो न मृग्य इति ? यद्येवं तत्र विधानं नोपपद्यते। समाधाता आह—गुणविधिप्रकृतिता तत्र लक्ष्यते। एतदेव विवृणोति—एतदुक्तं भवति—सोमेन यजेतेति गुणं विदधता प्रतिपन्नाऽन्यतो यागसिद्धिः प्रतिपन्नाचेत् तत्रैवेदमप्युपपन्नं भविष्यति। अस्यार्थः सोमेन यजेतेत्यत्र सोमाख्यगुणविधौ यो गुणविधेराश्रयोऽभिमतः स यदि ज्योतिष्टोमो वा लौकिको वा तत्रैव चोद्भिदादयोऽपि गुणविधयो भवन्त्विति। प्रकृतिशब्दश्च [1]गुणविधौ प्रकृत्युप-

---

(1) B. गुणविधेः

**अर्थवन्तो भविष्यन्ति। तस्मात् गुणविधय इत्येवं प्राप्तम्। एवं प्राप्ते ब्रूमः,।**

अपि वा नामधेयं स्यात् यदुत्पत्तावपूर्वमविधायकत्वात् ॥ २ ॥

---

तस्माज्ज्योतिष्टोमशब्दोऽभ्युपगतप्रकृत्युपलक्षणार्थः विशिष्टविधानासंभवश्चोक्तः। नामधेयपक्षे पुनः नियोगार्थता न संभवति यजिनोपात्तत्वाद्विधेयस्य समर्पितविधेया नामता च न विधेरुपकरोति विध्यर्थौपयिकतया च प्रामाण्यम्। अतस्त्वदीयेपि पक्षे प्रामाण्यं प्रमाणान्तरमृग्यमेव। अस्मदीये पुनः पक्षे पदार्थोऽपि तावद्वृद्धव्यवहारप्रसिद्धः।

**अपि वा नामधेयम्।** अत्राभिधीयते—गुणपरमेतद्वाक्यमिति यदुक्तं सत्यमेतत् विनियोगे तु तत्। न च विनियोगापेक्षा कर्तव्या।

---

लक्षणार्थः। **तस्माज्योतिष्टोमशब्दोऽभ्युपगतप्रकृत्युपलक्षणार्थः।** यत्रैव गुणविधेरभ्युपगमः तत्रैव उद्भिदादयोऽपि गुणविधयः सर्वे गुणविधयो गुणं विदधत्वित्यर्थः। अथ कस्माद्विशिष्टविधिर्न भवतीत्यत्राह—**विशिष्टविधानासंभवश्चोक्तः।** तर्हि नामधेयमस्त्वित्यत्राह—**नामधेयपक्षे पुनः नियोगार्थता न संभवति यजिना** यागस्य **विधेयस्य** उपात्तत्वात्। किं नाम्ना परेण, तदाह—**समर्पितविधेय**वचनतया **न विधेरुपकरोति** इति। ननु मा नाम विधेरुपकार्षीत् तथापि किं इत्याह—**विध्यर्थौपयिकतया च प्रामाण्यं** चोदनाया उक्तम्। **अतस्त्वदीयेपि पक्षे प्रामाण्यं** [1]प्रमाणान्तरादवगम्यते न सुखेन लभ्यते। **अस्मदीये पुनः पक्षे पदार्थोऽपि तावद्वृद्धव्यवहारप्रसिद्ध** एव। [2]त्वन्मतेप्यप्रामाण्यं तावत् तुल्यं यदि परमलौकिकी शब्दशक्तिराश्रणीया।

**अपि वा नामधेयम्। अत्राभिधीयते—गुणपरमेतद्वाक्यमिति यदुक्तं सत्यमेतत् विनियोगे तु तत्** विनियोगालोचनया तु तथा प्रतीयते **न च विनियोगापेक्षा कर्तव्या।**

---

(1) B. प्रमाणान्तरमृग्यमेव (2) त्वन्मते च प्रामण्यं तावत्तुल्यं

**अपि वा इति पक्षो विपरिवर्तते। नामधेयं स्यात् इति प्रतिजानीमहे, एवमविहितमर्थं विधास्यति ज्योतिष्टोमात् कर्मान्तरम् श्रुतिश्चैवं यागमभिधास्यति; इतरथा श्रुतिरुद्भिदादीन् वक्ष्यन्ती**

---

किं तर्हि ? भावापेक्षा भावश्चायं यजेतेति। तस्मात्तद्विषयो नियोगः। न चैवं विशेषविषयो नियोगः प्रमाणान्तरसिद्धोऽस्ति। "ज्योतिष्टोमात्कर्मान्तरं" इति। एतदुक्तं भवति—सिद्धं लौकिकाद्वैदिकं कर्मान्तरमिति। दर्शयिष्यति च 'तेभ्यः क्रिया प्रतीयेत' इति। कथं तर्हि गुणार्थेन पुनः श्रुतिरिति ? कर्तव्यताप्राप्त्यभिप्रायं च तत् न विनियोगाभिप्रायम्। किं वा न यथाविनियोगं नियोगः। एषा तावत्प्रक्रिया सूत्रकारस्य भावार्थाः कर्म-

---

किं तर्हि भावापेक्षा भावविषयत्वात्तस्याः। भावश्चायं यजेत इति। तस्मात् तद्विषयोऽयं नियोगः। न चैवं विशेषविषयो नियोगः प्रमाणान्तरप्राप्तोऽस्ति येन तत्परित्यागेन केवलगुणविधानं स्यात्। अत्र भाष्यं—ज्योतिष्टोमात् कर्मान्तरं इति। तदयुक्तं; नहि ज्योतिष्टोमसंज्ञकं कर्मास्ति येनैवमुच्यते ज्योतिष्टोमात् कर्मान्तरमिति इत्याशङ्क्याह—ज्योतिष्टोमात्कर्मान्तरमिति। एतदुक्तं भवति। सिद्धं लौकिकाद्वैदिकं कर्मान्तरमिति। ज्योतिष्टोमशब्दो गुणविध्याश्रयोपलक्षणार्थः। दर्शयिष्यति च सूत्रकारः तेभ्यः क्रिया प्रतीयेत इति। तेन भावार्थ एव विधिविषयः। कथं तर्हि गुणार्थेन पुनः श्रुतिरिति ? यदि भावार्थविषय एव नियोगः। उत्तरम्—कर्तव्यताप्राप्त्यभिप्रायं न विनियोगाभिप्रायम्। यत् गुणार्थत्वं पुनः श्रुतेः उक्तं तद्धोमावच्छिन्ना कर्तव्यता प्राप्ता, केवलं गुणावच्छेदो न प्राप्त इति न पुनर्गुण एव विधीयत इत्यभिप्रायेण प्राप्ताप्राप्तविवेकेन गुणान्वयपरा पुनः श्रुतिरित्यर्थः। अत्र पृच्छति—किं वा न यथाविनियोगं नियोगः येन विनियोगानादरेण नियोगो वर्ण्यते। उत्तरं—एषा तावत् सूत्रकारस्य प्रक्रिया भावार्थाः कर्म-

उद्भिदादिमतो लक्षयेत्। उद्भिद्वता यागेन कुर्यादिति। यागेन कुर्यात् इति 'यजेत' इत्यस्यार्थः, करणं हि यागः उद्भिदाद्यपि तृतीयानिर्देशात् करणं, तत्र उद्भिदा यागेन--इति कर्मनामधेयत्वेन सामानाधिकरण्यसामञ्जस्यम्, द्रव्यवचनत्वे मत्वर्थलक्षणया सामा-

---

शब्दाः तेभ्यः क्रिया प्रतीयेतेति पठतः। किमिदं यथा विनियोगं नियोगप्रत्यर्थीभूतं सूत्रं, ? बाढम्। अन्यथा हि रक्तपटन्यायेन श्येनादिविधानं प्राप्नोति। निराकृतं चैतत् अभावार्थतया। किं पुनरस्याः प्रक्रियाया मूलम् ? अवगतिरिति ब्रूमः।

ननु विनियोगेऽप्यवगतिरेव। केन चोक्तं नेति ? किन्तु कर्तव्यता भावविषया अवगम्यत इत्युक्तमस्माभिः कार्यस्वभावत्वाद्भावस्य। विनियोगावगमः इदानीं किमर्थः ? भावार्थ इति ब्रूमः। कथं तर्हि गुणपरतोच्यते ?

---

शब्दाः तेभ्यः क्रिया प्रतीयेतेति पठतः। किमिदं यथाविनियोगं विनियोगप्रत्यर्थीभूतं सूत्रम् ? उत्तरम्—बाढं अन्यथा हि यथाविनियोगे हि रक्तपटन्यायेन श्येनादि विधानं प्राप्नोति। निराकृतं चैतदभावार्थतया भावार्थाधिकरणे। किं पुनरस्याः प्रक्रियाया मूलं ? उत्तरं—अवगतिरेव मूलमिति ब्रूमः। भावार्थविषय एव नियोगो ऽवगम्यते यतः।

ननु च विनियोगेऽप्यवगतिरेव ; तेन तस्यापि त्यागो न युक्तः। परिहरति —केन चोक्तं विनियोगेऽवगतिरेव नास्तीति। किन्तु कर्तव्यता भावविषयाऽवगम्यत इत्युक्तमस्माभिः। कार्यस्वभावत्वाद्भावस्य। कार्यविषयत्वान्नियोगस्येत्युक्तं विषयकरणीये। विनियोगावगम इदानीं किमर्थः ? उत्तरं—भावार्थ इति वदामः। योऽसौ नियोगविषयीभूतो भावः तदर्थः। यदि विनियोगो भावार्थः कथं तर्हि गुणपरतोच्यते।

नाधिकरण्यं स्यात्। श्रुतिलक्षणाविशये च श्रुतिर्ज्यायसी। तस्मात् कर्मनामधेयम्। ननु प्रसिद्धं द्रव्यवचनत्वमपह्नूयेत, अप्रसिद्धं कर्मवचनत्वं प्रतिज्ञायेत। उच्यते,—तृतीयानिर्देशात् कर्मवचनता। कुतः?। करणवाचिनो हि प्रातिपदिकात् तृतीया भवति, करणं च यागः, तेन यागवचनमिममनुमास्यामहे।

नैतद्युक्तं,—यदि तृतीयानिर्देशे सति उद्भिदादिभ्यः शब्देभ्यो यागे बुद्धिरुत्पद्येत, स्यादेतदेवं; न हि नो बुद्धिरुत्पद्यते, तस्मात् अयुक्तम्। तृतीयावचनं अन्यथा नोपपद्यते इति चेत्। कामं मोपपादि, न जातुचित् अनवगम्यमानेऽपि यागवचनो भविष्यति, तस्मात् गुणविधयः। लक्षणेति चेत्,

---

प्राप्तौ सत्यां भावस्य। ननु चोपपदश्रवणे सति केवलस्य भावस्य विषयतैव नावगम्यते यथा रक्तः पटो भवतीति। न केवलं पटभवनमेवावसीयत इति प्रदर्शितम्। केन चोक्तं केवलो भावो विषयतामापद्यत इति। स तु विषयोनियोगस्येत्युक्तम्। न चासौ पदान्तरसंबन्धं निरुणद्धि रक्तपटवद्विशिष्ट एवावसीयते। कथं पुन-

---

अत्रापि तावद्भावपरतैव स्यात्। उत्तरं—प्राप्तौ सत्यां भावस्य वाक्यस्य गुणपरता। ननु चोपपदश्रवणे सति केवलस्य भावस्य विषयतैव नावगम्यते गुणान्वितस्यैव विषयत्वावगतेः यथा रक्तः पटो भवतीति। न केवलं पटभवनं प्रतीयत इत्युक्तं द्वितीये पादे। समाधत्ते—केन चोक्तं केवलो भावशब्दो विषयतामापद्यत इति। स तु विषयो नियोगस्य न गुण इत्युक्तम्। न चासौ भावविषयो नियोगः पदान्तरसंबन्धितां निरुणद्धि। किन्तु रक्तपटवत् विशिष्टविधिरेवावसीयते। कथं पुन-

वरं लक्षणा कल्पिता, न यागाभिधानं, लौकिकी हि लक्षणा,

---

रुद्भिदादयो गुणाः सन्तो विशेषणतां प्रतिपद्यन्ते। किं गुणतयैव विशेषण-विशेष्यभावः? नाम्नोपि हि दृश्यते डित्थोऽयं ब्राह्मणः डवित्थोऽयं क्षत्रिय इति। कथं पुनरत्र नामत्वम्? सामानाधिकरण्यावगतेः। कथं पुनः सामानाधिकरण्यमवसीयते? तृतीयानिर्देशात्। अस्ति हि यागे तृतीयार्थः स तस्यानेन सिद्ध्यतीति कथितः। तृतीया चोद्भिदादिषु श्रूयते। तस्मादुद्भिदा यागेनेत्यवगम्यते।

तदिदमयुक्तम्—न ह्येकविभक्तिनिबन्धनं सामानाधिकरण्यं; किं तर्हि? एकार्थावगतिनिबन्धनम् यद्येकविभक्तिनिबन्धनं

---

रुद्भिदादयो गुणाः सन्तो विशेषणत्वं भावस्य प्रतिपद्यन्ते येन तद्विशिष्टो भावो विधीयत इत्युच्यते। परिहरति—किं गुणतयैव विशेषणविशेष्यभावः। येन गुणत्वेन [1]भावार्थस्य विशेषणत्वमाह—यावता नाम्नोऽपि विशेषणविशेष्यत्वं दृश्यत एव डित्थोऽयं ब्राह्मणः डवित्थोऽयं क्षत्रियः इति। कथं पुनरत्र नामत्वमवगम्यते उत्तरं—सामानाधिकरण्यावगतेः। यजिना सहोद्भिदादिशब्दानां सामानाधिकरण्यमवगम्यत इति नामधेयत्वावगमः। कथं पुनः सामानाधिकरण्यावगतिः यजिना सहैकार्थत्वमवगम्यत इत्यर्थः। एकदेशिमतेनोत्तरमाह—तृतीयानिर्देशाद्यजेः। अस्ति हि तत्र तृतीयार्थः। स तस्यानेन सिद्ध्यतीति भाष्येण कथितः। तृतीया चोद्भिदादिषु श्रूयते तस्मादुद्भिदा यागेनापूर्वं भावयेदिति गम्यते। पूर्वपक्षी दूषयति—तदिदमयुक्तं, न ह्येकविभक्तिनिबन्धनं सामानाधिकरण्यं, किं तर्हि एकार्थावगतिनिबन्धनं सामानाधिकरण्यम्। सामानाधिकरण्ये ह्येकार्थत्वमुच्यते, न च तदेकविभक्तिनिबन्धनं किन्त्वेकार्थत्वनिबन्धनम्। यदि ह्येकविभक्तिनिबन्धनं

---

(1) B. अभावार्थस्य

हठोऽप्रसिद्धकल्पनेति। अपि च यदि नामधेयं विधीयते, न यागः; अथ यागः, न नामधेयम्; उभयविधाने वाक्यभेदः—इति। उच्यते, न नामधेयं विधायिष्यते, अनुवादा हि

---

स्यात् अरुणयैकहायन्येति द्रव्यगुणयोः क्रियासंबन्धो न स्यात् परस्परसंबन्धनिष्ठतैव स्यात् नीलोत्पलवत्। अत एव गौरश्वः पुरुषो हस्तीति न सामानाधिकरण्यमेकविभक्तित्वेपि प्रतीयते। एकार्थतया चायं देवदत्त इति प्रतीयते। तस्मान्न विभक्तिः कारणं सामानाधिकरण्यस्य।

अत्रोच्यते—उक्तं भावार्थत्वात् यज्यर्थे कर्तव्यता न पुनर्नामार्थे। अवगम्यते च संबन्धः। यदि गुणनिमित्तकः परिगृह्यते तदा लुप्तमतुप्प्रत्ययनिर्देशः कल्पनीयः। अथ तु नामधेयं तदा

---

स्यात् तदा अरुणयैकहायन्येति द्रव्यगुणयोः क्रियासंबन्धो न स्यात् परस्परसंबन्धनिष्ठतैव स्यात् नीलोत्पलवत्। यथा नीलोत्पलमित्यत्र परस्परसंबन्धः तथाऽरुणैकहायन्योरपि स्यात् न चेष्यते। यत एवैकविभक्तिनिबन्धनं सामानाधिकरण्यं न भवति अत एव गौरश्वः पुरुषो हस्तीति न सामानाधिकरण्यमेकविभक्तित्वेपि प्रतीयते। कथ तर्ह्ययं देवदत्त इत्यत्र सामानाधिकरण्यमवगम्यते इत्यत्राह—एकार्थतया चायं देवदत्त इति सामानाधिकरण्यमवगम्यते। तस्मान्न विभक्तिः [1]कारणं सामानाधिकरण्यस्य। इदानीं स्वमतेनाह—अत्रोच्यते—उक्तं भावार्थविषयत्वाद्यज्यर्थे कर्तव्यता न नामार्थे अवगम्यते चायं संबन्धः उद्भिद्यागयोः। स यदि गुणनिमित्तकः परिगृह्यते उद्भिद्योगात् उद्भिदिति तदा लुप्तमतुप्प्रत्ययनिर्देशः कल्पनीयः। अश्रुतमत्वर्थकल्पनैव दोष इत्यर्थः। अथतु नामधेयं तदा

---

(1) B. विभक्तयः

**उद्भिदादयः। कुतः प्राप्तिः? इति चेत्। ततोऽभिधीयते,—उच्छब्दसामर्थ्यात् भिच्छब्दसामर्थ्याच्च उद्भिच्छब्दः क्रियावचनः,**

---

अकल्पितशब्दान्तरनिमित्तकः संबन्धो भवति। उपपद्यते चासौ समानविभक्तियोगात्। यत्त्वरुणयेति प्रदर्शितं तत्र भावसंबन्धिता द्वयोः। इह त्वर्थान्तराश्रवणात् कस्य सम्बन्धितां तृतीया कथयति अन्यदतो भावव-चनात्। तस्मान्निर्देशमात्रफलैवेयं तृतीया। ननु च निर्देशमात्रे प्रथमया भवितव्यम्। प्रातिपदिकार्थाव्यतिरेकानुशासनं तत्; न पदार्थाव्यतिरेकस्य। तथा च डित्थेन ब्राह्मणेन भुक्तमिति निदर्शितम्।

ननु चैकार्थावगतेरभावात् किं विभक्तिः करिष्यति।

---

**अकल्पितशब्दान्तरनिमित्तकः सम्बन्धो भवति। उपपद्यते चासौ सम्बन्धः समानविभक्तियोगात्।** एतदर्थमेव च भाष्ये तृतीयानिदेशोपन्यासः। यदि भिन्नविभक्तिनिर्देशः स्यात् तदा नामधेयतयान्वयो न भवेत्। न चासावस्ति एकविभक्तिनिर्देशादित्यर्थः। **यत्त्वरुणयेति प्रदर्शितं तत्र भावसंबधिता द्वयोः; इहतु अर्थान्तराश्रवणात् कस्य संबन्धितां तृतीया कथयति, अन्यदतो भाववचनात्।** यथा अरुणैकहायन्योरर्थान्तरभूतः क्रमः श्रूयते [1]न तथाऽर्थान्तरं श्रूयते। अपूर्वभावना यज्यर्थावरुद्धा प्रतीयत इति यज्यर्थसंबन्ध एवोद्भिदादेः। **तस्मान्निर्देशमात्रफलैवेयं तृतीया,** अर्थस्य यागवचनत्वेनैव प्राप्तत्वात्। **ननु च निर्देशमात्रे प्रथमयैव भवितव्यम्।** उत्तरं—**प्रातिपदिकार्थाव्यतिरेकानुशासनं तत् न पदार्थाव्यतिरेकानुशासनम्।** प्रातिपदिकार्थाव्यतिरेके च प्रथमा, न पदार्थाव्यतिके। पदार्थाव्यतिरेकश्चायं, न प्रातिपदिकार्थाव्यतिरेतः। **तथा च डित्थेन ब्राह्मणेन भुक्तमिति दर्शितम। ननु चैकार्थावगतेरभावात् किं विभक्तिः करिष्यति**

---

(1) B. reads तथाऽत्र अपूर्वभावना यज्यर्थानवरुद्धा न प्रतीयत

—उद्भेदनं प्रकाशनं पशूनामनेन क्रियते—इत्युद्भित् यागः, एवमाभिमुख्येन जयात् अभिजित्, विश्वजयात् विश्वजित्, एवं सर्वत्र। अतः कर्मनामधेयम्। यत्त्वप्रवृत्तिविशेषकरोऽनर्थकः—इति, नामधेयमपि गुणफलोपबन्धेनार्थवत्; तस्मात् कर्मनामधेयान्येवंजातीयकानि इति सिद्धम्॥

---

मतुब्लोप एवात्र वरम्। द्वयोर्वा नियोगार्थता। द्वयोस्तावत् नियोगार्थत्वं नास्ति कार्यविषयत्वान्नियोगस्येत्युक्तम्। न च कार्याभिधायि नामेत्युक्तम्। भवत्ववयवयोगात् कार्याभिधायिता नाम्नः, सत्यं, भवत्यव्यतिरिक्तपक्षे। पदार्थान्तरतया तु संबन्धात् कः सिद्धार्थतामपहरति। सिद्धार्थश्चानियोगविषय इत्युक्तम्। तस्मादवयवयोगानुगतेः सिद्धमव्यतिरिक्तार्थत्वं नाम्नः। अव्यतिरिक्तत्वाच्च परिहृतो विध्यसंस्पर्शः।

---

उद्भिच्छब्देन याग एव वदितुं न शक्यते। तस्मान्मतुब्लोप एवात्र वरम्। द्वयोर्वा नियोगार्थता [1]अरुणैकहायन्योरिव। परिहरति—द्वयोस्तावन्नियोगार्थत्वं नास्ति। कार्यविषयत्वान्नियोगस्येत्युक्तम्। न च नाम प्रातिपदिकं कार्याभिधायि तेन नामार्थस्य साक्षान्नियोगविषयत्वानुपपत्तिः। अत्र चोदयति—भवत्ववयवयोगात् कार्याभिधायिता नाम्नः तेन विषयत्वेनोपपत्तिः। परिहरति—सत्यं भवत्यवयवप्रसिद्ध्या कार्याभिधायित्वं नामधेयानामव्यतिकार्थपक्षे पदार्थान्तरतयाऽतु संबन्धात् कस्सिद्धार्थतामपहरति सिद्धार्थता चेन्न नियोगविषय इत्युक्तम्। तस्मादवयवयोगानुगतेः सिद्धमव्यतिरिक्तार्थत्वं नाम्नः। अव्यतिरिक्तत्वाच्च परिहृतो विध्यसंस्पर्शः। यागे हि विधिसंबन्धः साक्षात् तन्नामधेयस्यापि अर्थद्वारकस्सिद्धो नियोगसंस्पर्शः।

---

(1) B. विनियोगार्थम्

अथ चित्रादिशब्दानां यागनामधेयताधिकरणम्।

यस्मिन् गुणोपदेशः प्रधानतोऽभिसम्बन्धः ॥ ३ ॥

'चित्रया यजेत पशुकामः' 'त्रिवृद्बहिष्पवमानं' 'पञ्चदशा-न्याज्यानि' 'सप्तदश पृष्ठानि' इत्युदाहरणम्। किं चित्राशब्दः,

---

ननु च यावदेवोक्तं यजेतेति तावदुद्भिदा यजेतेति स्यात्। स्यादयं दोषः यदि प्रयोजनानुवर्ति प्रमाणं; प्रमाणानुवर्ति तु प्रयोजनम्। दृश्यते च वाक्यान्तरार्थौपयिकत्वं नाम्नाम्। तस्मा-त्सिद्धमनपेक्षत्वं चोदनायाः।

यस्मिन् गुणोपदेशः प्रधानतोऽभिसंबन्धः। उक्तं नामधेय-मपि गुणफलसंबन्धेनार्थवद्भविष्यतीति। तदयुक्तं मन्वानस्य विषय-विशेषे क्वचिद्युक्तता प्रतिपाद्यते।

---

ननु च यावदेवोक्तं यजेतेति तावदेव उद्भिदा यजेतेत्यपि तेन निष्प्र-योजनत्वान्न नामतेति भावः। परिहरति—स्यादेतदेवं यदि प्रयोजनानुवर्ति प्रमाणं स्यात्। प्रमाणानुवर्ति तु प्रयोजनम्। तेन निष्प्रयोजनतापि प्रमाणादायाता न दोषः। एत-च्चाभ्युपगममात्रम्। प्रयोजनस्य विद्यमानत्वात्। तदाह—दृश्यते च वाक्यान्तरार्थौ-पयिकत्वं नाम्नाम्। गुणफलोपबन्धार्थता वाक्यान्तरेऽपि दृश्यते। तेन निष्प्रयोजनत्व-मपि नातीव विद्यते। तस्मात्सिद्धमनपेक्षत्वं चोदनायाः।

यस्मिन् गुणोपदेशः। उक्तं नामधेयमपि गुणफलोपबन्धेनार्थवद्भविष्यतीति तदयुक्तं मन्वानस्य विषयविशेषे क्वचिद्युक्तता प्रतिपाद्यते। अनेनाध्यायसङ्गतिदोषं

पवमानशब्दः, आज्यशब्दः, पृष्ठशब्दश्च गुणविधयः, उत कर्म-नामधेयानि इति संशयः। प्रसिद्धेः, अर्थवत्त्वात्, प्रवृत्तिविशेषकरत्वाच्च गुणविधयः; न चेते कर्मणि प्रसिद्धाः, न चामी यौगिकाः। जातिशब्दा ह्येते, चित्रा इति च गुणशब्दः; चित्रया यजेत इति च यागानुवादः विज्ञातत्वात् न याग-विधिः। गुणे फलकल्पनायां यजतेर्न विवक्षा, तथा आज्यानि

---

यथा तावदयुक्तं तथोच्यते—गुणोपबन्धार्थं तावत पञ्च-दशान्याज्यानीति। फलोपबन्धार्थं चित्रया यजेत पशुकाम इति।

तत्र पूर्वपक्षवादिनोऽभिप्रायः—युक्तं तावत् उद्भिदा यजेतेत्येव-मादीनां नामधेयत्वं यज्यर्थसामानाधिकरण्यात्। तथा आज्यादीनाम-प्याज्यैः स्तुवत इति स्तुत्यर्थसामानाधिकरण्यात्। यत्र पुनः भावार्थ-सामानाधिकरण्यं न प्रतीयते पञ्चदशान्याज्यानीति तत्र नामावगतिर्नास्ति

---

परिहरति। यथा तावदयुक्तत्वं तथोच्यते—गुणोपबन्धार्थं तावत् पञ्चदशान्याज्यानीति। आज्यशब्देन स्तोत्रविशेषं नामधेयेनोद्दिश्य तत्र पञ्चदशसङ्ख्या गुणो विधीयते। तेन गुणोपबन्धेनार्थवन्नाम। फलोपबन्धार्थं चित्रया यजेत पशुकाम इति। दधि मधु घृतमापो धानास्तण्डुलास्तत्संसृष्टं प्राजापत्यं भवतीति प्रकृते यागे फलोपबन्धः क्रियते चित्राशब्देन। अत्र पूर्वपक्षवादिनोऽभिप्रायः—युक्तं तावत् उद्भिदा यजेत इत्येवमादीनां नामत्वं यज्यर्थसामानाधिकरण्यात्। तथा आज्यादीनामपि आज्यैः स्तुवते पृष्ठैः स्तुवत इति स्तुत्यर्थसामानाधिकरण्यात् स्तुतिनामत्वम्। यत्र पुनः भावार्थसामानाधिकरण्यं न प्रतीयते पञ्चदशान्याज्यानीति तत्र नामधेयावगतिर्नास्ति। कस्मादित्याह—

भवन्ति, पृष्ठानि भवन्ति—इति च। गुणविधिकल्पनायामपि न लक्षणा ; तस्मात् गुणविधयः इत्येवं प्राप्तम्।

एवं प्राप्ते ब्रूमः, यस्मिन् गुणविधिर्नामधेयम्—इति संदिग्धे गुणोऽपरः उपदिश्यते, प्रधानेन कर्मणा तस्य संबन्धः, कर्मनामधेयं इत्यर्थः। गुणविधौ हि सति वाक्यं भिद्येत। पुंपशौ

---

अनुगतार्थत्वेपि सामानाधिकरण्यं न प्रतीयते पञ्चदशान्याज्यानीति तत्र नामावगतिर्नास्ति। अनुगतार्थत्वेपि सामानाधिकरण्यान्नामता उक्ता। न तदिहास्ति। तस्मान्न गुणोपबन्धेन नाम्नः शक्यतेऽर्थवत्ता वक्तुम्। युक्तं तावत् गुणोपबन्धे। फलोपबन्धे पुनः सामानाधिकरण्यसंभवात् किमिति नार्थवत्ता चित्रया यजेत पशुकाम इति।

उच्यते—नार्थवत्ता यजेत पशुकाम इत्येव सिद्धेः। तत्र हि सन्निधानादेव यागविशेषो लभ्यते न नामतः। मा भूद्विशेषः नामता तावन्न

---

अनुगतार्थत्वेपि सामानाधिकरण्यान्नामतोक्ता। येषामप्युद्भिदादीनामनुगतार्थत्वमस्ति तेषामपि सामानाधिकरण्यान्नामत्वमुक्तम्। न च तदिह सामानाधिकरण्यमस्ति। यत एव पञ्चदशान्याज्यानीति आज्यशब्दस्य कर्मनामधेयता नास्ति। तस्माद्गुणोपबन्धेन नाम्नः अर्थवत्ता न शक्यते वक्तुम्। अत्र चोदयति—युक्तं तावत् गुणोपबन्धे नाम्नोऽर्थवत्ता नास्तीति ; फलोपबन्धे पुनः सामानाधिकरण्यसंभवात् यजिशब्दोच्चारणे सति किमित्यर्थवत्ता न शक्यते वक्तुं चित्रया यजेत पशुकाम इत्यत्र। परिहरति—उच्यते —नार्थवत्ता शक्यते वक्तुं यजेत पशुकाम इत्येव प्रकृतवाचिना यजिनैव विशिष्टस्य यागस्य फलोपबन्धसिद्धेः। कुत इत्याह-तत्र हि सन्निधानादेव यागविशेषो लभ्यते न नामतः। अत्र चोदयति—मा भून्नामतो यागविशेषावगतिः। नामता तावन्नि-

प्राप्ते स्त्रीपशुः, पशवः फलं, चित्रो गुणः—इति न शक्यमेकेन वाक्येन विधातुम्। चित्रो गुणो विधीयमानः स्त्रियां विधीयेत, नासावग्नीषोमीये पशुकामे च विधीयेत, सोऽपि नाग्नीषोमीये। तथा पञ्चदशानि आज्यानि भवन्तीति आज्येषु पञ्चदशता; न चाविहितानि स्तोत्रेष्वाज्यानि भवन्ति, न चान्यद्विधायकं वाक्यं, तच्चैतदाज्यानि विदध्यात्, विहितेषु च पञ्चदशताम्। गम्यते च पञ्चदशताया आज्यानां च संबन्धः; स्तोत्रसंबन्धश्चाज्यानामविज्ञातः पञ्चदशतासंबन्धश्च, द्वावेतावर्थावेकवाक्यस्याशक्यौ

---

निराकर्तुं शक्यते। केन चोक्तं नामत्वं निराक्रियत इति। प्रयोजनं नास्तीत्येतावताऽऽक्षेपः। कथं पुनः गुणविधानं चित्रया यजेत पशुकाम इति। एवं गुणविधानं—अत्र निर्ज्ञातो यागविशेषः फलाय चोद्यते निर्ज्ञाते हि विशेषे पदान्तरावगतिः न विशेषायोपपद्यते। कुतः। निर्ज्ञातत्वादेव। यत्र हि विधेयोऽर्थः स्ववाक्यान्वितपदावगम्य एव भवति तत्र तत एव विशेषा-

---

वारयितुं न शक्यते सामानाधिकरण्यात्। परिहरति—केन चोक्तं नामत्वं निराक्रियत इति। प्रयोजनं नास्तीत्येतावताऽऽक्षेपः। कथं पुनर्गुणविधानं चित्रया यजेत पशुकाम इति? अयमभिप्रायः—यद्यपि प्रयोजनं नास्ति तथापि किमिति नामधेयत्वं न स्यात्। कथं गुणविधिरिति। उत्तरम्—एवं गुणविधानम्। अत्र हि निर्ज्ञातो यागविशेषः फलाय चोद्यते। भवत्वेवं तथापि किमित्याह—निर्ज्ञाते हि विशेषे पदान्तरावगतिः [1]न विशेषायोपपद्यते; कुतः? उत्तरम्—निर्ज्ञातत्वादेव। दधिमधुघृतमिति वाक्यान्निर्ज्ञातो विशेषरूपो यागः यजेत पशुकाम इति प्रकृतवाचिना यजिनैव विशेषो निर्ज्ञातः। यत्र हि विधेयोऽर्थः [2]स्वविधिवाक्यान्विनपदार्थावगम्य एव भवति तत्र तत एव विशेषा-

---

(1) B. नाविशेषाय B. A. पदन्तरम (2) C. स्ववाक्यान्वित पदावगभ्य

वगमः। वाक्यान्तरनिर्ज्ञातस्तु नात्मपरिज्ञानाय स्ववाक्ये पदान्वयमपेक्षते। अनपेक्षितस्य सामानाधिकरण्यमशाब्दम्। तस्माच्चित्रापदं विधेयतयाऽवगन्तव्यम्। यत्र तर्हि उपपदादेव विशेषावगतिः विहितस्याप्रकृतत्वात् भवतु तत्र प्रयोजनम्। इह तावदेकान्ततो नास्तीत्युदाहृतम्। अप्रकृतेपि च नैव नामधेयतयोपकरोति। अप्रकृते हि कर्मान्तर(मेव।)तैव। तत्र च पदद्वयार्थविधानं प्रदर्शितम्। अग्निहोत्रं जुहोति इति कुण्डपायिनामयने। तस्मान्नोत्पन्नस्योत्पद्यमानस्य वा फलोपबन्धेनाऽर्थवत्ता। तस्माच्चित्रयेति यत्रोपपद्यते तत्र विधिः कल्पनीयः

---

वगमः। यथोद्भिदा यजेतेति। **वाक्यान्तरनिर्ज्ञातस्तु नात्मपरिज्ञानाय स्ववाक्ये[1] पदान्वयमपेक्षते। अनपेक्षितस्य च सामानाधिकरण्यं शाब्दं न भवति।** आकाङ्क्षासन्निधियोग्यता हि संबन्धे हेतवः। यजेत पशुकाम इत्यत्र च न यजिर्नामधेयमाकाङ्क्षति विशेषपरिज्ञानाय; वाक्यान्तर एव विशेषपरिज्ञानात्। अतश्चान्वयाभावान्न नामधेयता। तस्मात् 'चित्रया' इत्यत्र विधेयतया चित्रात्वमवगन्तव्यम्। तत्र चोदयति—**यत्र तर्हि उपपदादेव विशेषावगमः विहितस्य अप्रकृतत्वात् भवतु तत्र** नामधेयस्य **प्रयोजनं** तद्बलेनैव विशेषावगमात्। परिहरति—**इह तावदेकान्ततो नास्तीत्**येतावदु**दाहृतम्। अप्रकृतेपि च नैव नामधेयतोपकरोति।** यदप्यप्रकृतनामधेययुक्तं वाक्यं फलाय यागं विदधाति तत्रापि न नाम्नो नामधेयतयान्वयः। कस्मादित्याह—**अप्रकृते हि कर्मान्तरतैव,** फलं प्रति कर्मणो विधेयत्वात्। अप्रकृतत्वाच्च कर्मणः कर्मान्तरत्वम्। **तत्र च पदद्वयार्थविधानम्।** नाम्नापि मुख्यकर्मसादृश्यमुपकारनिबन्धनं विधीयते। भावार्थशब्देनापि भावार्थविधानमिति[2] दर्शितम् **अग्निहोत्रं जुहोतीति कुण्डपायिनामयने।** तस्मादुत्पन्नस्य प्रकृतस्य कर्मणः फलोपबन्धेन उत्पद्यमानस्य वा कर्मान्तरस्य फलोपबन्धेन अर्थवत्त्वम् न भवति। **तस्माच्चित्रयेति यत्रोपपद्यते** गुणविधिःपशौ तत्रेदं गुणविधानं कल्प—

---

(1) **स्ववाक्यान्वितपदावगम्य** (2) C. **भावार्थः प्रदर्शितः**

यजेत पशुकाम इत्यनेनानाकाङ्क्षितत्वात्। तस्मात् गुणफलोपबन्धेनार्थ-वदित्ययुक्तम्।

अत्रोच्यते। नैतदयुक्तम्—यत्रापरो गुणश्चोद्यते तत्र पूर्वप्रति-पन्नकर्मनामधेयतैव प्रतीयते। न ह्यकर्मणि गुणो विधातुं शक्यते आश्रि-तत्वात्प्रयोगस्येति न्यायाभिधानात। सामानाधिकरण्याच्च स्थिते नामधेयत्वे शक्नोत्येव नामिनं प्रतिपादयितुम्। तस्मादुपपन्नं गुणोपबन्धेनार्थवदिति। युक्तमाज्यादिषु; चित्रयेति तु कथं? तत्र हि प्रकृतत्वादेव विशेषावग-

---

यितव्यम्। आज्यौषधसान्नाय्यादीनामचित्रत्वात यजेत पशुकाम इत्यनेनानाकाङ्क्षि-तत्वात्। तेन सहैकवाक्यत्वासंभवात् वाक्यं भित्वा चित्रापदं केवलं गुणविधानार्थम्। यजेत पशुकाम इति तु प्रकृतस्य यागस्य फले विधानम्। चित्राशब्दश्चाग्नीषोमीये पशावुत्कृष्टः गुणविधायकः। तथा च पञ्चदशान्याज्यानीति स्तोत्रे पञ्चदशसङ्ख्याकानामाज्यानां विधिरिति। तस्माद्गुणफलोपबन्धेनार्थवदित्ययुक्तमुक्तम्। उत्तरं— अत्रोच्यते। नैतदयुक्तं गुणफलोपबन्धेनार्थवदिति। कुत इत्याह—यत्रापरो गुणश्चोद्यते। यथा चित्रत्वे स्त्रीत्वं तथा आज्येषु पञ्चदशसङ्ख्या, तत्र पूर्वप्रतिपन्नकर्मनामधेयतैवा-र्थवती भवति। न ह्यकर्मणि गुणो विधातुं शक्यते। आश्रितत्वात्प्रयोगस्येति न्यायाभि-धानात्। गुणानुरक्तकर्मविधानेन हि गुणविधानं, तेन अकर्मणि गुणविधानं नास्ति। नाम्ना च कर्मोपस्थापनमिति नाम्नो गुणोपबन्धेनार्थवत्त्वात्। सामानाधिकरण्याच्च वाक्यान्तरे आज्यैः स्तुवत इत्यादौ नामत्वे स्थिते पञ्चदशान्याज्यानीति शक्नोत्येवमपि नाम नामिनं प्रतिपादयितुम्। तस्मादुपपन्नं गुणोपबन्धेनार्थवन्नामेति। युक्तमाज्यादिषु वाक्यभेदप्रसङ्गेन द्वयोरविधेयत्वात्। एकस्योद्देशकत्वे कर्मवचनतया आज्यशब्दस्यैवोद्देशकत्वात नाम्नोऽर्थवत्त्वम्। चित्रयेति तु कथमर्थवत्ता। तत्र हि प्रकृतत्वादेव विशेषावगतेः

मान्नार्थवत्ता शक्यते वक्तुम्। बाढं, शक्यते तत्रापि यदि न नाम स्यात् नोत्पन्नस्य फले विधानमुपपद्यते गुणश्रुतेः व्याघातात् ; फलार्थमिदं न गुणार्थमिति विशेषानवगमात्। अनवगमे चानध्यवसायः। अनध्यवसायाच्चाप्रामाण्यम्। तन्नामतया परिहृतमिति फलोपबन्धेनार्थवदिति युक्तम्। "न चामी यौगिका" इति यौगिकत्वनिराकरणं क्वोपयुज्यते ?। अयमभिप्रायः—यौगिकत्वे हि प्रकृतयागाभिधानसिद्धिः स्यात् ; यथा पाचकाय वेतनं देहीति सामानाधिकरण्याभावेपि प्रकृतपाचकाभिधानसिद्धिः। तस्मान्न चामी यौगिका इत्युक्तम्। जात्यभिधाने त्वत्र विधेयतैव। व्यक्त्यभिधानं हि विशेषा—

---

नास्यार्थवत्ता शक्यते वक्तुम्। उत्तरम्—बाढम्। शक्यते तत्रापि यदि नाम न स्यात् नोत्पन्नस्य फले विधानमुपपद्यते गुणश्रुतेर्व्याघातात्। एतदेव दर्शयति—फलार्थमिदं न गुणार्थमिति विशेषानवगमात्। यजिश्रवणमेतत् फलोपबन्धार्थमेव न गुणोपबन्धार्थमिति विशेषो नावगम्यते। अनवगम्यमाने च विशेषे अनध्यवसायः स्यात् अनध्यवसायाच्चाप्रामाण्यम्। तन्नामधेयतया परिहृतम्। नाम्नो विधेयत्वात् फलोपबन्धनिश्चयादिति चित्रयेति युक्तम्। अत्र पूर्वपक्षभाष्यं "नचामी यौगिका" इति[1]। तदाक्षिपति—यौगिकत्वनिराकरणं कोपयुज्यते।

समाधत्ते—अयमभिप्रायः-यौगिकत्वे हि प्रकृतयागाभिधानसिद्धिः स्यात् यथा पाचकाय वेतनं देहीति पुरुषविशेषवाचिना शब्देन सामानाधिकरण्याभावेपि प्रकृतपाचकाभिधानसिद्धिः तथेहापि यौगिकपक्षे प्रकृतयागवचनतैव स्यात् ततश्च पूर्वपक्षो न सिध्यति। तस्मान्न चामी यौगिका इत्युक्तम्। ननु जातिवचनत्वेपि किमिति नामता न भवतीत्यत्राह—जात्यभिधाने तु विधेयतैव नातेर्न्याय्या। व्यक्त्यभिधानं हि विशेषा—

---

(1) p. 198

पेक्षं भवति। न चायौगिको व्यक्त्यभिधायी भवति। एवं चित्रयेति गुण-मात्राभिधानात् जात्यभिधायिभिस्तुल्यता। "चित्रया यजेतेति च यागानुवादो निर्ज्ञातत्वान्न यागविधिः" इत्यनेन किं प्रदर्शितम् ? अनाकाङ्क्षितत्वं चित्रा-पदस्य अनाकाङ्क्षितत्वे च सामानाधिकरण्याभावः, तदभावान्न नामतेति। तस्मात् फलविधौ न नामतयोपकारिताऽवगम्यत इति। "गुणफलकल्पनायां यजतेरविवक्षा[1]" इति किमनेनाशङ्कितम् ? यतो गुणफलसम्बन्धेपि नैव नाम्नोऽर्थवत्तास्ति। प्रत्युत राद्धान्तिनैतन्निराकरणीयं नाम्नोऽर्थवत्तां वदता। तस्मादसम्बद्धमेवेदं भाष्यखण्डलकं मनसि विपरिवर्तते। अत्रोच्यते।

---

पेक्षं भवति। न चायौगिको व्यक्त्यभिधायी भवति। एवं चित्रयेति गुणमात्रा-भिधानात् जात्यभिधायिभिः तुल्यता। तेनायमपि प्रकृताभिधायी न भवति। "चित्रया यजेतेति च यागानुवादो विज्ञातत्वान्न यागविधिः" इत्यनेन भाष्येण[1] किं प्रदर्शितम्। उत्तरं—अनाकाङ्क्षितत्वं[2] नाम्नः चित्रापदस्य। यस्मादयमनुवादः तस्मान्निर्ज्ञातविशेषत्वात् विशेषज्ञानाय नाम नाकाङ्क्षति। अनाकाङ्क्षितस्य च सामानाधिकरण्याभावः। तदभावान्न नामतेति। तस्मात्फलविधौ न नामधेयतयोपकारिताऽवगम्यत इति। गुणफलकल्पनायां यजतेरविवक्षेति वदताऽनेन पूर्वपक्षिणा किं [3]निराकार्यमाशङ्कितम् ? ननु गुणफलसंबन्ध एवोच्यते नासावाशङ्कनीयः पूर्वपक्षिणो हि गुणफलसंबन्धेन नाम्नोऽर्थवत्ता नास्तीति प्रतिपाद्यम्। तदेव तस्याशङ्कनीयं येनैव नाम्नोऽर्थवत्वम्। न च गुणफलसम्बन्धेऽपि नाम्नोऽर्थवत्तास्ति इति। तदाह—यतो गुणफलसंबन्धेपि[4] नैव नाम्नो ऽर्थवत्ता भवति। प्रत्युत राद्धान्तिना एतन्निराकरणीयं नाम्नोऽर्थवत्तां वदता राद्धान्तिना तस्मादसम्बद्धमेवेदं भाष्यखण्डलकं मनसि विपरिवर्तते। समाधाता आह—अत्रोच्यते

---

(1) p. 198 (2) A. अनाकाङ्क्षितत्वान्नाम्नः (3) B. निराकार्यतया (4) संबन्धेन

गुणफलकल्पनायां न नाम शक्यते निवर्तयितुम्। कुतः? यस्माद्यजतेरविवक्षा। अविवक्षायां चानाश्रितो गुणो न शक्यते फलाय विधातुं च। अन्यतः प्रवृत्तिर्हि कर्मणो गुणफलसम्बन्धस्य निमित्तम्। न च पशुकामविधानादृते यज्यर्थस्य प्रवर्तकमस्ति। तस्मात् पशुकामसम्बन्धापरित्यागे चित्रापदस्य नामतैवावशिष्यते। तस्मा-दुभयेनानाकाङ्क्षितत्वात् क्वचिद्गुणानुरूपो गुणविधिः प्रतिपत्तव्यः।

---

**गुणफलकल्पनायां न नाम शक्यते निवर्तयितुं** तेन पूर्वपक्षी गुणफलसंबन्धं निराकरोति। कुतो निवर्तयितुं न शक्यते[1]। उत्तरं—**यस्माद्यजतेरविवक्षा। अविवक्षायां च अनाश्रितः** भावार्थो, न च भावार्थानाश्रितो **गुणः फलाय विधातुं शक्यते।** कस्मात् पुनः यजतेरविवक्षेत्याशङ्क्याह—**अन्यतः प्रवृत्तिर्हि कर्मणो गुणफलसंबन्धस्य निमित्तं** कर्मणोऽन्यतःप्रवृत्तत्वादविधीयमाने गुणात् फलमितिर्भवति। **न च पशुकामविधानादृते[2] यज्य-र्थस्य** कृते अन्यस्य **प्रवर्तकत्वमस्ति।** तस्माद्यजतेरविवक्षा। चित्राशब्दस्य तु पशुकामसंबन्धः। **तस्मात् पशुकामसंबन्धापरित्यागे चित्रापदस्य नामतैवावशिष्यते[3]।** तेन पूर्वपक्षी चित्राशब्दस्य गुणफलसंबन्धाश्रयणेनापि पशुकामसंबन्धमेकान्ततो निराकरोति। स हि मन्यते यद्यहं चित्राशब्दस्य च गुणफलसंबन्धेनापि पशुकामसंबन्धमभ्युपैमि तदा गुणफलसंबन्धासंभवेन तस्मिन्निरस्ते एकवाक्यता[4] परित्यागात्। अन्यथा चित्राशब्दपशुकामशब्दयोः [5]एकवाक्यत्वात् नामतैव चित्राशब्दस्यापद्येत। तेन प्रयत्नेन गुणफलसंबन्धेनापि एकवाक्यतां दूरत एव निराकरोमि। **तस्मादुभयेन** पशुकामपदेन यागेन च **अनाकाङ्क्षितत्वात्** चित्राशब्दस्य **क्वचित् गुणानुरूपो गुणविधिः प्रतिपत्तव्यः।** भावार्थेनाधिकारिणः[6] संबन्धः इत्यभावार्थं चित्रा-पदं पशुकामपदेनानाकाङ्क्ष्यते। निर्ज्ञातविशेषेण च यागेनापि स्वविशेषज्ञानाय नामतया नाकाङ्क्ष्यते। न यत्रायं चित्राख्यो गुणो विधातुं योग्यः तत्र गुणविधिरयं प्रतिपत्तव्यः। अपर-

---

(1) B. शक्यत इत्याह (2) B. यज्यर्थस्यान्यत्प्रवर्तकमस्ति (3) A. वसीयते (4) त्वापरि (5) त्वसंभवात् (6) रिणा चासंबन्धः

**गुणविधिकल्पनायामपि न लक्षणेति**[1]। लक्षणाश्रयणे हि प्रमाणान्तरप्रमेयता दोष उक्तः। असावप्यत्र समानाधिकरणसम्बन्धाभावान्नास्तीति सिद्धो गुणविधिः। अतः सिद्धं गुणफलोपबन्धेनार्थवन्नामेति। उच्यते। नात्र गुणविधिः सम्भवति, नामार्थविधाने हि सिद्धस्यार्थस्य क्रियानुप्रवेशितया विधानं न पुनः स्वार्थस्य कार्यतया ततः किम्? इदं ततो भवति। यत्रायं गुणः सिद्धः सन् कर्मौपयिकतां प्रतिपद्यते तत्र विधातव्यम्। अतः पशावस्य विधानं तत्र च विधीयमाने अस्यापरो गुणो विधातव्यः स्त्रीत्वं; यदि पुनः

---

मपि पूर्वपक्षोपोद्बलकं भाष्यं व्याचष्टे—**गुणविधिकल्पनायामपि न लक्षणेति। लक्षणाश्रयणे हि प्रमाणान्तरप्रमेयता दोष उक्तः।** प्रमाणान्तरेण हि प्रतीत्य अर्थं तत्र तात्पर्यमवधार्य सर्वत्र लक्षणा भवति सा च वेदे महान् दोषः। मन्त्राणामर्थवादानां च विध्युद्देशानां [2]सापेक्षत्वप्रसङ्गात्। **असावप्यत्र समानाधिकरणपदसंबन्धाभावान्नास्तीत्युक्तम्।** उद्भिदेत्यत्र हि यदि यागेन सह सामानाधिकरण्याश्रयणेन [3]गुणो विधेयः स्यात् तदा मत्वर्थलक्षणादोष उक्तः। इह सामानाधिकरण्याश्रयणे[4] गुणविधिर्नास्ति किन्तु वैयधिकरण्येनैव यत्पशुना यजेत तत् चित्रयेति। तस्मान्न मत्वर्थलक्षणा दोष इति **सिद्धो गुणविधिः।** अतःसिद्धं [5]गुणफलोपबन्धेनार्थवन्नामेति। **उच्यते। नात्र गुणविधिः संभवति। नामार्थविधाने हि सिद्धस्यार्थस्य** स्वतो विधानासंभवात् **क्रियानुप्रवेशितया विधानं न पुनः स्वार्थस्य कार्यतया** गुण एव साध्यतया न विधीयत इत्यर्थः। **ततः किम्? इदं ततो भवति यत्रायं गुणविधिः सिद्धः सन् कर्मौपयिकतां प्रतिपद्यते तत्र विधातव्यो** गुणः **पशावस्य विधानं** पशोश्चित्रत्वस्य संभवात्। भवत्वेवं तथापि किमित्यत्राह—**तत्र विधीयमाने** चित्रत्वेऽस्य **पशोः अपरो गुणो विधातव्यः स्त्रीत्वं** नाम। ततश्चोत्कर्षेऽप्यपरो वाक्यभेदः। **यदि पुन-**

---

(1) p. 199 (2) प्रमाणान्तरापेक्षत्व (3) गुणविधिः (4) रण्येन (5) B. adds न

सारस्वत्यां विधानं तत्रापि पशुकामसम्बन्धोऽवगम्यमानः त्यक्तव्यो भविष्यति। अग्नीषोमीयगुणप्राप्तिश्च सारस्वत्यां बाधनीया भवति। अतः सर्वप्राणिद्रव्यकाणां यागानां प्रकृतिभूतेऽग्नीषोमीये विधानमस्य स्ववाक्यान्वयनिरस्तस्य। तत्र च द्वयमिदमप्राप्तं पुनर्विधातव्यं भवति। तस्मान्न गुणविधिः संभवति। अतः प्रतीयमानान्वयनिमित्तताऽस्य कल्पयितुं न्याय्या। सा चात्र नाम्नो न संभवतीत्युक्तम्। तस्मात् सिद्धं नामधेयत्वम्। फलोपबन्धेनार्थवदित्येतदपि प्रदर्शितम्। तथा पञ्चदशान्याज्यानीति गुणविधिपक्षे गुणद्वयविधानं; तच्च न संभवति। अत एकमत्र लक्षणतया ग्रहीतव्यम्। तच्च कर्मणः तस्माद्वाक्यान्तरे

---

स्सारस्वत्यां विधानं तत्रापि स्त्रीत्वस्य[1]विधानेपि पशुकामपदसंबन्धोऽवगम्यमानस्त्यक्तव्यो भवति। अग्नीषोमीयगुणप्राप्तिश्च सारस्वत्यां बाधनीया भवति। अग्नीषोमीये हि वर्णविशेषो नियतः। सोऽतिदेशप्राप्तो बाधनीयः। अतो वाक्यभेदस्यावश्यंभावित्वात् सर्वप्राणिद्रव्यकरणकयागानां प्रकृतिभूतेऽग्नीषोमीये विधानमस्य स्ववाक्यान्वयान्निरस्तस्य। तत्र द्वयमपि चित्रत्वं स्त्रीत्वं च प्राप्तं पुनर्विधातव्यं भवति तेन पुनरपि वाक्यभेदः तस्मान्न गुणविधिः संभवति। अतः [2]प्रतीयमाने-एकवाक्यत्वे निमित्तताऽस्य कल्पयितुं न्याय्या। [3]सा च क्रते नाम्नो न संभवतीत्युक्तम्। तस्मात्सिद्धं नामधेयत्वम्। तेन फलोपबन्धेनार्थवत्त्वेत्येतदपि दर्शितम्। गुणत्वे हि किं गुणसंबन्धार्थमिदं वाक्यमुत फलसंबन्धार्थमित्यनध्यवसायः स नामधेयत्वेन परिहियत इति प्रागेव दर्शितम्। तथा पञ्चदशान्याज्यानीति गुणविधिपक्षे गुणद्वयविधानं सङ्ख्याया आज्यानां च विधानात्। तच्च न संभवति एकवाक्यत्वात्। अतः एकमत्रपदं लक्षणया उद्देशकतया ग्रहीतव्यम्। तच्च कर्मणस्सम्बन्धि। तस्माद्वाक्यान्तरे

---

(1) R. स्याविधानेपि (2) A. प्रतीयमानान्वयनि (3) A. सा चात्र नाम्नो

विधातुम्। अथ नु कर्मनामधेयं, नैष विरोधो भवति, केवलं संख्यासंबन्धस्तदानीं विधीयते। अपि चाज्यानि स्तोत्राणीत्यनेन शब्देन लक्षणयैव गुणो विधीयेत। अतः कर्मणां नामधेयानि वाक्यान्तरैः 'आज्यैः स्तुवते, पृष्ठैः स्तुवते' इत्येव-

---

निर्ज्ञातस्य कर्मणो वाचकस्याज्यशब्दस्यैव लक्षणत्वमुपपद्यते। एवं परंपरासंबन्धावगतिर्न परित्यक्ता भवति। पञ्चदशान्याज्यानीति। यदप्युक्तं गुणविधिपक्षे नात्र लक्षणेति। तदप्ययुक्तम्। कस्मात्? आज्यानि भवन्ति इति यत्र आज्यानि विधीयन्ते स भवतिना वक्तव्यः। अतोऽत्रा प्याज्यवन्ति भवन्तीति सैव लक्षणा।

यत्त्वप्रसिद्धं कर्मणो नामधेयत्वमुक्तं तत कर्मणो लक्षणत्वात् सिद्धमिति, प्रवृत्तिनिमित्तस्य च सर्वत्र विद्यमानत्वात 'यदाजिमीयु' इत्येवमादेः। अथ कस्मात् न पञ्चदशसङ्ख्याविशिष्टान्याज्यानि स्तोत्रेषु विधीयन्त

---

निर्ज्ञातस्य कर्मणो वाचकस्याज्यशब्दस्यैव लक्षणत्वमुपपद्यते। एवं परस्परसंबन्धावगतिर्न परित्यक्ता भवति। पञ्चदशान्याज्यानीह भवन्तीत्यत्र[1]। यदप्युक्तं गुणविधिपक्षेपि नात्र लक्षणेति, तदप्ययुक्तं, कस्मात्? यस्मात् आज्यानि भवन्तीति यत्राज्यानि विधीयन्ते स भवतिना वक्तव्यः। तेनाज्यवन्ति स्तोत्राणि भवन्तीत्यर्थः। अतोऽप्यत्राज्यवन्ति भवन्तीति। सैव लक्षणा। यत्त्वप्रसिद्धं कर्मणो नामधेयत्वमित्युक्तं तत् कर्मलक्षणत्वात् सिद्धमिति। आज्यशब्देन कर्मण उद्दिश्यमानत्वात् सिद्धं कर्मनामधेयत्वं प्रवृत्तिनिमित्तस्य च सर्वत्र विद्यमानत्वात् यदाजिमीयुः इत्येवमादेः। अत्र भाष्यकारेण चोदितम्। अथ कस्मात न पञ्चदशसङ्ख्याविशिष्टान्याज्यानि स्तोत्रेषु विधीयन्त

---

(1) B. adds आज्यानीति

मादिभिर्विहितानाम् । यत्तु अप्रसिद्धं कर्मणां नामधेयम् इति, अवयवप्रसिद्ध्या आजिगमनादाज्यानि । कथमाजिगमनम्? इति । अर्थवादवचनात्, 'यदाजिमीयुस्तदाज्यानामाज्यत्वम्' इति । स्पर्शवचनात्पृष्ठानि । पवमानार्थमन्त्रकत्वाद्बहिः संबन्धाच्च बहिष्पवमानम् । 'दधि मधु पयो घृतं धानास्तण्डुला उदकं तत्संसृष्टं प्राजापत्यं' इति नानाविधद्रव्यत्वाच्चित्रा । तस्मादेवंजातीयकानि कर्मनामधेयानि इति । अथ कस्मान्न पञ्चदशसंख्याविशिष्टानि आज्यानि स्तोत्रकर्मसु विधीयन्ते? विशिष्टानां वाचकस्य शब्दस्याभावात् ।

ननु पदद्वयमिदं वाचकं भविष्यति, पञ्चदशान्याज्यानि इति विशिष्टानां, तदेतेषु स्तोत्रेषु विधास्यति । नैतत्पद-

---

इति किमनेनानिराकृतमुपन्यस्तम्? पदद्वयार्थोऽन्यत्र विधीयते । किमेवं भविष्यति? अनावृत्तिर्वाक्यस्येत्यभिप्रायः । सिद्ध्यत्येवं यदि प्राग्विधानादनयोः संबन्धः सिद्धः स्यात् अग्नये पावकायेतिवत् ।

---

इति तदाक्षिपति—किमनेनानिराकृतमुपन्यस्तम्? उत्तरं—इदमुपन्यतम । पदद्वयार्थोऽन्यत्र[1]विधीयत इति । किमेवं भविष्यति? उत्तरं—अनावृत्तिर्वाक्यस्येत्यभिप्रायः । परस्परविशेषणविशेष्यभावेन स्थितं पदार्थद्वयं एकेनैव विधिना विधीयत [2]इत्यनावृत्तिः । अस्य चोद्यस्य परिहारभाष्यम् । "विशिष्टानां वाचकस्य शब्दस्याभावात" इति । तद्व्याचष्टे-सिद्ध्यत्येवं एकेनैव विधिना पदद्वयार्थो विधीयत इति यदि प्राग्विधानादनयोः सम्बन्धः सिद्धः स्यात्—अग्नये पावकायेतिवत् । यथा पावकस्याग्नेः प्राग्विधानात सिद्धं पावकत्वम् । न च

---

(1) R. र्थोऽप्यत्र (2) B. इत्यप्रवृत्तिः

**द्वयमपि विधायकम्, एकमत्र विधायकं, एकमुद्देशकम्, उभयस्मिन्विधायके परस्परेण संबन्धो न स्यात्; अविधायके स्तोत्रसंबन्धो न विधीयते, न चात्रैकं पदं विशेषणं प्रति उद्देशकं, स्तोत्रं प्रति विधायकं भवितुमर्हति। वचनव्यक्तिभेदादतोऽयमसमाधिः ॥**

---

न त्वसावस्ति। तस्माद्विध्युद्देशनिमित्त एवानयोः संबन्ध इति न पदद्वयार्थस्य विधेयता संभवति।

अथ कस्मादग्निप्रजापत्योरिवासंबन्धयोरपि विधानं न संभवति? परस्परसम्बन्धावगमात्। स च प्रमाणान्तरसिद्धो नास्तीति विध्युद्देशनिमित्तक एव ग्रहीतव्यः। तस्मात् सिद्धमिदमपि नामधेयमि[दमपीति]ति।

---

तथेहाज्यानि पञ्चदशान्येवेति [1]सिद्धम्। तदाह—**न त्वसावस्तीति। तस्माद्विध्युद्देशनिमित्तक** [2]**एवानयोः सम्बन्ध इति। अतो न पद्वयार्थस्य विधेयता सम्भवति।**

**अथ कस्मादग्निप्रजापत्योरिवासंबन्धयोरपि विधानं न संभवति?** यथाऽग्निहोत्रे यदग्नये च प्रजापतये चेत्यनेनान्योन्यासंबन्धयोरग्निप्रजापत्योरेकेनैव विधिना विधानं तथेहापि कस्मान्न भवतीत्यर्थः। [3]परिहरति-न सम्भवत्ययमसंबन्धयोर्विधानं **परस्परसंबन्धावगमात्** पञ्चदशान्याज्यानीति। तेन परस्परसंबन्धानुग्रहार्थमेकमत्रोद्देशकं एकं च विधेयं तदाह—**स च परस्पर संबन्धः प्रमाणान्तरसिद्धो नास्ति इति विध्युद्देशनिमित्तक एव परिग्रहीतव्यः। तस्मात्सिद्धं नामधेयमिदमपीति।**

---

(1) B. पञ्चदशानीत्येव (2) निमित्तकश्चानयोः (3) B. उत्तरं-न

अथ अग्निहोत्रादिशब्दानां यागनामधेयताधिकरणम् ॥

तत्प्रख्यश्चान्यशास्त्रम् ॥ ४ ॥

'अग्निहोत्रं जुहोति स्वर्गकामः' इति 'आघारमाघारयति' इति च समामनन्ति ; तत्र संशयः,—किं अग्निहोत्रशब्दः आघारशब्दश्च गुणविधी, उत कर्मनामधेये ? इति। गुणविधी —इति ब्रूमः। कुतः ?। गम्यते हि अग्नये होत्रमस्मिन् इति, तथा क्षरणसमर्थं द्रव्यं घृतादि आघारमाघारयति इति। प्रसिद्धिरेवमनुग्रहीष्यते। गुणविधिश्च दर्विहोमे, आघा–

---

तत्प्रख्यं चान्यशास्त्रम्। केन पुनर्विशेषेणात्र गुणविध्याशङ्का मत्वर्थलक्षणाभावात् गुणविधानेनापि सामानाधिकरण्योपपत्तिः। तथा च दर्शितं अग्नये होत्रमस्मिन्निति समासोऽयं होमवचनः। उपसर्जनार्थविधानेनापि गुणविधिर्भवत्येव यथा हिरण्यस्रज ऋत्विजो भवन्ति' इति। युक्तं तावत् अग्निहोत्रं जुहोतीति। आघारमाघारयतीति तु

---

तत्प्रख्यं चान्यशास्त्रम्। केन पुनर्विशेषेणात्र गुणविध्याशङ्का यां निवर्तयितुमिदमधिकरणमारब्धम्। उत्तरं—मत्वर्थलक्षणाभावात् गुणविधानेनापि सामानाधिकरण्योपपत्तिः। अग्निहोत्रं इति बहुव्रीहिरयं, तेन विनापि मत्वर्थलक्षणया सामानाधिकरण्यं सिद्ध्यतीत्यनेन विशेषेणात्र गुणविध्याशङ्का। तथा च दर्शितम्। अग्नये होत्रमस्मिन्नित्यग्निहोत्रमिति [1]समासोऽयं होमवचनः। होमस्यैवान्यपदार्थत्वात्। उपसर्जनार्थविधानेनापि गुणविधिर्भवत्येव यथा हिरण्यस्रज ऋत्विजो भवन्तीति। तेनात्रोपसर्जनीभूतोऽग्निर्देवता विधीयते। युक्तं तावदग्निहोत्रं जुहोतीति गुणविधानम्। आघारमाघारयतीति तु

---

(1) B. & C. स एवायं

**रश्चोपांशुयाजे, तत्रैतयोरर्थवत्ता प्रवृत्तिविशेषकरत्वञ्च । न च गुणविधिपक्षे लक्षणा भवति, यथोद्भिदा यजेत इति ।**

---

कथं ? नैवात्र सामानाधिकरण्येन प्रयोजनं, कर्मवचनतैवात्र न प्रतीयत इति गुणविधिः यत्राघार्यं द्रव्यं तत्रैवेदमाघारणं विधीयते ।

ननु चाघार्यद्रव्यको यागः आहवनीयसाध्यत्वात् प्राप्ताघारक एव किमाघारविधानेन ; होमाघारादाघारान्तरमिदं द्रव्यसंस्कारार्थमित्यभिप्रायः कर्मसाधनमाघारे शब्दं मन्वानस्य । अत एवोपांशुयाज इति प्रदर्शितम । तस्मादकर्मवचनतयैवास्मिन् उदाहरणे पूर्वपक्षः । अग्निहोत्रे तु कर्मवचनत्वेपि गुणविधिरविरुद्ध इत्युक्तम् ।

---

कथम् ? उत्तरं—नैवात्र सामानाधिकरण्येन प्रयोजनं, कर्मवचनतैवात्र न प्रतीयत इति गुणविधिरेव । आघारशब्दो न कर्मवचनः किन्त्वाघार्यं द्रव्यमाह—तस्येदमाघारणं संस्कारो गुणो विधीयते । एतदेवाह—यत्राघार्यद्रव्यं उपांशुयाजे तत्रैवेदमाघारणं विधीयत इति । ननु च आघार्यद्रव्यको यागः आहवनीयसाध्यत्वात् प्राप्ताघारक एव । सर्वे यजतयः तिष्ठद्धोमाः आहवनीयसाध्याः आहवनीये च होम इति दीर्घधाराक्षरणक्रिया आघार्यद्रव्यके यागे प्राप्तैवेति किमाघारविधानेन ? अप्राप्तप्रापकत्वाद्विधेः । उत्तरं —होमाघारादाघारान्तरमिदं द्रव्यसंस्कारान्तरं द्रव्यसंस्कारार्थमित्यभिप्रायः । अप्राप्तप्रापकत्वाद्विधेः कर्मसाधनत्वं अकर्तरि च कारके संज्ञायामिति घञन्तमाघारशब्दं मन्वानस्य यत एवाघार्यसंस्कारोऽयं अत एवोपांशुयाजे गुणविधिरिति प्रदर्शितम । तस्मात् अकर्मवचनतयैवास्मिन्नुदाहरणे पूर्वः पक्षः । अग्निहोत्रे तु कर्मवचनत्वेपि मत्वर्थलक्षणाभावात् गुणविधिरविरुद्ध इत्युक्तम् ।

अग्निहोत्रे समासेन अवगतं गुणविधानं; आघारेऽपि आघारं निर्वर्त्तयति इति श्रुत्यैव गुणो विधीयते। तस्मात् गुणविधी इत्येवं प्राप्ते।

ब्रूमः, 'तत्प्रख्यश्चान्यशास्त्रं', यौ गुणावेताभ्यां विधीयेते इत्याशङ्क्यते, तावन्यत एव अवगतौ, 'यदग्नये च प्रजापतये च सायं जुहोति' इति देवताविधानम्; 'चतुर्गृहीतं वा एतदभूत्त-

---

अत्रोच्यते—नात्र गुणविधिः संभवति। कुतः? प्राप्तत्वात् गुणानां, ये गुणा विधेयत्वेनोपन्यस्ताः ते अन्यत एव प्राप्ताः। अग्निस्तावत् यदग्नये च प्रजापतये चेत्यस्मात्। आघारणमपि 'सन्ततमाघारयति' 'ऋजुमाघारयति' इत्येवमादिभ्यः।

---

**अत्रोच्यते—नात्र गुणविधिः संभवति,** प्राप्तत्वाद्गुणानाम्। एतदेव विवृणोति —येऽत्र गुणा विधेयतयोपन्यस्ताः तेऽन्यत एव प्राप्ताः। **अग्निस्तावत् 'यदग्नये च प्रजापतये च' इत्येतस्माद्वाक्यात्** प्राप्तः तेनासौ न विधेय इति न गुणविधिः नामधेयमेवाग्निहोत्रपदम्। **आघारणमपि सन्ततमाघारयति, ऋजुमाघारयति इत्येवमादिभ्यः।** ननु चाघारयतीत्याघारणानुवादेन सान्तत्यादिविधिपराण्येतानि वाक्यानीति कथमेभ्य आघारणस्यैव प्राप्तिः। अथोच्येत सन्ततादिवाक्यान्येव सान्तत्यविशिष्टमाघारणं विदधतीति, तन्न, दध्ना जुहोति इतिवत् आघारविधिसन्निध्याम्नातानां गुणपरत्वावगमात्। अत्रोच्यते—आनर्थक्यं तावदाघारणविधेरपरिहार्यम्। तथा हि माभूदसौ, तदभावे सन्ततादिवाक्यान्येव विशिष्टाघारणविधायकानि सन्तु, न विधिवाक्यम्। न च वाच्यं सन्ततादिवाक्यानामाघारणविधिपरत्वे भेदः प्राप्नोतीति, गुणकर्मणां कार्यभेदाभावे भेदानवगमात्, यथा सोमक्रयस्य। अग्निहोत्रं जुहोतीति भवत्येतत् प्रयोजनं, दध्ना जुहोतीत्येवमादीनां विशिष्टकर्मविधायकत्वे भेदप्रसङ्गात्। नचार्थवत्त्वे संभवत्यानर्थक्यं युक्तम्। संभवति चाघारमाघारयतीत्यस्य यागविधायकत्वेनार्थवत्त्वम्। यदि हि स न

**स्याघारमाघार्य' इति आघारे च द्रव्यविधिः; अविदित-वेदनश्च विधिः इत्युच्यते, विदितं चात्रान्यतो गुणविधानं; तस्मान्न गुणविधी, कर्मनामधेये तु सम्भवतः, यस्मिन्नग्नये होत्रं होमो भवति, तदग्निहोत्रम्; दीर्घधारा क्षरणक्रिया प्रसिद्ध एवा-घारः, तस्मात् कर्मनामधेये; प्रसिद्ध्यादयश्चोक्तोत्तराः प्रजापति-**

---

किमिदमसम्बद्धमुच्यते ? किमिदमसंबद्धं ? दर्विहोमे गुणविधिरुक्तः। न च दर्विहोम एवैतद्विधानं यदग्नये च प्रजापतये चेति। तथो-पांशुयाजे आघारणमित्युक्तम्। न च सन्ततादयः उपां-

---

स्यात् तदोपांशुयाज एव सान्तत्यादिविधिपराणि सन्ततादिवाक्यानि स्युः। [1]तस्मिंस्तु यागविधायके तत्रैवाघार्याज्यद्रव्यकत्वेन[2] प्राप्तमाघारणमाश्रित्य सान्तत्यादिविधिपराण्येतानि वाक्यानि भवन्ति इति। भाष्यकारेण त्वत्र द्रव्यविधिमाश्रित्य पूर्वपक्षितम्। चतुर्गृहीतमित्यनेन च द्रव्यस्य प्राप्तत्वात् राद्धान्तितम्। तत्र तावत् कथमुपांशुयाजे चतुर्गृहीतं वा एतदित्यने-नाज्यविधिः न ह्याघारशब्देनोपांशुयाजः शक्यते वक्तुम्। अथाघार्यद्रव्यकत्वात् आघार इत्युच्यते इतरेतराश्रयं प्राप्नोति। उच्यते, चतुर्गृहीतं वा एतदित्यनेनेदमुपदिश्यते आज्येन चतुर्गृहीतेन कर्म कुर्यादिति। तच्च द्रव्यशून्यत्वादुपांशुयाज एवावतिष्ठते। तस्य चाज्य-द्रव्यकत्वे सति आघारशब्द एवार्थप्राप्तानुवादक इत्यदोषः। एतच्च भाष्यकारेणेत्थमुक्तम् यदि द्रव्यविधिना वा आघारणद्रव्यसंस्कारविधिना वा पूर्वपक्ष्यते तथापि शास्त्रान्तरेण विधेः पूर्वपक्षिणोक्तिसंभवाद्विधानानुपपत्तेः तन्नामधेयतेति। एतमेव सिद्धान्तमाक्षिपति—किमिदम-संबद्धमुच्यते ? राद्धान्ती पृच्छति—[3]किमिदमसंबद्धम ? आक्षेप्ता आह—इदमत्रासंबद्धं; **दर्विहोमे गुणविधिरित्युक्यं** पूर्वपक्षिणा। **न च दर्विहोमे यदग्नये च प्रजापतये चेत्येतद्विधानम् तथोपांशुयाजे आघारणं** पूर्वपक्षिणोक्तम्। **न च सन्ततादयः उपां-**

---

(1) A. सिद्धेतु, यागविधायकत्वे (2) B. अद्रव्यकत्वेन (3) B. किमत्र

निवृत्त्यर्थमग्निविधानं भविष्यति इति चेत्। नैतदेवम्, अग्निं हि एष विधातुं शक्नोति, न प्रजापतिं प्रतिषेद्धुं; प्रतिषिद्ध्यमानस्य च प्रजापतेर्विधानमनर्थकं स्यात्; प्रजापतिर्देवता इति गम्यते, गम्यमानं च न शक्यं मिथ्येति कल्पयितुम्; अतोऽयमसमाधिः। उच्यते, 'आघारमाघारयति' इति द्रव्यपरा चोदना, यैस्तु द्रव्यं चिकीर्ष्यते इति, द्रव्यं ह्यनया क्रियया क्षार्यते, क्षारितं च यागं साधयति; तत्कस्य प्रधानस्य कर्मणो नामधेयम्? इति। उच्यते,

---

शुयाजे गुणविधयः तदिदं वियत्पदमिव प्रतिभाति।

अत्र वदामः। गुणविधिपक्षे दर्विहोम एवैतद्विधानं उपांशुयाजे च गतम्। न तर्हि तत्प्रख्यता राद्धान्तहेतुः। बाढं राद्धान्तहेतुः कथं? तत्प्रख्यतापि हि दर्विहोम एव विषयान्तरापेक्षित्वात्।

---

शुयाजे गुणविधयः। उपसंहरति—**तदिदं वियत्पदमिव प्रतिभाति**। समाधत्ते—**अत्र वदामः गुणविधिपक्षे दर्विहोम एवैतद्विधानम्**—अग्निहोत्रं जुहोतीति। तथोपांशुयाजे आघारमाघारयतीति। ततश्च सन्निहितमाश्रयमलभमानो यदग्नये चेति देवताविधिः सन्ततमाघारयतीति च सान्तत्यविधिः दर्विहोमं उपांशुयाजं चोपसंक्रामतः। ततश्च ताभ्यामेव विहितत्वात् अग्निहोत्रं आघारमिति च (न) गुणविधिरुपपद्यत इति संबद्धमेवोक्तमिति भावः। एतमेव भावमबुध्वा चोदयति—**न तर्हि तत्प्रख्यता राद्धान्तहेतुः**। दर्विहोमोपांशुयाजयोर्गुणविधानात्। अत्र च यदग्नये चेति सन्निधानाभावात्। यदि स्वस्थान एव गुणविधिराशङ्कितो भवेत् तदा तत्रैव यदग्नये चेत्यादिसन्निधानात् भवेत् तत्प्रख्यता राद्धान्ते हेतुः। दर्विहोमोपांशुयाजयोस्तु गुणविधानाशङ्कायां तत्र च यदग्नयेचेत्यादीनामसन्निधानात् न शक्यते तत्प्रख्यं चान्‍शास्त्रमिति दर्शयितुम्। समाधाता आह—**बाढं राद्धान्ते हेतुः। कथं?** उत्तरं—**तत्प्रख्यतापि हि दर्विहोम एव**। तस्मिन् पक्षे यदग्नये चेत्यपि विधानं **विषयापेक्षित्वाद्गुणविधिः**

एतदेवाघारणं प्रधानकर्म। नन्वस्य द्रव्यदेवतं नास्ति। अस्ति इति ब्रूमः; तस्याघारमाघार्य' इति आज्यं द्रव्यं, मान्त्र-

---

'अग्निहोत्रं जुहोति' इतिवत्। एवं सन्ततमाघारयतीत्युपांशुयाज एव प्रयोजनवद्द्रव्यापेक्षित्वात् आघारमाघारयतीतिवत्। नामतापि हि तर्हि तेषामेवोपांशुयाजस्य च। अप्राप्तिज्ञो देवानां प्रियः। अन्यतो गुणविधानसिद्धेः। नाम्नश्चाविधेयत्वात् अग्निहोत्रं जुहोतीत्याख्यातार्थविधानात्। किमन्यदस्माद्वाक्यात् प्रतीयते विहिते चाख्यातार्थे यदग्नये च प्रजापतयेचेत्येतद्विषयमेव प्रकरणात्। अतः सिद्धमस्यैवेदं नामेति। एवमाघारयतीत्यपि निषिद्धे गुणविधाने किमन्यदाख्यातार्थाद्विधातुम्। स च

---

तत्रैव भवति अग्निहोत्रं जुहोतीतिवत्। यथा गुणविधिपक्षे अग्निहोत्रं जुहोतीति विषयापेक्षी दर्विहोममुपसङ्क्रामति तथा यदग्नये चेत्यपि। एवं सन्ततमाघारयतीत्यप्युपांशुयाज एव प्रयोजनवद्द्रव्यापेक्षित्वात् संस्कारविधीनां आघारमाघारयतीतिवत्। चोदयति —यदि तर्हि तत्प्रख्यशास्त्रान्तरसद्भावात् न गुणविधिः दर्विहोमे उपांशुयाजे वा नामतापि तर्हि तेषामेव दर्विहोमानामुपांशुयाजस्य च प्राप्नोति। परिहरति—अप्राप्तिज्ञो देवानां प्रियः। न्यायानभिज्ञ इत्यर्थः। अन्यतो गुणविधानसिद्धेः[1] नाम्नश्चाविधेयत्वात्। अग्निहोत्रं जुहोतीत्याख्यातार्थविधानात् किमन्यदस्माद्वाक्यात् प्रतीयते। यदा गुणविधित्वं निरस्तं तदा कर्मविधित्वमेव। विहिते चाख्यातार्थे यदग्नये च प्रजापतये चेत्येतद्विषयमेवावतिष्ठते प्रकरणात्। ततश्च तेनैव गुणयोगेन नामापि तस्यैव कर्मान्तरस्यैतद्विधिविधेयस्येति। तदाह—अतस्सिद्धमस्यैवेदं नामेति। एवमाघारयतीत्यपि निषिद्धे गुणविधाने किमन्यदाख्यातार्थाद्विधा[2]तुं शक्नोति। स एव विधेय आख्यातार्थो

---

(1) B. विधाने सिद्धेनाम्नश्च etc. (2) B. विदध्यात्

वर्णिकी देवता, 'इन्द्र ऊर्ध्वो अध्वर इत्याघारमाघारयति' इति मन्त्रो हि अभिदधत् कर्म, तत्साधनं वा कर्मणि समवैति ; एष च मन्त्र इन्द्रमभिधातुं शक्नोति, स यदि इन्द्रः तत्साधनं भवेत्, एवं अनेन मन्त्रेणाघारः शक्यते कर्तुम् ; तस्मात् इन्द्रो देवता, द्रव्यदेवतासंयुक्तं आघारणं ; तस्मात् यजतिः ; तस्य यजतेर्नामधेयम्--इति ॥

---

द्रव्यदेवतोपसंबन्धाद्धरतिवद्यजतिः। अतः सन्ततादयोऽपि तत्रैव। तस्मादिदमपि तस्यैव नामेति स्थितं सन्ततमाघारं निर्वर्तयतीत्यर्थः। कथं पुनरत्र न वाक्यभेदः, यदग्नये च प्रजापतये चेत्यनेकगुणविधानात्। नैककारकविशेषणविधाने अनेकगुणविधानाख्यो वाक्यभेदः। संबन्ध्यन्तरविधानं हि अनेकगुणतोच्यते न द्रव्यान्तरविधानम्।

---

द्रव्यदेवतासंबन्धात् हरतिवद्यजतिः। यथा प्रस्तरप्रहरणे द्रव्यदेवतासंबन्धाद्यजतिः तथाऽऽघारणमपि यजतिरेव। **अतस्सन्ततादयोऽपि तस्यैव।** **तस्मादिदमप्याघारपदं तस्यैव नामेति स्थितम्।** एवं च सति सन्ततमाघारयतीत्यस्य कोऽर्थः? सन्ततमाघारं निर्वर्तयतीत्यर्थः। ननु यदग्नये चेति देवताविधिः तदा **कथं पुनरत्र न वाक्यभेदः** यावता **यदग्नये च प्रजापतये** चेत्यग्निप्रजापतिरूपा**नेकगुणविधानात्** भवितव्यमेव वाक्यभेदेन। परिहरति—**नैककारकविशेषणविधानेऽनेकगुणविधानाख्यो वाक्यभेदः।** अस्यार्थः अत्र ह्येकस्य देवताख्यकारकस्य विशेषणतया अग्निप्रजापत्योरन्वयात्[1] अनेकगुणविधानमेवात्र नास्ति। कुतो वाक्यभेदः। **संबन्ध्यन्तरविधानं हि अनेकगुणतोच्यते, न द्रव्यान्तरविधानम्।** यत्र हि[2] कर्मणोऽनेकस्य संबन्धिनो विधानं तत्रानेकगुणविधानं ; यत्र पुनरेक एव कर्मसंबन्धी विधीयते यदि परं[3] स एव अनेकद्रव्यान्वितोऽर्थः तत्रानेकगुणविधिर्ना-

---

(1) प्रजापत्योरुपादानं (2) A. कर्मासंबन्धिनो (3) A. reads संबन्ध्यनेकद्रव्याश्रितः

अथ श्येनादिशब्दानाम् यागनामधेयताधिकरणम् ॥

तद्व्यपदेशं च ॥ ५ ॥

'अथैष श्येनेन अभिचरन्यजेत' 'अथैष सन्दंशेन अभिचरन्यजेत' 'अथैष गवाऽभिचरन्यजेत' इति समाम्नायन्ते; तत्र गुणविधिः, कर्मनामधेयम् इति सन्देहः। प्रसिद्ध्यादिभिः पूर्व-

---

तद्व्यपदेशं च। इह रूढिशब्दा उदाहरणं श्येनाज्यपृष्ठादयः। कः पुनरत्रोद्भिदधिकरणेन विशेषः? अयमसौ; प्रवृत्तिनिमित्तानुरोधी योगः, रूढिः पुनः न योगमनुवर्तते। ननु च

---

स्त्येव। इह चाग्निप्रजापती देवताश्रयत्वेनोपात्तौ न देवतात्वेन। देवता च कर्मसंबन्धिनी[1] न देवताधिष्ठाने। तेन नास्ति वाक्यभेदः। अथाप्येकैकाधिष्ठानद्वारेण देवतायाः कर्मसंवन्ध उपपत्स्यत इति कर्मावृत्तिरप्युपपद्यते तदिदमेकशास्त्रम्। तच्च चकारादिति निरवद्यम्।

तद्व्यपदेशश्च। अत्र भाष्यकारस्तावत श्येनेषुसंदंशशब्दानामेव नामधेयत्वं साधयति। अत्रोदाहरणनिष्ठः कश्चित आज्यादीनामनुदाहरणत्वमेव मा ग्रहीदित्याह—इह रूढिशब्दा उदाहरणं श्येनाज्यपृष्ठादयः। कः पुनरत्रोद्भिदधिकरणेन सह विशेषः येनेदमधिकरणमारब्धम्। यथा हि तत्र मत्वर्थलक्षणाभयात् कर्मनामधेयत्वमुक्तं तथा चात्रापि शक्यत एव नामधेयपक्षता वदितुम्। उत्तरं—अयमस्ति विशेषः कर्मणि प्रवृत्तिनिमित्तानुरोधी योगः। रूढिः पुनः न योगमनुवर्तते। अस्यार्थः—येऽमी आज्यपृष्ठादयः शब्दाः तेषां कर्मनामधेयत्वपक्षे यौगिकत्वं वक्तव्यम्। गुणविधिपक्षे रूढिः। यौगिकाच्च रूढिर्बलीयसी। यौगिकस्य योगानुवर्तित्वेन सापेक्षत्वात। रूढेश्च निरपेक्षत्वात। तेन रूढ्याश्रयणेन वरं मत्वर्थलक्षणेति पुनः गुणविधित्वमिहाशङ्कितम् तेनायमुद्भिदधिकरणेन सह

---

(1) कर्मसंबन्धिनी विधीयते

पक्षः, उद्भिदादीनामिव; ते तूद्भिदादयः क्रियानिमित्ताः शक्नुवन्ति यागं वदितुम्; इमे पुनर्जातिनिमित्ता न शक्नुवन्ति, तेन गुणविधयः इत्येवं प्राप्तम्। एवं प्राप्ते ब्रूमः, तद्व्यपदेशाच्च; तेन श्येनादिना प्रसिद्धेन यस्य व्यपदेशः, तच्च कर्म-

---

नामधेयत्वपक्षेपि श्येनेनेति नैव योगानुवर्तित्वं कल्पयितव्यम्। किं तर्हि? गौणमभिधानम्। न रूढिः गौणतां विहन्ति। रूढिमूलत्वाद्गौणा-भिधानस्य। तस्मात मतुब्लोपो निष्प्रमाणक इति वरं गौणतैवाश्रिता। इदमेवाज्ञानमपनेतुं भगवता भाष्यकारेणेदमुदाहृतम्। युक्तं मतु-ब्लोपभयात योगाश्रयणान्नामधेयमिति वक्तुमुद्भिदादिषु। न पुन-

---

विशेषः। उद्भिदादिशब्दानां पक्षद्वयेपि यौगिकत्वात्। कथं तर्हि राद्धान्तः? उच्यते, कर्मविधिपरत्वात् वाक्यस्योपपदार्थस्य तावत् विधानमयुक्तम्। यत्तु कचिद्विशिष्टविधानमप्याश्रीयते तत् पदान्तरसंबन्धस्यानन्यगतित्वात्। यत्र पुनर्विलंबिनी यौगिकता गतिरस्ति न तत्र मत्वर्थलक्षणामाश्रित्य गुणविशिष्टकर्मविधानोपपत्तिः। अत्रोदाहरणविशेषे चोदयति—ननु **नामधेयत्वपक्षेपि श्येनेनेति नैव योगानुवर्तित्वं कल्पनीयम्। किं तर्हि गौणमभिधानं** श्येन इव श्येन इति कर्मनामधेयपक्षेप्याश्रयणीयम्। **न च रूढिर्गौणतां विहन्ति, रूढिमूलकत्वाद्गौणाभिधानस्य। तस्मान्मतुब्लोपो निष्प्रमाणक इति** न तत्र पूर्वपक्षसंभावना, **वरं गौणतैवाश्रिता।** परिहरति—**इदमेवाज्ञानमपनेतुं भगवता भाष्यकारेणेदमुदाहृतम्।** यत एवास्मिन्नुदाहरणे पूर्वपक्षो दुर्लभः, अत एव सर्वेष्वपि रूढिशब्देषु उदाहरणभूतेषु भाष्यकारेण यत्र सिद्धान्तेपि[1] रूढित्वानपायः तदेवोदाहृतम्। पूर्वपक्षाभावबुद्ध्या कश्चिदिदमुदाहरणं न भवतीति मंस्तेति। यथा चात्र पूर्वपक्षभावस्तथा-दर्शयति—**युक्तं मतुब्लोपभयात् योगाश्रयणान्नामधेयत्वमिति वक्तुमुद्भिदादिषु। न पुनः**

---

(1) रूढिशब्दानपायः

**नामधेयं, श्रुतिर्हि नामधेयत्वे, लक्षणा गुणविधौ। यत्तु जातिशब्दा इमे न यागमभिवदन्ति इति, सादृश्यव्यपदेशा-दभिवदिष्यन्ति, एवं हि व्यपदेशो भवति, यथा वै श्येनो निपत्य आदत्ते, एवमयं द्विषन्तं भ्रातृव्यं निपत्य आदत्ते, यमभिचरन्ति**

---

लोपभयाल्लोपान्तराश्रयणं श्येने। लुप्तवतिका हि गौणानां वृत्तिः। तस्माद्वरं मतुब्लोप एवाश्रितः श्रौतार्थान्वयभावित्वादिति पुनः पूर्व-पक्षितम्। उच्यते; रूढावपि नामधेयतैव न्याय्या। ननु न रूढिर्योगमनुवर्तत इत्युक्तम्। योगोऽपि हि नैव रूढिमनुवर्तते। ननु चात्र पूर्वप्रतीता रूढिः योगमपहरति। सत्यम्। यदि निमित्ता-वगमपूर्वको वाक्यार्थः। अथ तु कार्यावगमपूर्वकं निमित्तत्वं तदा

---

**लोपभयाल्लोपान्तराश्रयणं,** श्येने मतुब्लोपभयेन वतिलोपाश्रयणम् गौणपक्षे न युक्तं **लुप्तवतिका हि गौणशब्दानां प्रवृत्तिः। तस्माद्वरं मतुब्लोप एवाश्रितः। श्रौतार्थान्वय-भावित्वात्।** गुणविधिपक्षे योऽसौ श्येनशब्दस्य श्रौतोऽर्थः तस्यैव कर्मणाऽन्वयो भवति। [1]तेन मतुब्लोपेऽपि श्रौतस्यान्वयो भवतीति स एव युक्तः गौणपक्षेतु न श्रौतस्यार्थस्य कर्मणान्वय. इति दुर्बलत्वमिति **पुनः पूर्वपक्षितम्।** सर्वोदाहरणसाधारणं राद्धान्तमाह—**उच्यते, रूढावपि** संभवन्त्यां **नामधेयतैवास्य न्याय्या।** पूर्वपक्षं स्मारयति—**ननु न रूढिर्योग-मनुवर्तत इत्युक्तम्।** राद्धान्ती वदति-यथा रूढिर्योगं नानुवर्तते तथा **योगोऽपि हि** तथा **नैव रूढिमनुवर्तते।** तेन को रूढेर्विशेषः परस्पराननुवर्तित्वे। पूर्वपक्षाशयमाविष्करोति—**ननु चात्र** निरपेक्षतया **पूर्वप्रवृत्ता रूढिः योगमपहरति।** राद्धान्ती स्वाशयमाह—**सत्यम-**पहरेद्योगं रूढिः **यदि निमित्तावगमपूर्वको वाक्यार्थः** प्रत्येतव्यो भवेत। तदा निमित्ताव-स्थायां रूढेर्बलीयस्त्वेन[2] योगः परित्यक्तः स्यात। **अथ तु कार्यावगमपूर्वकं निमित्तत्वं तदा**

---

(1) A. reads न तु instead of तेन (2) B. योगापहारित्वं स्यात्

श्येनेन इति, निपत्यादत्ते इत्यनेन सादृश्येन श्येनशब्दो यागे; यथा सिंहो देवदत्त इति, तस्मात् कर्मनामधेयम्। सन्दंशे 'सन्दंशेन यथा दुरादानमादत्ते'—इति, गवि 'यथा गावो गोपायन्ति'—इति, तस्मात् सन्दंशशब्दोऽपि कर्मनामधेयं, गोशब्दोऽपि॥

---

नैव, भावार्थगता च प्रतिपत्तिः। अतस्तदानुगुण्याद्योग एव प्रथमतरमवसीयत इत्यपरिगृहीता रूढिरिति प्रदर्शितं वाक्यशेषे यदाजिमीयुरित्येवमादौ। युक्तमाज्यादिषु; श्येने तु कथं? सामानाधिकरण्यात् सामानाधिकरण्यं हि गौणाभिधानेप्यबाधितं, वत्यर्थस्य विधेयत्वात्।

---

योगं रूढिर्नापहरति। वाक्यस्य[1] कार्यमवगतिर्भावार्थ एव। विरम्य यदा निमित्तानुसरणं क्रियते तदा वाक्यस्यैकार्थत्वात भावार्थमात्रमेव विधेयम्। विशिष्टविध्याश्रयणे अनेकार्थत्वप्रसङ्गात्। [2]अतः कथमेकार्थता निर्वहति इति निमित्तचिन्तायां योगस्यैवाश्रवणं, तेन न रूढ्या योगापहारः। नन्वेकार्थविधिपरत्वेपि वाक्यस्य किमिति गुणविधिमात्रपरत्वमेव, नेत्याह—[3]भावार्थाश्रिता च कार्यावगतिः भावार्थत्व एव विधिविषय इति न शुद्धे गुणमात्रे विधिसंभवः अतो भावार्थगतकार्यावगत्यानुगुण्यात् योग एव प्रथमतरमुपलभ्यते इत्यपरिगृहीता रूढिरिति हेतोः वाक्यशेषेपि हि आज्यादिशब्दानां यौगिकत्वं प्रदर्शितम्। 'यदाजिमीयुः तदाज्यानामाज्यत्वं' इत्येवमादौ। अन्यथा हि यौगिकत्वाभिधानं वाक्यशेषे निर्मूलं स्यात्। अत्र चोदयति—युक्तमाज्यादिषु नामत्वं श्येने तु कथं नामत्वं? पृच्छतोऽयमाशयः—सामानाधिकरण्येन हि नामत्वम्। न च श्येनशब्दस्य श्येनजातिवचनस्य गौणपक्षेपि यजिना सह सामानाधिकरण्यं भवति। आज्यादीनां तु यौगिकानामुपपद्यत एव सामानाधिकरण्यान्नामत्वम्। उत्तरं सामानाधिकरण्यात् श्येनेपि नामत्वम्। ननु सामानाधिकरण्यमेव नास्तीत्यत्राह—सामानाधिकरण्यं हि गौणाभिधानेप्यबाधितं भवति वत्यर्थस्य विधेयत्वात्। यदि हि वत्यर्थो न विधेयः

---

(1) A. & C. कार्यमवगम्य यदा नि (2) B. तत्र (3) B. भावार्थगता

अथ वाजपेयादिशब्दानां नामधेयताधिकरणम् ॥

नामधेये गुणश्रुतेः स्याद्विधानम् इति चेत् ॥ ६ ॥

**'वाजपेयेन स्वाराज्यकामो यजेत'—इति श्रूयते ; तत्र किं गुणविधिः, कर्मनामधेयम्—इति सन्देहः। एवं चेत् सन्देहः, दृश्यते गुणविधिः, न सन्देहः, श्रूयते हि गुणः, सोऽवगम्यमानो न शक्यो नास्ति इति वदितुं, तस्मात् गुणविधिः ॥**

---

मतुब्लोपे पुनः भिन्नाधिकरणताऽपरिहार्यैव विधेयत्वान्मत्वर्थस्य। तस्माद्वतेर्लोपो न मतुप इति सिद्धं नामधेयत्वम्।

**नामधेये गुणश्रुतेः।** किमर्थमिदमधिकरणं? यौगिकप्राप्तार्थरूढीनां नामधेयत्वं प्रतिपादितम्। शक्यते च वाजपेये तत्प्रख्यता वक्तुम्। सुराग्रहविधानात्। सर्वनामाक्षेपकमिदमधिकरणं

---

स्यात् तदा तत्परत्वात् आख्यातपरता नास्तीति सामानाधिकरण्यं न स्यात्। यदा तु वत्यर्थो नाविधेयः किन्तु कर्मणि प्रवृत्तिनिमित्तमात्रं तदा कर्मपरत्वात् सामानाधिकरण्ये सति नामधेयत्वं भवति। **मतुब्लोपे पुनः भिन्नाधिकरणताऽपरिहार्यैव विधेयत्वान्मत्वर्थस्य**[1]। तेनानेकार्थविधानादेकार्थावगमविरोधाद्वरं वतेर्लोपः **न मतुब्लोप इति सिद्धं नामधेयत्वं** श्येनशब्दस्यापि।

**नामधेये गुणश्रुतेः। किमर्थमिदमधिकरणम्?** यदि गुणविधिर्यावत् संभाव्येत तदा तन्निराकरणार्थमिदमधिकरणं भवेत्। न चासौ संभाव्यते। **यतो यौगिकप्राप्तार्थरूढीनां नामत्वं प्रतिपादितम्। शक्यते च वाजपेये तत्प्रख्यता वक्तुम्, सुराग्रहविधानात्।** [2]पेयरूपस्य वाजस्य विहितत्वात्। परिहारमाह-**सर्वनामाक्षेपकमिदमधिकरणं पूर्वपक्षदशायाम्।**

---

(1) B. विधेयत्वात्कर्मणः (2) A. पेयरूपा सुरा स्यात् तस्या विहितत्वात्

तुल्यत्वात् क्रिययोर्न ॥ ७ ॥

**नैतदेवं, तुल्ये हि इमे क्रिये स्यातां,—या च वाजपेयक्रिया, या च दर्शपूर्णमासक्रिया, उभयत्र दार्शपौर्णमासिको विध्यन्तः स्यात्, तथा च दीक्षाणामुपसदाञ्च दर्शनं नावकल्प्येत। 'सप्तदशदीक्षो वाजपेयः'—इति, 'सप्तदशोपसत्को वाजपेयः' इति। अथ वा 'तुल्यत्वात् क्रिययोर्न' इति यदि न गुणविधिः,**

---

यजेः तन्त्राभिधानोपन्यासात्। तन्त्राभिधानपक्षे गुणविधानेप्यनपेक्षतैव शब्दस्येति न शक्यं नामाभिधानम्। तस्मात् तन्त्राभिधाननिरासायेदमधिकरणमारभ्यते।

एवं तर्हि उद्भिदादयोप्यत्रोदाहरणम्; बाढम्। किमिति तर्हि वाजपेयेन स्वाराज्यकामो यजेतेत्युदाहृतम्? शिंशिपाचोद्यमेतत् उद्भिदादावप्युदाहृते किमित्युद्भिदुदाह्रियेतेति शक्यते वक्तुम्।

---

कुत इत्याह—यजेस्तन्त्राभिधानोपन्यासात्। तन्त्रेण यजिः फलगुणौ प्रति स्वार्थं समर्पयति। ननु सापेक्षत्वप्रसङ्गादपि तन्त्राभिधानत्याग इति तत्राह—**तन्त्राभिधानपक्षे च गुणविधानेप्यनपेक्षतैव शब्दस्य।** सकृदुच्चारण एव विधेयोद्देश्यत्वयोरवगतत्वात् विधीयमानस्यैवोद्देश्यत्वसंभवान्न गुणविधावाश्रयान्तरापेक्षास्ति इति न शक्यं नामाभिधानम्। **तस्मात्तन्त्राभिधाननिराकरणार्थमिदमधिकरणम्। एवं तर्हि उद्भिदादयोऽप्यत्रोदाहरणमेव।** ततश्चोदाहरणान्तरोपादानं व्यर्थमिति भावः। परिहरति—**बाढमुद्भिदादयोप्यत्रोदाहरणम्।** आक्षेप्ता आह **—किमिति तर्हि वाजपेयेन स्वाराज्यकामो यजेतेत्येवोदाहृतम्।** परिहरति-**शिंशिपाचोद्यमेतत्। उद्भिदादिष्वप्युदाहृतेषु किमित्युद्भिदुदाह्रियेतेति इति शक्यते वक्तुम्।**

ततस्तुल्यैषा वाजपेयक्रिया ज्योतिष्टोमक्रियया ; तत्र दीक्षाणा-मुपसदाश्च दर्शनमुपपन्नम् ; तस्मात् कर्मनामधेयमिति, लिङ्गं त्वेतत् । प्राप्तिः पुनरुत्तरसूत्रेण ॥

ऐकशब्द्ये परार्थवत ॥ ८ ॥

यदि गुणविधिः स्यात् , स्वार्थवत् परार्थवचाभिधानं विप्रतिषिध्येत यजेतेत्यस्य शब्दस्य । यदि 'स्वाराज्यकामो यजेत'— इति स्वाराज्यकामस्य यागं विधातुं स्वार्थमुच्यते, न तर्हि

---

तस्मादचोद्यमेतच्चोद्यामहे । शक्यते चात्र विशेषोऽपि कश्चिद्वक्तुम् । 'तुल्यत्वात्क्रिययोर्न' इति । वाजपेयगतमेतद्दर्शनम् तदपि सर्वार्थमेव । अत इदमुच्यते गुणविधिपक्षः श्रेयान् इति । कुतः ? एवं हि कार्यान्वय्युद्भिदादिः पदार्थो भवति । नामधेयपक्षे पुनः प्रवृत्तिनिमित्तमात्रं पदार्थः ।

---

तस्मादचोद्यमेवैतत् यच्चोद्यामहे । परिहारान्तरं चाह—शक्यते चात्र विशेषोऽपि कश्चिद्वक्तुं—'तुल्यत्वात् क्रिययोर्न' इति सूत्रेण यद्दीक्षोपसदादिदर्शनं एतद्वाजपेयगतमेव तेन तत्राभ्युच्चयहेतुं दर्शयितुं वाजपेय उदाहृतः ।

नन्वेवं सति दर्शनानुसारेण वाजपेय एव सूत्रकारस्योदाहरणत्वेन सम्मत इत्यत्राह —तदपि च दर्शनं सर्वार्थमेव [1]न्यायपूर्वं दर्शनम् न्यायश्च सर्वत्र तुल्य इति दर्शनमपि पुनः सर्वार्थम् । यत एव तन्त्राभिधाननिराकरणेनार्थवदिदमधिकरणम् । अत इदमुच्यते गुणविधिपक्ष एवात्र श्रेयान् इति । कुतः श्रेयानित्यत्राह—एवं हि कार्यान्वय्युद्भिदादिः पदार्थो भवति । नामधेयपक्षे पुनः प्रवृत्तिनिमित्तमात्रं पदार्थः । कस्मात् ? उत्तरं

---

(1) A. न्यायमूलम्

वाजपेयेन गुणेन संबन्धुं परार्थमनूद्येत । यागेन वाजपेयगुणकेन इति । भिद्येत हि तथा वाक्यम् । ननु द्वे एवैते वाक्ये प्रत्यक्षमुपलभामहे, 'स्वाराज्यकामो यजेत' इत्येतदेकं प्रत्यक्षं पदद्वयं, 'यजेत वाजपेयेन' इत्येतदपि प्रत्यक्षमेव । नैतदेवम्,

---

यस्माद्विहितस्योद्भित्त्वं नोद्भिदादिविधानं तस्मादप्रवृत्त्यर्थं निमित्तोपादानं प्रवृत्त्यर्थं वाक्यमिति कार्यनिमित्तयोरसामञ्जस्यं स्यात् ।

ननु च मत्वर्थलक्षणा अशब्दार्थभूताऽऽश्रयणीयेत्युक्तम् । सैव नास्तीत्युच्यते । कथं नास्ति ? आख्यातार्थो हि कार्यकारणसंबन्धेप्येकरूपोऽवगम्यते । साध्यमान एव हि साधनम् । उभयोरवगतौ किमिति मत्वर्थलक्षणा । तस्मादुपपन्नोऽयमर्थः वाजपेयेन यागं यागेन स्वाराज्यमिति ।

---

—यस्मात् विहितस्य कर्मणो नामधेयपक्ष उद्भित्त्वं उद्भिच्छब्दवाच्यत्वं न पुनरुद्भिदो [1]विधानम् । [2]तस्मादप्रवृत्त्यर्थं निमित्तोपादानं नामपक्षे, प्रवृत्त्यर्थं च वाक्यमिति कार्यनिमित्तयोरसामञ्जस्यं स्यात् । कार्यं प्रवृत्त्यात्मकं, निमित्तं च नामात्मकमिति विरोधः स्यात् । गुणविधिपक्षे तु स नास्तीति श्रेयान् गुणविधिः ! ननु च गुणविधिपक्षे मत्वर्थलक्षणा अशब्दार्थभूता आश्रयणीयेत्युक्तमुद्भिदधिकरणे । परिहरति—सैव नास्तीत्युच्यते । कथं नास्ति ? उत्तरं—आख्यातार्थो हि कार्यकारणसंबन्धेप्येकरूपोऽवगम्यते । यदा कार्यतयावगम्यते यदा च कारणतया तदा आख्यातार्थ एकेनैव रूपेणावगम्यते; साध्यमान एव हि साधनमाख्यातार्थो(न)भवति । उभयोरवगतौ किमिति मत्वर्थलक्षणा व्यधिकरणतया संबन्धावगमात । उद्भिदा यागः कार्यः तेन च यागेन पशव इति । तस्मादुपपन्नोऽयमर्थः वाजपेयेन यागः यागेन स्वाराज्यमिति न मत्वर्थलक्षणा । नत्वेवं सति स्पष्टो

---

(1) A. ऽभिधानम्　(2) B. तस्मादप्रवृत्त्यनिमित्तो

एवं सति चत्वारि पदान्युपलभेमहि, त्रीणि चैतान्युपलभ्यन्ते। उच्यते, यजेत इत्येतदुभाभ्यां संभन्त्स्यते। कथं सकृदुच्चारितं संबन्धमुभाभ्यामेष्यति? इति। रूपाभेदात्, ईदृशमे-

---

दर्शनतोऽन्यथाभिधानं; न पुनः शब्दार्थावगतौ।

ननु वस्तुधर्मोऽयं न शब्दधर्मः शब्दो हि अन्यथा विधेयतयाऽवगमयति। अन्यथा चोद्देश्यतया। सत्यम्। स तूभयरूपत्वात् तथाऽभिधेयता च, उभयाभिधानेपि यजेतेति शब्दः संबन्धिनोः समर्पयितुं क्षमः। क्षमश्चेत् सिद्धो गुणविधिः प्रामाण्यं च। मैवम्; तौ त्वक्षमौ तयोश्चेत् सामर्थ्यं नास्ति

---

वाक्यभेद इत्यत्राह—दर्शनतोऽन्यथाभिधानम्। परमार्थतस्तु साध्यसाधनोभयरूपः सकृदेवाख्यातेनोच्यते। तदाह—न शब्दार्थावगतौ भेदप्रतीतिः। ननु च वस्तुधर्मोऽयं साध्यमान एव हि साधनं भवति इति न शब्दधर्मः यागेन स्वाराज्यमिति न शब्दः उभयरूपावस्थामभिधातुं शक्नोतीत्यर्थः। अन्यथा हि विधेयतयाऽवगमयति शब्दः अन्यथा चोद्देश्यतया। परिहरति—सत्यं स तूभयरूपत्वात् तथाऽभिधेयता च। उभयाभिधानेपि यजेतेति शब्दः सम्बन्धिनोः समर्पयितुं क्षमः उभयरूपत्वात्। साध्यसाधनोभयरूपत्वात् यागस्य यथाभूत एवासौ तथाभूतस्यैव शब्देनाभिधानात्। यद्यप्युभयरूपोऽभिहितः तथापि उभयोः फलगुणयोः सम्बन्धिनोः कृते संबन्धित्वेन समर्पयितुं स तु यजेतेति शब्दः[1] क्षमः। क्षमश्चेत् सिद्धो गुणविधिः प्रामाण्यं च सिद्धम्। राद्धान्तमाह—मैवं; तौ तु संबन्धिनौ फलगुणौ यागेन संबन्धुमक्षमौ यतः न हि फलं साध्यसाधनोभयात्मकेन संबन्धुं क्षमम्। नापि गुणः, फलस्य साधनमात्रसंबन्धित्वात्। गुणस्य च साध्यमात्रसम्बन्धित्वात्। तयोश्चेत्सम्बन्धुं सामर्थ्यं नास्ति

---

(1) B. adds सम्बन्धिनोः समर्पयितुं

वास्य रूपं स्वाराज्यकामेन संबध्यमानस्य, ईदृशमेव वाजपेयेन, अतः तन्त्रेणोभाभ्यां संभन्त्स्यते—इति। नैतदस्ति,—ईदृशेनैव रूपेण इति। यद्यज्ञातः, ततो विधिः, यदि ज्ञातः, ततोऽनुवादः, न च ज्ञातोऽज्ञातश्च युगपत् सम्भवति इति। आह

---

किमभिधानसामर्थ्यं करिष्यति। तस्मात् द्वयोरर्थयोर्विधानात् कार्यद्वयमिदं प्राप्नोति—यजेत स्वाराज्यकामः वाजपेयेन यजेत इति च परस्परासम्बद्धम्। किं जातं? परस्परं सम्बन्धावगतिस्त्यक्ता भवति। अनवगम्यमानार्थः कल्पितो भवति। तदेवेदं सापेक्षत्वम्। विरुद्धा च मत्वर्थलक्षणा। तस्मात् उक्ताभिर्युक्तिभिः नामधेयपक्ष एव समञ्जसः। यत्पुनः कार्यनिमित्तयोरसामञ्जस्यमुक्तं; न, अविघातात्। विघाते चासामञ्जस्यं नानौपयिकत्वे। तस्माददोषः।

---

किमभिधानसामर्थ्यं करिष्यति। तस्मात् प्रत्येकं सम्बन्धयोग्यतया भेदेनात्राभिधानम्। ततश्च द्वयोरर्थयोर्विधानात् वाक्यस्य कार्यद्वयमिदं प्राप्नोति। यजेत स्वाराज्यकामः यजेत वाजपेयेन इति परस्परासम्बद्धम। यद्येवं किं जातं? उत्तरं—परस्परसंबन्धावगतिस्त्यक्ता भवति। अनवगम्यमानश्चार्थः कल्पितोभवति। तदेवेदं सापेक्षत्वमायातम्। न ह्यन्यथा शब्दानवगम्यार्थकल्पनोपपद्यते। ननु च मत्वर्थलक्षणाश्रयणेनैकवाक्यत्वमित्यत्राह—विरुद्धा च मत्वर्थलक्षणा। तस्मादुक्ताभिर्युक्तिभिः या उद्भिदधिकरणे तत्प्रख्याधिकरणे तद्व्यपदेशाधिकरणे च युक्तयः उक्ताः ताभिर्युक्तिभिः नामधेयत्वपक्ष एव युक्तः। यत् पुनः वाक्ये कार्यनिमित्तयोरसामञ्जस्यं उक्तं तन्नास्ति। अविघातात्। निमित्तस्य कार्याविघातान्नासामञ्जस्यम्। ननु चानौपयिकत्वेप्यसामञ्जस्यमेवेति तत्राह—विघाते चासामञ्जस्यं नानौपयिकत्वे। यद्यपि प्रवृत्त्यौपयिकत्वं नाम्नो नास्ति तथाप्यसामञ्जस्यं नास्तीत्यर्थः। तस्माददोषः। नास्ति कार्यनिमित्तविरोधलक्षणो दोषः।

—यदिदमुक्तं, गुणविधिपक्षेऽनुवादो 'यजेत' इति। यद्य-यमनुवादः, केन इदानीं गुणो विधीयते ?। वाजपेयशब्देन इति मावोचः, न ह्याख्यातमन्तरेण कृत्यं वा नाम-शब्दार्थव्यापारो विधीयते। यश्चाप्याख्यातशब्दो यजेत इति, सोऽनुवादः इत्युक्तं; केन इदानीं तस्य व्यापारो विधीयते ? अतः स्वाराज्यकामं गुणं च प्रति यजेत इति विधिः; तस्मादुभाभ्यां संबध्यते—इति। यद्युभयत्र विधिः वाजपेयो न स्वाराज्यकामस्य यागेन संबध्येत। द्वे ह्येते तदा वाक्ये, न स्वाराज्यकामस्य यागेन सह गुणविधेरेकवाक्यता। प्रकरणात् संबन्धः स्वाराज्यकामस्य यागेन इति चेत्, न, वाक्येन यागमात्रे विधानात्। अस्तु यागमात्रेण संबन्धः इति चेत्, न, स्वाराज्यकामस्य यागेन सह एकवाक्यताया गम्यमानत्वात्, तदेवं प्रकरणस्य वाक्यस्य चाबाधो युज्यते, यदि कर्मनामधेयम्। गुणविधिपक्षे हि सर्वे इमे वाक्यभेदादयो दोषाः प्रादुर्भवेयुः; तस्मात् कर्मनामधेयं वाजपेयशब्दः इति सिद्धम् ॥

अथाग्नेयादीनामनामताधिकरणम् ॥

तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थे न चेदन्येन शिष्टाः ॥

'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो

---

तद्गुणास्तु विधीयेरन्। किमर्थमिदमधिकरणमारभ्यते ? कोऽयं प्रश्नः ? ननु चाग्नेयादयो गुणविधयः न नामधेयानीति ज्ञातुं; युक्तम् यौगिक-

---

तद्गुणास्तु ॥ किमर्थमिदमधिकरणमारभ्यते ? एकदेश्युत्तरमाह—कोऽयं प्रश्नः। ननु चाग्नेयादयो गुणविधयः न नामेति ज्ञातुम्। आक्षेप्ता दूषयति—युक्तं यौगिक-

भवति ' इत्येवमादयः श्रूयन्ते; तत्र सन्देहः, किं 'आग्नेयो-ऽग्नीषोमीयः ' इत्येवमादयो गुणविधयः, कर्मनामधेयानि ? इति। किं तावत् प्राप्तं ?--गुणविधौ सत्यनेको गुणो विधीयेत, अग्निपुरोडाशाष्टाकपालः--इति, तस्मान्न गुणविधयः इत्येवं प्राप्ते।

ब्रूमः,—तच्च कर्म, गुणाश्चास्य विधीयेरन्, अविभक्ता हि ते कर्मणो विधानार्थे तद्धितान्ते शब्दे; तत्र हि अष्टाकपालस्याग्ने-

---

प्राप्तार्थरूढीनां नामत्वम्। न च ' आग्नेयोऽष्टाकपाल' इत्यत्र नामधेयत्वं संभवति। आख्यातार्थसामानाधिकरण्याद्धि नामतोक्ता न चात्र भवतीत्याख्यातमविधेयार्थत्वात् भावार्थम् न चासौ विधेयः न चोक्ताद्धेतोः हेत्वन्तरं नामधेयेऽस्तीति प्रश्नः।

---

प्राप्तार्थरूढीनां नामधेयत्वं, न चाग्नेयोऽष्टाकपाल इत्यत्र नामधेयत्वं सम्भवति। कुत इत्याह—आख्यातार्थसामानाधिकरण्याद्धि नामतोक्ता। आख्यातार्थविधिपरे वाक्ये अर्था-न्तरस्य विधेयत्वायोगात पदान्तरमप्याख्यातार्थपरमेवेत्यनेन हेतुना नामतोक्ता। भवत्वेवं तथापि किमित्याह—न चात्र भवतीत्याख्यातमप्यविधेयार्थत्वात् भावार्थम्। यदे-तद्भवतीत्याख्यातं न तद्भावार्थम्! कस्माद्भावार्थं न भवतीति—अत्रोच्यते। अविधेयार्थत्वात्। यदि भवत्यर्थोऽपि भावरूपः किमित्यसौ विधेयरूपो न भवतीति ? न चासौ विधेयः, तेना-विधेयत्वादवगच्छामो न भावार्थत्वमिति। [1]भावार्थत्वे हि विधेयपरत्वाद्वाक्यस्य तत्सामानाधि-करण्यादाग्नेयशब्दस्य नामतोपपत्तिः। न चोक्ताद्धेतोर्विधीयमानाख्यातार्थसामानाधिकरण्य-रूपादन्यद्धेत्वन्तरं नामधेयत्वेऽस्तीत्यनेनाभिप्रायेणासाकमयं प्रश्नः किमर्थमिदमधिकरण-मारभ्यत इति मन्दत्वात् पूर्वपक्षस्य नेदमधिकरणमारब्धव्यमित्यर्थः। समाधाता आह

---

1. B. अभावार्थत्वे तद्विधिपरत्वाभावाद्वाक्यस्य तत्सामा etc.

यता विधीयते, स एष एवमाग्नेयो भवति, यद्यग्नये संकल्प्य दीयते, तेनायं अनेन प्रकारेण यागो विहितो भवति, स एवं विधीयमानो न शक्योऽग्निमष्टाकपालं चाविधाय विधातुम्, संबन्धो हि विधीयमानो न शक्यते सम्बन्धिनाववविधाय विहित इति वक्तुम्। तस्मात् गुणविधयः, अष्टसु कपालेषु संस्क्रिय-

---

अत्रोच्यते—पुनरपि सापेक्षतैवात्र शङ्क्यते, कथं? यथैवात्र नामधेयत्वं न संभवति भावार्थसामानाधिकरण्याभावात् तथा गुणविधानमपि विधेयभावार्थाश्रवणात्।

नन्वाग्नेय इति द्रव्यदेवतासंयोगश्रवणात् यज्यर्थो भावार्थः, सत्यं यदि द्रव्यदेवतासंयोगः श्रूयते। ननु चाग्नेय इति श्रूयते; सत्यम्, यद्यष्टा-

---

—अत्रोच्यते—पुनरपि सापेक्षतैवात्र शङ्क्यते। पूर्वपक्षे चोदनायाः सापेक्षत्वमाशङ्क्य सिद्धान्तेऽनपेक्षत्वं वक्तुमिदमधिकरणमारभ्यत[1] इत्यर्थः। कथं सापेक्षता आशङ्क्यते? उत्तरं—यथैव नामधेयत्वं न सम्भवति भावार्थसामानाधिकरण्याभावात् तथा गुण-विधानमपि भावार्थाश्रवणात्। भावार्थाश्रितो हि गुणविधिरिति। न चात्र भावार्थः श्रूयते यदाश्रितोऽयं गुणविधिः स्यात्। यदा गुणविधित्वं नामत्वं च न संभवति तदा गत्यन्तराभावात् प्रसक्तमप्रामाण्यम्। तच्च शब्दस्य न स्वाभाविकं, अपि तु पौरुषेयत्वकृतम्[2]। अतश्च पौरुषेयत्वापत्तेः प्रसक्ता प्रमाणान्तरापेक्षता कृत्स्नस्य वेदराशेः। नन्वाग्नेय इति द्रव्यदेवता-संयोगश्रवणात् तस्य च यज्यर्थमन्तरेणानुपपत्तेः यज्यर्थो भावार्थः ततश्च तत्र नामता गुणविधानं वा संभवत्येव। कथमप्रामाण्यं? पूर्वपक्ष्याह—सत्यं यदि द्रव्यदेवता सम्बन्धः श्रूयते। आक्षेता आह—ननु चाग्नेय इति श्रूयते। पूर्वपक्षी वदति—सत्यं यद्यष्टा-

---

(1) B. आरब्धव्यमित्यर्थः (2) A. पौरुषेयत्वेन

मागो व्रीहिमयो यवमयो वा पुरोडाश एव भवति, सोऽनुवादः,

---

कपालविषयो न स्यात् । यद्यष्टाकपालविषयः ततः किम् ? इदं ततो भवति । अविहितैवाष्टाकपालता प्रतिपत्तव्या । न चाविहितोऽष्टाकपालोऽस्ति ।

ननु अष्टसु कपालेषु शृतो यः सोऽष्टाकपालो लौकिकः ; वाचनिको वा, कपालेषु श्रपयतीति वचनाद्वा । वाचनिकस्तावन्न सम्भवति अष्टसङ्ख्याश्रवणात् । सङ्ख्या विधीयत इति चेन्न ; इतरेतराश्रयप्रसङ्गात् आग्नेये सङ्ख्या सङ्ख्यायामाग्नेय इति ।

---

**कपालविषयो न स्यात्** । अष्टाकपालस्य हि आग्नेयता श्रूयते । न चासौ संभवतीत्यश्रुतप्राय एव द्रव्यदेवतासंबन्धः । आक्षेप्ता पृच्छति—**यद्यष्टाकपालविषय एव** द्रव्यदेवतासंबन्धः[1] **स्यात्** **ततः किं** सम्भवत्येव । अष्टाकपालस्याप्याग्नेयत्वमिति भावः । पूर्वपक्ष्युत्तरमाह—**इदं ततो भवति अविहितैवाष्टाकपालता प्रतिपत्तव्या** । उद्देश्यत्वात् । **न चाविहितोऽष्टाकपालोऽस्ति** । **ननु च योऽष्टसु कापलेषु शृतः सोऽष्टाकपालः लौकिक** उद्देश्यो भविष्यति **वाचनिको वा कपालेषु श्रपयतीति वचनात्** । अस्यार्थः—अथ वा लौकिक उद्देश्यो मा भवतु कपालेषु श्रपयतीति वचनात् । किन्तु वाचनिक एवास्तु । सर्वथा तावदनेनैव वचनेनैवाविहितस्याप्याग्नेयता विधातुं शक्या । पूर्वपक्षी दूषयति—**वाचनिकस्तावन्न संभवति । अष्टसङ्ख्याश्रवणात्** । न हि वाचनिके अष्टसंख्याविधानमन्तरेणाष्टाकपालता लभ्यते । सापि **सङ्ख्या विधीयत इति चेत्** । दूषयति—**न इतरेतराश्रयप्रसङ्गात् । आग्नेये सङ्ख्या; सङ्ख्यायामाग्नेयः इति** । आग्नेयानुवादेनाऽष्टसङ्ख्या विधेया-आग्नेयो यः सोऽष्टाकपालः कर्तव्य इति । तथा योऽष्टाकपालः स आग्नेय

---

(1) B. देवतासम्योगः

सिद्धश्चात्राष्टाकपाल उच्यते, 'कपालेषु श्रयति' इति वच-
नात्। नान्येन श्रपितं गृह्णन्ति, तेनास्मिन्पक्षे न वाक्यभेदो

---

तस्मान्न गुणविधिः सम्भवति। न च नामेत्युक्तम्। कथं तर्हि
नामधेयमित्युक्तं भाष्यकारेण ? क्व वोक्तम् ? उपन्यासे किं नामधेयं
उत गुणविधिरिति। गुणविधिप्रतिषेधं च कुर्वता नामधेयमित्युक्तं भवति
सत्यमुक्तं न तु विधेयस्य। अतो नामग्रहणात् प्रसिद्धार्थता दर्शिता।
प्रसिद्धिश्च प्रमाणान्तरादृते न भवतीति सापेक्षत्वं प्रयोगस्य दर्शितम्।
अत्रोच्यते। स्यादेतदेवं यदि सङ्ख्यासम्बन्धे देवतासम्बन्धे चेतरेतरा-
श्रयः स्यात्। न त्वसावस्ति। अष्टाकपालस्य देवताविधिः। ननु चासाव-

---

इति। अष्टाकपालानुवादेनाग्नेयतेति। तस्मान्न गुणविधिः सम्भवति। न च नाम संभवती-
त्युक्तम्। तस्मादप्रामाण्यम्। यद्यप्रामाण्याभिप्रायेण पूर्वः पक्षः कथं तर्हि नामेति भाष्य-
कारेणोक्तम् ? समाधाता आह—क्को वोक्तम्। आक्षेप्ता आह—उक्तमुपन्यासे किं
नामधेयमुत गुणविधिरिति। सन्देहकाले उपन्यस्तम्। तत्र नामधेयमिति पूर्वपक्षवचन-
व्यक्तिः गुणविधिरिति राद्धान्तवचनव्यक्तिः। तथा पूर्वपक्षपरिग्रहसमये गुणविधिप्रतिषेधं
च कुर्वता पारिशेष्यात् नामधेयमित्युक्तं भवति। समाधत्ते—सत्यमुक्तं नामधेयत्वं न
तु विधेयस्य भावार्थस्येदं नामतेति नोक्तमित्यर्थः। किं तर्ह्युक्तमित्याह—नामग्रहणात्
प्रसिद्धार्थता प्रदर्शिता। आग्नेयपदं विधेयार्थं न भवति। किन्तु प्रसिद्धार्थमित्युक्तम्
नामधेयस्यापि प्रसिद्धार्थत्वात्। भवत्वेवं तथापि कथं सापेक्षतोक्तेत्यत्राह—प्रसिद्धिश्च
प्रमाणान्तरादृते न सम्भवतीति सापेक्षत्वं प्रयोगस्य दर्शितम्। राद्धान्तमाह—स्यादे-
तदेवं यदि सङ्ख्यासम्बन्धे देवतासम्बन्धे च इतरेतराश्रयता स्यात्। [1]नत्वेतदस्ति।
कथं नास्ति ? उत्तरं—अष्टाकपालस्य हि देवताविधिः। पूर्वपक्षं स्मारयति—ननु चासाव

---

(1) B. न चासावस्ति

**भवति, 'न चेदन्येन शिष्टाः' ; यत्र पुनरन्येन वचनेन शिष्टा गुणा भवन्ति, भवति तत्र नामधेयं, यथा 'अग्निहोत्रं जुहोति'—इति ॥**

---

प्रसिद्ध इत्युक्तम् । किमभिधेयतयापि ? न, कार्यतया । इष्टमेवैतत्, अत एव विधीयते । तस्मादभिधानाप्रसिद्धिः विधानं विहन्ति । न पुनः कार्यतयाप्यप्रसिद्धिः तस्माद्यज्यर्थस्येव सिद्धमष्टाकपालार्थस्य विधानम् । प्रसिद्धाभिधानं चैतत् प्रदर्शितं भाष्यकारेण 'नान्येन श्रपितं गृह्णाति' इति । तस्माद्यज्यर्थवत् तद्धितार्थोऽयमपि प्रसिद्धः । अतो न सापेक्षत्वप्रसङ्गः । न च प्राप्तार्थताऽग्निहोत्रवत्सम्भवति ।

---

**प्रसिद्ध इत्युक्तम् ।** राद्धान्ती वदति—**किमभिधेयतयापि न प्रसिद्धः ।** अभिधेयतया प्रसिद्ध इत्यर्थः । अभिधानप्रसिद्धिं चाश्रित्य विधानमवकल्पते । पूर्वपक्षी वदति— **न** अभिधेयतया, प्रसिद्धः किन्तु **कार्यतया ।** अष्टाकपालो हि कार्य इति कृत्वाऽप्रसिद्धत्वमुच्यते । राद्धान्त्याह—**इष्टमेवैतत्**कार्यतयाऽप्रसिद्धत्वम् । यत एव कार्यतयाऽप्रसिद्धत्वं **अत एव विधीयते ।** उपसंहरति—**तस्मादभिधानाप्रसिद्धिर्विधानं विहन्ति । न पुनः कार्यतयाऽप्रसिद्धिः ।** त**स्माद्यज्यर्थस्येव सिद्धमष्टाकपालार्थस्यापि विधानम् ।** [1]**प्रसिद्धाभिधानगम्यत्वं च दर्शितं भाष्यकारेण नान्येन श्रपितं गृह्णातीति** वदता । अप्रसिद्धार्थत्वे हि न ह्यन्येनापि श्रपितस्य ग्रहणं प्रसक्तम्, यन्निराकरणाय युज्यते वक्तुम् । कपालेषु श्रपयतीति वचनात् नान्येन श्रपितं गृह्णातीति । **तस्माद्यज्यर्थवत् तद्धितार्थोऽप्ययं प्रसिद्धः ।** यथा यत्र यजेतेति साक्षाच्छ्रवणे यज्यर्थस्याभिधानतः प्रसिद्धिः तथा तद्धितार्थस्यापीत्यर्थः । **अतो न सापेक्षत्वप्रसङ्गः ।** गुणविशिष्टकर्मविधानेनानपेक्षतोपपत्तेः । **न चात्र प्राप्तार्थता** अग्निहोत्रवदष्टाकपालतायाः **संभवति** इति सापि विधीयते यथा अग्निहोत्रं जुहोतीत्यत्राग्निर्देवता न विधीयते अग्निदेवतायाः प्राप्तत्वात् तथेह न संभवतीति ।

---

(1) C. **प्रसिद्धार्थाभिधानं चेदं**

वर्हिरादिशब्दानां जातिवाचिताधिकरणम् ॥

वर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः ॥ १० ॥

वर्हिराज्ययोः पुरोडाशे च सन्देहः,—किमेते संस्कारशब्दा, उत जातिशब्दाः ? इति। संस्कारशब्दाः इति ब्रूमः, संस्कृतेषु तृणेषु वर्हिः शब्दमुपचरन्ति सर्वत्र, नासंस्कृतेषु, संस्कृते च घृते आज्यशब्दं, तथा संस्कृते पिष्टे पुरोडाशशब्दम्। ननु असंस्कृतेऽपि कस्मिंश्चिद्देशे उपचर्यते, यथा 'वर्हिरादाय गावो

---

वर्हिराज्ययोरसंस्कारे। प्रासङ्गिकमिदमधिकरणम्। कः पुनः प्रसङ्गः ? विधेयेनाप्यर्थेन नामार्थान्वयो दृष्टः। अयमपि चाज्यशब्दः कर्मनिमित्त एव लोके दृष्टः। तस्मादयमपि कार्यान्वयी संस्कारेणाज्यं कुर्यादिति। ननु चाकर्मनिमित्तकोऽपि क्वचित् दृष्टः "आज्यं क्रय्यं" 'वर्हिरादाय गावो गताः' इति। सार्वभौमो हि प्रयोगः श्रौतो भवितुमर्हति नैकदेश

---

वर्हिराज्ययोः। का पुनरवान्तरसङ्गतिरित्यत्राह—प्रासङ्गिकमिदमधिकरणम्। कः पुनरत्र प्रसङ्गः ? उत्तरं—विधेयेनाप्यर्थेन नामार्थान्वयो दृष्टः अष्टाकपालमिति। अयमपि चाज्यशब्दः कर्मनिमित्तक एव लोके दृष्टः। संस्कारनिमित्तोऽयमाज्यशब्दो लोके दृश्यते। संस्कृतावस्थायामेवाज्यशब्दप्रयोगात्। तस्मादयमपि कार्यान्वयी[1] कार्यतयाऽन्वयी। कार्यान्वय्याज्यशब्दस्यार्थः। एतदेव दर्शयति—संस्कारेणाज्यं कुर्यादिति। आज्यं विलयनेन संस्कुर्यादित्यर्थः। ननु चाकर्मनिमित्तकोप्याज्यशब्दः क्वचिद्देशविशेषे दृष्टः, आज्यं क्रय्यं, वर्हिरादाय गावो गता इति। तेन कथमेकान्ततः संस्कारनिमित्तता शक्याऽवसातुम्। परिहरति—सार्वभौमो हि प्रयोगः श्रौतो भवितुमर्हति। नैकदेश-

---

(1) A. कार्यार्थान्वयित्वमाज्यशब्दस्य

गताः' इति भवन्ति वक्तारः; तथा 'आज्यं क्रय्यम्' इति, 'पुरोडाशेन मे माता प्रहेलकं ददाति' इति। सादृश्यात्तेषु प्रयोगः, यथोपशये यूपशब्दः। कुतः एतत्?। यत एकदेशे हि शब्दप्रयोगः, तस्मात् संस्कारशब्दाः इत्येवं प्राप्तम्।

एवं प्राप्ते ब्रूमः,—बर्हिरादिष्वसंस्कृतेष्वपि शब्दलाभात् न संस्कारशब्दाः। ननु उक्तं सादृश्यादेकदेशे भविष्यन्ति। तन्न,

---

प्रभवः। कस्मात्? प्रसिद्धस्य श्रौतेऽर्थे गौणता संभवति। न चायं सर्वत्र घृतवचनतया प्रसिद्धः। अप्रसिद्धस्य घृते गौणत्वं नोपपद्यते। कर्मणा साधने यत्र पुनरेकदेशे प्रयुज्यते तत्र कर्मनिमित्त-केपि प्रयोगात्सिद्धो घृते गौणः। तस्मात्कार्यार्थतैव युक्ता।

---

प्रभवः संस्कारनिमित्तकश्च प्रयोगः सार्वभौमः। [1]ये तावदसति संस्कारे शब्दं न प्रयुञ्जते तेषां स्फुटैव संस्कारनिमित्तता। येऽपि जातिमात्रे प्रयुञ्जते ते संस्कृतेऽपि प्रयुञ्जते इति संस्कृतविषयत्वं सार्वभौमम्। तदेव च श्रौतम्। एकदेशे यज्जातिवचनत्वं तद्गौणम्। कस्मादेवं? उत्तरं—प्रसिद्धस्य हि पदस्य श्रौतेऽर्थे गौणता संभवति नाप्रसिद्धस्य। यथैव हि ज्वलने प्रसिद्धोऽग्निशब्दो माणवके तत्सादृश्येन प्रयुज्यमानो गौणो भवति। सर्वेषां संस्कारनिमित्तता प्रसिद्धेति जातिमात्रे गौणः एकदेशभवः प्रयोगः। येषां तु संस्कृतमात्र एव प्रयोगः तेषां प्रयोगद्वयाभावान्मुख्यः प्रयोगः। न चायं सर्वत्र घृतवचनतया प्रसिद्धः। अप्रसिद्धस्य च घृतेऽन्यत्र गौणत्वं नोपपद्यते। ये संस्कारनिमित्तं शब्दं मन्यन्ते ते जात्यन्तरेपि शब्दं न प्रयुञ्जते तत्र स गौणो न युक्तः अन्यत्र मुख्यप्रयोगादर्शनात्। कर्म-निमित्तत्वे यत्र पुनः एकदेशे घृते प्रयुज्यते असंस्कृतेऽपि तत्र कर्मनिमित्तकेऽपि प्रयोगात् सिद्धो गौणः, अन्यत्र मुख्यप्रयोगसिद्धेः सिद्धो घृते गौणः। तस्मात संस्कारनिमित्तत्वा-

---

(1) A. ये संस्कृते शब्दं प्रयुञ्जते तेषां तावत्संस्कारनिमित्तता

प्रसिद्धे हि संस्कारशब्दत्वे सादृश्यात् इति शक्यते वक्तुम्, तच्चाप्रसिद्धम्। कथं?। बर्हिरादिशब्दैरुद्दिश्य संस्कारा विधी-

---

अत्रोच्यते। न कार्यार्थतयान्वयो घटते इतरेतराश्रयत्वप्रसङ्गात् बर्हिषः प्रोक्षणं प्रोक्षणेन च बर्हिरिति। कथं तर्हि अष्टाकपाले न? न, अभिधानतः प्रसिद्धेरित्युक्तम्? इह पुनः कार्यत एवाभिधानमिति वैषम्यम्। यूपे कथम्? अन्यतः प्रसिद्ध्यभावादगतिका गतिरियम्। केयमगतिका गतिः? किं न शास्त्रादवगम्यते? सत्यां प्रसिद्धौ नावगम्यते? अप्रसिद्धे पुनः पदार्थे अप्रतिहतत्वाद्विध्यर्थस्य कल्प्यते।

---

दाज्यादिशब्दानां **कार्यार्थतैव युक्ता। अत्रोच्यते। कार्यार्थतयाऽन्वयो न घटते इतरेत-राश्रत्वप्रसङ्गात्। बर्हिषः** सतः **प्रोक्षणं प्रोक्षणेन च बर्हिरिति।** यद्वै प्रोक्षणादिना संस्क्रियते तद्बर्हिरित्युच्यते। बर्हिरुद्देशेन प्रोक्षणादयो विधीयन्त इति न ज्ञायते कस्य प्रोक्षणादयो विधीयन्त इति। यद्येवमितरेतराश्रयत्वं **कथं तर्ह्यष्टाकपाले** नेतरेतराश्रयः? उत्तरं—**न** चेतरेतराश्रयम**भिधानतः प्रसिद्धेरित्युक्तम्। इह पुनः कार्यत एवाभिधानं,** तेनेतरेतराश्रयत्वमिति **वैषम्यम्।** पूर्वपक्षी त्वाह—**यूपे कथं?** यूपं तक्षतीति श्रूयते। यूपशब्दश्च कार्यसंस्कारवचनः तत्र व्यक्तमितरेतराश्रयत्वम्। **अन्यतः प्रसिद्ध्यभावात् अगतिका गतिरियम्।** यथा बर्हिरादावन्यतः प्रसिद्धिरस्ति जातिमात्रे प्रयोगदर्शनात् तथा यूपे नास्ति तेन असति गत्यन्तरे एषागतिराश्रीयते यत्तक्षणार्हं यत्तक्षणकर्मभूतं तत् तक्षणेन यूपं करोतीति। **केयमगतिका गतिः।** एकग्रन्थेनाह—**किं न शास्त्रादेवावगम्यते?** अयमाशयः—यदि शास्त्रात् अवगम्येत तदा बर्हिरादिष्वपि तथास्त्विति। उत्तरं—**सत्यां प्रसिद्धौ न शास्त्रादवगम्यते** यत्रान्यतः प्रसिद्धिरस्ति तत्र सामान्येन व्यवहारो न युक्तः। विशेषस्यैवावगमादिति तत्रेयं शास्त्राद्गतिर्नावगम्यते। यत्प्रोक्षणार्हं प्रोक्षणे कर्मभूतं तद्बर्हिः तत् प्रोक्षणेन संस्क्रियत इति। **अप्रसिद्धे पुनः पदार्थे अप्रतिहतत्वाद्विध्यर्थस्य कल्प्यते।**

**यन्ते, तेन सत्सु शब्देषु संस्कारैर्भवितव्यं, सति च संस्कारे शब्दलाभः इति इतरेतराश्रयं भवति। न च, अविहिताः संस्कारा भवन्ति। यानालोच्य लोकः प्रयुञ्जीत। तस्मान्न**

---

यदुक्तं सार्वभौमो गौणो न संभवति श्रौतस्याप्रसिद्धेः; एकदेशस्थस्तु संभवतीति; नावश्यं प्रसिद्धश्रौतार्थमेव गौणं प्रयुञ्जते लौकिकाः राजशब्दमिव क्षत्रियेपि। तत्रापि तुल्यो दोषः सादृश्यप्रतिपत्त्यर्थं हि गौणं प्रयुञ्जते। अतद्बुद्ध्यापि गौणं प्रयुञ्जत इति हठोऽयम्। अत्राभिधीयते। न प्रयोक्तुर्विवक्षामपेक्षते शब्दार्थसम्बन्धः। संबन्धापेक्षा हि विवक्षा।

---

अन्यथा विध्यर्थप्रतिघातप्रसङ्गात्। **यदुक्तं सार्वभौमप्रयोगो गौणो न संभवति श्रौतस्याप्रसिद्धेरिति एकदेशस्थस्तु** गौणस्संभवतीति अत्रोच्यते—**नावश्यं प्रसिद्धश्रौतार्थमेव गौणं प्रयुञ्जते लौकिकाः राजशब्दमिव।** यथा राजशब्दमार्या अप्रसिद्धश्रोतार्थमपि गौणं प्रयुञ्जते तथा बर्हिरादिशब्दमपि। चोदयति—**तत्रापि राजशब्देऽपि तुल्यो दोषः।** एकग्रन्थेनाह—**वाच्यसादृश्यप्रतिपत्त्यर्थं हि गौणं प्रयुञ्जते। अतद्बुद्ध्यापि गौणः प्रयुज्यत इति हठोऽयं;** वाच्यार्थसादृश्यप्रतिपादनाय हि गौणः शब्दः प्रयुज्यते। मुख्ये चार्थेऽविज्ञाते न तत्सादृश्यं ज्ञायत इति सादृश्यबुद्धावसत्यां गौणस्य प्रयोगो [1]निर्हेतुकः। अत्राभिधीयते—**न प्रयोक्तुर्विवक्षामपेक्षते शब्दार्थसंबन्धः। संबन्धापेक्षा हि विवक्षा।** अस्यार्थः—यद्यपि प्रयोक्ता गौणबुद्ध्या प्रयुङ्क्ते प्रयोज्यश्च तथैव प्रतिपद्यते तथापि पार्श्वस्थो बालः मुख्यार्थे प्रयोगमदृष्ट्वा मुख्यतामेवावगच्छति। स तथा प्रतीत्य व्यवहारमपि प्रवर्तयेत्। तेन प्रयोक्तृविवक्षां नापेक्षते पार्श्वस्थस्य शब्दार्थसंबन्धः, किन्तु यादृशं मुख्यं शब्दार्थसंबन्धं प्रतिपद्यते तादृशमेव पुनर्व्यवहारकालेऽपि पार्श्वस्थो विवक्षति। एतदेव दृष्टान्तपुरस्सरं

---

(1) C. ऽनिमित्तकः

लोकाः संस्कृतेषु बर्हिरादीन् प्रयुञ्जते, तत एकदेशेऽपि जातिनिमित्ता दृष्टाः सर्वत्र जातिनिमित्ता भवितुं अर्हन्ति। न च, अलौकिकानां सतां वेदादेव पूर्वोत्तरपदसंबन्धमनपेक्ष्य शक्यते

---

उक्तं हि गोपोतलिकादिषु अशक्तिजत्वापरिज्ञानादनादिमिव प्रयुञ्जत इति स एवमत्रापि विवक्षापरिज्ञानात् कस्यचित् प्रयोक्तुर्विवक्षाशून्यमर्थान्तरे प्रयुञ्जते। कथं पुनरिदमवगम्यते? लोके वेदे च व्यवहारदर्शनात्। वेदे तावदाज्यं विधाय घृतशब्देन स्तौति। लोकेपि वा आज्यं क्रय्यमिति क्रियासाधननिरपेक्षः प्रयोगः। ननु च तत्राप्यज्ञातविवक्षा(र्थ)त्वं शक्यते वक्तुम्।

---

दर्शयति—उक्तं हि गोपोतलिकादिषु अशक्तिजत्वापरिज्ञानादनादिशब्दमिव[1] प्रयुञ्जते। एवमत्रापि विवक्षाऽपरिज्ञानात् कस्यचित् प्रयोक्तुः विवक्षाशून्यमर्थान्तरे प्रयुञ्जते। जातिविषये मुख्यं शब्दार्थं जानता केनचिदेकदेशजातेन गौणः[2] संस्कारयोगिन्यतज्जातीयेऽपि बर्हिरादिशब्दः प्रयुक्तः। अत्र मुख्यमन्यमर्थमविदुषो गौणार्थविवक्षाऽस्ति। एवमजानतो मुख्यबुद्धिः प्रवृत्ता। यथा गोपोतलिकादिष्वनादित्वबुद्धिरशक्तिजत्वमविदुषः तन्निबन्धनश्च शब्दार्थव्यवहारः। कथं पुनरिदं विज्ञायते भ्रान्तिमूलोऽयं संस्कृतविषये मुख्यशब्दव्यवहार इति। उत्तरं—लोके वेदे च व्यवहारदर्शनात्। वेदे तावदाज्यं विधाय कश्चित् घृतशब्देन स्तौति तत्र यदि संस्कारवचनः आज्यशब्दः स्यात् तत्र स्तुतौ घृतशब्दः उपलक्षणार्थः स्यात्। जातिवचनत्वे तु स्वार्थः, तेन जातिवचनतैव वेदालोचनयाऽवसीयते। लोकेऽप्याज्यं क्रय्यमिति क्रियासाधननिरपेक्षः प्रयोगः। क्रियासाधनं क्रियैव संस्काररूपा साधनं यस्य तन्निरपेक्षः प्रयोगो लोकेपि दृष्टः। ननु च तत्राप्यज्ञातविवक्षात्वं शक्यते वक्तुम्। [3]केनचित्संस्कारमात्रवाचित्वेऽपि तदर्हतामात्रेण गौणो जातौ शब्दः प्रयुक्तः तत्र [4]विवक्षाऽपरिज्ञानात् कस्यचिन्मुख्यार्थबुद्धिरुत्पन्नैवेत्यत्रापि शक्यते वक्तुं; तेन

---

(1) C. अनादिमिव (2) C. गौणसंस्कार (3) A. संस्कृतस्य मुख्यार्थत्वेपि तत्संबन्धाद्गौणः (4) B. विवक्षामपरिज्ञाय

ऽर्थोऽध्यवसातुम् । पूर्वोत्तरपदे अनर्थके माभूताम् इत्येवं स परिकल्प्येत, अशक्यस्त्वनवगम्यमानः परिकल्पयितुम्, अर्थवती च ते पदे पूर्वोत्तरे लौकिकेनासंस्कृतप्रयोगेण भविष्यतः। तस्मात् जातिशब्दा एवंजातीयकाः। प्रयोजनं, 'बर्हिषा यूपावटमवस्तृणाति' इति संस्कृतैरेव स्तरितव्यं, यदि पूर्वः पक्षः, विपरीतं सिद्धान्ते ॥

---

उक्तो वैतसादिषु परिहारः। वैदिकव्यवहारसाम्यात विप्रतिपत्तौ निर्णय इति। किं पुनः प्रासङ्गिकस्य प्रयोजनम् ? अनवध्यवसाय एव। ननु च भाष्यकारेण कर्मण्येव विशेषः प्रदर्शितः अत एवानध्यवसायः प्रयोजनम्। निर्णये त्वध्यवसानात स्थितमेव प्रयोजनम्।

---

कथं निश्चयः ? परिहरति—उक्तो वेतसादिषु परिहारः इति। [1]लौकिकविषयव्यवहार-विप्रतिपत्तौ वैदिकव्यवहारसामान्यान्निर्णय इति। तेनात्रापि वैदिकव्यवहारसाम्यात जातौ मुख्यता। संस्कृतविषये तु तदीयसंस्कारयोगाद्गौणः प्रयोग इति। यद्येवं तेनैव तर्ह्यधिकरणेन गतम्। उच्यते—ज्ञातमुख्यप्रयोगस्यैव गौणः प्रयोग इतीमामाशङ्कामपनेतुमिद-मधिकरणमारब्धम्। उदाहरणं तु बर्हिरादयो वेतसादयश्चोभयत्रापीति। किं पुनः प्रासङ्गिक-स्यास्य प्रमाणलक्षणे प्रयोजनं ? उत्तरं—अनध्यवसाय एव शब्दार्थानध्यवसाय एव। शब्दार्थव्यवहारे को मुख्यः, को वा गौण इत्यनध्यवसायः स्यात्। ततश्च वेदेऽप्यनध्यव-सायादप्रामाण्यं स्यात। तेनानध्यवसायो ह्यधिकरणस्य प्रयोजकः। ननु च भाष्यकारेण कर्मण्येव विशेषो दर्शितः। नावगतौ। परिहरति— यत एव कर्मणि विशेषः अत एवा-नध्यवसायः प्रयोजनं तन्निवृत्तयेऽनध्यवसायोऽधिकरणस्य प्रयोजकः। कर्मणि यदि विशेषो न स्यात् तदा अनुष्ठानविशेषो न स्यात्। अनुष्ठानविशेषाभावादनध्यवसायो[2]न दोषः इति तन्निवृत्तयेऽधिकरणमारब्धं, निश्चये त्वध्यवसायात् स्थितमेव प्रयोजनम्।

---

(1) B. लौकिकव्यवहाराच्च जातिसंस्काररूपविप्रतिपत्तौ (2) A. ऽनपनेयः

प्रोक्षण्यादिपदानां यौगिकताधिकरणम् ॥

प्रोक्षणीष्वर्थसंयोगात् ॥ ११ ॥

'प्रोक्षणीरासादय' इति श्रूयते; तत्र प्रोक्षणीशब्दं प्रति सन्देहः, किं संस्कारनिमित्तः, उत जातिनिमित्तः, उत यौगिकः? इति। तत्र संस्कारेषु सत्सु दर्शनात् संस्कार-शब्दतायामवगम्यमानायां असंस्कृते शब्दलाभाज्जातिशब्दः, असंस्कृतास्वेवाप्सु 'प्रोक्षणीभिरुद्वेजिताः स्मः' इति कस्मिं-

---

प्रोक्षणीष्वर्थसंयोगात्। किमर्थमिदं पृथगधिकरणं? सार्व-भौमैकदेशप्रभवयोः स्मृतितोऽपवादः कथ्यते। कथं पुनः प्रयोगस्य स्मृतितोऽपवादः कथ्यते? सम्भवति स्मृत्यानुगुण्यं प्रयोगस्य। यस्मात् द्वयोरवयवयोगः संभवति 'प्रोक्षणीरासादयति' 'प्रोक्षणीभिरुद्वेजिताः स्मः' इति। तस्मात् स्मृतितो निर्णय इति। शेषमुक्तम्।

---

प्रोक्षणीषु॥ किमर्थमिदं पृथगधिकरणं? उत्तरं—सार्वभौमैकदेशभवयोः प्रयो-गयोः स्मृतितोऽपवादः कथ्यते। संस्कारनिमित्तः सार्वभौमः प्रयोगः जातिनिमित्तस्त्वेकदेश-प्रभवः। तयोः स्मृतिमालोच्यापवादः कथ्यते, यौगिकः प्रोक्षणीशब्द इति। पूर्वपक्षमाह —कथं पुनः प्रयोगस्य स्मृतितोऽपवादः कथ्यते प्रयोगमूला हि व्याकरणस्मृतिः सा कथं प्रयोगमपवदतीति भावः। राद्धान्तमाह—संभवति हि स्मृतेरानुगुण्यं प्रयोगस्य। स्मृत्यनु-गुणो हि प्रयोगो भवत्येव। कुत इत्याह—यस्मात् द्वयोरप्यवयवयोगः संभवति। योऽपि संस्कारनिमित्तकः प्रयोगः तत्रापि योगः संभवति यश्च जातिनिमित्तकः तत्रापि। ततश्च योगाविरोधी प्रयोग इति न योगं बाधते तत्र प्रोक्षणीरासादय इति संस्कारनिमित्तकः प्रयोगः 'प्रोक्षणीभिरुद्वेजिताः स्मः' इति जातिनिमित्तकः। तस्मादविरोधित्वात् स्मृतितो निर्णयः। शेषमुक्तम्।

श्चिद्देशे भवन्ति वक्तारः, तेन जातिशब्दः इति प्राप्ते।

यौगिकः इत्युच्यते। कुतः? अर्थसंयोगात्। प्रोक्षण्यः इत्युपसर्गधातुप्रत्ययसमुदायस्य जातिनिमित्तता प्रयोगादनुमीयते, सेचनसंयोगात्तूपसर्गधातुकरणप्रत्ययसहितोऽप्सु प्रवर्तते इति प्रसिद्धिरनुगृहीता भविष्यति। यदाऽन्यदपि सेचनं प्रोक्षणशब्देन उच्यते, तदा तत्संयोगादेवाप्सु भविष्यति इति न समुदायार्थः कल्पयितुं शक्यते। तस्मात् यौगिकः। प्रयोजनं, —घृतं प्रोक्षणं भवतीति; यदि संस्कारशब्दः, 'प्रोक्षणीरासादय' इति प्रैषः; यदि जातिशब्दः, घृतमासादय—इति; यदि यौगिकः, प्रोक्षणमिति॥

### अथ निर्मन्थ्यशब्दस्य यौगिकत्वाधिकरणम्

तथा निर्मन्थ्ये॥ १२॥

निर्मन्थ्येनेष्टकाः पचन्ति इति संस्कृते दर्शनात् संस्कारशब्दो निर्मन्थ्यः' इति। असंस्कारेऽपि दृश्यते, निर्मन्थ्य-

---

तथा निर्मन्थ्ये। किमत्रातिरिच्यते? इदमत्रातिरिच्यते। स्मृतिरप्यतिव्यापिका अचिरनिर्मथिते दर्शनात्। अतः स्मृतितोऽपि न निर्णय

---

तथा निर्मन्थ्ये॥ किमत्रातिरिच्यते? उत्तरं—इदमत्रातिरिच्यते। स्मृतिरप्यतिव्यापिका। अचिरनिर्मथिते प्रयोगदर्शनात्। [1]तथा असंस्कृतेऽपि प्रयोगदर्शनात् "निर्मन्थ्यमानय पक्ष्यामः" इति। तेन संस्कारनिमित्तता नास्ति। तथा यौगिकत्वमपि न संभवति। अचिरनिर्मथितेऽपि प्रयोगदर्शनात्। यौगिकत्वे चिरनिर्मथितमात्रे प्रयोगः स्यात्। न च जातिनिमित्तता, अग्निमात्रे प्रयोगात्। तस्मात् स्मृतितोऽपि न निर्णय

---

(1) यथा

मानय, ओदनं पक्ष्यामः इति, निर्मन्थनयोगात् पूर्ववत् यौगिकः इति संस्थितम् । प्रयोजनं, संस्कारनिमित्ते संस्कृतेन इष्टकाः पक्तव्याः, जातिशब्दे यथोपपन्नेन, यौगिके अचिर-निर्मथितेन, यथा नावनीतेन भुंक्ते इत्यचिरनिर्दग्धेन इति गम्यते ॥

अथ वैश्वदेवादिशब्दानां नामधेयताधिकरणम् ॥

वैश्वदेवे विकल्प इति चेत् ॥ १३ ॥

चातुर्मास्येषु प्रथमे पर्वणि वैश्वदेवे सन्देहः, 'वैश्वदेवेन यजेत' इति किं वैश्वदेवशब्दो गुणविधिः, उत कर्मनामधेयम् ?

---

इति मन्यते । अविशेषविधानात् स्मृतेर्न विशेषप्रयोगो विहन्तुं क्षमः । विहन्त्यविशेषज्ञानमिति चेत्, न विहन्ति विशेषपरिसमाप्ते-रविशेषस्य । तस्मात् पूर्ववदिदमपि । तेन तथेत्युक्तम् ।

वैश्वदेवे विकल्प इति चेत् । कथं पुनः गुणविधि-नामधेयतयात्र संशयः ? गुणविधिपक्ष एवास्त सामानाधिकरण्य-

---

इति मन्यते पूर्वपक्षवादी । राद्धान्तमाह—अविशेषाभिधानात् स्मृतेः न विशेषप्रयोगो विहन्तुं क्षमः । यदि हि स्मृतौ चिरनिर्मथिते अचिरनिर्मथिते च निर्मन्थ्यशब्दः साधुरिति स्मृतं स्यात् तदा विशेषप्रयोगः स्मृतिं विहन्यात् । न चैतदस्ति । विहन्त्यविशेषज्ञानमिति चेत् स्मार्तमविशेषज्ञानं प्रयोगो विहन्तीति चेत् । परिहरति-न विहन्ति विशेषपरि-समाप्तेरविशेषस्य । योऽसौ स्मृतावविशेषः स यदि विशेष उपसंह्रियेत प्रयोगबलेन तदा न कश्चिद्दोषः । तस्मात् पूर्ववदिदमपि । तेन तथेत्युक्तम् ।

वैश्वदेवे ॥ कथं पुनः गुणविधिनामधेयतयाऽत्र संशयः ? यावता भावार्थसामाना-धिकरण्यान्नामधेयत्वमेवात्र युक्तम् । उत्तरं—गुणविधिपक्ष एवात्र सामानाधिकरण्य-

इति। इति यदि सन्देहो न सन्देहः, वैश्वदेवे विकल्पः, गुणविधिर्वैश्वदेवशब्दः, गम्यते हि गुणविधानं, विश्वेदेवा विधीयन्ते आग्नेयादिषु यागेषु, तत्राग्न्यादीनां विश्वैर्देवैर्विकल्पः, एवं प्रसिद्धिरर्थवती भविष्यति ॥

न वा, प्रकरणात् प्रत्यक्षविधानाच्च न हि प्रकरणं द्रव्यस्य ॥

नैतदेवम्, प्रत्यक्षश्रुतिविहिता अग्न्यादयः तेषां यागानां, विश्वेदेवा वाक्येन, प्रकरणात्तेनैव नान्येन इति गम्यते; न चायं

---

मुपपन्नतरम्। प्रत्ययार्थत्वात् भावस्य। किमिति तर्हि नामधेयतयोपन्यासः? विषयाभावाद्विधानस्य। किमिति विषयाभावः? अग्न्यादिभिः श्रुत्यावरुद्धत्वात प्रकृतानां कर्मणाम्। कर्मान्तरं किमिति न भवति? तदपि नाध्यवसीयते प्रकृतत्वादामिक्षायाः।

---

मुपपन्नतरं, प्रत्ययार्थत्वाद्भावार्थस्य न नामधेयता युक्ता गुणविधिपक्ष एव तावद्युक्तः गुणविधावपि मत्वर्थलक्षणाभावात् विश्वेदेवा देवता अस्येति यागस्यैव प्रत्ययार्थत्वात् मुख्यया वृत्त्या सामानाधिकरण्यस्योपपत्तेः। पुनराक्षिपति—यदि गुणविधिरेवोपपन्नतरः किमिति नामधेयतयोपन्यासः। समाधत्ते—विषयाभावात् गुणविधानस्य गुणस्य विधेयस्य विषयाभावाद्गुणविधिरपि न युक्तः। किमिति विषयाभावः। उत्तरं—अग्न्यादिभिर्देवताभिः श्रुत्याऽवरुद्धत्वात् प्रकृतानां कर्मणाम्। यानि तु प्रकृतानि कर्माणि तान्युत्पत्तिशिष्टैरग्न्यादिभिरवरुद्धानि न तत्र देवतान्तरं शक्यते विधातुम्। यदि प्रकृते देवतान्तरविधिरशक्यः कर्मान्तरं तर्हि देवताविशिष्टं किमिति न भवति? तदपि नाध्यवसीयते प्रकृतत्वादामिक्षाया वैश्वदेव्याः। कर्मान्तरविधौ हि [1]विशिष्टविधानम्। तच्च गत्यन्तराभावे

---

(1) विशेषविधानं

**विषमशिष्टो विकल्पो भवितुमर्हति, न हि प्रकरणं श्रुतस्य द्रव्यस्य बाधने समर्थम्। तस्मात् कर्मनामधेयम् ॥**

---

तस्मान्न नामतो नापि गुणतोऽनपेक्षत्वं शक्यतेऽवगन्तुमिति। चेन्मन्यसे अनपेक्षत्वाध्यवसानं न शक्यते कर्तुमिति भवतु गुणविधानेन अध्यवसानम् तथाऽवगमान्नामाख्यातार्थसम्बन्धस्य। ननु चोक्तो विषयाभावः, दुरुक्तो हि सः। कथं दुरुक्तः? श्रुताद्धि कार्यकल्पना, न कार्यतः श्रुतम्। किमिदं? इदमिदं, उत्पत्तिशिष्टगुणावरोधो ह्यनवगमे हेतुः। न पुनरवगतस्य विघाते। वैश्वदेवशब्दश्चायं आख्यातार्थ एव वर्तते। नाग्न्यादयः संबन्धिनमाख्यातार्थं वैश्वदेवशब्दाभिधेयतया निवारयितुं

---

सति युक्तम्। अस्ति चात्र गत्यन्तरं, वैश्वदेव्यामिक्षायागसाहचर्यात् प्रकृतेषु यागेषु दध्निन्यायेन नामधेयतयाप्यन्वयसंभवात्। अतोऽत्र नामतापि न संभवति गुणविधानेनापि सामानाधिकरण्योपपत्तेः। नापि गुणविधिः प्रकृतेषूत्पत्तिशिष्टगुणावरोधात्। तदाह—तस्मान्न नामतो नापि गुणतोऽनपेक्षत्वं शक्यतेऽवगन्तुमिति पूर्वः पक्षः। राद्धान्तैकदेश्याह—इति चेन्मन्यसे अनपेक्षत्वाध्यवसानं न शक्यते कर्तुमिति भवतु गुणविधानेनाध्यवसानं तथाऽवगमान्नामाख्यातार्थसंबन्धस्य। ननु चोक्तो विषयाभावः। परिहरति—दुरुक्तो हि सः। पुनश्चोदयति—कथं दुरुक्तः। उत्तरं—श्रुताद्धि कार्यकल्पना, न कार्यतः श्रुतम्। किमिदमुच्यते? उत्तरं—इदमिदं, उत्पत्तिशिष्टगुणावरोधो हि अनवगमे हेतुः, न पुनरवगतस्य विघाते उत्पत्तिशिष्टगुणावरोधेन गुणान्तरसंबन्धावगतिरेव विरुध्यते, न पुनरवगतस्य विघातः क्रियते। भवत्वेवं तथापि किमित्याह—वैश्वदेवशब्दश्चायमाख्यातार्थे एव प्रकृते वर्तते, नाग्न्यादयः [1]संबन्धिनः आख्यातार्थं वैश्वदेवशब्दाभिधेयतया निवारयितुं

(1) A. संबन्धिनं

मिथश्चानर्थसंबन्धः ॥ १५ ॥

**अथोच्यते, 'वैश्वदेवः' इत्यनेन शब्देन प्रत्यक्षं अग्न्यादि-गुणविशिष्टो यागगणो लक्ष्यते, वैश्वदेवी हि तत्राभिक्षा सम-**

---

क्षमाः। सम्बन्ध्यन्तरविषयतां निवारयन्ति नाभिधेयताम्। ततः किम्? इदं ततो भवति अभिधेयोपपत्त्यर्थं सम्बन्ध्यन्तरप्राप्तिः नोत्पत्तिसंबन्धिनोऽग्न्यादयः विघ्नन्ति। यथा संस्कार्यतयाऽऽक्षिप्तं फलचमसस्य यागसाधनभावं सोमः। तस्माद्विकल्पेनाध्यवसानम्। न प्रकरणात् प्रत्यक्षविधानाच्च। न हि प्रकरणं द्रव्यस्य।

यद्येवं नामधेयतैवास्तु; अभिधानोपपत्त्यर्थं हि गुणान्तरसंबन्धः

---

क्षमाः। एकग्रन्थेनाह—[1]सम्बन्ध्यन्तरविषयतां निवारयन्ति, नाभिधेयताम् निवारयान्ति। ततः किं? उत्तरं—इदं ततो भवति अभिधेयोपपत्त्यर्थं संबन्ध्यन्तरस्य देवतान्तरस्य प्राप्तिं नोत्पत्तिसम्बन्धिनोऽग्न्यादयो विघ्नन्ति। यथा संस्कार्यतया याग-शेषसंस्कार(शेष)भूतभक्षणसम्बन्धितयाऽन्यथानुपपद्यमानयाऽऽक्षिप्तं फलचमसस्य यागसाधनत्वं सोमो न विहन्तीति। तेन श्रुतवैश्वदेवशब्दाभिधेयत्वोपपत्त्यर्थं विश्वेषां देवानां कार्यकल्पना युक्ता। प्रकृतेषु यागेषु देवतात्वेनानुप्रवेशो युक्त इत्यर्थः। न पुनर्यागनिर्वृत्तिः कार्य-मेषाम्। सा चाग्न्यादिभिरेव सिद्ध्यतीत्यालोच्य श्रुतस्य वैश्वदेवशब्दाभिधेय[2]स्यायथार्थत्व-कल्पनं युक्तम्। यस्मादभिधानोपपत्त्यर्थं देवतात्वेन सम्बन्धः तस्मादग्न्यादिभिः सहानुष्ठाने विकल्पेनानपेक्षात्वाध्यवसानम्[3]। परमसिद्धान्तमाह—यद्येवं शब्दप्रवृत्तिमात्रसिद्ध्ये गुणविधिकल्पनं—एवं तर्हि नामधेयतैवास्तु। अभिधानोपपत्त्यर्थं हि गुणान्तरसंबन्धः

---

(1) B. संबन्ध्यन्तरं (2) B. धेयत्वस्यायथात्वकल्पनं C. धेयस्यान्यथात्व
(3) A. adds युक्तम्

वैति। यदि वैश्वदेवशब्देन यागगणो लक्ष्यते, न तर्हि विश्वेदेवा विधीयन्ते, कथं सकृदुच्चरितो वैश्वदेवशब्दो यागगणं लक्षयिष्यति, विश्वांश्च देवान्विधास्यति? इति नायं वैश्वदेवशब्दस्य विश्वैर्देवैर्मिथः संबन्धो घटते। तस्मात् कर्मनामधेयमेव, न गुणविधिः इति ॥

परार्थत्वात् गुणानाम् ॥ १६ ॥

परार्थाश्च गुणाः, ते न शक्नुवन्ति प्रधानमावर्तयितुम्, तेन

---

कल्प्यते। अतुल्यप्रमाणशिष्टानां त्वविकल्पः तत्तु नामधेयतयैवोपपद्यते।

ननु चावयवार्थोऽवगम्यमानः कार्यानन्वयी स्यात्। नान्वितस्यान्वयो न्याय्यः अन्वितश्चामिक्षायामर्थः। तस्मात् कार्यानन्वयो नाभिधानं वारयितुमुत्सहते। तस्मान्न विकल्पः कल्पयितुं शक्यते। नाप्यावृत्तिः कर्मणः अतः नामतयैवाध्यवसानं न्याय्यम्।

---

परिकल्प्यतेऽनुपपत्त्या। अतुल्यप्रमाणशिष्टानां त्वविकल्पः। अग्न्यादयो हि श्रुत्या शिष्टाः, विश्वेदेवास्तु वाक्येन। तत्र विधानं नामधेयतयोपपद्यते। ननु नामधेयमात्रत्वेऽवयवार्थोऽवगम्यमानः कार्येऽनन्वयी स्यात्। अवयवार्थानुसारेण हि विश्वेषां देवानां देवतात्वं प्रतीयमानं कार्येणानन्वितं स्यादित्यर्थः। परिहरति—नान्वितस्यान्वयो न्याय्यः; अन्वितश्चामिक्षायामयमर्थः तस्मात्कार्यानन्वयो नाभिधानं वारयितुमुत्सहते। एकस्मिन्नप्यन्वितस्य। अन्यत्रानन्वितस्य दण्डिन्यायेन नामधेयतयोपपत्तेः निमित्तत्वं दण्डवदविरुद्धम्। तस्मान्न विकल्पः कल्पयितुं शक्यते, नाप्यावृत्तिः कर्मणः। अतो नामधेयतयाऽध्यवसानं न्याय्यम्।

सकृद्यागः कर्तव्यः, न गुणानुरोधेनावर्त्तितुमर्हति। संप्रतिपन्न-देवतत्वाच्च न विरोधः, तत्रैकस्यांप्रधानाहुतौ त्रिंशदाहुतयो हूयन्ते इति त्रिंशत्संख्यासम्पत्तिराहवनीयाहुतीनां न अवकल्पते। तस्मात् कर्मनामधेयमिति सिद्धम् ॥

---

कथं पुनरवैश्वदेवे वैश्वदेवाभिधानम्। गुणविधौ पुनर्विधानतः सिद्ध्यति। सत्यमेवं यद्येकान्ततो विधानतः सिद्ध्यति। आमिक्षायां हि अनभिधानप्रसङ्गात्। तुल्यं च प्रकृतत्वम्। कतरत्पुनरनयोः बलीयः ? न विधेयस्याविधेयाभिधानं सिद्ध्यति। भवति च तुल्ययोगिनां लक्षणाभिधानं नामपक्षे दण्डिनो गच्छन्तीति च। तस्माज्ज्यायानयं पक्षः।

---

कथं **पुनःरवैश्वदेवेऽग्न्यादियागे** **वैश्वदेवाभिधानं** प्रवृत्तिनिमित्तशून्यं **गुणविधौ पुनर्विधानात्** प्रवृत्तिनिमित्तसंभवात् सिध्यति। परिहरति—**सत्यमेवं यद्येकान्ततो विधानतः सिद्ध्यति। आमिक्षायां त्वनभिधानप्रसङ्गात्।** आमिक्षायां हि विश्वेदेवाः प्राप्तत्वान्न विधेया इत्येकान्ततो विधेयतयाऽभिधानप्रवृत्तिर्न सिद्ध्यति। नन्वामिक्षा-परित्यागेन विधेयतयाऽभिधानं सेत्स्यति इत्यत्राह—**तुल्यं च प्रकृतत्वं** तेनामिक्षायागो न न शक्यते वर्जयितुम्। अत्र चोदयति—**कतरत्पुनरनयोर्बलीयः** इति। यदिदमवैश्वदेवस्य वैश्वदेवाभिधानं विधेयस्य चाविधेयाभिधानं अनयोः कतरद्बलीयः। परिहरति—**न विधेयस्या-विधेयाभिधानं** संभवति। विधेयो ह्यज्ञातो ज्ञाप्यते अभिधेयश्च ज्ञातः। न चैक एवार्थः सकृत् ज्ञातश्चाज्ञातश्च संभवति। **संभवति च तुल्ययोगिनां लक्षणयाभिधानम्। नामधेयपक्षे दण्डिनो गच्छन्तीतिवत्** साहचर्येण अदण्डिष्वपि यथा दण्डिशब्दो लक्षणया वर्तते तथेहाप्यवैश्वदेवे वैश्वदेवे च वैश्वदेवशब्दो वर्तिष्यते। **तस्माज्ज्यायानयं पक्षः** अवैश्वदेवस्य वैश्वदेवाभिधानमिति श्रेयानयं पक्षः।

वैश्वानरेऽष्टत्वाद्यर्थवादताधिकरणम् ॥

पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये ॥ १७ ॥

'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते' इति श्रूयते, तत्र 'यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति'

---

पूर्ववन्तोऽविधानार्थाः। उक्तं विध्युद्देशार्थवादमन्त्रविधिभिः प्रामाण्यम्। इह पुनः अष्टाकपाले मन्त्रत्वं नास्ति। अतश्चोदकत्वात् नामधेयमपि न सम्भवति सामानाधिकरण्याभावात् अष्टाकपालादिषु। अर्थवादगुणविधानत्वं तु सन्दिह्यते।

---

इदं पुनरत्र वक्तव्यम्—वैश्वदेवेन यजेतेति कस्मादामिक्षायाग एव न व्यपदिश्यते। तथा हि वैश्वदेवशब्दे न लक्षणाऽऽश्रिता स्यात्। यजिश्च यदि तस्मिन्नपि वर्तते तथापि तस्य न काचिदनुपपत्तिः। अत्रोच्यते--वैश्वदेवशब्दोऽयं सूक्तहविषोरिति नियमात् सूक्ते हविषि वा मुख्यया वृत्त्या वर्तते। यजतिना सामानाधिकरण्यात् तस्य यागवृत्तित्वेन न शक्नोति एष यजतिशब्दं नियन्तुम्। न च वैयधिकरण्येन वैश्वदेवशब्दस्य यजिना संबन्धः आमिक्षाशब्दसामानाधिकरण्येन तस्य स्त्रीलिङ्गत्वापत्तेः। सामानाधिकरण्येनान्वयोपपत्तौ व्यधिकरणान्वयानुपपत्तेः।

पूर्ववन्तोऽविधानार्थाः। उक्तं विध्यर्थवादमन्त्रनामगुणविधिभिः प्रामाण्यम्। इह पुनः [1]द्वादशकपाले मन्त्रत्वं नास्ति स्मारकत्वं नास्ति अतश्चोदकत्वात् विहितस्मारकत्वाभावात् नामधेयमपि न संभवति। सामानाधिकरण्याभावादष्टाकपालादिषु। यदष्टाकपालो भवतीति विधीयमानभावार्थसामानाधिकरण्यं नास्ति। आर्थवादिक(अष्टत्वादि) गुणविधानत्वं तु सन्दिह्यत एव।

---

(1) A. अष्टाकपाले

इत्येवमादयः कपालविकल्पाः श्रूयन्ते; तेषु सन्देहः, किमष्टत्वादयो गुणविधयः, उतार्थवादाः ? इति। तत्र गुणविधयः इत्येव ब्रूमः। कथं ?। ये हि पूर्ववन्तो विदितपूर्वमर्थमभिवदन्ति ते अविधानार्थाः, तदेतत् अस्य वाक्यस्य समाम्नाये सामर्थ्यं, यदविहितपूर्वकाभिधानम्। किं तत् ?। विधानसामर्थ्यम्; एवमविहितमर्थं विधास्यति, इतरथा अर्थवादाः सन्तोऽनर्थकाः स्युः। न च, द्वादशकपालस्य शेषभावमुपगन्तु-

---

तत्र गुणविधानं तावन्न सन्दिह्यते, विषयाभावात्। कथमभावः ? गुणान्तरोत्पत्तिनिरोधात्। पुरोडाशकपाले तु अभावार्थत्वादेवाविषयः। तथाऽर्थवादोऽपि द्वादशसङ्ख्यया सङ्ख्यान्तरनिरोधात् न तत्सम्बन्धितया स्तुतिः 'आपः शान्ता' इतिवत्। तस्मात् प्रतिभामात्रत्वात् पुनरप्यनपेक्षत्वाक्षेपः।

---

**तत्र गुणविधानं तावन्न सन्दिह्यते**[1] **विषयाभावात्।** एकान्ततो गुणविधानस्यासंभवात्। **कथमभावो विषयस्य ?** उत्तरं—**गुणान्तरोत्पत्तिनिरोधात्।** वैश्वानरं द्वादशकपालं निर्वपेदिति वैश्वानरेज्या तावदुत्पत्तिशिष्टद्वादशसङ्ख्ययाऽवरुद्धा। **पुरोडाशकपाले तु** अनवरुद्धे **अप्यभावार्थत्वान्न विषयः। तथाऽर्थवादोऽपि** न संदिह्यत इति संबन्धः। कुत इत्याह—**द्वादशसङ्ख्यया** अष्टत्वादि**सङ्ख्यान्तरनिरोधात्। न तत्संबन्धितया स्तुतिः 'आपो वै शान्ता' इतिवदिति।** यथा आपश्शान्ता इति विधेयवेतससंबन्धिनीनामपां स्तुतिः उपपन्ना तथेहाप्युपपद्यत इति चेत; सम्बन्धिना स्तुतिरुपपद्यते। न च सङ्ख्यान्तरस्य स्तुतिः असम्बन्धाद् द्वादशसङ्ख्यायाः। **तस्मात् प्रतिभामात्रत्वात् पुनरप्यनपेक्षत्वाक्षेपः।**

---

(1) R. संभवति

मर्हति। प्रत्यक्षा ह्यष्टानां कपालानां स्तुतिः, परोक्षा द्वादशानाम्, प्रत्यक्षाभावे च परोक्षा स्यात्। तस्मात् गुणविधयः ॥

गुणस्य तु विधानार्थे तद्गुणाः प्रयोगे स्युरनर्थका न हितं प्रत्यर्थवत्ताऽस्ति ॥ १८ ॥

नैतदस्ति गुणविधयः इति, गुणस्य विधानार्था एते सन्तः पुरोडाशस्य कपालेषु सङ्ख्यां विदध्युः, न शक्नुवन्ति यागप्रयोगस्य

---

एवं स्थिते कश्चित गुणविधानेन प्रामाण्यं मन्यते कोऽभिप्रायः? किमुत्पत्तिनिरोधं न पश्यति? न न पश्यति सहवाक्यभ्रमात सर्वसङ्ख्यायुक्तं निर्वपतिं मन्यते। एकवाक्यत्वात। अतश्चावृत्तिः कर्मणो विकल्पो वा गुणानामित्यभिप्रायः। वैश्वानरं द्वादशकपालमिति देवतार्थमुपक्रमं मन्यते।

---

एवं स्थिते पूर्वपक्षे कश्चिद्राद्धान्तैकदेशी गुणविधानेन प्रामाण्यं मन्यते। कोऽभिप्रायः? एवं मन्यमानः स किमुत्पत्तेः गुणान्तरेण निरोधं न पश्यति येनैवं मन्यते। उत्तरं—न न पश्यति। अपि तु पश्यत्येव। [1]सहवाक्यभ्रमात् सर्वसङ्ख्यायुक्तं निर्वपतिं मन्यते एकवाक्यत्वात्। अष्टाकपालं नवकपालं दशकपालं एकादशकपालं द्वादशकपालं निर्वपेदिति सर्वसङ्ख्यायुक्तं निर्वपतिं मन्यते। सहवाक्यमेतदिति मन्वानः, एकवाक्यत्वात्। अतश्चावृत्तिः कर्मणो विकल्पो वा गुणानामित्यभिप्रायः। वैश्वानरं द्वादशकपालमिति देवतार्थमुपक्रमं मन्यते। तेनैकेन वाक्येन वैश्वानरेज्यायाः सर्वसङ्ख्यायुक्ताया विधानम्[2]। अतः उत्पत्तिशिष्टगुणावरोधो न भवति।

---

(1) B. सहवाक्यमेतदिति मन्वातः एकवाक्यभ्रमात् (2) B. विधानादुप्पत्ति

विधातुम्, द्वादशकपालता हि यागस्य वाक्येन, अष्टाकपालादयः प्रकरणेन, तेन ते यागे न भविष्यन्ति। अपि च अष्टत्वादयः पुरोडाशेनैकवाक्यभूताः प्रकरणं बाधित्वा न यागस्य भविष्यन्ति; यागासंबन्धे च अनर्थकाः, पुरोडाशसंबन्धे फलाभावात्; अर्थवादत्वेन तु वैश्वानरयागस्य स्तुतिरुपपद्यते। तस्मात् अर्थवादाः इति ॥

तच्छेषो नोपपद्यते ॥ १९ ॥

इति यदुक्तं, तत्परिहर्तव्यम् इत्याभाषान्तं सूत्रम् ॥

अविभागाद्विधानार्थे स्तुत्यर्थेनोपपद्येरन् ॥ २० ॥

यदा तु अष्टाकपालादिप्ररोचनार्था अनर्थकाः इत्यवगतं, तदा लक्षणया द्वादशकपालस्य स्तुतिर्वैश्वानरयागप्ररोचनार्था भविष्यति; सन्ति हि द्वादशसङ्ख्यायामष्टत्वादयः सङ्ख्याविशेषा

---

अत्रोच्यते । न गुणविधानात् प्रामाण्यं शक्यते वक्तुं विषयाभावात् । ननु वैश्वानरदेवताकं कर्म विषय इत्युक्तम् । न तत्, द्वादशकपालविरोधात् । 'यदष्टाकपाल' इत्येवमादिना सङ्ख्याविधानमिति यदुक्तं दुरुक्तं तत् । कथं ?

---

गुणस्य तु विधानार्थे। अत्रोच्यते गुणविधानात् प्रामाण्यं न शक्यते वक्तुं विषयाभावात्। ननु च वैश्वानरदेवताकं कर्म विषय इत्युक्तम्। परिहृति—न तत् विषयः द्वादशकपालविरोधात्। 'यदष्टाकपाल' इत्येवमादिना [1]सहसङ्ख्याककपाल-विधानमेकेनैव वाक्येन। तेन उत्पत्तिशिष्टगुणावरोधो नास्तीति यदुक्तं दुरुक्त तत्। कथं ?

(1) B. नाना

अविभक्ताः, अतो द्वादशकपालस्य स्तुत्यर्थत्वेनावयवस्तुतिरुपपद्यते; यथा शोभनमस्य चक्रस्य नेमितुम्बारं, शोभनमस्यास्सेनायाः हस्त्यश्वरथपादातमिति। तस्मात् उपपन्ना स्तुतिः इति ॥

कारणं स्यात ? इति चेत ॥ २१ ॥

इति चेत भवान् पश्यति, अर्थवादाः इति, कारणमष्टत्वादीनां ब्रह्मवर्चसादि कस्मान्न भवति ?—ब्रह्मवर्चसकामस्याष्टाकपालः, एवमुत्तरेषु यथाकामम्। किमेवं भविष्यति ? पुरोडाशस्य गुणविधानेऽप्यानर्थक्यं न भविष्यति, न च लक्षणया द्वादशकपालस्य स्तुतिः कल्पिता भविष्यति। तस्मात् कामेभ्यो विधयो भविष्यन्ति ॥

---

वैश्वानरशब्दस्य व्यतिरिक्तार्थविभक्तिवचनत्वात। द्वादशकपालशब्दस्य च सामानाधिकरण्यं श्रौतम्। यदष्टाकपाल इत्येवमादीनां ब्रह्मवर्चसपुनाति पदसंबन्धान्न वैश्वानरपदार्थाधिकरणताऽवगम्यते। पुनातिस्तुत्यन्यथानुपपत्त्या तु कल्पनीयः सम्बन्धः। न च कल्पना क्लृप्तौ उपपद्यत इत्युक्तम्।

---

उत्तरं—वैश्वानरशब्दस्य व्यतिरिक्तार्थविभक्तिवचनत्वात वैश्वानरमिति पदं प्रातिपदिकार्थव्यतिरिक्तार्थवाचिद्वितीयाविभक्त्यन्तम्। तेन सह द्वादशकपालशब्दस्य सामानाधिकरण्यं श्रौतम्। तेन वैश्वानरं द्वादशकपालं निर्वपेदिति प्रथममवगम्यते। यदष्टाकपाल इत्येवमादीनां च ब्रह्मवर्चसपुनातिपदसम्बन्धान्न वैश्वानरपदार्थाधिकरणताऽवगम्यते। पुनातिस्तुत्यन्यथानुपपत्त्या तु कल्पनीयः संबन्धः। न च कल्पना क्लृप्तौ सत्यामुपपद्यत इत्युक्तम्। अस्यार्थः—नात्र सहवाक्यार्थत्वं सम्भवति। अष्टाकपाल इत्यादीनां

आनर्थक्यादकारणं कर्तुर्हि कारणानि गुणार्थो हि विधीयते ॥

यदि कामाय विधयः, भिन्नानि वाक्यानि भवेयुः ; एकं चेदं वाक्यं 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इत्येवमुपक्रान्तं, 'यत् द्वादशकपालो भवति, जगत्यैवास्मिन्पशून्दधाति, यस्मिन्जाते एतां इष्टिं निर्वपति, पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति" इत्येवमन्तम् ; तस्य मध्येऽष्टत्वादयः श्रूयमाणाः यदि न संबध्येरन् ततो वाक्यान्तराणि भवेयुः ; कर्तुर्हि कारणानि पूतत्वादीनि भवेयुः । स एष गुणार्थोऽत्र विधी-

---

एवं तर्हि प्रतिभैव, न, स्तुत्यर्थतयैवोपपत्तेः । कथं पुनः स्तुत्यर्थतोपपद्यते ? निरस्तत्वात् सङ्ख्यायाः सङ्ख्यान्तरेणेत्युक्तम् । अभिधानतो हि निरासः, नासद्भावतः । सद्भावनिमित्तश्च संबन्धो, नाभिधानिमित्तः सद्भावे सत्यवयुत्याभिधानमुपपद्यते ।

---

प्रथमान्तानां द्वितीयान्तेन वैश्वानर[1]पदेनासम्बन्धात । यावत्तु तेषां स्तुत्यन्यथानुपपत्त्या वैश्वानरसम्बन्धः कल्पयितुमिष्यते तावत् द्वादशकपालशब्देनैव द्वितीयान्तेन सामानाधिकरण्यान्न कल्पना आत्मानं लभते । तेन स्थितमुत्पत्तिशिष्टगुणावरुद्धत्वम् । यदि वैश्वानरशब्देन सम्बन्धोऽष्टाकपालादीनां नास्ति, एवं तर्हि प्रतिभैव । परिहरति—न प्रतिभा स्तुत्यर्थतयोपपत्तेः । कथं पुनः स्तुत्यर्थता उपपद्यते निरस्तत्वात् सङ्ख्यायाः सङ्ख्यान्तरेणेत्युक्तम् । उत्तरं—अभिधानतो हि निरासः, [2]नासद्भावतः द्वादशशब्देनाष्टादिसङ्ख्या नाभिधीयते । संभवति तु द्वादशसङ्ख्येऽष्टत्वादिसङ्ख्या सद्भावनिमित्तश्च स्वसम्बन्धो नाभिधाननिमित्तकः । सद्भावे सत्यवयुत्याभिधानमुपपद्यते । पृथक्कृत्याष्टादिसङ्ख्यानि द्रव्याणि अभिधानमुपपन्नम् ।

---

(1) B. पदेन संबन्धात् (2) B. न सद्भावतः

यते वैश्वानरयागे 'पूत एव' इत्येवमादिः; तेन चैलेऽष्टत्वादयः साक्षाद्धेतुत्वेन संबध्यन्ते, यस्मात् गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति, तेन पूत एव सः; यस्मात्त्रिवृतैवाऽस्मिंस्तेजो दधाति, तेन तेजस्वी; यस्मात् विराजैवाऽस्मिन्नन्नाद्यं दधाति, तेनान्नादः; यस्मात् त्रिष्टुभैवाऽस्मिन् इन्द्रियं दधाति, तेन इन्द्रियावी; यस्माज्जगत्यैवाऽस्मिन्पशून्दधाति, तेन पशुमान् इति। ततः कामाय विधयोऽसम्भवन्तो यद्यर्थवादा अपि न भवेयुः, आनर्थक्यमेवैषां

---

नन्ववयोजितस्य संबन्धानवगमः प्राप्नोति अभिधानार्थमेवावयोजनं शक्यते न पुनः संबन्धिताप्यवयोजयितुं शक्यते। विवक्षाह्यभिधानमनुवर्तते न वस्तु। तस्मात आपः शान्ता इतिवदुपपन्ना स्तुतिः। तथा च दर्शितं शोभनमस्य चक्रस्य नेमितुम्बारमिति

---

नन्ववयोजितस्य सम्बन्धानवगमः प्राप्नोति। ततश्च स्तुत्यनुपपत्तिः। परिहरति—अभिधानार्थमवयोजनं शक्यं, न पुनः सम्बन्धिताप्यवयोजयितुं शक्यते। अस्यार्थः—द्वादशभ्यः कपालेभ्य एकदेशभूतानि अष्टौ कपालानि अष्टशब्देनाभिधातुमवयोजनं शक्यते कर्तुं, न पुनस्तेषां पारमार्थिकं द्वादशसङ्ख्यानुप्रवेशित्वमपि शक्यतेऽवयोजयितुम्। तेन संबन्धित्वस्यानवयोजनात् तत्स्तुत्योपपद्यत एव द्वादशसङ्ख्यास्तुतिः। ननु कथमभिधानार्थमवयोजनं शक्यं न पुनः परमार्थत इत्यत्र आह—विवक्षा ह्यभिधानमनुवर्तते न वस्तु। तेन यद्यपि तेषां वास्तवी द्वादशसङ्ख्या तथाप्येकदेशविवक्षायां युक्तमेवाष्टादिशब्देनाभिधानम्। तस्मात् सम्बन्धित्वस्यानवयोजनात्[1] 'आपश्शान्ता' इतिवदुपपन्ना स्तुतिः। तथा च दर्शितं शोभनमस्य चक्रस्य नेमितुम्बारमिति। अवयवस्तुत्याऽवयविनः स्तुतिर्भवति। तेनावयवभूताष्टसङ्ख्यास्तुत्या द्वादशसङ्ख्यास्तुतिः। ननु भवतूत्पत्तिशिष्टा द्वादशसङ्ख्या फलार्थं

---

(1) B. नवयोजनाभावात्

स्यात्। तस्मात् अकारणं ब्रह्मवर्चसत्वादयोऽष्टत्वादीनाम्, तस्मादष्टत्वादयोऽर्थवादाः इति ॥

अथ यजमानशब्दस्य प्रस्तरादिस्तुत्यर्थताधिकरणम् ॥

तत्सिद्धिः ॥ २३ ॥

'यजमानः प्रस्तरः' 'यजमान एककपालः' इत्यादि समा-

---

गुणफलसंबन्धविधानमप्येतस्मादेव न संभवति। कस्मात् एतस्मात्? स्तुत्यर्थत्वेनैकवाक्यतावगमात्। तद्दर्शितमुपक्रमोपसंहाराभ्याम्। अतः स्तुत्यर्थतयोपपत्तेः सिद्धमनपेक्षत्वम्।

तत्सिद्धिः। उक्तमवयुत्याभिधानतः संबन्धेन स्तुतिरुपपद्यत इति। यत्र पुनः संबन्धितैव नावगम्यते। न च गुणविधानं सम्भवति यथा 'यजमान एककपालः' 'यजमानः प्रस्तर' इति तत्र कथं प्रामाण्यम्?

---

तु तस्मिन्नेव कर्मण्यष्टत्वादिविधानमस्त्वित्यत्राह— गुणफलसंबन्धविधानमप्येतस्मादेव न संभवति। कस्मादेतस्मात्? उत्तरं— स्तुत्यर्थैनैकवाक्यत्वावगमात्। गुणफल-सम्बन्धे च वाक्यभेदापत्तेः। दर्शितं चैकवाक्यत्वमुपक्रमोपसंहाराभ्याम्। अतोऽर्थ-वादतयोपपत्तेः सिद्धमनपेक्षत्वम्।

तत्सिद्धिः। उक्तमवयुत्याप्यभिधानतः संबन्धेन स्तुतिरुपपद्यत इति यद्यप्ये-वमवयुत्याभिधानं तथापि सम्बन्धित्वस्यानवयोजितत्वात तत्स्तुत्यापि सम्बन्धिनः स्तुतिर्भवती-त्युक्तम्। यत्र पुनः संबन्धिता कथञ्चिदपि नावगम्यते परस्परमनन्वितत्वात्। न च[1] गुणविधानं संभवति अशक्यत्वात् यथा यजमान एककपालः यजमानः प्रस्तर इत्येवमादिषु तत्र कथं प्रामाण्यमिति। अप्रामाण्यमेवेत्यर्थः।

---

(1) B. न च गुणा विधीयन्ते

म्नायते ; तत्र सन्देहः, किं 'यजमानः प्रस्तरः' इत्येष गुणविधिः, किमर्थवादः? इति; तथा 'यजमानः एककपालः' इति। किं तावत् प्राप्तं? गुणविधिः इति। किमेवं भविष्यति?। एवं अपूर्वमर्थं विधास्यति, इतरथाऽर्थवादोऽनर्थकः स्यात, अर्थवत्त्वञ्च न्याय्यम्। तस्मात् विधिः।

नैतदेवं, यदि विधिः स्यात्, ततः प्रस्तरकार्ये यजमानो नियम्येत, यजमानकार्ये वा प्रस्तरः, प्रस्तरे जुहूमासादयति, सर्वा वा स्रुचः इति यजमाने जुहूरासाद्येत! सर्वा वा स्रुचः

---

ननु च गौणमुख्याधिकरणे स्थितं यथा गौणः संबन्धोऽर्थान्तरवाचिनामपि भवतीति। तदेवेदं न मृष्यते। कस्मात्? नैव गौणता सम्भवति अर्थान्तरसंबन्धितया। कथं पुनर्न संभवति? गौणे ह्यभिधाने गुणानामेव वाच्यत्वं युक्तम्। अन्यथा शौर्यमेव सिंहशब्दो देवदत्ते प्रतिपादयति, ज्वलनशब्दश्च माणवके पिङ्गलतामिति नोपपद्यते। सिंहजाति-

---

ननु च गौणमुख्याधिकरणे स्थितं यथा गौणः संबन्धोऽर्थान्तरवाचिनामपि भवति इति। तेन परस्परान्वयसंभवात् प्रस्तरैककपालयोः स्तुतिरुपपद्यत इति। परिहरति—तदेवेदं न मृष्यते। गौणीवृत्तिरेवाक्षिप्यते। कस्मान्न मृष्यते?। उत्तरं—नैव गौणता संभवति अर्थान्तरसंबन्धितया। कथं न भवति? उत्तरं-गौणे ह्यभिधाने गुणानामेव वाच्यत्वं युक्तम्। यदिदं गौणमभिधानमुच्यते तत्र गुणानामेव यदि वाच्यत्वं तदा प्रतिनियतगुणप्रतिपत्ति[1]: सिद्ध्यति। नान्यथा। तदाह—अन्यथा हि सिंहशब्दः शौर्यमेव देवदत्ते प्रतिपादयति सिंहो देवदत्त इत्यत्र। तथा ज्वलनो माणवक इत्यत्र ज्वलनशब्दश्च माणवके पिङ्गलतामिति नोपपद्यते। कुतः इत्यत्राह—सिंहजाति—

---

(1) C. प्रवृत्ति

इति; तथासति न याजमानं शक्यते कर्तुम्, 'दक्षिणतो ब्रह्मयजमानावासाते कर्मणः क्रियमाणस्य' इति; न च प्रस्तरो याजमानं शक्नोति कर्तुम्। तथा, यदि यजमान एक-

---

मुखेन सिंहशब्दो गुणान् प्रतिपादयन् यावन्तो जात्यभिसम्बन्धा गुणास्तान् प्रतिपादयेत, अविशेषात।

अथ मन्यसे तावन्मात्रविवक्षायां स एव प्रतीयत इति। विवक्षानुवर्ती तर्हि शब्दः नाभिधेयानुवर्ती। ततः किं? अध्यारोपिततद्भावो गौणः। अध्यारोपे च नार्थान्तरसम्बन्धः। किमिति? अध्यारोपो हि अधिगतार्थविषय एव नानधिगतं वस्तु स्पृशति। स एवेति गृह्यते न तत्सदृश इति।

---

मुखेन सिंहशब्दो गुणान् प्रतिपादयन् यावन्तो जातिसंबन्धा गुणास्तान् सर्वानेव प्रतिपादयेत् प्रतिपादनोपायाविशेषात्। अथ मन्यसे तावन्मात्रविवक्षायां स एव प्रतीयत इति य एव गुणो विवक्षितः स एव प्रतीयते नान्य इति चेत्। दूषयति —विवक्षानुवर्ती तर्हि शब्दो नाभिधेयानुवर्ती। वक्तुर्विवक्षां तर्ह्यनुवर्तते शब्दो न वस्तु। यद्यपि वस्तु न विद्यते[1] तथापि विवक्षावशेन शब्दः प्रवर्तत इति। ततः किम्? उत्तरं—अध्यारोपिततद्भावो गौणः प्राप्नोति। माणवके [अ]विद्यमानं अग्निभावमारोप्य विवक्षित्वा गौणः शब्दः प्रयुज्यते इत्यापतति। तथापि किमित्याह—अध्यारोपे च नार्थान्तरसंबन्धः न माणवकसम्बन्धः अग्निशब्दस्य। किमिति? उत्तरं-अध्यारोपो ह्यधिगतार्थविषय एव। अविद्यमानमधिगतमेव वस्तु गृह्णाति नानधिगतं वस्तु स्पृशति यथा शुक्तिकायां रजतज्ञाने स एवेति गृह्यते न पुनस्तेन सदृश इति। रजतमेवेदमिति ज्ञानं न पुना रजतसदृशमिति। तेनाविद्यमानं रजतमेव गृह्णाति न रजतसदृशं शुक्तिकादि। यथा-

---

(1) A. प्रतीयते

कपालकार्ये विनियुज्येत, सर्वहुतः क्रियेत। तत्र सर्वतन्त्रपरिलोपः स्यात्। न च, एककपालो याजमानं शक्नोति कर्तुम्। तस्मान्न विधिः। विध्यन्तरं चास्ति, 'प्रस्तरमुत्तरं बर्हिषः सादयति,' 'एककपालं सर्वहुतं करोति' इति; तस्मादपि न विधिः। किं तर्हि? अर्थवादः, यजमानो ज्ञायत एव प्रस्तरः, एककपालः इति च।

---

तस्मात् प्रस्तरैककपालयोः यजमानशब्दो नालं स्तुतौ। गुणविधिस्तर्हि भवतु। असावप्यसंभवान्नैव भवति। गुणो विधीयमानः कार्यार्थेऽत्र विधीयते। स चोभयथापि नोपपद्यते। तदेतद्दर्शितं भाष्यकारेण। तस्मात्सैवेयं प्रतिभाशङ्का।

अत्राभिधीयते। सत्यं गुणविधिर्न संभवति अर्थवादस्तु न निवारयितुं शक्यते। ननु चार्थासम्बन्धान्नार्थवाद इत्युक्तम्। अयुक्तमुक्तम्। कथं? संभवति स्वार्थसंबन्धितयैव गौणमभिधानम्।

---

ध्यारोपस्य विषयः स एव गौणस्यापि शब्दस्य विषयः तस्मात् प्रस्तरैककपालयोः स्तुतौ नालं यजमानशब्दः। गुणविधिस्तर्हि भवतु। उत्तरं—असावप्यसंभवान्नैव संभवति। गुणो हि विधीयमानः [1]कार्यार्थेऽत्र विधीयते स चोभयथापि नोपपद्यते। न यजमानकार्ये प्रस्तरैकपालयोर्विधानं, नापि तयोः कार्ये[2] यजमानविधानमित्युक्तं भाष्यकारेण। तस्मात् सैवेयं प्रतिभाशङ्का—अत्राभिधीयते; सत्यं गुणविधिर्न संभवति अर्थवादस्तु न निवारयितुं शक्यते। ननु [3]चार्थासंबन्धात् नार्थवाद इत्युक्तम्। परिहरति—अयुक्तमुक्तम्। कथमयुक्तमुक्तं? उत्तरं—संभवति हि स्वार्थसंबन्धितयैव गौणत्वम्।

---

(1) A. कार्यार्थो न दृश्यते (2) यजमानस्येति दर्शितम् (3) A. चार्थान्तर संबन्धात्

कथं पुनरनयोः सामानाधिकरण्यं ज्ञायते? न हि प्रस्तर एककपालो वा यजमानः, न च यजमानः एकस्मिन् कपाले संस्कृतः पुरोडाशः, प्रथमो वा कुशमुष्टिर्लूनः; कथं परशब्दः परत्र वर्तते? किमर्थं वा ज्ञायमानस्य संकीर्त्तनम्?' इति।

उच्यते, ज्ञायमानः संकीर्त्यते स्तोतुम्, प्रस्तर उत्तरो बर्हिषः सादयितव्यो यजमानत्वात्; तथा यजमान एक-कपालः सर्वहुतः कर्तव्यः, स्वर्ग आहवनीयस्तत्र प्रतिष्ठापितो भवति इति।

---

ननु स्वार्थसंबन्धिगुणमात्रानवगमान्नेत्युक्तम्। विवक्षातो विशेष इत्येवदप्युक्तम्। सत्यमुक्तम्। विवक्षायां हि नाभि-धेयसंबन्धोऽस्तीत्यप्युक्तम्। ततश्च स्तुत्यनुपपत्तिः। किं केन संबध्यते। अत्रोच्यते—न, अनियमज्ञः खल्वसि। अभिधेयाविवक्षायां सिंह-

---

स्वार्थमभिधाय शब्दः तदुपस्थापिते तत्सदृशे तात्पर्यमवलम्बमानो गौणो भवतीत्यर्थः। ननु च स्वार्थसंबन्धिगुणमात्रानवगमान्नेत्युक्तम्। परिहरति—विवक्षातो विशेष इत्येतदप्यु-क्तम्। चोदयति—सत्यमुक्तं विवक्षायां नाभिधेयसंबन्धोऽस्तीत्यप्युक्तम्। विवक्षायां निबामिकायामभिधेयो यः स्वार्थो यजमानशब्दस्य स न संबन्धी भवति। अध्यारोपो हि तदा स्यात्। असम्भूतमर्थं विकल्पनानिर्मितं शब्दो वक्ति न पारमार्थिकमर्थं ततश्च स्तुत्यनुपपत्तिः। तथा खपुष्पाद्युपपत्तिः अर्थनिरपेक्षे विकल्पमात्रविषयत्वेन शब्दस्य खपुष्पमिति प्रयोग उपपद्यते अभिधेयसंबन्धित्वे तु शब्दस्यानुपपत्तिः। किं केन संबध्येत इति। किंपदमत्र केनार्थेन सम्बध्यते। अत्रोच्यते—अनियमज्ञः खल्वसि[1] शब्दानां, अभिधेयाविवक्षायां हि सिंह-

---

(1) B. अविषयज्ञः खल्वसि

कथं परत्र वर्तते परशब्दः ? इति। गुणवादस्तु, गुणादेष वादः। कथमगुणवचनो गुणं ब्रूयात् ?। स्वार्थाभिधानेन इति ब्रूमः, सर्व एवैते गौणाः शब्दाः न स्वार्थं हित्वा गुणेषु वर्तन्ते; प्रसिद्धहानिर्हि तथा स्यात्, अप्रसिद्धकल्पना च; न च सर्वे गुणसमुदायवचनाः गुणहीनेऽपि तथादर्शनात्; अप्रसह्य-कार्यपि हि कदाचिद्रोगेणोपहतः सिंह्याः पुत्रः सिंह एव; समुदायवाची च नावयवे प्रवर्तितुमर्हति, सर्वसिंहव्यक्तिषु यत् सामान्यं तद्वचनः शब्दः इति स्थितो न्यायः प्रत्युध्रियेत; न च, असति सिंहे परिकल्पनया प्रवर्त्तेत। कल्पनाया अशक्य-

---

शब्दोच्चारणमनिबन्धनम्। न च शब्दान्तरेणाध्यारोपाभिधानं नोप-पद्यते। मन्द मैवं, अध्यारोपविषयतया हि सिंहार्थो विवक्ष्यते, न गुणसंबन्धितया। न चासौ सिंहशब्दादृते संभवति तस्मान्नानिबन्धनं सिंहशब्दोच्चारणम्। ननु चास्माभिरिदमुक्तम्।

---

शब्दोच्चारणमनिबन्धनं स्यात्। अर्थो हि स्वप्रतिपत्त्यर्थं शब्दमाक्षिपतीति विशेषशब्दो-च्चारणं युक्तम्[1]। तदभावे तु[2] निर्निबन्धनं विशेषशब्दोच्चारणम्। शब्दान्तरेणाप्यध्या-रोपाभिधानं न नैवोपपद्यते। अत्र चोदयति—मन्द मैवं वादीः। अध्यारोपितविषय-तया हि सिंहशब्दार्थो विवक्ष्यते शब्दानामध्यारोपितविषयतया अध्यारोपितसिंहार्थो विवक्ष्यते न [3]पुनर्माणवकस्य तद्गुणसंबन्धितया। न चासावध्यारोपितः सिंहार्थः सिंहशब्दादृते सम्भवति। तस्मान्नानिबन्धनं सिंहशब्दोच्चारणम्। य एवार्थोऽध्यारोप्यते तस्यैव शब्द उच्चार्यत इति [4]विशेषशब्दोच्चारणं नाकारणम्। राद्धान्ती वदति—ननु चास्माभिरिदमुक्तम्।

---

(1) B. विशेषच्चारणमुक्तम् (2) B. निषिद्धबन्धनं (3) न पुनर्माणवका-भावाद्गुणसंबन्धितया (4) C. लिङ्गशब्दोच्चारणं

त्वात्। कथं नु स्वार्थाभिधानेन प्रत्ययव्यवस्था? इति चेत्। अर्थसंबन्धात्, सिंहः इति निर्ज्ञायते प्रसह्यकारिता तत्र प्रायेण इति प्रसह्यकारी इति गम्यते, अर्थप्रत्ययसामर्थ्यात्; यो हि मन्यते, प्रसह्यकारिणं प्रत्याययेयम् इति, स यदि सिंह-शब्दमुच्चारयति, सिद्ध्यत्यस्याभिप्रेतं, सिंहार्थः प्रतीतः प्रसह्य-कारी इति संबन्धादितरमर्थं प्रत्याययति; एवं स्वार्थाभिधानेन तद्गुणसंबन्धः प्रतीयते।

इह तु यजमानः प्रस्तरः, यजमान एककपालः इति कीदृशो गुणसंबन्धः प्रतीयते? तत्सिद्धिकरः इति, सर्वो ह्यात्मनः कार्यसिद्धिं करोति, अन्योऽपि यः तस्य कार्यसिद्धिं करोति, स तस्मिन् उच्चरिते हृदयमागच्छति, यथा राजा

---

किमिति सिंहार्थो देवदत्ते अध्यारोप्यत इति। तद्गुणदर्शनादिति चेत्; प्राप्तं तर्हि मुख्यार्थसंबन्धितया प्रतिपादनम्। कथं विशेषा-वगतिः इति चेत्। प्रमाणान्तरदर्शनात् तत्पूर्वकत्वाच्च गौणस्य।

---

किमिति सिंहार्थ एव देवदत्तेऽध्यारोप्यत इति। तद्गुणदर्शनात्। देवदत्ते सिंहगुण-दर्शनादिति चेत्। दूषयति—प्राप्तं तर्हि मुख्यार्थसम्बन्धितया प्रतिपादनं, मुख्यो यः सिंह-शब्दार्थः तत्संबन्धितया तत्सदृशतया देवदत्तस्य सिंहशब्देन प्रतिपादनम्। तत्र देवदत्तशब्देन द्रव्यस्वरूपस्य प्रतिपन्नत्वात् सादृश्यमात्रप्रतिपत्तिपरता, सिंहस्य सादृश्यं च गुणयोगनिबन्धन-मिति सिंहगुणप्रतिपत्तिपरत्वम्। कथं गुणविशेषावगतिरिति चेत्। उत्तरं—प्रमाणान्तर-दर्शनात् तत्पूर्वकत्वाच्च गौणस्य। गौणोऽयं प्रयोग इति प्रमाणान्तरवशेनावगम्यते। प्रमाणान्त-रेण हि परत्रायं परशब्दः प्रयुक्त इति ज्ञात्वा गौणत्वनिश्चयः। तत्र च यो गुणः प्रमाणा-न्तरेण दृश्यते तद्गुणयोगेन तत्र प्रवृत्त इति गम्यते तेन गुणविशेषावगमसिद्धिः। एकग्रन्थे-

पत्तिगणकः इति, पत्तिगणको राज्ञः कार्यं साधयति, स राजशब्दे उच्चरिते प्रतीयते, एवमिहापि यजमानकार्यं प्रस्तरैककपालौ साधयतः, तौ यजमाने प्रतीते प्रतीयेते, तस्मात्तौ यजमानशब्देन प्रत्याय्येते। कथं?। स्तुतौ स्यातां बर्हिष उपरिसादने सर्वहोमे च इति। तस्मादेवं जातीयका अर्थवादा न विधयः—इति ॥

अथाग्नेयादिशब्दानां ब्राह्मणादिस्तुत्यर्थताधिकरणम् ॥

जातिः ॥

'आग्नेयो वै ब्राह्मणः, ऐन्द्रो राजन्यः, वैश्यो वैश्वदेवः'—

---

मुख्योऽपि तावदर्थः प्रमाणान्तरदर्शनाद्विशेषे व्यवस्थास्यति गौणो नेति का युक्तिः? कथं तर्हि खपुष्पमिति? यथैव खपुष्पमिति। तस्मात्सिद्धोऽर्थवादः। किं प्रयोजनं कथं चेति दर्शितं भाष्ये।

जातिः। जात्यादिष्वप्येवमेव योज्यम्। पृथगधिकरणानि तु परिहारान्यत्व-

---

नाह—मुख्योऽपि तावदर्थः पावकादिशब्दानां प्रमाणान्तरवशात् विशेषेऽवस्थाप्यते। गौणो नेति का युक्तिः? यद्यर्थसंबन्धेनैव सर्वशब्दो वर्तते कथं तर्हि खपुष्पमित्यर्थाभावे शब्दप्रयोगः। उत्तरं—यथैव खपुष्पमिति। इति शब्दोऽयं ज्ञाननिर्देशपरः तेनैतदुक्तं भवति यथा खपुष्पमिति ज्ञानं तथा खपुष्पमिति शब्दप्रयोगः[1]। तथा हि ज्ञानं चैकं खमात्र-विषयं अपरं च पुष्पमात्रविषयम्। तत्र तयोरन्योन्यसंबन्धप्रतिपत्त्यभावेपि असंबन्धमप्रति-पद्यमानः संबन्धप्रतिपत्तिव्यवहारं करोति। तयोः सन्निधानोच्चारणं संबन्धिसाधारणं प्रतिपद्यमान इति नयवीथीनिबन्धनन्यायानुसारेण वर्णनीयम्। तस्मात् सिद्धोऽर्थवादः। किं भवति प्रयोजनं कथं चेति दर्शितं भाष्ये।

जातिः॥ जात्यादिष्वप्येवमेव प्रामाण्यं योज्यम। तत्राप्यर्थवादत्वाश्रयणेन प्रामा-ण्यम्। यद्येवं किमिति तर्हि पृथगधिकरणानीत्यत्राह—पृथगधिकरणानि तु परिहारान्यत्व-

---

(1) B. प्रयोगोऽपीति

इत्येवमादयः श्रूयन्ते ; तत्र किं गुणविधयः, अर्थवादाः ? इति सन्देहः। गुणविधयः इति ब्रूमः, एवमपूर्वमर्थं विधास्यन्ति, इतरथा अर्थवादाः सन्तोऽनर्थकाः स्युः। न विधिः, विध्यन्तरस्य भावात्, तस्मात् संवादः, तस्य सङ्कीर्तनं विधिस्तुत्यर्थम्। अनाग्नेयादिषु आग्नेयादिशब्दाः केन प्रकारेण ?। गुणवादेन। को गुणवादः ? अग्निसंबन्धः। कथं ? एकजातीयकत्वात्। किमेकजातीयकत्वं ? 'प्रजापतिरकामयत, प्रजाः सृजेयम्

---

प्रदर्शनार्थानि। तस्मात् गौणार्थानामर्थवादतया स्थितं प्रामाण्यम्। लाक्षणिकार्थानां च। कथं पुनः सृष्ट्यादिषु लक्षणानामपि लक्ष्यत्वम् ? लक्ष्यैः सहैकक्रियायोगात्। तस्माल्लक्षणत्वे निमित्तत्वात्। अतो लक्ष्यलक्षणतेति न विरोधः। अश्वादिषु कथं पशुशब्दो

---

प्रदर्शनार्थानि। तत्राग्नेयो ब्राह्मण इत्येकस्थानप्रभवतया सादृश्याद्गौणीवृत्तिरिति परिहारः। 'आदित्यो यूप' इति यूपसादृश्यात। 'अपशवो वा अन्ये गो अश्वेभ्यः पशवो गो अश्वा' इति प्रशंसया गो अश्वेष्वेव पशुशब्दो गौणः। तथा सृष्टीरुपदधातीति भूम्ना, प्राणभृत उपदधातीति लिङ्गसमवायेन लक्षणेति परिहारं दर्शयितुं पृथगधिकरणानीति। तस्माद्गौणार्थानामपि प्रामाण्यमर्थवादतया स्थितम्। लाक्षणिकार्थानां च। कथं पुनः सृष्ट्यादिषु लक्षणानामपि लक्ष्यत्वम्। न हि गङ्गायां घोष इति लक्षणभूता गङ्गापि लक्ष्या भवति। उत्तरं—लक्ष्यैः सहैकक्रियायोगात्। यानि तावल्लक्ष्याणि तैः सहैकक्रियायोगो लक्षणस्य। तस्याश्च क्रियाया लक्ष्यत्वे निमित्तत्वात् उपधानयोगिता हि लक्ष्यत्वे हेतुः। अस्ति चोपधानयोगिता लक्षणभूतानामपि सृष्ट्यादीनाम्। अतो [1]लक्ष्यलक्षणतेति न विरोधः। [2]अश्वादिषु पशुशब्दः कथं

---

(1) B: लक्ष्यलक्षणत्वेन (2) B: अपश्वादिषु कथं पशुशब्दो लक्षणया अश्वादिषु

इति, स मुखतस्त्रिवृतं निरमिमीत, तमग्निर्देवता अन्वसृज्यत, गायत्री च्छन्दः, रथन्तरं साम ब्राह्मणो मनुष्याणाम्, अजः पशूनां; तस्मात्ते मुख्याः, मुखतो हि असृज्यन्त। उरसो बाहुभ्यां पञ्चदशं निरमिमीत, तं इन्द्रो देवताऽन्वसृज्यत, त्रिष्टुपच्छन्दः, बृहत् साम, राजन्यो मनुष्याणाम्, अविः पशूनां; तस्मात्ते वीर्यवन्तः, वीर्याद्धि असृज्यन्त। ऊरुभ्यां मध्यतः सप्तदशं

---

लक्षणया। प्रतिषेधपूर्वकत्वात् प्रयोगस्य। प्रतिषिद्धो हि तज्जातीयेषु जातिशब्दः प्रयुज्यमानः तज्जातीयान्तरेषु गौणतयैव प्रयोगं लभते। कस्मात् ? जातिशब्दो हि तज्जातीये प्रतिषिध्यमानः समवेतस्य गुणस्य प्रतिषेध्यतयैव प्रतिषेधविषयो भवति। गुणप्रतिषेधाच्च तज्जातीयेष्वेव प्रयुज्यमानो गौणार्थ एव प्रतीयते। तस्माज्जातिशब्दो गौण इत्यविरोधः। अतः सिद्धमनपेक्षत्वम्।

---

लक्षणया; अश्वादिषु यावता मुख्य एव युक्तः। अत्र च लक्षणाग्रहणमतन्त्रं, गौणस्याभिमतत्वात् राद्धान्ते। सर्वथा मुख्यतैवात्र न गौणता, नापि लाक्षणिकतेत्यर्थः। उत्तरं प्रतिषेधपूर्वकत्वात् प्रयोगस्य प्रतिषिद्धो हि तज्जातीयेषु जातिशब्दोऽपरेषु तज्जातीयेषु प्रयुज्यमानो गौणतयैव प्रयोगं लभते। अत्र ह्यन्येषु पशुषु पशवो न भवन्तीति प्रतिषेधं कृत्वा पशुजातीयेष्वेव गवाश्वेषु पशुशब्दः प्रयुज्यत इति गौण एव तस्य प्रयोगः। कस्मात् ? जातिशब्दो हि तज्जातीये प्रतिषिध्यमानः समवेतस्य गुणस्य प्रतिषेध्यतयैव प्रतिषेधविषयो भवति जातेरनपगमान्न जातिः प्रतिषेद्धुं शक्यते; तथापि किमित्याह —गुणप्रतिषेधाच्च पुनस्तज्जातीयान्तरे प्रयुज्यमानो गौणार्थ एव प्रतीयते। पूर्ववाक्येषु गुणेषु प्रतिषिद्धेषु प्रतिप्रसवो गुणानामेव युक्तः इत्यर्थः। तस्माज्जातिशब्दोऽपि गौणः वाच्यगुणयोगेन प्रवर्तनात् इत्यविरोधः। अतः सिद्धमनपेक्षत्वम्।

निरमिमीत, तं विश्वेदेवा देवता अन्वसृज्यन्त, जगती च्छन्दः, वैरूपं साम, वैश्यो मनुष्याणाम्, गावः पशूनाम्' एवमुक्ते सति एकस्मिन्नेवंजातीयके विज्ञाते अन्योऽपि तज्जातीयको हृदयमागच्छति। तस्मादर्थवादः ॥

अथ यूपादिशब्दानां यजमानस्तुत्यर्थताधिकरणम् ॥

सारूप्यम् ॥

'यजमानो यूपः,' 'आदित्यो यूपः' इत्यादि श्रूयते; तत्र गुणविधिः, अर्थवादः? इति सन्देहः। अर्थवत्त्वात् गुणविधिः। अशक्यत्वात् यूपकार्यसाधने यजमानस्य, यजमानकार्यसाधने वा यूपस्य, विध्यन्तरभावाच्च न विधिः, विधिस्तुत्यर्थं संवादः; गुणवादात् सामानाधिकरण्यम्। को गुणः? सारूप्यम्। किं सारूप्यम्? ऊर्ध्वता, तेजस्विता च। तस्मादेवंजातीयका अर्थवादाः ॥

अथापश्वादिशब्दानां गवादिप्रशंसार्थताधिकरणम् ॥

प्रशंसा ॥

'अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः,' 'अयज्ञो वा एव योऽसामा,' 'असत्रं वा एतत् यदच्छन्दोमम्' इति श्रूयते। तत्र विध्यर्थवादसन्देहे अर्थवत्त्वाद्विधयः इति प्राप्ते, अभिधीयते, यदि विधयो भवेयुः गोअश्वा एव पशवः स्युः, सामवानेव यज्ञः, छन्दोमवदेव सत्रम्; अन्येषां पशूनां, यज्ञानां, सत्राणां चोत्पत्तिरनर्थिका स्यात्। विध्यन्तरञ्च नावकल्पेत। अतः स्तुत्यर्थं संवादः, गोऽश्वान् प्रशंसितुमन्येषां पशूनां निन्दा, सामवतः प्रशंसितुमसाम्नां निन्दा, छन्दोमवन्ति प्रशं-

सितुमछन्दोमकानि निन्द्यन्ते; यथा, यत् अघृतं, अभोजनं तत; यन्मलिनं, अवासस्तत् इति ॥

अथ बाहुल्येन सृष्टिव्यपदेशाधिकरणम् ॥

भूमा ॥

'सृष्टीरुपदधाति' इति श्रूयते; तत्र गुणविधिः, अर्थवादः इति सन्देहे अपूर्वत्वात् विधिः, इति प्राप्ते---उच्यते, यदि विधिः, सृष्टिमन्त्रका उपदधातीष्टकाः इत्यर्थः, तत्र न इष्टकानां विशेषः कश्चिदाश्रीयते एवंरूपाः सृष्टिमंत्रकाः, नैवंरूपाः इति; तत्र सर्वासां सृष्टिलिङ्गा मन्त्राः प्राप्नुयुः। अन्येषामसम्युक्तानां मन्त्राणामानर्थक्यं स्यात्। तस्मात् अनुवादः मन्त्रसमाम्नानात् प्राप्तानामुपधाने मन्त्राणाम्; सृष्टीनां सङ्कीर्तनं सर्जनार्थवादार्थम्। अपि च विधित्वे लक्षणा, 'एकया स्तुवत' इत्यत्र या असृष्टयस्ता लक्षयेत्। ननु 'अनुवादेऽपि लक्षणा'। नानुवादपक्षे लक्षणायां दोषः। कथं तु असृष्टिषु सृष्टिषु च सृष्टिशब्दः इति। भूम्ना। बहवस्तत्र सृष्टिलिङ्गा मन्त्राः, अल्पशो विलिङ्गाः—इति ॥

अथ प्राणभृदादिशब्दानां स्तुत्यर्थताधिकरणम् ॥

लिङ्गसमवायात ॥

'प्राणभृत उपदधाति,' 'अज्यानीरुपदधाति' इति, विधित्वे प्राणभृन्मन्त्रकासूपधीयमानासु विलिङ्गानां मन्त्राणामानर्थक्यम्; तस्मात् अनुवादः। लिङ्गसमवायात् परशब्दः परत्र वर्तते; यथा, छत्रिणो गच्छन्ति इति, एकेन छत्रिणा सर्वे लक्ष्यन्ते; न च अयं प्राणभृच्छब्दः सृष्टिशब्दश्च जहत्स्वार्थं मन्त्रगणं लक्षयेत्,

यद्ग्रणे च सुब्विग्रागभृच्छन्दौ समवेतौ, तावपि परिगृह्येते ; यथा छत्रिशब्देन स्वार्थलक्षणार्थेन सोऽपि छत्री गृह्यते इति ।

अथ वाक्यशेषेण सन्दिग्धार्थनिर्णयाधिकरणम् ॥

सन्दिग्धेषु वाक्यशेषात् ॥ २९ ॥

'अक्ताः शर्करा उपदधाति, तेजो वै घृतम्' इति श्रूयते ; तत्र संदेहः, किं घृततैलवसानामन्यतमेन द्रव्येणाञ्जनीयाः शर्कराः, उत घृतेनैव ? इति । कथं संदेहः ? । अञ्जन-सामान्येन वाक्यस्योपक्रमः, घृतेन विशेषेण निगमनं, यथोपक्रमं निगमयितव्यम् एकस्मिन् वाक्ये ; तत्र यद्वा सामान्यमादौ विशेषोपलक्षणार्थं विवक्ष्यते, यद्वा निगमने विशेषः सामान्य-लक्षणार्थः ? तदारम्भनिगमनयोः किं समञ्जसं ? इति संशयः । एवं सन्दिग्धेषु उपक्रमे सामान्यवचने विरोधाभावात् न विशेषः परिकल्प्यः, निगमने तु उपजातः सामान्यप्रत्ययः

---

सन्दिग्धेषु वाक्यशेषात् । ननु च यववराहादिषु वाक्यशेषात् सन्देहापनयः कृतः ? सत्यं, पदार्थविषयस्तु सः, औत्पत्तिकानौत्पत्तिकतया सन्दिह्यमानः पदार्थो निर्णीतः । अस्ति वा पदस्यार्थः ? बाढमस्ति ।

---

सन्दिग्धेषु । ननु च यववराहवेतसादिषु वाक्यशेषात् सन्देहापनयः कृतः तेन पुनरुक्तमेतदिति भावः । परिहरति—सत्यं पदार्थविषयस्तु सः । औत्पत्तिकानौत्पत्तिकतया तु सन्दिह्यमानः पदार्थः तत्र तत्र वाक्यशेषेण निर्णीतः । अत्र चोदयति —अस्ति वा पदस्यार्थः यद्विषयः सन्देहोऽपनीयते । नास्त्येवेति भावः । परिहरति —बाढमस्ति । आवापोद्धारभेदेन पदार्थयोर्वाच्यवाचकभावावगमात् । यदि पदं पदार्थमात्र-

इति विरोधात् लक्षणार्थं घृतवचनं; यथा सृष्टिष्वसृष्टिषु च सृष्टिशब्दः, एवं घृतमघृतं च घृतं इत्युच्यते।

संदिग्धेषु एवं प्राप्ते ब्रूमः, सामान्यवचनेन विशेषापेक्षिणा

---

कथं तर्हि वाक्यवाक्यार्थयोरौत्पत्तिकत्वं वृद्धव्यवहारात्। सत्यं, स त्ववयवश इत्युक्तं तद्भूतानामित्यत्र। तस्मात् तद्भूते तत्र सन्देहः। इह तु क्रियार्थे। सोऽयं पदार्थवाक्यार्थयोः विशेषः। प्रतिपादितश्चायं विस्तरेण। अतः क्रियार्थसंशयादप्यप्रामाण्यम्। एवं स्थिते कश्चि-दुपक्रमवशादुपसंहारनिर्णयो युक्त इति मन्यते, अविरोधात्। सामान्यं हि स्वात्मनि विशेषे च वर्तते। सृष्ट्यर्थवत्। अत्रोच्यते। स्यादेतदेवं यदि

---

मभिधत्ते पदव्यतिरेकि च वाक्यं नास्तीत्येष निश्चयः कथं तर्हि वाक्यवाक्यार्थयोरौत्पत्तिकत्वं वृद्धव्यवहारात्। परिहरति—सत्यं वाक्यवाक्यार्थयोरौत्पत्तिकः संबन्धः स त्ववयवशो वाक्येन वाक्यार्थः प्रतिपाद्य इत्युक्तं तद्भूतानां क्रियार्थेन समाम्नाय इति। वाक्यार्थमातृकायां च अस्माभिः। तस्मात्तद्भूते तत्र सन्देहः। इह तु क्रियार्थे वाक्यार्थे। सोऽयं वाक्यवाक्यार्थयोः पदपदार्थाभ्यां विशेषः। प्रतिपादितश्चायं विस्तरेण। अतः क्रियार्थे संशयादपि अप्रामाण्यम्। उपक्रमोपसंहारयोर्विरोधाद्वाक्यार्थ एव सन्देहः॥ एवं स्थिते पूर्वपक्षे उपक्रमवशादुपसंहारनिर्णयो युक्तः कश्चित् राद्धान्तैकदेशी इति मन्यते अविरोधात्। कथमविरोध इत्याह—सामान्यं हि स्वात्मनि विशेषे च वर्तते। यदि येन केनचिदक्तं गृह्यते तदाप्यक्ता इति घटते। तथा घृतेनाक्तत्वेऽपि [1]तेनोपक्रमवशेनोपसंहारे घृतशब्दो वर्णनीयः सृष्टीरुपदधातीति सृष्ट्यर्थवत्। यथा सृष्टीरुपदधाति इति सृष्टिष्वसृष्टिषु च सृष्टिशब्दस्तथा घृते चाघृते च घृतशब्दो वर्णनीयः। अत्रोच्यते—स्यादेतदेवं यदि

---

(1) B. तेनैतद्वशेन

उपक्रमो वाक्यस्य, विशेषे निगमनवशेन। कुतः?। न हि सामान्यं विहितं येन विरोधो निगमनस्य। कथमविहितं? संदिग्धेषु विधानशब्दाभावात्, न हि विधानशब्दोऽस्ति 'अक्ताः शर्करा उपदधाति' इति वर्तमानकालनिर्देशात् नापि सामान्यस्य साक्षात् स्तुतिः, प्रत्यक्षन्तु घृतस्य स्तवनम्; श्रुत्या घृतस्य स्तुतिः, लक्षणया सामान्यस्य, श्रुतिश्च लक्षणाया ज्यायसी। तस्मात् घृतविधानम्। एवं 'वासः परिधत्ते, एतद्वै सर्वदेवत्यं वासः, यत् क्षौमम्' इति। तथा 'इमां स्पृष्ट्वोद्गायेत्, इमां हि औदुम्बरीं विश्वा भूतान्युपजीवन्ति' इति॥

अथ सामर्थ्याधिकरणम् ॥

अर्थाद्वा कल्पनैकदेशत्वात् ॥ ३० ॥

---

वाक्यान्तरविहितं सामान्यं स्यात्। इह पुनः विशेषपर्यन्तैवान्वयावगतिः एकवाक्यत्वात्। तस्माद्वाक्यशेषापेक्षं क्रियार्थत्वमिति सिद्धम्।

अर्थाद्वा कल्पनैकदेशत्वात्। यत्राप्यनुष्ठाने संशयः तत्रापि शास्त्रमेव सन्दिग्धं मन्यते।

---

वाक्यान्तरविहितं सामान्यं स्यात्। इहपुनर्विशेषपर्यन्तैवान्वयावगतिः एकवाक्यत्वात्। एकस्मिन् वाक्ये पदानां परस्परं वृत्तिमालोच्य वाक्यार्थोऽवगम्यते। तत्राक्तशब्दस्य घृतपदसंबन्धात् घृतविषयत्वमेवावगम्यते। अन्यथा घृतशब्दे लक्षणा स्यात् अक्तशब्दे तु न कश्चिच्छब्दार्थविरोधः। तस्माद्वाक्यशेषनिमित्तापेक्षं क्रियार्थत्वमिति सिद्धं वाक्यशेषे यद्घृतपदं तदपेक्षं वाक्यस्य वाक्यार्थबोधकत्वमिति सिद्धम्।

अर्थाद्वा॥ यत्राप्यनुष्ठाने संशयस्तत्रापि शास्त्रमेव सन्दिग्धं मन्यते। तेनाप्रामाण्यं पूर्वपक्षे।

'स्रुवेणाऽवद्यति, स्वधितिनाऽवद्यति, हस्तेनाऽवद्यति' इति श्रूयते ; तत्र संदेहः,—किं स्रुवेणावदातव्यं सर्वस्य द्रवस्य संहतस्य मांसस्य च तथा स्वधितिना, हस्तेन च, उत सर्वेषामर्थतो व्यवस्था द्रवाणां स्रुवेण, मांसानां स्वधितिना

---

ननु चैतदयुक्तम् अनुष्ठानसन्देहात्शास्त्रमेव सन्दिग्धमिति शास्त्र-पूर्वकत्वादनुमानस्य। सत्यं यथा भवानाह सिद्धानुशासने। कार्यानु-शासने त्वास्कन्दत्यनुष्ठानसंशयोऽपि शास्त्रम्। किमनुष्ठानं न शास्त्रपूर्वकं ? सत्यमनुबन्धे शास्त्रपूर्वकम्। नियोगार्थं त्वनुष्ठानम्। तस्मादुपपन्नो नियोगार्थसंशयः। स पुनः सामर्थ्यतो निर्णेतव्यः अनुष्ठानस्यासंभाव्यात्। सामर्थ्यसाध्यत्वाच्चानुष्ठानस्य। तस्मान्मांसादिषु दर्शिता व्यवस्था भाष्यकारेण

---

ननु चैतदयुक्तमनुष्ठानसन्देहात् शास्त्रमेव सन्दिग्धमिति। शास्त्रपूर्व-कत्वादनुष्ठानस्य (वाक्यार्थबोधकत्वमिति सिद्धम्।) यद्यप्यनुष्ठानं सन्दिग्धं तथापि न शास्त्रं सन्दिग्धमित्यर्थः। परिहरति—सत्यं यथा भवानाह। सिद्धानुशासनेऽनुष्ठान सन्देहेऽपि सिद्धानुशासनं न सन्दिग्धम्। कार्यानुशासने तु आस्कन्दत्यनुष्ठानसन्देहोऽपि शास्त्रम्। आक्षेप्ता आह—किमनुष्ठानं न शास्त्रपूर्वकं येन तत्सन्देहे शास्त्रं सन्दिग्धम्। तत्पूर्वकत्वे ह्यनुष्ठानमपि सन्दिह्येत न शास्त्रं सन्दिह्यते। सत्यमनुबन्धे शास्त्रपूर्वकम्। उत्पत्तिदशायां शास्त्रपूर्वकमित्यर्थः। नियोगार्थस्त्वनुष्ठानं; न नियोगोऽनुष्ठानं प्रमापयति। तेन तस्मिन्नपि सन्दिग्धे शास्त्रमेव सन्दिग्धं [1]तत्पर्यन्तत्वाच्छास्त्रस्य। तस्मादुपपन्नो नियोगार्थसन्देहः। अनुष्ठानसन्देहादपि तत्पर्यन्तत्वात्तस्य। राद्धान्तमाह—स पुनः यो नि-गार्थः सामर्थ्यतो निर्णेतव्यः। निर्णीतश्च भाष्यकारेण। अध्यायार्थमुपसंहरति—

(1) तत्पर्यायत्वात्।

सन्हतानां हस्तेन इति। अविशेषाभिधानादव्यवस्था इति।

एवं प्राप्ते ब्रूमः,—'अर्थाद्वा कल्पना', सामर्थ्यात् कल्पना इति, स्रुवेणावद्येत्, यथा शक्नुयात्; तथा यस्य शक्नुयात् तस्य च; आख्यातशब्दानामर्थं ब्रुवतां शक्तिः सहकारिणी, एवं चेत् यथाशक्ति व्यवस्था भवितुमर्हति। तथा 'अञ्जलिना सक्तून्प्रदाव्ये जुहोति' इति, द्विहस्तसंयोगोऽञ्जलिः, स व्याकोशोऽर्थात् कर्तव्यः। तथा हि शक्यते होमो निर्वर्तयितुम्, तत् यथा, कटे भुङ्क्ते कांस्यपात्र्यां भुङ्क्त इत्यर्थात् कल्प्यते,—कटे समासीनः कांस्यपात्र्यामोदनं निधाय भुङ्क्त इति॥

इति श्रीशवरस्वामिकृतौ मीमांसाभाष्ये
प्रथमाध्यायस्य चतुर्थः पादः॥
समाप्तोऽयं प्रथमाध्यायः॥

---

अतो विध्यर्थवादमन्त्रस्मृतिनामधेयानुष्ठानतोऽनपेक्षताक्षेपं कृत्वा स्थापितं प्रामाण्यं चोदनायाः। इति प्रमाणलक्षणम्।

इति श्रीमत्प्रभाकरमिश्रविरचितायां
शवरभाष्यटीकायां बृहत्यां
प्रथमाध्यायस्य चतुर्थः
पादः समाप्तः

---

अतो विध्यर्थवादमन्त्रस्मृतिनामधेयानुष्ठानतोऽनपेक्षताक्षेपं कृत्वा स्थापितं प्रामाण्यं चोदनायाः। प्रामाण्यमित्युक्तं प्रामाण्यायतस्य निमित्तपरीष्टिरिति प्रतिज्ञातम्।

इति महोपाध्यायशालिकनाथकृतायां
ऋजुविमलायां प्रथमस्य चतुर्थः पादः
अध्यायश्च समाप्तः

---

# द्वितीयाध्याये प्रथमः पादः ॥

भावार्थाधिकरणम् ॥

भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते ॥

प्रथमेऽध्याये प्रमाणलक्षणं वृत्तम्, तत्र विध्यर्थवादमन्त्रस्मृतयस्तत्वतो निर्णीताः, गुणविधिर्नामधेयञ्च परीक्षितं, संदिग्धा-

---

अथ द्वितीयोऽध्यायः

"प्रथमेऽध्याये प्रमाणलक्षणं वृत्त" इति। यथा प्रमाणं शब्दः तथोक्तमित्यर्थः। कुतः "यस्माद्विध्यर्थवादमन्त्रस्मृतयः तत्वतो निर्णीताः।

---

ऋजुविमलापञ्चिकायां
द्वितीयाध्यायस्य
प्रथमः पादः

भावार्थाः॥ "प्रथमाध्याये प्रमाणलक्षणं[1] वृत्त" इत्युक्तम्— इदं भाष्यम्। प्रथमाध्यायो हि हेतुतया कीर्तनीयः। न च सर्वेणैवाध्यायेन [2]प्रमाणलक्षणमुक्तम्। किं तर्हि? तदेकदेशेन प्रत्यक्षादिलक्षणेन। नापि च तस्य शास्त्रभेदं प्रति हेतुभावः इत्याशङ्क्याह—प्रथमेऽध्याये प्रमाणलक्षणं वृत्तमिति, यथा प्रमाणं शब्दः तथोक्तमित्यर्थः। अस्यार्थः—प्रथमेऽध्याये इत्यस्य भाष्यस्यायमर्थः—येन प्रकारेणानपेक्षत्वाख्येन [3]शब्दः प्रमाणमिति लक्ष्यते तदनपेक्षत्वं प्रमाणलक्षण[4]मुक्तमिति। तेन कृत्स्नश्चाध्यायार्थः कीर्तितो भवति। भवति चानपेक्षत्वस्य शास्त्रभेदं प्रति हेतुतेति वक्ष्यामः। ननु च विध्यर्थवादादिनिरूपणं प्रथमेऽध्याये कृतं, न तु येन प्रकारेण शब्दस्य प्रामाण्यं स उक्त इति मत्वा पृच्छति—कुत इति। उत्तरत्वेन भाष्यमवतारयति—यस्माद्विध्यर्थवादस्मृतयस्तत्वतो निर्णीताः

---

(1) G. प्रमाणं वृत्तं (2) G. प्रमाणमु (3) G. अनपेक्ष (4) G. लक्षणं वृत्तमिति

नामर्थानां वाक्यशेषादर्थाच्चाध्यवसानमुक्तम्; तन्न प्रस्मर्तव्यम् ।

---

गुणविधिर्नामधेयं च परीक्षितम् । सन्दिग्धानामर्थानां वाक्यशेषादर्थाच्चाध्यवसानमुक्तम्" । एते चाक्षेपहेतवोऽन्यथागृह्यमाणाः । तत्त्वतस्तु परिज्ञाता न प्रामाण्यं विघ्नन्ति । अतस्तत्त्वतो निर्णीता यस्मात् तस्मात्—'उक्तं प्रमाणलक्षणं' इत्युक्तम् ।

"तन्न प्रस्मर्तव्यं" इत्यनपेक्षत्वसव्यपेक्षं भेदाभेदकथनम् । कस्मात् ? कार्यस्य हि भेदाभेदः कथ्यते । स चानपेक्षत्वनिबन्धनः । अन्यसव्यपेक्षे हि शब्दे शब्दादेव कार्यविभागो न शक्यते वक्तुम् । तस्मादनपेक्षत्वादित्येवं न प्रस्मर्तव्यमित्युक्तम् ।

---

गुणविधिर्नामधेयं च परीक्षितम् । सन्दिग्धानामर्थानां वाक्यशेषादर्थाच्चाध्यवसानमुक्तम् । तस्मात्प्रमाणलक्षणमुक्तम् । कथं पुनरेतावत्युक्ते[1] प्रमाणलक्षणमुक्तं भवति ? तत्राह—एते च अर्थवादादयः । अन्यथा गृह्यमाणाः प्रामाण्यस्य आक्षेपहेतवः । तत्त्वतस्तु परिज्ञाता न प्रामाण्यं विघ्नन्ति । अतस्तत्त्वतो निर्णीता यस्मात्तस्मादुक्तं प्रमाणलक्षणमित्युक्तम् । विध्यर्थवादादितत्त्वनिर्णयः प्रामाण्यसिध्यर्थ एवोक्त इति प्रथमेऽध्याये प्रमाणलक्षणमेवोक्तम् । तेन साधूक्तं प्रथमेऽध्याये प्रमाणलक्षणमुक्तमिति । 'तन्न प्रस्मर्तव्यं'इत्यनेन भाष्येण तत् अनपेक्षत्वं न विस्मर्तव्यमिति वदता अनपेक्षत्वसव्यपेक्षं भेदाभेदकथनमिति दर्शितं, तत्स्मरणस्यैवोपयोगित्वप्रदर्शनात् । कस्मादनपेक्षत्वसव्यपेक्षं भेदाभेदकथनम् ? उत्तरं—कार्यस्य हि भेदाभेदः कथ्यते । स चानपेक्षत्वनिबन्धनः । कस्मादित्याह—अन्यसव्यपेक्षे हि शब्दे शब्दादेव कार्यविभागो न शक्यते वक्तुम् । उपसंहरति—तस्मात्तन्न प्रस्मर्तव्यमित्यनेनानपेक्षत्वादिति[2] यदुक्तं तन्न प्रस्मर्तव्यमित्युक्तम् । [3]अत्रायमभिप्रायः

---

(1) G. त्यर्थे उक्ते । (2) G. अनपेक्षत्वादि यदुक्तं (3) G. तत्रायं

**अनन्तरं प्रधानाप्रधानानि परीक्षिष्यन्ते, भिन्नान्यभिन्नानि चेति, एष एवार्थो वर्णनीयो नान्यः, एष एव चाध्याय-संबन्धः ।**

---

अनन्तरमिति कस्मात् ? अन्यदपि हि लक्षणं शेषादि अन-पेक्षत्वसव्यपेक्षमेव शब्दान्निर्णेतुं शक्यते । सत्यं शक्यं न पुनरन-न्तरम् । इदमेव त्वनन्तरमित्यभिप्रायेणोक्तम् । कस्मात्पुनरिदमेवा-नन्तरं न शेषलक्षणादि ? कार्यभेदपूर्वकत्वात् सर्वस्योपरितनस्य,

---

शास्त्रभेदोऽध्यायार्थः साध्यभेदोऽनुबन्धभेदश्च तद्धेतुत्वेनात्र कथ्यते । तच्च साध्यं शब्दैक-समधिगम्यं तेन शब्दस्यानपेक्षत्वमपेक्ष्यते । योप्यसावनुबन्धभेदः शास्त्रभेदहेतुः सोपि कार्य-भेदापेक्षः । यदि हि यागादिसंबन्धेनापूर्वं भिद्येत, तदा यागादीनामनुबन्धभावो भिद्यते । भिन्नानुबन्धसमर्पकतया शास्त्रमपि भिद्येत । यागानुबन्धेन तु यद्यपूर्वं न भिद्यते तदा अनुबन्धभेदा-भावात् न शास्त्रं भिद्यते । तस्मादनुबन्धभेदसिध्यर्थमपि कार्यभेद एव कथनीयः । न चासौ [1]अनपेक्षत्वं विना शक्यते वक्तुमिति तस्यानपेक्षत्वसव्यपेक्षत्वम् । "अनन्तरं प्रधाना-प्रधानानि परीक्ष्यन्ते भिन्नान्यभिन्नाति च" इति भाष्यम् शास्त्रभेदानन्तरं [2]वक्तव्य इति वक्ति । तत्र हेतुं पृच्छति—**अनन्तरमिति कस्मात् ?** एकग्रहणेनाह—**अन्यदपि हि लक्षणान्तरं शेषाद्यनपेक्षत्वसव्यपेक्षमेव[3] शब्दान्निर्णेतुं शक्यते ।** तस्मात्केन विशेषेण शास्त्रभेदलक्षणमेवानपेक्षत्वलक्षणानन्तरमारभ्यते ? उत्तरं—**सत्यं** शेषाद्यप्यनपेक्षत्व-सव्यपेक्षमेव शब्दान्निर्णेतुं शक्यते, **न पुनरनन्तरं;[4] इदमेव त्वनन्तरमित्यनेनाभिप्रायेण भाष्यकारेणोक्तम्** "अनन्तरं प्रधानाप्रधानानि" इति । **कस्मात्पुनरिदमेवानन्तरं न शेषलक्षणादि ?** उत्तरं—**कार्यभेदपूर्वकत्वात्सर्वस्योपरितनस्य ।** कार्यभेदपूर्वकत्वं तु शास्त्रभेदपूर्वकत्वात् , कार्यभेदस्य च शास्त्रभेदं प्रतिहेतुत्वात् । यथा च शास्त्रभेदपूर्वकत्वं

---

(1) G. अपेक्षां (2) G. शास्त्रभेदोऽनन्तरं (3) G. क्षत्वमेव (4) G. न पुनरुत्तरं

"प्रधानाप्रधानानि परीक्ष्यन्ते। भिन्नान्यभिन्नानि चेति"। किमिदं प्रधानाप्रधानानीति ? यदि तावत् परीक्षिष्यन्त इति संबध्यते अन्यत् प्रतिज्ञातं अन्यत्परीक्षितं स्यात्। भेदाभेदपरीक्षा ह्यनन्तरं दृश्यते, न पुनः प्रधानाप्रधानपरीक्षा।

ननु चेतरत्तदर्थं—यैस्तुद्रव्यं चिकीर्ष्यत इति प्रधानाप्रधानपरीक्षाप्यनन्तरं दृश्यत एव। नैतदेवम्। तृतीयसिद्धं हि तत्। संव्यवहारार्थमिहानीतं कार्यभेदप्रसिद्धये। तथा च भाष्यकारेण स्वयमेवोक्तम् "यैस्तुद्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेतेति। तत्रापूर्वार्थता व्यावर्तिता दृष्टप्रयोजनानामाख्यातार्थानाम्। इह तु सर्वेषामेव शेषाणां लक्षणमुच्यत" इति। तस्मात्प्रधानाप्रधाना-

---

शेषलक्षणस्य तथा तृतीयाद्ये दर्शितम्। "प्रधानाप्रधानानि परीक्षिष्यन्ते भिन्नान्यभिन्नानि चे"ति भाष्यमनुभाषितम् आक्षिपति—किमिदं प्रधानाप्रधानानीति। एकग्रन्थेनाह—यदि तावत् प्रधानाप्रधानानि परीक्षिष्यन्त इति संबध्यते अन्यत्प्रतिज्ञातं अन्यत्परीक्षितं स्यात्। ततश्च प्रतिज्ञापरीक्षयोर्विरोधः। एतदेव विवृणोति—भेदाभेदपरीक्षा ह्यनन्तरं दृश्यते न प्रधानाप्रधानपरीक्षा। ननु चेतरत्तदर्थं, "यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयते" इति च प्रधानाप्रधानपरीक्षाप्यनन्तरं दृश्यत एव। परिहरति—तृतीयसिद्धं हि तत् संव्यवहारार्थमिहानीतं कार्यभेदप्रसिद्धये शास्त्रभेदहेतुभूतकार्यभेदप्रसिद्धये। तथा च भाष्यकारेण, तृतीयेऽध्याये स्वयमेवोक्तम्। अथ तत्र किं वृत्तं यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेतेति तत्रापूर्वार्थता व्यावर्तिता भवति दृष्टप्रयोजनानामाख्यातार्थानाम्। इह तु सर्वेषामेव शेषाणां लक्षणमुच्यत इति। [1]तस्मात्प्रधानाप्रधाना-

---

(1) G. प्रधानानीत्यसं।

नीत्यसंबद्धम् । उच्यते । प्रधानाप्रधानानीति साध्यानुबन्धा अभिधीयन्ते । अतस्तानि प्रधानाप्रधानानीति परीक्षिष्यन्ते भिन्नान्यभिन्नानि चेति । अनुबन्धभेदस्तावत्—यजति ददाति जुहोतीति । अनुबन्धाभेदोपि य एवं विद्वान् पौर्णमासीं यजत इति ।

---

**नीत्यसंबद्धम् ।** उच्यते—**प्रधानाप्रधानानीति साध्यानुबन्धावभिधीयेते**[1] । साध्य शब्देन चोत्पत्त्यादिचतुष्टयं करणोपकारः करणावान्तरव्यपारः ऐश्वर्यलक्षणाधिकार-श्चोच्यते । तानि साध्यानि प्रधानशब्देनोच्यन्ते तथा अप्रधानशब्देनानुबन्धा नियोगस्य विषयभुताः । **अतस्तानि प्रधानाप्रधानानि परीक्षिष्यन्ते, भिन्नान्यभिन्नानि चेति** साध्या-नामनुबन्धानां च भेदाभेदौ परीक्षिष्येते इत्यर्थः ।

**अनुबन्धभेदस्तावत्—यजति ददाति जुह्वोतीति ।** तद्भेदेन शास्त्राणां भेदः । **अनुबन्धाभेदोऽपि—य एवं विद्वान् पौर्णमासीं यजत इति ।** तदभेदाच्च शास्त्रस्याभेदः । तथा कार्यभेदोपि व्रीहीनवहन्ति, व्रीहीन् प्रोक्षतीत्यनयोः शास्त्रयोर्भेदः । अवघातस्य नियमादृष्टानु-विद्धः तुषकणविमोकः कार्यम् । प्रोक्षणस्य त्वदृष्टं संस्कारः । तेन व्रीहीनवहन्ति व्रीहीन् प्रोक्षतीत्यनयोः शास्त्रयोर्भेदः । एते च शास्त्रे यद्यपि परस्परं भिन्ने तथापि केवलभावार्थ-विधेर्न भिद्येते, अनुबन्धभेदाभावात् । नियोगविषयो ह्यनुबन्धः न चावघातादीनां नियोगविषय-त्वमिति वक्ष्यामः । साध्यभेदोऽपि परस्परानपेक्षः शास्त्रभेदहेतुः । न च आग्नेयाद्यपूर्वानपेक्षं अवघातादिकार्यं साध्यम् । गुणकर्मणां तु अन्योन्यनिरपेक्षसाध्यभेदात् शास्त्रभेदो युक्त एव । तदुक्तं प्रकरणान्तराधिकरणे “ननु चमसगुणविधानेपि शास्त्रान्तरमेवैतत्, न, वाक्या-न्तरमेवैतत् न शास्त्रान्तरम् । तुल्यकार्यगुणान्तरविधानापेक्षं तु भवति शास्त्रान्तरं न केवलभावगुणविधानापेक्षम्” । ( बृ-२-३-२४ )

अत्र च परस्परनिरपेक्षताकार्याणां तुल्यता अभिप्रेता । एतेन दध्ना जुहोतीत्यादीनां नियमादृष्टरूपसाध्यभेदेन शास्त्रभेदो वेदितव्यः । तथा पौर्णमास्यधिकरणे करणेतिकर्तव्यता-

---

(1) R. न्धा अभिधीयन्ते ।

तदिह षड्विधः कर्मभेदो वक्ष्यते, शब्दान्तरं, अभ्यासः, सङ्ख्या, गुणः, प्रक्रिया, नामधेयम् इति वक्ष्यमाणमनुसङ्कीर्त्यते; प्रदर्शितमुच्यमानं सुखं ग्राहयिष्यते इति। श्रोतुश्च

---

आग्नेयोऽष्टाकपाल इति। तस्मात्सूक्तम्—"प्रधानाप्रधानानि परीक्षिष्यन्ते भिन्नान्यभिन्नानि" चेति। "एष एवार्थो वर्णनीयो नान्य" इत्यनन्तरशब्दव्याख्यानम्। "एष चाध्यायसंबन्ध" इत्यानन्तर्यस्य हेत्वभिधानं तथा प्रदर्शितमस्माभिः।

"तदिह षड्विधः कर्मभेदो वक्ष्यते—शब्दान्तरमभ्यासः सङ्ख्या गुणः प्रक्रिया नामधेयमिति। कथं कर्मभेदः शब्दान्तरं ?

---

शास्त्रयोरपि[1] साध्यभेदेन भेदोऽभिधास्यते। इतिकर्तव्यताया हि करणोपकारः साध्यः। करणानां तु करणावान्तर[2]कार्याणि व्यापाररूपाणि। तथा यावज्जीविकोऽभ्यास इत्यत्र जीवनाधिकारकामाधिकारयोः साध्यभेदेन शास्त्रभेदो वर्णयिष्यते[3]। अभेदश्च साध्यस्य 'समिधो यजति' 'तनूनपातं यजति' [इत्यत्र] 'आग्नेयोऽष्टाकपाल' इत्यधिकाराख्यैकसाध्ययोगित्वात्। यद्यपि अनुबन्धभेदेन समिदाद्याग्नेयादिशास्त्राणि भिन्नानि तथापि साध्याभेदादभिन्नानि। तस्मात् सूक्तं प्रधानाप्रधानानि परीक्षिष्यन्ते भिन्नान्यभिन्नानि चेति। एष एवार्थो वर्णनीयो नान्य इत्यनन्तरशब्दव्याख्यानमेतत्। एष चाध्यायसंबन्ध इत्यानन्तर्यस्य हेत्वभिधानम। भाष्ये चशब्दो यस्मादर्थे—यस्मादेषोऽध्यायसंबन्धः तस्मादनन्तरं शास्त्रभेदलक्षणं कर्तव्यम्। यथा चायं हेतुर्भवति तथा दर्शितमस्माभिः।

तदिह षड्विधः कर्मभेदो वक्ष्यते—शब्दान्तरं अभ्यासः सङ्ख्या गुणः प्रक्रिया नामधेयमिति भाष्यानुभाषणम्। आक्षिपति—कथं कर्मभेदः शब्दान्तरम्। भाव—

---

(1) G. कर्तव्यतयोरपि शास्त्रभेदेन। (2) R. adds व्यापारान्तर (3) G. वर्तिष्यते।

भिद्यतेऽनेनेति भेदः तच्च कर्म तस्मात् कर्मभेद इत्युक्तम्। वक्ष्यमाणक्रमानपेक्षं शब्दान्तरादीनां व्युत्क्रमेणोच्चारणं क्रमस्यानौपयिकत्व-प्रदर्शनार्थम्। वक्ष्यमाणमनुसङ्कीर्त्यत इति किमर्थं? हेत्वभिधानकाल एव प्रतिज्ञाभिधानं न्याय्यं नैयायिका मन्यन्ते।

---

साधनं भेदशब्दं गृहीत्वाऽयमाक्षेपः। समाधत्ते—भिद्यतेऽनेनेति भेदः तेन करणसाधनो भेदशब्दः। यत्तच्छब्दान्तरादिभिः भिद्यते [1]तच्च कर्म भावार्थ इत्यर्थः। शब्दान्तरादिभिः षड्भिः भावार्थमात्रभेदः नानुबन्धभेदः, नापि शास्त्रभेदः, न च नियोगभेदः। सङ्ख्यया हि सप्तदश प्राजापत्यानित्यत्र नानुबन्धभावो भिद्यते, प्राजापत्यप्रातिपदिकसमर्पितानां द्रव्यदेवता-संबन्धानां [2]सकृन्नियोगविषयत्वात्। तन्त्रसंबन्धे च विषयभावो न भिद्यते दर्शपूर्णमासाभ्यामितिवत्। द्रव्यदेवतासंबन्धश्च विधिविषय इति निबन्धकारः शब्दबलवादी मन्यते। श्लोकाश्चात्र भवन्ति—

अध्यायेन द्वितीयेन गुरुर्भाष्यनिबन्धने।
साध्यानुबन्धभेदाभ्यां शास्त्रभेदमवर्णयत ॥
अन्योन्यनिरपेक्षं तु यत्साध्यं शास्त्रभेदकम्।
साधनानां विशेषेण तद्भेदा बहुधोदिताः ॥
अभिधानान्तराभ्यासगुणाख्याप्रक्रियान्तरैः।
अनुबन्धास्तु भिद्यन्ते शास्त्रभेदस्य हेतवः ॥
अनुबन्धात्मनैक्येपि भावमात्राणि भिन्दति।
[3]तद्भेदृत्त्वाविशेषेण संख्याप्यत्रैव सूत्रिता ॥

यस्मात् करणसाधनो भेदशब्दः तस्मात्कर्मभेद इत्युक्तम्। वक्ष्यमाणक्रमानपेक्षं शब्दान्त-रादीनां व्युत्क्रमेणोच्चारणं क्रमस्यानौपयिकत्वप्रदर्शनार्थम्। भावार्थभेदकत्वे शब्दा-न्तरादीनां परस्परक्रमापेक्षा नास्तीत्यर्थः।

अत्र चोदयति—वक्ष्यमाणमत्रानुसंकीर्त्यते प्रतिज्ञारूपेण[4]। किमर्थं? हेत्वभिधान-काल एव प्रतिज्ञाभिधानं न्याय्यं नैय्यायिकाः न्यायव्यवहारिणो मन्यन्ते। हेत्ववताराय[5]

---

(1) G. यच्च (2) तत्सन्निधिकृन्नियोग। (3) G. तद्भेदत्वा. (4) G. प्रति-ज्ञाभिप्रायेण कीर्तितमिति (5) हेत्वभिधानाय

बुद्धिः समाधीयते, तदेतन्नानाकर्मलक्षणम् इत्यध्यायमाचक्षते, एतत्तात्पर्येण अतोऽन्यदुपोद्घातप्रसक्तानुप्रसक्तं चेति ।

तत्र प्रथमं तावदिदं चिन्तयते, प्रथमेऽध्याये इदमुक्तम्, चोदनालक्षणोऽर्थो धर्मः इति, चोदना च क्रियाया अभि-

---

सत्यं, साध्ये सुखग्रहणार्थं चैतत्, श्रोतृबुद्धिसमाधानात् । " तदेतन्नानाकर्मलक्षणं " इति पूर्वाचार्याभिधानप्रसिद्धिं दर्शयति अनादितां न्यायस्य कथयितुम् । " अतोन्यदुपोद्घातात् प्रसक्तानुप्रसक्तं च " इति—अप्रतिज्ञातार्थचिन्तादोषपरिहारार्थम् । प्रथमं तावदिदं चिन्त्यते प्रथमेऽध्याये इदमुक्तम् चोदनालक्षणोऽर्थो धर्म इति चोदनेति क्रियाया अभिधायकं वाक्यम् । वाक्ये च पदानामर्थः

---

हि प्रतिज्ञा उच्यते स तु हेत्वभिधानकाल एवोचिता । परिहरति— सत्यं साध्यतया यत्र प्रतिज्ञेयोऽर्थः उच्यते तत्रैवं, सुखग्रहणार्थश्चैतत्[1] । श्रोतृबुद्धिसमाधानात् शास्त्रभेदहेतु[2]-भूतानुबन्धभेदप्रतिपादनं करिष्यत[3] इत्युक्ते तज्जिज्ञासाक्षिप्तचेतसः श्रोतुः बुद्धिः समाहिता सती सुखेन शास्त्रभेदमुच्यमानं प्रति प्रवर्तते । तदेतन्नानाकर्मलक्षणमध्यायमाचक्षत इति वदन् पूर्वाचार्याणामभिधानप्रसिद्धिं दर्शयति । अनादितां न्यायस्य कथयितुम् । अनादिरयं न्यायः जैमिनिप्रभृतिभिः केनचिदेव विशेषेण स्वग्रन्थेन निबध्यते । अतोऽन्यदुपोद्घातात्प्रसक्तानुप्रसक्तं चेति अप्रतिज्ञातार्थचिन्तादोषपरिहारार्थम् । यदपि प्रतिज्ञाताच्छास्त्रभेदादन्यच्चिन्त्यते तदुपोद्घातत्वेन यथेदमेवाद्यम् । प्रसक्तानुप्रसक्तश्च—यथा मन्त्रतद्भेदलक्षणादि । अतो न कश्चिद्दोषः । प्रथमं तावदिदं चिन्त्यते प्रथमेऽध्याये इदमुक्तं चोदनालक्षणोऽर्थो धर्म इति । चोदना च क्रियाया अभिधायकं वाक्यं; वाक्ये च पदानामर्थः ।

---

(1) सुखग्रहणार्थत्वे (2) हेतुतयाऽनु (3) G. करिष्य इ

**धायकं वाक्यम्, वाक्ये च पदानामर्थाः। तत्र किं पदेन पदेन धर्म उच्यते, उत सर्वैरेक एव? इति।**

---

तत्र किं पदेन पदेन धर्मः उच्यते—उत सर्वैरेक इति सम्बन्धः। प्रथमेऽध्याये इदमुक्तमित्यस्य कः प्रसङ्गः केन वा सम्बध्यते अतो न विद्मः कथमिदं व्याख्येयमिति।

अत्राभिधीयते—किं पदेन पदेनेति प्रक्रियाविरोधं मन्वानः वाक्यवाक्यार्थयोरौत्पत्तिकत्वाभिधानात्। तस्येदमुत्तरम्। सत्यं प्रथमेऽध्याये इदमुक्तम्—चोदनालक्षणोऽर्थो धर्म इति। चोदना च वाक्यं वाक्ये च पदानामर्थ इत्युक्तम् तद्भूतानामिति।

---

**तत्र किं पदेन पदेन धर्मः उच्यते उत सर्वैरेक इति** भाष्यानुभाषणम्। आक्षिपति —युक्तं तावत् प्रथमं तावदिदं चिन्त्यते किं पदेन पदेन धर्मः उच्यते उत सर्वैरेक इत्येवं संबन्ध इति इति शब्दश्चात्र द्रष्टव्यः। **प्रथमेऽध्याये इदमुक्तमित्यस्य** ग्रन्थस्य[1] **कः प्रसङ्गः** केन चायं ग्रन्थः संबध्यते। **अतो न विद्मः कथमिदं व्याख्येयमिति। अत्राभिधीयते–किं पदेन पदेन धर्मः** उच्यते इत्येतावत्युक्ते स्वसिद्धान्त**प्रक्रियाविरोधं** कश्चिन्मन्यते **वाक्यवाक्यार्थयोः औत्पत्तिक**संबन्ध**ाभिधानात्**। यदा हि वाक्येनैव वाक्यार्थः उच्यते तदा पदार्थो नामास्य पृथगर्थो नास्ति। तत्कथं पदेन पदेनाभिहितस्यार्थस्य नियोगविषयता शङ्क्यत इति। **तस्यैवं** प्रक्रियाविरोधं मन्वानस्यैतदुत्तरं **प्रथमेऽध्याये** इत्यादिभाष्यम्। अस्यार्थं व्याचष्टे—**सत्यं प्रथमेऽध्याये इदमुक्तं चोदनालक्षणोऽर्थो धर्म इति। चोदना च वाक्यम्।** तेन वाक्यलक्षण एव वाक्यार्थ इत्युक्तं चोदनालक्षणसूत्रे। तथापि **वाक्ये च पदानाम**प्यर्थोऽस्तीत्युक्तम्। **तद्भूतानां** क्रियार्थेन समाम्नाय इति पदान्येव पदार्थानन्विताभिदधति वाक्यशब्दाभिधेयानि वाक्यार्थमभि-

---

(1) ग्रन्थकल्पकः

ततो युक्तमेवेदं किं पदेन पदेन धर्म उच्यते उत सर्वैरेक इति। एतदुक्तं भवति—किं पदेन पदेनाभिहितार्थस्य कार्ययोगिता, उत परस्परसम्बन्धसव्यपेक्षस्येति। कथं पुनः परस्परसम्बन्धितयाऽवगम्यमानस्यार्थस्यासम्बन्धिन एव कार्ययोगिता। दृष्टा हि अरुणादिषु द्रव्यगुणयोः। ननु तत्रावगतिरेव नास्तीत्युक्तम्। सत्यमेवम्। ऐदमर्थ्येन नास्तीत्युक्तम्, न गुणगुणितया; अन्यथा नियम एव हि न स्यात्। एवमत्रापि नामाख्यातयोः, क्रियाकारकसम्बन्धनिरपेक्ष एव नियोगसम्बन्धः उताजहत्क्रियाकारकसंबन्ध एवेत्युपपन्नः

---

दधति तेन न प्रक्रियाविरोधः। **अतो युक्तमिदं—किं पदेन पदेन धर्मः उच्यते उत सर्वैरेक इति।** नन्वेतदयुक्तम्। न हि प्रतिपदं धर्माभिधायकत्वं, किं तर्हि लिङादि शब्द एव धर्ममपूर्वात्मानमाचष्टे इत्याशङ्क्य व्याचष्टे—**एतदुक्तं भवति। किं पदेन पदेन अभिहितस्यार्थस्य कार्ययोगिता उत परस्परसंबन्धसव्यपेक्षस्येति** यत्पदाभिहितस्यार्थस्य कार्ययोगिता नियोगविषयता तेन पदेन नियोग उक्तो भवति केवलान्नियोगशब्दान्नियोगज्ञानानुत्पत्तेः। **कथं पुनः परस्परसंबन्धितयाऽवगम्यमानस्यार्थस्यान्यपदार्थासंबन्धिन एव कार्ययोगिता** शङ्कयते परस्परं संबन्धावगतेः सर्वेषां नियोगसंबन्धो नावगम्यते। परिहरति—**दृष्टा हि अरुणादिषु** कार्यसंबन्धावगतिः **द्रव्यगुणयोः** परस्परसंबन्धिनोरपि। तेन कार्ययोगित्वे परस्परसंबन्धावगमाविरोधः। **ननु च** तत्र द्रव्यगुणयोः परस्परसंबन्धा**वगतिर्नास्ति इत्युक्तम्।** तृतीयाविभक्तिबलेन क्रयसंबन्धावगमात्। परिहरति—**सत्यमेवमैदमर्थ्येन नास्ति** परस्परसंबन्ध इत्युक्तम्। **न पुनर्गुणगुणितयापि** नास्ति; अपि तु अस्त्येवेत्यर्थः। **अन्यथापि हि** यदि परस्परसंबन्धो नावगम्यते तदा **नियम एव न स्यात्।** अनरुणयाप्येकहायन्या क्रयः स्यात्। अनेकहायन्याप्यरुणया इति। अस्ति च नियमः इति तेनास्त्येव परस्परसंबन्धावगतिरिति। **एवमत्रापि नामाख्यातयोः** किं क्रियाकार**कयोः संबन्धनिरपेक्ष एव नियोगसंबन्धः उताजहत्क्रियाकारकसंबन्ध एवेत्युपपन्नः**

किं तावत्प्राप्तम् ? प्रतिपदं धर्मः इति। एवं प्राप्ते उच्यते, यदा

---

संशयः। किं तावत्प्राप्तं ? अस्मिन् संशये किं तावद्युक्तमित्यर्थः। प्रतिपदं धर्मा इति युक्तम्। कस्मात् ? नियोगार्थत्वादुच्चारणस्य सर्वपदानाम्। ननु च क्रियाकारकसंबन्धोऽप्यत्रावगम्यते। सत्यमवगम्यते, न तु क्रियार्थत्वे कारकाणां प्रमाणमस्ति। नियोगार्थस्य साध्यत्वेनावगमात। कथं पुनः निर्व्यापारमेव कारकं नियोगार्थमभिनिष्पादयति, कर्म वाऽक्रियमाणं ? भवत्वर्थादयं द्रव्यगुणयोरिव सम्बन्धः तादर्थ्यं तु नियोगायैव।

---

संशयः। न जहाति क्रियाकारकसंबन्धं यः सोऽजहत्क्रियाकारकसंबन्धः स हि नियोगसंबन्धः। किन्तावत्प्राप्तमिति। अस्मिन् संशये किन्तावद्युक्तमित्यर्थः। प्राप्तशब्दोऽयं युक्तशब्दार्थे वर्तते। उत्तरं—प्रतिपदं धर्मसंबन्ध इति युक्तम। कस्मात् ? उत्तरं—नियोगार्थत्वादुच्चारणस्य सर्वपदानाम्। सर्वाण्येव पदानि नियोगैदमर्थ्यापन्नपदार्थप्रतिपादनपराणि। कार्यार्थत्वादुच्चारणस्य पदानां सर्वेषाम्। ननु क्रियाकारकसंबन्धोप्यत्रावगम्यते तेन क्रियाकारकयोरप्यैदमर्थ्यावगमात तदपरित्यागेन च सर्वेषामेव साक्षान्नियोगैदमर्थ्यं युज्यते। परिहरति—सत्यं संबन्धोऽवगम्यते क्रियाकारकलक्षणः न तु क्रियार्थत्वे कारकाणां प्रमाणमस्ति। नियोगार्थस्य निरपेक्षस्य साध्यत्वेनावगमात्। यदि परस्परं क्रियाकारकयोरैदमर्थ्यं नास्ति तदा क्रियाकारकसम्बन्धोपि नास्तीति मत्वा कश्चिन्मन्दधीश्चोदयति—कथं पुनः निर्व्यापारमेव कारकं नियोगार्थमभिनिष्पादयति कारकीभूतं हि नियोगैदमर्थ्यापन्नतया नियोगार्थाभिनिष्पादकम्। [1]कथं क्रियाकारकसंबन्धं विना कारकत्वं ? कर्म वा अक्रियमाणं स्वयमलब्धसत्ताकं कथं नियोगमभिनिष्पादयति ? परिहरति—भवत्वर्थादयं क्रियाकारकसंबन्धः द्रव्यगुणयोरिव गुणगुणितया संबन्धः। तादर्थ्यं तु [2]नियोगायैव अन्यद्धि तादर्थ्यम्।

---

(1) G. कर्म (2) G. नियोगार्थतैव

एकस्मादपूर्वं, तदाऽन्यत् तदर्थं भविष्यति, एवमल्पीयसी अदृष्टानु-

---

तस्मात् प्रतिपदं धर्मः। अत्रोच्यते—नैतदुपपद्यते, यदि ह्यजहतां प्रतीतमर्थं नियोगार्थता न स्यात् स्यात् प्रतिपदं धर्मः। यत्र पुनरपेक्षितैव संबन्धावगतिरानुगुण्येन तत्र तत्त्यागे श्रुतहानमेव स्यात्। न चैतद्युक्तम्। तस्मादन्यतरानुगृहीतोऽन्यपरो विध्यर्थ इति। " एवं चादृष्टानुमानप्रसङ्गकल्पना लघीयसी भविष्यति"। का

---

अन्यश्च क्रियाकारकसंबन्ध इत्याशयः। तस्मात्प्रतिपदं धर्मः। अत्रोच्यते—नैतदुपपद्यते। कस्मादित्याह—यदि ह्यजहतां प्रतीतमर्थं नियोगार्थता न स्यात् स्यात्प्रतिपदं धर्मः। अयमर्थः —सर्वत्र तात्पर्यस्य बलीयस्त्वात् प्रतीतोऽपि परस्परसम्बन्धः युज्यते यदि तस्मिन् स्वीक्रियमाणे नियोगं प्रति तात्पर्यं हीयेत। यत्र पुनरपेक्षितैव संबन्धावगतिः आनुगुण्येन तत्र तत्त्यागे श्रुतहानमेव स्यात्। न चैतत् [1]श्रुतेर्हानं युक्तम्। प्रतिपदं धर्मसम्बन्धे परस्परसम्बन्धावगतिः त्यक्ता स्यात् कारणाभावादेव। एकक्रियाख्यक्रियानुप्रवेशो हि द्रव्यगुणयोः परस्परं सम्बन्धावगमे कारणम्। इह तु प्रतिपदं अनुबन्धभेदेन नियोगभेदात् भिन्ननियोगानुप्रवेशिनोः नामाख्यातयोः निर्बीजः परस्परसंबन्ध इत्यवगम्यमानोऽपि त्यजनीयः। स च विधिनाऽपेक्षितः। न हि क्रियामन्तरेण कारकत्वं संभवति। न च कारकमन्तरेण क्रियानिष्पत्तिरिति। तस्मादन्यतरानुगृहीतोऽन्यतरो विध्यर्थ इति युक्तम्। निर्वहति च परंपरयापि तात्पर्यमित्यदोषः। एवं चादृष्टानुमानप्रसङ्गकल्पनाऽल्पीयसी भविष्यतीति भाष्यम्। अत्र किल भाष्ये एवं प्रतीयते यदि प्रतिपदं धर्मः स्यात् तदा प्रतिपदमपूर्वाणि कल्पनीयानि। तानि चादृष्टानुमानगम्यानि। सामान्यतो दृष्टं हि तार्किकाणामदृष्टानुमानशब्देनाभिहितम्। तथोक्तम् स्पर्शश्च न दृष्टानां इति "अदृष्टलिङ्गो वायुः" इति। तेनायं ग्रन्थसंबन्धः— एवमल्पीयस्यदृष्टानुमानस्यापूर्वविषयस्य सामान्यतो दृष्टानुमानस्य प्रसङ्गकल्पना भवतीति। अत्र चोदयति—का

---

(1) G. adds न चैतद्विज्ञानं

पुनरत्रादृष्टानुमानप्रसङ्गकल्पना ? शब्दादपि हि दृष्टं दृष्टमेव। सत्यं यथा भवानाह। प्रतिपदं कल्पनायामाश्रयाश्रयि(भाव)प्रसङ्गे नियमानुमानमदृष्टमप्रमाणकं प्राप्नोतीत्यर्थः। तत्र बह्वदृष्टानुमानप्रसङ्गकल्पना। कथं ? एवं तावदाश्रयत्वं कारकाणां, आश्रयित्वं कर्मणां, पुनश्च तत्सिद्धये साध्यसाधनत्वं विशेषनियमश्चेति। अन्यतरानुगृहीतपक्षे पुनः अल्पीयस्यदृष्टानुमानप्रसङ्गकल्पना भविष्यतीति।

किमिदं अदृष्टानुमानप्रसङ्गकल्पनेति ? अदृष्टमनुमानं यस्यासौ अदृष्टानुमानप्रसङ्गः तस्य कल्पना अदृष्टानुमानप्रसङ्गकल्पना। अल्पीयसी

---

**पुनरत्रादृष्टानुमानप्रसङ्गकल्पना ? शब्दादपि हि दृष्टं दृष्टमेव।** यदि ह्यदृष्टकल्पना भवेत् तदैवं युज्यते वक्तुं [1]'एवमदृष्टानुमानप्रसङ्गकल्पना भविष्यति' इति। न चात्रादृष्टकल्पनास्ति शब्दाभिधेयत्वादपूर्वस्य। परिहरति—**सत्यं यथा भवानाह** नात्रादृष्टकल्पनेति। **प्रतिपदं धर्मकल्पनायां आश्रयाश्रयिप्रसङ्गे नियमानुमानमदृष्टं अप्रमाणकं**[2] **प्राप्नोतीत्यर्थः।** क्रियाशून्यस्य कारकत्वानुपपत्तेः कारकेण[3] क्रिया आश्रयित्वेन ग्राह्या। क्रिययापि [4]स्वयं निष्पन्नया कारकमाश्रयभूतं ग्राह्यम्। तत्र च नियमावगतिः। इमामेव क्रियामाश्रित्य कारकमेतन्नियोगं निष्पादयति। एतदेव च कारकमाश्रित्येयं क्रियेत्येवंरूपा अदृष्टाश्रयाश्रयिप्रसङ्गकल्पना निष्प्रमाणिका स्यात्। अरुणैकहायनीन्यायवैलक्षण्यात्। **तत्र च बह्वदृष्टानुमानप्रसङ्गकल्पना कथं ?** उत्तरं—**एवं तावदाश्रयत्वं कारकाणां आश्रयित्वं च कर्मणां पुनश्च तत्सिद्धये साध्यसाधनत्वं विशेषनियमश्चेति। अन्यतरानुगृहीतपक्षे पुनः अल्पीयस्यदृष्टानुमानप्रसङ्गकल्पना भविष्यतीति।** "**किमिदं अदृष्टानुमानप्रसङ्गकल्पनेति ?** उत्तरं—**अदृष्टमप्रमाणकं** यत्किलादृष्टं तदप्रमाणकं अनुमानं नियमानुमानं यस्य आश्रयाश्रयित्वप्रसङ्गस्य असौ अदृष्टानुमानप्रसङ्गः अदृष्टानुमानश्चासौ प्रसङ्गश्चेति तस्य कल्पना अल्पीयसी।

---

(1) G. adds **एवमल्पीयसी** (2) G. **अदृष्टप्रमाणकं** (3) G. **कारकत्वेन** (4) **स्वयमपि**

भविष्यति। ननु च नैव भवति। किमल्पीयसी भवतीत्युच्यते। अन्यतरानुगृहीतपक्षेपि विध्यर्थस्यैव विद्यते कल्पना। ननु च शाब्दमेवेदं किमत्र कल्प्यते? कार्यतोऽवगमं नवमे वक्ष्यामः। शब्दावगतकार्यमूलत्वाच्च शाब्दम्। तस्मात्साधूक्तम्—एवमल्पीयस्य-दृष्टानुमानकल्पनेति। "तस्मादेकमपूर्वमिति" किमिदमेकम-पूर्वमिति? नन्विदमेव। नैवमेकस्मादपूर्वमिति प्रक्रमात्। अत्राभिधीयते। यदा प्रतिपदं धर्मः तदा प्रतिपदं नियोगभेदेन भवितव्यम्। प्रतिपदमनुबन्धभेदात्। अमुमेव कार्यभेदं दर्शयितुं

---

**ननु च नैव भवति कल्पना किमिदं अल्पीयसीति?** परिहरति—**अन्यतरानुगृहीत-पक्षेऽपि विध्यर्थस्यैव** विधेयं विध्यर्थः तस्यैवानुग्रह इति **विद्यते कल्पना।** अनुग्रहोऽपि क्रियमाणो न स्वरूपमात्रस्याभ्युपेयः नियोगार्थविरोधात्। **ननु च शाब्दमेवेदं किमत्र कल्प्यते?** परिहरति—**कार्यतोऽवगमं नवमे वक्ष्यामः** अपूर्वप्रयुक्तत्वाभ्युपगमेन। तेन कल्पनावाचोयुक्तिर्घटते। यदि कार्यतोऽवगतिः न तर्हि शाब्दत्वमित्याशङ्क्याह—**शब्दा-वगतकार्यमूलत्वात्तु शाब्दम्। तस्मात्साधूक्तम् एवमल्पीयस्यदृष्टानुमानप्रसङ्गकल्पना भविष्यतीति** तस्मादेकमपूर्वं इति भाष्यकारेणोपसंहृतमाक्षिपति—**किमिदमेकमपूर्वमिति।** परिहरति—**नन्विदमेव**, सुव्यक्त एवायमर्थः। पुनराक्षिपति—**नैवं**[1] **एकस्मादपूर्वमिति प्रक्रमात्।** तस्मादेकस्मादपूर्वमित्युपसंहर्तव्यम्। नैकमपूर्वमिति। **अत्राभिधीयते—यदा** **पूर्वपक्षे प्रतिपदं धर्मः तदा प्रतिपदं नियोगभेदेन भवितव्यम्।** कस्मात्? उत्तरम्—**प्रतिपदमनुबन्धभेदात्।** यदा पुनः परस्परसंबद्धानां विधिना योग[2]: तदा एक एवानुबन्धः। अतश्चैकमपूर्वमित्युपसंहृतम्। नन्वेवमपि एकस्मादपूर्वमिति किमिति नोपसंहृतम् येन फलद्वारेणोपसंहारः[3] इत्यत्राह—**अमुमेव च पूर्वपक्षे कार्यभेदं दर्शयितुं**

---

(1) G. मेवं (2) G. विधिनियोगः (3) G. उपसंह्रियते

मानप्रसङ्गकल्पना भविष्यति ; तस्मादेकमपूर्वम् ।

यदा एकं, तदा संदेहः किं, भावशब्देभ्यः, उत द्रव्यगुणशब्देभ्यः ? इति । कः पुनर्भावः ? के ते पुनर्भावशब्दाः ?

---

भगवता भाष्यकारेण फलेनोपसंहृतम् । तस्मादेकमपूर्वमिति ॥

"यदा एकमपूर्वं तदा सन्देहः—किं भावशब्देभ्यः उत द्रव्यगुणशब्देभ्य इति" । भावशब्दग्रहणेन कस्य ग्रहणं ? आख्यातानामेव । एवं तर्हि नामशब्देभ्यः उताख्यातशब्देभ्य इति वक्तव्यम् । किमिद—मुच्यते । किं भावशब्देभ्यः उत द्रव्यगुणशब्देभ्य इति ।

---

भगवता भाष्यकारेण फलेनोपसंहृतम् तस्मादेकमपूर्वमिति, कार्यभेददर्शनं च पूर्वपक्षे[1] परस्परसंबन्धावगतिः निर्बीजा प्राप्नोतीति सिद्धान्तयुक्तिसिद्ध्यर्थम् । अत्र च नियोगार्थत्वादुच्चारणस्य सर्वपदानां साक्षान्नियोगसंबन्धो भवति । साक्षात्सम्बन्धसंभवे च परम्पराश्रयणानुपपत्तेः सर्वेषां नियोगविषयत्वमिति पूर्वः पक्षः । राद्धान्तस्तु सर्वेषां नियोगविषयत्वे परस्परसंबन्धावगमविरोधात् प्रतिपदं नियोगभेदे भिन्ननियोगानुप्रवेशिनां सम्बन्धानुपपत्तेः यथाविनियोगं विषयभावो[2] न्याय्य इति अन्यतरानुगृहीतस्यान्यतरस्य विषयत्वम् । परस्परसंबन्धाश्रयणे च (वि)नियोगावगम[3]एव प्रमाणमिति ।

यदा एकस्मादपूर्वं तदा संदेहः। किं भावशब्देभ्यः उत द्रव्यगुणशब्देभ्य इति अत्र पृच्छति—भावशब्दग्रहणेन कस्य ग्रहणं ? एकदेश्युत्तरमाह—आख्यातानामेव । पुनश्चोदयति—एवं तर्हि सन्देहं दर्शयता किं नामशब्देभ्यः उताख्यातशब्देभ्य इति वक्तव्यम् । किमिदमुच्यते—किं भावशब्देभ्यः उत द्रव्यगुणशब्देभ्य इति । आक्षेपारं

---

(1) G. परस्परासंबन्धा (2) G. विषयभेदो (3) G. नियोगावगतमेव

इति । यजति ददाति जुहोति इत्येवमादयः । ननु याग-दानहोमशब्दाः एते, न भावशब्दाः । नैतदेवं, यागादि-

---

किं वात्रातिरिच्यते ? द्विरुच्चरितो नामशब्दः । अनभिप्रायज्ञो भवान् । यदि हि किमाख्यातशब्देभ्यः उत नामशब्देभ्य इत्युच्यते ततश्च निर्णीयते आख्यातशब्देभ्य इति तदा आग्नेयोऽष्टाकपाल इत्यक्रियार्थः स्यात ; नामत्वात् , भवतीति च क्रियार्थः स्यात आख्यातत्वात् । अनिष्टं चैतत् भवत्यर्थस्याविधेयत्वात । द्रव्यदेवतासंबन्धस्य च विधेयत्वात ।

---

पृच्छति—[1]किं वात्रातिरिच्यते भाष्यकारीयेपि सन्देहोपन्यासे किञ्चिदधिकं नास्ति येन लाभेन किं नामशब्देभ्य उताख्यातशब्देभ्य इति कर्तुमुचितमिति चोद्यते । आक्षेप्ताऽऽह—द्विरुक्तो नामशब्दोऽतिरिच्यते । द्रव्यगुणशब्दग्रहणे क्रियमाणे [2]नामशब्दानां शब्द-द्वयेनोपसङ्ग्रहः । भावशब्दग्रहणे[3] क्रियमाणे प्रतियोगितया द्रव्यगुणग्रहणं कर्तव्यम् । वाच्यावच्छेदेन हि तदा शब्दो निर्दिश्यत इति भिन्नौ द्रव्यगुणशब्दौ वाच्यौ शब्दोपस्थाप-नायोच्चारयितव्यौ । आख्यातग्रहणे तु स्वरूपेण शब्दनिर्देशात शब्दस्वरूपनिर्देशको नाम-शब्द एव प्रयोक्तव्यो भवति । ततश्च शब्दद्वयानुच्चारणं लाघवार्थम् । परमसमाधाता आह—अनभिप्रायज्ञो हि भवात् यदि हि किमाख्यातशब्देभ्यः उत नामशब्देभ्य इत्युच्यते ततश्च निर्णीयते आख्यातशब्देभ्य एवापूर्वमिति तदा आग्नेयोऽष्टाकपाल इत्यक्रियार्थः स्यात् । द्रव्यदेवतासम्बन्धो नियोगविषयो न स्यात् नामत्वादाग्नेयशब्दस्य ; भवतीति च भवत्यर्थः क्रियार्थो नियोगविषयः स्यात, आख्यातत्वात् भवतिशब्दस्य । अनिष्टं चैत-दुभयमपि । भवत्यर्थस्याविधेयत्वात् । न हि भूतो भवत्यर्थो नियोक्तुं शक्यते अभूतश्च स्वयमविद्यमानत्वात । तेन भवत्यर्थो न विधेयः । द्रव्यदेवतासंबन्धस्य च विधेयत्वात् ।

---

(1) G. किं तत्र (2) G. नाख्यातशब्दानां (3) G. भावशब्दाश्रयणे

तस्मान्नामाख्यातग्रहणं भाष्यकारेण न कृतम्। किं तर्हि, येनैव स्वभावेनाख्यातस्य विध्यर्थता संभवति येन च नाम्नो न संभवति तेनैव स्वभावेनोपन्यासः कृतः। केन पुनः स्वभावेनाख्यातस्य विध्यर्थता ? केन च नाम्नो न भवति ? भावार्थतयाऽऽख्यातस्य विध्यर्थता। द्रव्यगुणाभिधानतया च न नाम्नः । " कः पुनरयमाख्यातार्थव्यतिरिक्तो भावो नाम ? कश्चाख्यातशब्दादन्यो भावशब्दो नाम ? प्रतिवचनं तु " यजति ददाति जुहोतीति "।

ननु स एवायमाख्यातार्थः त एवामी आख्यातशब्दा इत्याक्षेपः। समाधानं तु, नाख्यातार्थमात्रं यजति ददाति जुहोतीति, किन्तर्हि अन्योत्पाद-

---

तस्मादनिष्टापत्तिर्माभूदिति नामाख्यातग्रहणं न कृतं भगवता भाष्यकारेण। किं तर्हि ? येनैव स्वभावेनाख्यातार्थस्य विध्यर्थता संभवति येन च स्वभावेन नाम्नो विध्यर्थता न संभवति तेनैव स्वभावेनोपन्यासः कृतो भगवता भाष्यकारेण। केन स्वभावेनाख्यातार्थस्य विध्यर्थता, केन वा नाम्नो न [1]संभवतीति प्रश्नद्वये यथा सङ्ख्यमुत्तरद्वयम्। भावार्थतया आख्यातार्थस्य विध्यर्थता, द्रव्यगुणाभिधानतया च नाम्नो न विध्यर्थता। यथा चैतत्तथोपरिष्टाद्व्याख्यास्यामः[2]। अत्र भाष्यम्—"कः पुनर्भावः के वा भावशब्दा" इति तद्व्याचष्टे—कः पुनरयमाख्यातार्थव्यतिरिक्तो भावो नाम ? कश्चाख्यातशब्दव्यतिरिक्तो भावशब्दो नाम। उत्तरभाष्यं व्याचष्टे—प्रतिवचनन्तु उत्तरं तु यजेत ददातिजुहोतीत्येषां योऽर्थः स भावार्थः एते च भावशब्दा इति "ननु च यागदानहोमशब्दा एत" इति परिहारभाष्यम्। तद्व्याचष्टे—ननु स एवायमाख्यातार्थः त एवामी आख्यातशब्दाः इत्याक्षेपः " नैतदेवं, यागादिशब्दाश्चैत " इति परिहारभाष्यं व्याचष्टे—समाधानं तु नाख्यातार्थमात्रं यजेत ददाति जुहोतीत्यत्र गम्यते किं तर्हि ? अर्थान्तरोत्पाद-

---

(1) G. निवर्तितेति (2) वक्ष्यामः

शब्दाश्चैते भावशब्दाश्च, यज्याद्यर्थश्चातोऽवगम्यते, भावयेत् इति च। तथा यजेत, यथा किञ्चित् भवति इति ; तेनैते भावशब्दाः, द्रव्यगुणशब्देभ्यो द्रव्यगुणप्रत्ययो न भावनायाः।

---

कत्वमपि गम्यते न केवलं पूर्वापरीभावः यथा भवतीति। तदिदमुक्तम् "यज्यर्थश्चातोऽवगम्यते भावयेदिति च"। किमुक्तं भवति ? पूर्वापरीभावश्चातोऽवगम्यते, अन्योत्पादकत्वं चेति। पुनश्चायमभिप्रायः प्रकटीकृतः तथा यतेत, यथा यत्किञ्चिद्भवतीति। तेनैते आख्यातशब्दा अपि भावशब्दा इत्युच्यन्ते। अतो द्रव्यगुणशब्दग्रहणमपि

---

**कत्वमपि,** कर्तुरन्यो योऽर्थः तदुत्पादकत्वमपि गम्यते। **न केवलं पूर्वापरीभाव** एवावगम्यते **यथा भवतीति।** पूर्वापरीभावमात्रं आख्यातमात्रार्थः[1]। न तथा भावयेदित्यत्र[2] अन्योत्पादकत्वं तु भावार्थः[3] तच्च भवतीत्यत्र नास्ति। कर्तुरेव तत्रोत्पत्त्यवगमात। यदेतदुक्तमस्माभिः तदुक्तं भाष्यकारेणापि "यज्याद्यर्थश्चातोऽवगम्यते भावयेदिति च" इत्यनेन भाष्येण। नन्वन्य एवार्थोऽस्य भाष्यस्येति मत्वा पृच्छति—**किमुक्तमनेन** भाष्येण। उत्तरं—**पूर्वापरीभावश्चातोऽवगम्यते अन्योत्पादकत्वं चेति** तत्र [4]**यज्याद्यर्थश्चातोऽवगम्यत** इत्यनेन पूर्वापरीभूतयागाद्यवगतिरुक्ता। **भावयेदित्य**न्योत्पादकत्वावगतिः। **पुनश्चायमर्थो** भाष्यकारेण **प्रकटीकृतः। तथा यतेत यथा यत्किञ्चिद्भवतीति।** अन्योत्पत्त्यनुगुणः पुरुषप्रयत्नोऽवगम्यत इत्यर्थः। **तेनैते आख्यातशब्दा अपि भावशब्दा इत्युच्यन्ते।** यतः पूर्वापरीभूतान्योत्पादकत्वस्वभावो योऽर्थः स भावार्थः तदर्थाश्च शब्दाः भावशब्दाः। **अतो द्रव्यगुणशब्दग्रहणमपि।** नामशब्दे हि क्रियमाणे प्रतियोग्यर्थो न निर्दिष्टः स्यात नामशब्दानामपि केषांचिद्भावार्थत्वात। नन्वेवमपि येन स्वभावेन क्रियार्थत्वं[5] तन्न निर्दिष्टं स्यादिति यदि कश्चिन्मन्यते

---

(1) G. आख्यातार्थः (2) G. पचतीत्यत्र (3) G. भावार्थत्वं (4) G. यत्र कार्यश्चातो (5) अक्रियार्थत्वं न नि

**अतस्ते न भावशब्दाः—इति। किं तावत्प्राप्तम्? अविशेषेण इति।**

---

द्रव्यगुणप्रत्ययोत्पादकत्वात् अक्रियार्थत्वं, न नामत्वात। "किं तावत्प्राप्तं? अविशेषेणेति" काऽभिप्रायः? द्रव्यं वा भवतु क्रियार्थं; क्रिया वा भवतु द्रव्यार्था। सर्वथा तावदपरित्यक्तक्रियाकारकसंबन्ध एव कार्य-सम्बन्ध इति सिद्धम्। अत्रोच्यते। नैवं सिध्यतीति। यदा हि द्रव्यार्था क्रिया तदा क्रियाकारकसंबन्धः त्यक्त एव भवति। कस्मात्? द्रव्यं हि तदा कर्मभूतं क्रियायाम्। न च कर्म कारकं कारकस्था व्युत्पत्तिः कर्मेति वक्ष्यामः। कथं तर्हि कर्मणि कारके द्वितीयेत्यागमः। कर्तुरीप्सित-

---

तं प्रत्याह—द्रव्यगुणप्रत्ययोत्पाकत्वादक्रियार्थत्वं न नामत्वात्। नाम्नः आग्नेय इत्यादेः क्रियार्थत्वदर्शनात्। किं तावत्प्राप्तमविशेषेणेति। कोऽभिप्रायः एवं वदतो भाष्यकारस्य। उत्तरं—द्रव्यं वा भवतु क्रियार्थं क्रिया वा भवतु द्रव्यार्था। सर्वथा तावदपरित्यक्त-क्रियाकारकसम्बन्ध एव कार्यसंबन्धः। यदि क्रियाविषयो नियोगः तदा इतरत्तदर्थमिति न्यायात् द्रव्यं क्रियार्थम्। यदा तु द्रव्यं नियोगविषयः तदा क्रिया द्रव्यार्था। पक्षद्वयेपि चास्मिन् क्रियाद्रव्यार्थपक्षे क्रियाकारकसम्बन्धो न विरुध्यते। तेनागृह्यमाणविशेषत्वादन्यतरस्य विधिविषयत्वम्। न चैवमनध्यवसायेनाप्रामाण्यम्। अनुष्ठानस्याध्यवसितत्वात्। एकरूपमेव हि पक्षद्वयेप्यनुष्ठानं अनुष्ठानानध्यवसायेन चाप्रामाण्यम्। अत्रोच्यते। नैवं सिध्यति क्रियाकारकसंबन्धः। यदा हि क्रिया द्रव्यार्था तदा द्रव्यविषयो नियोगः तदा क्रिया-कारकसम्बन्धस्त्यक्त एव भवति। कस्मात्? उत्तरं—द्रव्यं हि तदा कर्मभूतं क्रियायां प्रधानभूतं द्रव्यं, क्रियया ईप्स्यमानत्वात्। ईप्स्यमानश्च कर्मापद्येत। न च कर्म कारकं कारकस्था व्युत्पत्तिः कर्मेति वक्ष्यामः। कारक[1]स्य या अवस्थोत्पद्यते सा कर्म न कारकावस्थैव। यदि कर्म कारकं न भवति कथं तर्हि कर्मणि कारके द्वितीयेत्यागमः। तथा कर्तुरीप्सित-

---

(1) M. कारकस्था

तत उच्यते,—भावार्थाः कर्मशब्दाः, तेभ्यः क्रिया प्रतीयेत, यजेत इत्येवमादिभ्यः। कुतः? भावार्थत्वादेव; य आहुः किमपि भावयेत इति, ते स्वर्गकामपदसंबन्धात् स्वर्गं भावयेत्

---

तमं कर्मेति च कारकाधिकारे। यत्र क्रियाफलमभिनिष्पद्यते तत्कर्मेति सूत्रार्थः। अन्यथा हीप्सिततमग्रहणमनर्थकं स्यात्। तस्मात् कर्मणि द्वितीयेत्यपि सिद्धम्। तस्मात् क्रियार्थं यदाऽऽख्यातं भवति तदैव द्रव्यगुणयोः कारकत्वसिद्धिः। अत आह-"ये ये भावार्थाः कर्मशब्दास्तेभ्यः क्रियाप्रतीयेत यजेतेत्येवमादिभ्यः"। कुतः? इति प्रश्नः किमन्यथा भावार्थत्वं हीयेत?

---

**तमं कर्मेति च कारकाधिकारे।** एतदागमपर्यालोचनयापि कर्मणः कारकत्वमवगम्यते कर्मणि कारके द्वितीयेति सामानाधिकरण्यनिर्देशात्। तथा ईप्सिततमं यत्कारकं तत्कर्मेत्यभिधानात्। समाधत्ते—**यत्र क्रियाफलमभिनिष्पद्यते तत्** कारकं **कर्मेति सूत्रार्थः**। क्रियाफलभागित्वं कारकस्य कर्मत्वं; न पुनः क्रियानिष्पादकत्वं क्रियानिष्पादकतया च कारकत्वं नान्यथा। कस्मादेवं विधः सूत्रार्थः? इत्यत्राह—**अन्यथाहीप्सिततमग्रहणमनर्थकं स्यात्।** न हि क्रियानिष्पादकं क्रियया ईप्सिततमं भवति। क्रियाजन्यफलभागित्वावस्था च क्रियया ईप्सिततमा भवति। **तस्मात् कर्मणि कारके द्वितीयेत्यपि सिद्धम्।** अवस्थाद्वययोगित्वात्। **तस्मात् क्रियार्थं** नियोगार्थं नियोगविषयसमर्पकं **यदाऽऽख्यातं** भवति **तदैव द्रव्यगुणयोः कारकत्वसिद्धिः** कारकत्वेन च तयोः श्रवणं; नैतदनुग्रहाय आख्यातार्थस्यैव नियोगार्थत्वं निश्चीयते अत आह—**ये भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेत यजेतेत्येवमादिभ्यः।** अत्र सूत्रकारेण भावार्थेभ्यः क्रिया प्रतीयेतेति वदता हेत्वन्तरानुपादानात् भावार्थत्वमेव हेतुरुक्त इति मत्वा पृच्छति—**कुतः इति।** तद्व्याचष्टे—**कुत इति प्रश्नः** [1]**किमन्यथा भावार्थत्वं हीयेत** तदपि भावार्थस्यानियोगविषयत्वे भावार्थत्वमेव हीयेत तदा स्यादयं हेतुः न चैतदस्तीति भावः।

---

(1) G. किमत्र

बाढं हीयते। पूर्वापरीभावे हि भावार्थत्वं भवति। स पूर्वापरीभावः द्रव्यगुणयोस्तदर्थत्वे सति। अन्यथा हि गोदोहनेन पशुकामस्य प्रणयेदितिवत् आश्रयमात्रावगतिः स्यात्। न च गोदोहनसाध्यं प्रणयनमवसीयते। ननु च गोदोहनेन प्रणयेदिति पूर्वापरीभूतमेव प्रणयनं प्रतीयते गोदोहनं च करणमेव। सत्यं प्रतीयते। न तु गोदोहनेन पशुकामस्य प्रणयेदित्येतद्वाक्यार्थतया। तस्मादनियमपक्षे न नियमेन क्रियाकारक(संबन्ध)भावमजहतो विध्यर्थत्वं वाक्यस्य प्रतीयते। अत इदमुक्तं भावार्थत्वादेवेति।

---

उत्तरं—**बाढं हीयते पूर्वापरीभावे हि भावार्थत्वं भवति** भावशब्दस्य पूर्वापरीभाववाचित्वात्। तथापि किमित्याह—**स च पूर्वापरीभावोऽत्र द्रव्यगुणयोः तदर्थत्वे सति भवति। अन्यथा हि गोदोहनेन पशुकामस्य प्रणयेदितिवदाश्रयावगतिरेव स्यात्। न च गोदोहनसाध्यं प्रणयनमवसीयते।** अस्यार्थः-साध्यत्वे हि भावार्थत्वं भवति भावार्थस्य च नियोगविषयत्वे द्रव्यगुणयोश्च तदर्थत्वे साध्यत्वं भावार्थस्य सम्पद्यते। द्रव्यगुणयोस्तु नियोगार्थत्वे आश्रयमात्रतयैवाख्यातार्थवत्त्वमवगतं[1] स्यात, न साध्यत्वेन गोदोहनेन पशुकामस्य प्रणयेदितिवत्। **ननु च गोदोहनेन पशुकामस्य प्रणयेदित्यपि पूर्वापरीभूतमेव प्रणयनं प्रतीयते। गोदोहनं च करणमेव।** अतोऽसिद्धो दृष्टान्तः। परिहरति—**सत्यं प्रतीयते न पुनः गोदोहनेन प्रणयेदित्येतद्वाक्यार्थतया,** अस्मिन्वाक्ये गोदोहनस्य वाक्यार्थत्वात तदुपकारकत्वाच्च प्रणयनस्य विपरीतः साध्यसाधनभावोऽवगम्यते। लौकिकस्त्वयं क्रियाकारकभावः शब्देनोपादीयते। **तस्मादनियमपक्षे न नियमेन क्रियाकारकभावमजहतो विध्यर्थत्वं वाक्यस्य प्रतीयते।** यदा तावत् क्रियानियोगार्थी तदा प्रतीयमानक्रियाकारकभावापरित्यागः। द्रव्यगुणयोस्तु क्रियार्थत्वेन उक्तेन न्यायेन क्रियाकारकभावपरित्याग एवेति नानियमः। अपि तु भावार्थ एव नियोगार्थ इति। **अत इदमुक्तं भावार्थत्वादेवेति।**

---

(1) R. ख्यातार्थानामवगतिः

एतदुक्तं भवति। एवमेव संबन्धावगमादिति। तदिदानीं पूर्वापरीभूतभावव्यतिरेकिणमर्थं भावशब्दवाच्यं प्रपञ्चयति "य आहुः किमपि भावयेदिति ते स्वर्गकामपदसंबन्धात स्वर्गं भावयेदिति ब्रूयुः" इति। किमिदं स्वर्गकामपदसंबन्धात् स्वर्गं भावयेदिति। स्वर्गकामं भावयेदिति युक्तं वक्तुम्। पदार्थस्य हि पदार्थान्तरेण संबन्धः स्वर्गकामश्चात्र पदार्थः न स्वर्गः, अतोऽसदेवेदं प्रतिभाति। अत्रोच्यते। सत्यं स्वर्गकामः पदार्थः। स एव पदार्थान्तरेण संबध्यते।

---

**एतदुक्तं भवति—एवमेव संबन्धावगमादिति।** भावार्थस्य नियोगार्थतया साध्यत्वं द्रव्यगुणयोस्तु साधनत्वमेवेत्येवमेव[1] सम्बन्धोऽवगम्यते, नान्यथेत्यर्थः। **तदिदानीं[2] पूर्वापरीभूतभावव्यतिरेकिणमर्थं भावशब्दवाच्यं प्रपञ्चयति**—यत्प्रतिपादनायाख्यातशब्दोपादानमकृत्वा भावार्थग्रहणं कृतं तं पूर्वापरीभूतार्थव्यतिरेकिणं अन्योत्पादकत्वमर्थं प्रपञ्चयति—**यः आहुः किमपि भावयेदिति ते स्वर्गकामपदसंबन्धात् स्वर्गं भावयेदिति ब्रूयुरिति।** अत्र चेदमभिमतं—लिङादियुक्तवाक्यश्रवणसमनन्तरभाविनीं प्रवृत्तिमवगम्य प्रवर्तकार्थाभिधायिता लिङादीनामवसीयते। कार्यस्य च प्रवर्तकत्वावगमात् तदेव लिङादयोऽप्यवबोधयन्तीति निश्चीयते। कार्यं च कृतिसाध्यं कृतिप्रधानमुच्यते। तदुक्तम्। "कृतिसाध्यं प्रधानं यत् तत्कार्यमभिधीयते" इति। तस्य चाभिधानं कृतिमनभिधाय नोपपद्यते इति लिङादयः कृतिमप्यभिदधति। कृतिरेव च भवितुः प्रयोजकव्यापार इति भावनोच्यते। अतो यजेतेत्येवमादिभ्योऽन्योत्पादनाऽवगम्यते। या च साऽन्योत्पादना सा स्वर्गकामपदसंबन्धात स्वर्गभावनाऽवसीयते। अत्र चोदयति—**किमिदं स्वर्गकामपदसंबन्धात् स्वर्गं भावयेदिति। स्वर्गकामं भावयेदिति युक्तं वक्तुम्। पदार्थस्य हि पदार्थान्तरेण संबन्धः। स्वर्गकामश्चात्र पदार्थः न स्वर्गः अतोऽसदेवेदं प्रतिभाति। अत्रोच्यते। सत्यं स्वर्गकामः पदार्थः** पुरुषप्रधानत्वादस्य शब्दस्य। **स एव च पुरुषः पदार्थान्तरेण** लिङादिवाच्येन

---

(1) G. त्येव (2) R. तमिदानीं

**इति ब्रूयुः; तस्मात्तेभ्यः क्रिया प्रतीयेत, फलस्य क्रिया**

---

स्वर्गपरस्त्वसौ संबन्धः इत्यैदंपर्यमत्र दर्शितं भाष्यकारेण, धात्वर्थस्य करण-त्वप्रदर्शनार्थम् । वक्ष्यति च "स्थित एतस्मिन्नधिकरणे गुणविधिर्नामधेयमिति विचारो भविष्यति" इति । कथं पुनः स्वर्गं भावयेदित्येवं परता वाक्यस्य ? यथैवंपरता तथाऽधिकारलक्षणे वक्ष्यामः । "तस्मात्तेभ्यः क्रियाप्रतीयत" इति निगमितं भाष्यकारेण । का पुनरत्र क्रिया ?

---

कार्येण नियोज्यतया **सम्बध्यते । स्वर्गपरस्त्वसौ संबन्धः** स्वर्गभावनापर्यन्तः सम्बन्धः **इत्यैदंपर्यं** स्वर्गसम्बन्धपर्यन्तत्वं[1] **अत्र भाष्यकारेण दर्शितम्** । ननु किमर्थं स्वर्गाश्रयणेनान्योत्पादकता प्रपञ्चिता । यावता साक्षादपूर्वमेवाश्रित्य किमिति न पुनः प्रपञ्च्यत इत्यत्राह **—धात्वर्थस्य करणत्वप्रदर्शनार्थम्** । अयमभिप्रायः—यदि च स्वर्गकामशब्दः स्वर्ग-(कामना)भावनापर्यन्तो भवति तदैवापूर्वाधिकरणसिद्धान्तन्यायेनापूर्वं क्रियाव्यतिरिक्तं कार्यं प्रसिद्ध्यति । अन्यथा क्रियैव कार्यं स्यात् । ततश्च धात्वर्थस्य कर्मतैव भवेत् न करणता, क्रियातिरिक्ते कार्ये तत्प्रति फलं च प्रति धात्वर्थस्य करणता सिद्ध्यति । ननु च करणत्व-प्रदर्शनस्यैव किं फलमित्यत्राह—**वक्ष्यति हि स्थित एतस्मिन्नधिकरणे गुणविधिर्नामधेयमिति विचारो भविष्यतीति** । एतदुक्तं भवति । नामधेयनिराकरणार्थं भावार्थग्रहणमिह कृतम् । नामधेयतया सिद्धिश्च श्येनादीनां शब्दानां सामानाधिकरण्ये सति भवति । सामानाधिकरण्य-सिद्धिश्च यागस्य करणत्वे सति, श्येनादिशब्दानां करणविभक्तियोगित्वात् । तेन करणसिध्या विना भावार्थग्रहणमेव न शक्यते व्याख्यातुं इति करणत्वप्रदर्शनार्थं स्वर्गं प्रत्युत्पादकत्वं दर्शितम् । **कथं पुनः स्वर्गं भावयेदित्येवं परता** दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्येवमादे-**र्वाक्यस्य** । उत्तरं—**यथैवंपरता तथाऽधिकारलक्षणे वक्ष्यामः** "वृत्त्यर्थत्वाभिसंयोगात्" इत्यत्र । **तस्मात्तेभ्यः क्रिया प्रतीयेतेति निगमितं भाष्यकारेण । का पुनरत्र क्रिया ?**

---

(1) G. परत्वं

करणं निष्पत्तिरिति ; ते च यागदानहोमसंबद्धाः स्वर्गस्योत्पत्तिं वदन्ति । कुतः ? ।

---

विध्यर्थः ननु च फलस्य करणं क्रियेत्युक्तम् । फलस्य च यागः करणं न विध्यर्थः उच्यते । यथा विध्यर्थः करणं तथाऽधिकारलक्षणे वक्ष्यामः । इहापि च भाष्यकारेण "ते च यागदानसंबद्धाः स्वर्गस्योत्पत्तिं वदन्ती"ति वदता विध्यर्थस्यैव करणतोक्ता । तत्संबन्धाद्धि यागादेः । 'कुत' इति प्रश्नोऽयम् । कथं पुनर्नियोगार्थस्य करणताऽवगम्यत इत्यभिप्रायः । उत्तरवादी तु

---

उत्तरं—विध्यर्थः विधिरूपो योऽर्थः । ननु फलस्य करणं क्रियेत्युक्तं भाष्ये फलस्य च यागः करणं, न विध्यर्थः तस्य करणत्वे अवाक्यार्थत्वप्रसङ्गात् । उच्यते । यथा विध्यर्थः करणं तथाऽधिकारलक्षणे वक्ष्यामः न च वाक्यार्थत्वं[1], आत्मार्थमेव करणत्वावलम्बनात् । तदुक्तम्—

आत्मसिध्यनुकूलस्य नियोज्यस्य प्रसिद्धये ।
कुर्वत्स्वर्गादिकमपि प्रधानं कार्यमेव नः ॥ इति ।

इहापि च भाष्यकारेण ते च यागदानहोमसम्बद्धाः स्वर्गस्य उत्पत्तिं वदन्तीति वदता विध्यर्थस्यैव करणतोक्ता । अस्य भाष्यस्यायमर्थः—ते च भावशब्दाः यागदानहोमैरभिधेयैरभिधायकतयाऽभिसंबद्धाः सन्तः[2] तद्विषयाभिधानद्वारेणापूर्वार्थं वदन्ति । तत्र च विध्यर्थे स्वर्गोत्पत्तिशब्दं प्रयुञ्जानेन विध्यर्थस्य स्वर्गोत्पादने करणतोक्ता । उत्पद्यते यया सोत्पत्तिरिति उत्पत्तिशब्दः करणसाधनः । ननु यागादेः करणत्वाभ्युपगमात् विध्यर्थस्य करणत्वं नोपपद्यते इत्यत्राह—तत्सम्बन्धाद्धि यागादेः करणता करणीभूतापूर्वनिष्पादकतयैव धात्वर्थस्य करणत्वं नान्यथेति न दोषः । कुत इति प्रश्नोऽयं .कथं पुनर्नियोगार्थस्य [3]करणभावोऽवगम्यते इत्यभिप्रायः । कार्यात्मा विध्यर्थः फलसिद्धौ कथं करणमित्यर्थः । उत्तरवादी तु

---

(1) G. व्याख्यार्थत्वं (2) R. तद्विषयीकरणं विध्यर्थं वदन्ति (3) G. करणता

एष ह्यर्थो विधीयते, यथा, यागादिना स्वर्गकामः केन भावयेत् स्वर्गं? यागादिनेति; यस्य च शब्दस्यार्थेन फलं साध्यते, तेनापूर्वं कृत्वा, नान्यथेति, ततोऽपूर्वं गम्यते,

---

"एषह्यर्थो विधीयते यथा यागादिना स्वर्गकाम" इत्यधिकारलक्षणसिद्धमर्थं दर्शयति। "केन साधयेत् स्वर्गं यागादिने"ति। किमनेन ग्रन्थेन प्रदर्शितं? सैवाधिकारिकी युक्तिः। स्वर्गं साधयतोऽधिकार इति स्थास्यति। "यस्य च शब्दस्यार्थेन फलं साध्यते तेनापूर्वं कृत्वा नान्यथेति ततोऽपूर्वं गम्यत" इति पूर्वापरविरोधपरिहारोऽयम्। पूर्वं हि नियोगात् फलमित्युक्तम् इदानीं यागात्फलमिति। तेनापूर्वं कृत्वेत्यविरोधः। ततोऽपूर्वमेव फलसाधनमिति गम्यते।

---

**एषह्यर्थो विधीयते यथा यागादिना स्वर्गकामः** स्वर्गं साधयेदित्यधिकारलक्षणसिद्धमर्थं **दर्शयति।** षष्ठाद्ये हि कर्मणि नियुज्यमानस्य कामिनः कामसिद्धौ यागः करणमिति कस्य शब्दस्य व्यापार इति चोदयित्वाऽयमर्थः प्रयत्नेनोक्तः। **केन साधयेत्स्वर्गं यागादिनेति। किमनेन ग्रन्थेन प्रदर्शितम्?** उत्तरं—**सैवाधिकारिकी युक्तिः।** याऽसावधिकारलक्षणे विध्यर्थस्य करणत्वे युक्तिः सैवोक्ताऽनेन ग्रन्थेन। कुत इत्याह—**स्वर्गं साधयतोऽधिकार इति हि स्थास्यति।** काम्यसिद्धिपर्यन्तः कामिनोऽधिकारः इति वक्ष्यति। तेनायं भाष्यार्थः स्वर्गकामो हि स्वर्गं साधयितुमिच्छति। स केन साधयेत्स्वर्गमित्यस्यामाकाङ्क्षायां यजेतेति विधीयते। **यस्य च शब्दस्यार्थेन फलं साध्यते तेनापूर्वं कृत्वा नान्यथेति ततोऽपूर्वमवगम्यते** अतो यस्तस्य वाचकः शब्दः ततोऽपूर्वं प्रतीयत इति। **पूर्वापरविरोधपरिहारोऽयम्** कुतः पूर्वापरविरोध आशङ्क्यते इत्यत्राह—**पूर्वं हि नियोगात्फलमित्युक्तम् इदानीं यागा-त्फलमिति** वदतो विरोधः। तं परिहरति—**तेनापूर्वं कृत्वेत्यविरोधः।** यागस्यापि करणता करणीभूतापूर्वसिद्धिद्वारेणेत्यानुगुण्यान्नास्ति विरोधः। "ततोऽपूर्वं गम्यत" इति सोपस्कारं भाष्यं व्याचष्टे—**ततोऽपूर्वमेव फलसाधनमिति गम्यते** फलसाधनमित्युपस्कारः।

अतो यः तस्य वाचकः शब्दः, ततोऽपूर्वं प्रतीयते इति ; तेन भावशब्दा अपूर्वस्य चोदकाः इति ब्रूमः, नतु कश्चिच्छब्दः साक्षादपूर्वस्य वाचकोऽस्ति ;

---

"अतो यस्तस्य वाचक इति" निगमनमेतत् । यस्मादपूर्वं साधयन् भावार्थः फलं निष्पादयति नान्यथा, क्षणिकत्वात् तेन तद्विषयो विध्यर्थो लिङादिभिः प्रत्याय्यते । तस्य च विषयाधीनप्रतिपत्तित्वात् , भावार्थानां च विषयबोधकत्वात् ततोऽपूर्वं प्रतीयत इत्युच्यते, न पुनस्तस्यामी वाचका इति । "न तु कश्चित् साक्षादपूर्वस्य वाचकोऽस्ति"इति भावार्थाभिप्रायमेतत् ।

---

यस्मादपूर्वसिद्धिद्वारेण यागादेः करणता अतोऽपूर्वमेव परमकारणम् । "अतो यस्तस्य वाचकः ततोऽपूर्वं प्रतीयत इति तेन भावशब्दा अपूर्वस्य वाचका इति ब्रूम" इति भाष्यं प्रतीकेनानुभाष्य तात्पर्यमाह—अतो यस्तस्य वाचक इति निगमनमेतत् । उपसंहारोऽयमित्यर्थः । अक्षरार्थमाह—यस्मादपूर्वं साधयन् भावार्थः फलं निष्पादयति नान्यथा क्षणिकत्वात् तेन तद्विषयो विध्यर्थो लिङादिभिः प्रत्याय्यते तस्य च तत्प्रतिपाद्यमानस्य विषयाधीनप्रतिपत्तित्वात् भावार्थानां च विषयबोधकत्वात् ततोऽपूर्वं प्रतीयत इत्युच्यते न पुनरपूर्वस्यामी[1] भावशब्दा वाचका इति । एवं च दर्शयन् भाष्यकारः तेभ्यः क्रिया प्रतीयेतेति सूत्रं व्याचष्टे—यद्भावार्थेभ्यः क्रिया प्रतीयत इत्युच्यते तन्न साक्षाद्वाचकत्वाभिप्रायेण, किन्तु विषयाभिधानद्वारेणेति ।

ननु कस्मादेवं सूत्रं व्याख्यायत इत्यत्राह भाष्यकारः "न तु कश्चिच्छब्दः साक्षादपूर्वस्य वाचकोऽस्ती"ति । तदिदं भाष्यं केचिदयुक्तं मन्यन्ते । अनेनैव हि भाष्येण सर्वथैव अपूर्वस्य वाचकः शब्दो नास्तीत्युच्यते । तच्चायुक्तम् । लिङादीनां तद्वाचकत्वात् इत्याशङ्क्याह—न तु कश्चिच्छब्दः साक्षादपूर्वस्य वाचकोऽस्तीति भावार्थाभिप्रायमेतत् ।

---

(2) R. भावार्थ

न पुनर्लिङादिशब्दोऽपि नियोगं नाचष्टे। कथं पुनर्भावार्थे वाचकत्वाशङ्का? केवलस्याप्रयोगात् नियोगशब्दस्य, तिङन्तस्यैव प्रयोगात्; तेन यावत्प्रयोगानुवर्तिन्येव वाचकतेति भ्रान्तानामर्थावगमं मुक्त्वा प्रयोगेयत्ता न सिध्यतीति तन्निराकर्तुमवाचक इत्युक्तम्।

ननु च न युक्तम् निराकर्तुम् किं वा प्रयोगेयत्ता अन्यथा सिद्ध्यति? अर्थावगमो वा विभागादवगम्यमानः किमपह्नोतुं

---

भावार्थान् शब्दानभिप्रेत्य वाचकत्वनिषेधः न शब्दमात्राभिप्रायेण। तदाह—**न पुनर्लिङादिशब्दोऽपि नियोगं नाचष्टे।** ननु यद्यपि सूत्रे तेभ्यः क्रिया प्रतीयत इति भावार्थानामेव नियोगाभिधायकताऽवसीयते तथापि प्रमाणाभावान्नेयमाशङ्कोचिता यन्निराकरणायेदमुच्यते न तु कश्चिच्छब्दः साक्षादपूर्वस्य वाचकोऽस्तीति। तदाह—**कथं पुनर्भावार्थे वाचकत्वाशङ्का?** उत्तरं—**केवलस्याप्रयोगात् नियोगशब्दस्य** लिङादेः। यदि भावार्थव्यतिरेकेण केवलेन प्रयुक्तेन लिङादिना विध्यर्थोऽवसीयते[1] तदा भावार्थेवाचकत्वाशङ्का न स्यात्। न च केवलस्य प्रयोगोऽस्ति नित्यं प्रकृतिपरस्यैव [2]प्रयोगवियमात्। **तिङन्तस्यैव प्रयोगात्** तिङन्त एव प्रयुज्यते भावार्थोऽपि न शुद्धः। तेन **यावत्प्रयोगानुवर्तिन्येव वाचकतेति भ्रान्तानां** यावदेव प्रकृतिप्रत्ययात्मकं पदं प्रयुज्यते तदनुसार्येव वाचकत्वं [3]तस्यैव वाचकत्वमिति भ्रान्तानां **अर्थावगमं मुक्त्वा** अन्येन प्रकारेण **प्रयोगेयत्ता न सिद्ध्यति** यदि केवलस्यापि वाचकत्वं तदा किमिति केवलोऽपि न प्रयुज्यते। न ह्यन्योन्यार्थावगमं मुक्त्वा प्रयोगपरिमाणोपायः यावता ह्यर्थः प्रत्याय्यते तावदेव प्रयुज्यत इतीदं मतं **निराकर्तुमवाचक इत्युक्तम्।** ननु यदि प्रयोगेयत्ताया अन्यथानुपपत्त्या वाचकत्वमाशङ्कितं तर्हि न युक्तं **निराकर्तुम्** एकेन ग्रन्थेनाह—**किं वा प्रयोगेयत्ता अन्यथा सिध्यति** येन[4] यावत्प्रयोगानुवर्तिनी वाचकता निराक्रियते। परिहरति—[5]**अर्थावगमो वा विभागादवगम्यमानः किमपह्नोतुं**

---

(1) G. विधीयते (2) G. नियोग (3) G. तथैव (4) G. येन वा यत्प्रयो
(5) G. अर्थावगमोऽपि भावाद

भावार्थैः किमपि भावयितव्यं, स्वर्गकामस्य च केनापि भाव्यतेति, तयोर्नष्टाश्वदग्धरथवत् संप्रयोगः। यजेत इत्येवमादयः साकाङ्क्षाः, 'यजेत' किं केन कथं? इति; 'स्वर्गकामः' इत्यनेन प्रयो-

---

शक्यते? किं तर्हि प्रयोगनियमे कारणं? प्रयोग एव। वाचकत्वस्येव प्रयोगस्याप्यनादितोक्ता। तस्मात्सूक्तं न भावशब्देन नियोगोऽर्थोऽभिधीयत इति। "भावार्थैः किमपि भावयितव्यं" इत्यवैभक्तिकसंबन्धं फलनियोगभावार्थानां दर्शयति।

अतो नायं वैनियोगिकः संबन्ध इति सिद्धम्। अन्यथा

---

शक्यते। लिङादिप्रत्ययमन्तरेण[1] जुहोति यजतीत्यादौ भावार्थाः प्रतीयन्ते प्रकृत्यन्तरपरे च लिङादौ प्रयुक्तेऽपूर्वमवगम्यत इत्यन्वयव्यतिरेकाभ्यां लिङादेरेवापूर्ववाचकत्वम्। धातोस्तु भावार्थाभिधाय कत्वमवगम्यमानं न शक्यतेऽपह्नोतुम्। तेन भावार्थानां नापूर्वं प्रति वाचकता। यदि विभागेन वाचकत्वं किं तर्हि प्रयोगनियमे कारणं? किमिति केवलो लिङादिशब्दो न प्रयुज्यते? उत्तरम्—प्रयोग एव प्रयोगनियमे कारणम्। ननु प्रयोग एव कारणे पृष्टे प्रयोग एव हेतुरिति न युक्तमुत्तरमित्यत्राह—वाचकत्वस्येव प्रयोगस्याप्यनादितोक्ता यथा वाचकत्वं शब्दानां अनादितया, प्रयोगोपि वृद्धव्यवहारपरम्परया, विमलाञ्जनेऽनादित्वस्य ज्ञापितत्वात्। तेनोत्तरेषां पुंसां पूर्वपूर्वपुरुषप्रयोग एव नियमे कारणम्। यो हि यथाभूतः प्रयुज्यमानो वाचको दृष्टः शब्दः स तथाभूत एव प्रयुज्यत इति नियमसिद्धिः। तस्मात् सूक्तं न भावशब्देन नियोगोऽर्थोऽभिधीयत इति। भावार्थैः किमपि भावयितव्यमित्येवमादिभिरवैभक्तिकसंबन्धं फलनियोगभावार्थानां दर्शयति। यस्मादयमवैभक्तिकः संबन्धः तस्मादयमवैनियोगिक इति सिद्धम्। अन्यथा हि यद्येवं न प्रदर्श्यते तदा

---

(1) G. प्रथमतरेण

विनियोगाभावादसम्बन्धं बादरिरिव विभक्तिविधानानुसारी मन्यते। अतश्च स्थित एतस्मिन्नधिकरणे गुणविधिर्नामधेयमिति विचारो भविष्यतीति न शक्यते वक्तुम्। किं पुनः कारणं न विनियोगलक्षणसंबन्धोऽयं ? विनियोजकानां श्रुत्यादीनामभावात्। कथमभावः ? संबन्धस्यानवगमात्। ननु चायमस्ति संबन्धः यजेत स्वर्गकाम इति। बाढमस्ति न पुनरैदमर्थ्यलक्षणः। किं लक्षणस्तर्हि ? अधिकारलक्षणः। ऐदमर्थ्यं च विनियोगावगम्यमित्युक्तं शेषः परार्थत्वादित्यत्र। तत्र च श्रुत्यादीनि विनियोगे कारणानीति।

---

**विनियोगाभावात्** विभक्तिविधानानुसारी कश्चित् **बादरिरिवासंबन्धं मन्यते।** ननु मन्यतां नाम तथापीह का क्षतिरित्यत्राह—**ततश्च स्थित एतस्मिन्नधिकरणे गुणविधिर्नामधेयमिति विचारो भविष्यतीति न शक्यते वक्तुम्।** न हि करणतामन्तरेणोद्भिदादीनां नामतेत्युक्तमेतत्पुरस्तात्। **किं पुनः कारणं** केन पुनः कारणेनेत्यर्थः विनियोजकलक्षणोऽयं संबन्धो न भवति। उत्तरं—**विनियोजकानां श्रुत्यादीनामभावात्। कथमभावः ?** अयमाशयः पृच्छकस्य—यज्यादिश्रुतिरेव श्रुतिः कस्मान्न भवति। उत्तरं—**संबन्धस्यानवगमात्** यदि यज्यादिश्रुतिसमनन्तरमैदमर्थ्यलक्षणः संबन्धोऽवगम्यते तदा भवेत् श्रुतिसंभवः। न चासाववगम्यते। सामान्येनैव संबन्धावगमो[1]नास्तीत्युक्तमिति मत्वा चोदयति—**ननु चायमस्ति संबन्धः यजेत स्वर्गकाम इति।** परिहरति—**बाढमस्ति न पुनरैदमर्थ्यलक्षणः किं तर्हि अधिकारलक्षणः।** ननु यदि श्रुत्यादयो न संभवन्ति कथं तर्हि अधिकारलक्षणोऽपि संबन्धोऽवगम्यते इत्यत्राह—**ऐदमर्थ्यं च विनियोगावगम्यमित्युक्तं शेषः परार्थत्वादित्यत्र।** तत्र च श्रुत्यादीनि विनियोगे कारणानीति पारार्थ्यलक्षणं शेषत्वं तस्मिंश्च शेषत्वे ऐदमर्थ्यलक्षणे शेषत्वेन विनियोगे[2] श्रुत्यादीनि कारणानीति वदता ऐदमर्थ्यं

---

(1) सबन्धोना (2) G. विनियोगेषु

कथं तर्हि "कर्माण्यपि जैमिनिः फलार्थत्वात्" इति? न द्रव्यगुणसंस्कारेष्वेव पारार्थ्यं फलयागपुरुषेष्वपीति बादरिपक्षं निरस्यता पारार्थ्यलक्षणः संबन्धोऽत्रास्तीत्यभ्युपगतम्। सत्यमभ्युपगतं न पुनस्तच्छब्देदंपरतया। तथा च दर्शितं नष्टाश्वदग्धरथवदिति "ननु च भावार्थैः किमपि भावयितव्यं स्वर्गकामस्य च केनापि" इति गुणप्रधानभावं दर्शयति। स च पारार्थ्ये सतीति पुनरैदंपर्यमेव प्राप्नोति। नेत्युच्यते। भावस्वभावो ह्ययमिति कथ्यते नेदंपरताशब्दस्य। अत एव च द्रव्यशब्देभ्यः तृतीयायुक्तेभ्योऽपि न विध्यर्थताऽभ्युपगता।

---

विनियोगावगम्यमित्युक्तम्। न पुनरधिकारलक्षणोऽपि संबन्धः। तेनासत्स्वपि विनियोजकेषु भवत्यधिकारलक्षणः संबन्धः। यदि फलनियोगे भावार्थानामवैनियोगिकः संबन्धः कथं तर्हि "कर्माण्यपि जैमिनिः फलार्थत्वात्" फलं च पुरुषार्थत्वात्" इति। एतदेव विवृणोति—द्रव्यगुणसंस्कारेष्वेव केवलेषु न पारार्थ्यम् अपि तु यागफलपुरुषेष्वपीत्यनेनाधिकरणेन बादरिपक्षं द्रव्यगुणसंस्कारेष्वेव शेषभाव इत्येवंरूपं निरस्यता पारार्थ्यलक्षणसंबन्धोऽत्राभ्युपगतः। तेन वैनियोगिकसंबन्धावगमादयुक्तमेतद्वैनियोगिकसंबन्धो नास्तीति। परिहरति—सत्यमभ्युपगतं पारार्थ्यलक्षणः संबन्धोप्यत्रास्तीति। न पुनः स्तच्छब्देदंपरतया। आर्थोयं पारार्थ्यलक्षणः संबन्धः न वैनियोगिक इत्यविरोधः। नष्टाश्वदग्धरथवत्संबन्ध इत्यनेनार्थोऽयं संबन्ध इति दर्शितम्। ननु भावार्थैः किमपि भावयितव्यम् स्वर्गकामस्य च केनापि भाव्यतेति गुणप्रधानभावं दर्शयति। शब्दसंबन्धकथनं चेदम्। स च गुणप्रधानभावः पारार्थ्ये सति भवति इति पुनरप्यैदंपर्यमेवशब्दस्य प्राप्नोतीति। परिहरति—न प्राप्नोत्यैदंपर्यं शब्दस्य। कुत इत्याह—भावस्वभावो ह्ययमिति कथ्यते अन्योत्पादकता नाम भावस्वभाव इति कथ्यते। नेदंपरता शब्दस्य कथ्यते। यत एवायमवैनियोगिकः संबन्धः अत एव च द्रव्यगुणशब्देभ्यः तृतीयायुक्तेभ्योपि प्रतीयमानस्यार्थस्य विध्यर्थता नाभ्युपगता। वैनियोगिकसंबन्धे तृतीयाविभक्तिवशेन द्रव्यगुण-

तस्मान्न विनियोगाद्यागस्वर्गयोः संबन्धः। कथं तर्हि, भावार्थत्वा-देवेत्युक्तम्। अत एव चाख्यातं न संबन्धे स्मरति पाणिनिः। ननु च कर्तरि कर्मणि भाव इति स्मरति। सत्यं स्मरति न तेषामन्यसंबन्धिताम्। यथा प्रातिपदिकादवगतस्यार्थस्य संबन्धप्रतिपादिन्यो विभक्तयः न तथाऽऽख्यातात्तस्यार्थस्य। ननु च तृतीयादिभिः द्विष्ठत्वात्संबन्धस्य द्वयोरपि सम्बन्धिता उक्ता भवतीति। सत्यं द्विष्ठः संबन्धः। सम्बन्धिता पुनर्नामार्थस्यैव तृतीयादिभिः। यथा पुमान् सद्वितीयो द्विवचनस्यौकारान्तस्य न पुनर्द्वितीयोऽप्यर्थः।

---

योरेव विधिना संबन्धः स्यात्। नचैतदस्ति **तस्मान्न विनियोगाद्यागस्वर्गयोः सम्बन्धः किं तर्हि? भावार्थत्वादेवेत्युक्तम्** भावार्थत्वादेव विनियोगविषयता भवति। तस्यां च सत्यां फलभावनां प्रति करणतेति भावार्थत्वादेव यागस्वर्गयोः सम्बन्धः। यत एव चान्यथापि संबन्धावगतिः **अत एव चाख्यातं सम्बन्धे पाणिनिर्न स्मरति**

**ननु च कर्तरि कर्मणि भाव इति स्मरति** अयमाशयः—कर्तरि कर्मणि भावे चार्थे चाख्यातमिति स्मरता संबन्ध एवाख्यातं स्मृतं भवति। यथा सुब्विभक्तिः कर्तृकर्मणोः स्मृता संबन्धित्वे स्मृता भवति। परिहरति—**सत्यं स्मरति, न तेषामन्यसम्बन्धितां तेषां**—आख्यातार्थानां तिङ्विभक्तिः अन्यसंबन्धितां न प्रतिपादयति। **यथा प्रातिपदि-कादवगम्यमानस्यार्थस्य अन्यसंबन्धप्रतिपादिन्यः सुब्विभक्तयः न तथाऽऽख्यातादवगतस्यार्थस्य** तिङ्विभक्तयः। **ननु च तृतीयादिभिर्द्विष्ठत्वात् संबन्धस्य द्वयोरपि संबन्धितोक्ता भवति।** तेन तृतीयादिस्मरणेनाख्यातार्थस्यापि शाब्दी संबन्धिताऽस्त्येव। परिहरति—**सत्यं द्विष्ठः संबन्धः संबन्धिता पुनः नामार्थस्यैव तृतीयादिभिः** प्रतिपाद्यते नाख्यातार्थस्य अर्थात्तु तस्य संबन्धिता **यथा पुमान् सद्वितीयो द्विवचनस्यौकारान्तस्यार्थः न पुनः द्वितीयोऽप्यर्थः** पुमानेव। अपि त्वसौ सद्वितीयत्वसिध्यर्थं अर्थादृगृह्यते। यत

अत एव चाख्यातार्थे कर्तृकर्मगता सङ्ख्यैवोच्यते वचनैः न पुनः कर्त्रादयः, प्रमाणान्तरावगम्या हि ते नियोगतः प्रत्यक्षादिभिर्वा। अत एव तु नियोगः कार्येऽप्यर्थे न भविष्यन्तमर्थमवगमयति। कारकव्यापारो हि कालत्रयावच्छेद्यो नाधिकारः। कथं तर्हि प्रयाजादेर्विनियोज्यत्वं? नाख्याततात्पारार्थ्यमवसीयत इत्युक्तम्।

---

एवाख्यातार्थस्यान्यसंबन्धिता तिङ्विभक्तिभिर्नोच्यते **अत एव चाख्यातार्थे कर्तृकर्मगता सङ्ख्यैवोच्यते वचनैः न पुनः कर्त्रादयः**। यदि यथा सुब्विभक्तयः प्रकृत्यर्थस्य अन्यसंबन्धितां वदन्ति तथा तिङ्विभक्तयो वदेयुः तथा सुब्विभक्तिवदेव कर्तृत्वादिकमपि ता आचक्षीरन्। ननु यद्यपि प्रकृत्यर्थस्य कर्तृत्वादिकं न वदन्ति तथापि प्रकृत्यर्थसंबन्धिन एव कर्तृत्वादिकमपि किमिति न वदन्तीत्यत्राह—**प्रमाणान्तरगम्या हि ते कर्त्रादयः** अतः शब्दे नोच्यन्ते। कुतः प्रमाणान्तरात्ते गम्यन्ते इत्यत्राह—**नियोगतः प्रत्यक्षादिभिर्वा** वेदे नियोगतः कर्तुरवगमः यस्य नियोज्यत्वं तस्यैव कर्तृत्वं तेन नियोगतः कर्तुरवगमः। प्रत्यक्षादिभिस्तु लौकिककर्मणां कर्त्राद्यवगमः। यत एव ये कर्त्रादयोऽन्यतोऽवगम्यन्ते अत एव ते शब्दवाच्या न भवन्ति इति। **अत एव तु नियोगो** लिङादिशब्दः **कार्येऽप्यर्थे**। यद्यपि तस्यार्थः कार्यरूपः तथापि **भविष्यन्तमर्थं न** वदति। भविष्यद्विषयायामपि कार्यतायां न पदेन भविष्यत्वावगमसिद्धिः।

ननु च न परोपाधिकी नियोगार्थस्य भविष्यत्ता किं तु स्वभावत एव तत्राह—**कारकव्यापारो हि कालत्रयावच्छेद्यो भवति नाधिकारः** न नियोगार्थ इत्यर्थः। तेन परोपाधिकैव भविष्यत्ता, कारकव्यापारव्यतिरेकेण च अन्येषां द्रव्यगुणानामपि न कालसंबन्धः तेन यदुच्यते कालत्रयवियुक्तश्च खपुष्पवदिति, तत्खपुष्पवदेव असंभविदूषणम्।

**कथं तर्हि प्रयाजादेर्विनियोज्यत्वं?** एकग्रन्थेनाह—**आख्यातात्तस्य हि च विनियोगात् पारार्थ्यं नावसीयत इत्युक्तम्।** तेन पारार्थ्यं नोपपद्यते। परिहरति—

जनेन निराकाङ्क्षाः; नैवं द्रव्यगुणशब्दाः। तस्मात् भावार्थाः कर्मशब्दा अपूर्वं चोदयन्ति इति। अथ कस्मात् उभयं

---

"किमेतावन्त्येव प्रमाणानि इत्यत्र परिहारं वक्ष्यामः। "नैवं द्रव्यगुण-शब्दा" इति। किं नैवं ?" नैवमधिकारलक्षणसम्बन्धमर्हन्तीत्यर्थः। सर्वथा हि विनियोगप्रमाणविषया एवैते। अतः सिद्धं भावार्थत्वादेव विनियोगसंबन्धितां प्रतिपद्यत इति।

कथं तर्हि स्वर्गकाम इति। विषयमङ्गीकृत्यैतदुक्तम्, न पुनर्वि-नियोज्यताम्। यथा चैतदेवं तथा स्वर्गकामाधिकरणे निपुणतर—

---

किमेतावन्त्येव प्रमाणानीत्यत्र तृतीये परिहारं वक्ष्यामः। प्रकरणाधिकरणे परिहारं वक्ष्यामः इत्यर्थः। अत्र भाष्यम्—"नैवं द्रव्यगुणशब्दा" इति। तत्र पृच्छति—किं नैवं ? किं भूतास्ते न भवन्तीत्यर्थः। उत्तरं—नैवमधिकारलक्षणसंबन्धमर्हन्तीत्यर्थः। यथा भावार्था अधिकारलक्षणसंबन्धमर्हन्ति नैवं द्रव्यगुणशब्दाः तेषु पुरुषस्याधिकारलक्षणमैश्वर्यं न भवतीत्यर्थः[1]। सर्वथा हि [2]विनियोगप्रमाणविषया एवैते द्रव्यगुणाः। न च पुरुषस्यैश्वर्यं वैनियोगिकम्। किंतु नैयोगिकम्। तच्च[3] चिकीर्षितस्योपपद्यते नान्यस्येति स्वर्गकामाधिकरणे वक्ष्यामः। अतः सिद्धं भावार्थत्वादेव नियोगविषयतां प्रतिपद्यते। न विभक्तिवशेनेति।

यदि वैनियोगिकसंबन्धो यागस्य नास्ति कथं तर्हि भाष्यकारेणोक्तम्—स्वर्गकामः केन साधयेत्स्वर्गं यागादिनेति। अत्र स्वर्गसिद्धौ वैनियोगिकः संबन्धः यागस्यावगम्यते। उत्तरम्—विषयमङ्गीकृत्यैतदुक्तम्। न विनियोज्यतां नियोगविषयस्यैव सतः आर्थं करणत्वं भवति। तदभिप्रायेण करणतोक्ता। यथा चैतदेवं तथा स्वर्गकामाधिकरणे निपुणतर-

(1) G. नास्तीत्यर्थः (2) G. नियोग (3) विषयस्यो

सूत्रितम्, भावार्थाः कर्मशब्दा इति। उच्यते, भवन्ति केचित् कर्मशब्दाः न भावार्थाः, यथा, श्येनैकत्रिकादयः; केचित् भावार्थाः न कर्मशब्दाः, यथा, भवनं भावो भूतिरिति। किं पुनरिहोदाहरणम्? 'श्येनेनाभिचरन् यजेत', 'चित्रया

---

मुपपादयिष्यामः। "भवन्ति केचित्कर्मशब्दा न भावार्थाः यथा श्येनैकत्रिकादयः, केचित् भावार्था न कर्मशब्दाः यथा भावो भवनं भूतिरिति" भावार्थाः कर्मशब्दा इति पदद्वयाभिधाने भावार्थस्य किं प्रयोजनम्? यदि कर्मशब्देभ्यः क्रियेत्युच्यते श्येनैकत्रिकादिभ्योऽप्यपूर्वस्योत्पत्तिरित्युक्तं स्यात्। एतेऽपि हि कर्मशब्दाः। एतेभ्योऽपि किमिति न भवति? द्रव्यगुणशब्दनिवृत्त्यर्थं भावार्थाः कर्मशब्दा इत्युक्तम्। न कर्मशब्दनिवृत्त्यर्थम्। तस्मादभिधीयमाने विशेषणे नैव श्येनादीनां निवृत्तिः। एतेऽपि भावार्थस्यैव कर्मणो वाचका यागादेः।

---

मुपपादयिष्यामः। भवन्ति केचित्कर्मशब्दा न भावार्थाः यथा श्येनैकत्रिकादयः। केचिद्भावार्था न कर्मशब्दाः यथा भावो भवनं भूतिरिति इति भाष्यमनुभाषितं व्याचष्टे —भावार्थाः कर्मशब्दा इति पदद्वयाभिधाने भावार्थस्य भावार्थसंबन्धिपदद्वयाभिधाने किं प्रयोजनम्। प्रयोजनमेवाह—यदि कर्मशब्देभ्यः क्रियाप्रतीयेतेत्युच्येत तदा श्येनैकत्रिकादिभ्योऽपूर्वस्योत्पत्तिरित्युक्तं स्यात् एतेऽपि हि कर्मशब्दा नामधेयत्वात्। अत्र चोदयति —यदि हि कर्मशब्दाः श्येनैकत्रिकादयः तदा एतेभ्योपि किमित्यपूर्वोत्पत्तिर्नभवति? द्रव्यगुणशब्दनिवृत्त्यर्थं भावार्थाः कर्मशब्दा इत्यधिकविशेषणमुक्तम्। न कर्मशब्दनिवृत्त्यर्थम्। कर्मशब्दाश्चैते, तस्मात्कथमेषां निवृत्तिः तस्मादभिधीयमाने विशेषणे भावार्थग्रहणेन नैव श्येनादीनां निवृत्तिः। एते हि भावार्थस्यैव कर्मणो वाचका यागादेः

यजेत पशुकामः' इति; किं श्येनेनाभिचरन्, उत यजेताभि-चरन् इति? तथा चित्रया पशुकामः, उत पशुकामो यजेत? इति। स्थिते एतस्मिन्नधिकरणे गुणविधिः, नामधेयम् इति

---

इदमपरं खर्परं "स्थित एतस्मिन्नधिकरणे नामधेयं" न पुनरस्यां चिन्तायां कर्मवचनत्वं श्येनादेरुपपद्यते। यदाऽऽख्यातार्थेन विधिः साध्यत इति स्थितं तदा लक्षणाभयान्नामधेयत्वमित्युक्तम्। अतः श्येनादिनि-वृत्त्यर्थमभिधानद्वयं शक्यम्। अत्राभिधीयते। नेदं शक्यं यदि कर्म-शब्देभ्य इत्युच्यते इदमेवाधिकरणं स्थितिं न लभते। स्थाप्यमानं ह्येतज्ज्यो-तिष्टोमादेः कर्मशब्दतामावहति। अतश्च न नामाख्यातयोः विशेषो लभ्यते।

---

इदमपरं खर्परं विसंस्थुलं स्थित एतस्मिन्नधिकरणे नामधेयत्वमिति न हि पुनरस्यां चिन्तायां वर्तमानायां कर्मवचनत्वं श्येनादेरुपपद्यते सामानाधिकरण्याभावात्। यदाऽऽख्यातार्थेन विधिः साध्यत इति स्थितं तदा तृतीयार्थलाभे[1]सति तृतीयान्तानां सामानाधिकरण्ये स्थिते मत्वर्थलक्षणाभयान्नामधेयत्वमित्युक्तम्। तेनास्मिन्नधिकरणेऽसति नामधेयत्वमेव नास्ति किन्तु द्रव्यगुणवचनतैव। तद्वचनतया निवृत्तिः [2]कर्मशब्दग्रहणेनैव कृता। अतः. श्येनादिनिवृत्त्यर्थमभिधानद्वयं शक्यमुच्यते। अत्राभिधीयते। नेदं शक्यं यदि कर्मशब्देभ्य इत्युच्यते तदेदमेवाधिकरणं स्थितिं न लभ्यते? कस्मादित्याह स्थाप्यमानं ह्येतज्ज्योतिष्टोमादेः कर्मशब्दतामावहति अतश्च. नामाख्यातयोर्विशेषो न लभ्यते। अस्यार्थः—यदि कर्मशब्देभ्योऽपूर्वमित्युच्यते तदैवेदमधिकरणं स्थितिं न लभते चक्रकदोषप्रसङ्गादिति—तथा हि ज्योतिष्टोमेन यजेतेत्यत्र प्रथमं द्रव्यगुणशब्दत्वात् ज्योतिष्टोमादिशब्देऽकर्मशब्दतया निरस्ते यजेतेत्येतद्विषय एवापूर्वे स्थिते तत्सामानाधिकरण्येन कर्मनामधेयत्वे जाते कर्मशब्दतया पुनरपूर्वार्थिता प्राप्नोति। तस्यां च सत्यां यागसामानाधि-

---

(1) G. तृतीयार्थत्वे (2) G. भावार्थग्रहणेनैव

विचारो भविष्यति। तथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति, दर्शः कालः, पूर्णमासः इति च, किं ताभ्यां स्वर्गकामः, उत स्वर्गकामो यजेत? इति, दर्शपूर्णमासाभ्यामिति च श्येनेनेति च चित्रयेति च नैते भाववचनाः; न चैषामर्थिना

---

भावशब्दाभिधाने पुनः सिद्धवत्कर्माभिधानात् ज्योतिष्टोमादेर्निवृत्तिः। सकर्मके पूर्वापरीभूते भावशब्दो वर्तत इति।

एवं तर्हि भावशब्दा इत्येवास्तु कर्मशब्दग्रहणमतिरिच्यते। इदमेव हि न लभ्यते पूर्वापरीभूते सकर्मके भावशब्दो वर्तत इति। अन्यत्रापि दर्शनात् भावो भवनं भूतिरिति भावशब्दस्य। किं पुनरुदाहरणं?

---

करण्यं नास्ति। न हि तदा यागे तृतीयार्थोऽस्ति। ततश्च कर्मवचनत्वानुपपत्तेः द्रव्यगुणवचनतापत्तेः यागादेरेवापूर्वमिति चक्रकेण अधिकरणमेव न व्यवतिष्ठते। भावशब्दाभिधाने[1] पुनः सत्यपि कर्मवचनत्वे सिद्धवत्कर्माभिधानात् प्राप्नोति ज्योतिष्टोमादेर्निवृत्तिः सकर्मके हि पूर्वापरीभूते भावशब्दो वर्तत इत्युक्तम्। एतदुक्तं भवति। उत्तरकालभाविनीमपि[2] कर्मवचनतया ज्योतिष्टोमादिपदानां अपूर्वार्थतां निवर्तयितुं भावार्थग्रहणं कृतम्। यत एव च नामधेयनिवृत्तिसिद्धिरप्यधिकरणव्यवस्थापनार्थमेव अतो नाधिकरणभेदः।

एवं तर्हि सर्वनिवृत्तिसमर्थो भावार्थशब्द एव केवलः सूत्रेऽस्तु तेनैव द्रव्यगुणनामधेयानां [3]निवृत्तिसिद्धेः कर्मशब्दग्रहणमतिरिच्यते। कुत इत्याह—इदमेव हि न[4] लभ्यते पूर्वापरीभूते सकर्मके भावशब्दो वर्तत इति। अन्यत्रापि दर्शनात् भावो भवनं भूतिरिति भावशब्दस्य तेन विशिष्टविषयतामेवापादयितुं[5] भावशब्दग्रहणं कृतम्। किं पुनरिहोदाहरणम्?

---

(1) भावशब्देभ्य इत्युच्यमाने (2) G. उत्तरकालवाचिनामपि (3) G. omits सिद्धेः G. व्यावृत्ति (4) G. omids न (5) कर्तुः शब्दग्रहणं

कश्चित्संबन्धोऽस्ति, विविभक्तिकत्वात्। तस्मान्न द्रव्यगुणशब्दा अपूर्वस्य विधायकाः इति ॥

---

यदि श्येनैकत्रिकादयोऽपि कर्मशब्दा नैवं द्रव्यगुणशब्दानां निवृत्त्यर्थमिदं सूत्रमुपपद्यते। सर्वत्राधिकारचोदनासु नामैवोपपदमुपलभ्यते। तस्मान्निर्विषयं सूत्रं मन्वानः किं पुनरिहोदाहरणमिति पृच्छति।

---

यदि श्येनैकत्रिकादयोऽपि कर्मशब्दाः नैव द्रव्यगुणशब्दानां निवृत्त्यर्थं सूत्रमुपपद्यते निवर्तनीयाभावात्। सर्वत्राधिकारचोदनासु नामैवोपपदमुपलभ्यते न[1] द्रव्यगुणशब्दाः। ननु भवतु सर्वास्वधिकारचोदनासु नामैवोपपदं[2] सोमेन यजेतेत्याद्या उत्पत्तिचोदनाः द्रव्यगुणशब्दोपपदभाज उदाहरणं भवन्तु। कथं च सर्वाधिकारचोदनासु नामैवोपपदमिति। उच्यते। सर्वासु तावदधिकारचोदनासु विरुद्धत्रिकद्वयापत्त्या वाक्यभेदप्रसङ्गान्मत्वर्थलक्षणादोषप्रसङ्गाच्च उपपदानां नामतयैवान्वयो नान्यथा। या एव अधिकारचोदनास्ता एवोदाहरणम्। सर्वासु खलूत्पत्तिचोदनासु अधिकारविधिसन्निधिसमाम्नातासु न प्रथममपूर्वान्तराणि प्रतीयन्ते। किन्तु [3]स्वकीयकारकवर्गावच्छिन्नानि कर्ममात्राण्येव प्रतीयन्ते। अधिकारचोदनावर्ती च नियोगशब्द ऐदमर्थ्यमात्रेण तैरन्वितं नियोगमाचष्टे। करणोपकारकतया च तेषामैदमर्थ्योपपत्तिः। न च क्षणिकानि तानि कर्माणि संभूयैकमुपकारं जनयितुमीशते। क्षणिकानां युगपद्भावासंभवात्। अतस्तेष्वप्यवान्तरापूर्वाणि कल्प्यन्ते इति न तत्र द्रव्यगुणशब्देभ्योऽपूर्वोत्पत्तिसंभावना। एतेन प्रधानोत्पत्तयोऽपि व्याख्याताः। तास्वपि प्रथममधिकार विध्यपेक्षितं कर्मस्वरूपमात्रसमर्पणम्[4]। उत्पत्तिनियोगानामनवगमात्। क्षणिकस्य कर्मस्वरूपस्य प्राच्योदीच्यकालयोरङ्गयोः उपकार्यता न संभवतीत्यपूर्वान्तराश्रयणमिति तत्र तत्रातिक्षुण्णोऽयमर्थः तस्मान्निर्विषयमिदं सूत्रं मन्वानः कि पुनरिहोदाहरणमिति पृच्छति। ननु नामव्यतिरिक्तमप्युपपदं अधिकारचोदनासु दृश्यते 'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसामं

---

(1) G. omits न (2) G. द्रव्यगुणशब्दोपपदं (3) G. स्वक्रिया (4) पेक्षित-र्पणपरत्वात्

का वार्ता एतस्यैव रेवतीष्वित्येवमादिषु ?। यथाख्याताद्दते नान्यस्य विध्यर्थता संभवति तथा तत्रैव वक्ष्यामः। एवं तर्हि नामोपपदान्येवात्रोदाहरणानि ? । अनेनैव सूत्रेण नामाख्यातयोः विध्यर्थत्वे विवेकः। अविवेके हि नामतैव न स्यात द्रव्यगुणशब्दतैव स्यात । तस्मात्सिद्धं द्रव्यगुणनिवृत्त्यर्थमुदाहरणम्। आख्यातिक्यो विभक्तयः पूर्वापरीभावं प्रतिपादयन्तीत्युपरिष्टाद्वक्ष्यति । विसदृशविभक्तियोगाच्च ज्योतिष्टोमादेः न पूर्वापरीभूतप्रतिपादन-

---

कृत्वा पशुकामो ह्येतेन यजेतेति तदाह—**का वार्ता एतस्यैव रेवतीष्वित्येवमादिषु?** उत्तरं—**यथाख्याताद्दतेऽन्यस्य विध्यर्थता तत्र न संभवति तथा तत्रैव** रेवत्यधिकरणे **वक्ष्यामः** तेन तदप्युदाहरणं न संभवति। अत्रोत्तरभाष्यं[1]—"श्येनेनाभिचरन् यजेतेत्येवमादि" तद्व्याचष्टे —**एवं तर्हि नामोपपदान्येवात्रोदाहरणानि** कथं तान्युदाहरणानीत्यत्राह—**अनेनैव सूत्रेण नामाख्यातयोर्विध्यर्थत्वे विवेकः।** अस्यार्थः—अनेनैव सूत्रेणायं विवेकः क्रियते नाम्नां विध्यर्थता नास्ति आख्यातार्थानामेव विध्यर्थतेति। स्थिते चास्मिन् विवेके नामधेयतयान्वयः श्येनादिशब्दानाम्। प्राक्चेदस्माद्विवेकात द्रव्यगुणशब्दतैव तदाऽऽह **विवेके हि नामतैव न स्यात् द्रव्यगुणशब्दतैव स्यात्** तस्मात्प्रथममेषां द्रव्यगुणशब्दत्वेनोदाहरणत्वं [2]पश्चादभावार्थकर्मशब्दत्वेन निवर्त्यत्वम्। तस्मात्सिद्धं द्रव्यगुणशब्द**निवृत्त्यर्थमुदाहरणम्।** कथं पुनर्नामाख्यातयोर्विध्यर्थत्वे विवेक इत्यत्राह—**आख्यातिक्यो विभक्तयः पूर्वापरीभावं प्रतिपादयन्तीत्युपरिष्टाद्वक्ष्यति।** तेनाख्यातानामेव विध्यर्थता। कार्यभूतो हि विध्यर्थः पुरुषेण प्रतीयते। नच परव्यापारसाध्यं परः स्वसंबन्धितया कार्यं प्रतिपद्यते। पुरुषस्य च प्रयत्नलक्षणः स्वव्यापारः। तेन प्रयत्नरूपकृतीप्सितो विध्यर्थः श्रूयते। प्रयत्नश्च सर्वः साध्यविषयः। तेन प्रयत्नावच्छेदद्वारेण साध्योऽर्थो विधेर्विषयः। [3]**विसदृशविभक्तियोगाच्च ज्योतिष्टोमादेर्न पूर्वापरीभूतप्रतिपादन-**

---

(1) Page 305 (2) पश्चाद्भूतार्थं (3) G. सदृश

सामर्थ्यमस्तीति सिद्धो विवेकः। अत्र केचिच्चोदयन्ति। ननु कर्मशब्दान्माभूदपूर्वोत्पत्तिरिति उपपद्यत एतत्सूत्रम्। एवञ्च किमुदाहरण-मित्येवमादेर्ग्रन्थस्याभिप्रायवर्णनमनर्थकम्। अत्रोच्यते। न कर्म-शब्दाद्व्युदासः शक्यते वक्तुम्। अभिन्नत्वान्नामनामिपदयोः।

---

**नसामर्थ्यमस्तीति** न नामधेयानां विध्यर्थता। किन्तु आख्यातानामेवेति **सिद्धो विवेकः। अत्र केचिच्चोदयन्ति। ननु कर्मशब्दमात्रात् माभूदपूर्वोत्पत्तिरित्युप-पद्यत एवैतत्सूत्रम्। एवञ्च किमिहोदाहरणमित्येवमादेर्ग्रन्थस्याभिप्रायवर्णनमनर्थकम्।** अस्यार्थः। यदि तावत् द्रव्यगुणशब्दा अधिकारचोदनासु भवन्ति तदा लब्धमुदाहरण-मिति नोदाहरणाभांवाभिप्रायेणोदाहरणप्रश्नोपपत्तिः।

अथ न सन्ति सर्वत्र नामधेयान्येवोपपदं तदा नामधेयनिवृत्त्यर्थमेवेदं सूत्रम्। तथापि सुलभमुदाहरणं कर्मशब्दमात्रान्माभूदपूर्वस्योत्पत्तिरित्येवमर्थमुपपद्यत एवैतत्सूत्रम्। एवञ्च सुलभे उदाहरणे यदिदं निबन्धने किमिहोदाहरणमित्येवमादिना ग्रन्थेन किमिहोदाहरणमिति भाष्यस्याभिपायवर्णनं कृतम्—उदाहरणाभासाभिप्रायेण अयं प्रश्न इति तदनर्थकम्। स्वरूपज्ञानार्थं एवायं प्रश्न इति कृत्वा किमिहोदाहरणमित्येवमादेः ग्रन्थस्येति कर्तरि षष्ठी न शेषलक्षणे। नह्यस्य ग्रन्थस्यायमर्थः किमिहोदाहरणमित्येवमादेर्भाष्यस्याभि-प्रायवर्णनमिति। आदिशब्दस्यानन्वयप्रसङ्गात्। न हि तत्रापरः प्रश्नवर्ती ग्रन्थोऽस्ति।

**अत्रोच्यते। नहि कर्मशब्दाद्व्युदासः शक्यते कर्तुं कर्मशब्देन। अभिन्नत्वान्नामनामिपदयोः।** अस्यार्थः—यावन्ति पदानि सूत्रे प्रयुज्यन्ते तावतां व्या-वृत्त्यर्थता अङ्गीकरणीया। कर्मशब्दग्रहणेन द्रव्यगुणा व्यावृत्ताः न नामधेयानि तेषामपि कर्मशब्दत्वात्। ये च ते द्रव्यगुणा व्यावृत्ताः ते अधिकारचोदनासु न सन्तीति

सर्वेषां भावोऽर्थ इति चेत् ॥ २ ॥

**एवं चेत् भवान् पश्यति, अभावशब्दत्वात् न द्रव्यगुण-शब्दा अपूर्वस्य विधायकाः इति, सर्वेषां भावोऽर्थः, स्वर्गकामो दर्शपूर्णमासाभ्याम् इत्येतयोः संबन्धं यजेत इति वक्ष्यति,**

---

कथं तर्हि श्येनैकत्रिकादयो निरस्यन्ते ? अनाख्यातार्थत्वादेव । भावार्थग्रहणं किमर्थम् ? कर्मशब्दत्वेऽपि अभावार्थत्वेन अनाख्यातार्थ-तैवेति । तस्मात्सूक्तमेतत् किमिहोदाहरणमित्येवमादेर्ग्रन्थ-स्योपन्यासः ।

**सर्वेषां भावोऽर्थ इति चेत्।** किमनेन पूर्वोक्तमाक्षिप्तम् ? यत्पूर्वोक्तं तदेवाक्षिप्तम् । भावार्थेभ्यः क्रिया प्रतीयत इति । सर्वेषां भावोऽर्थ

---

[1]मन्वानस्याभावाभिप्रायेण युक्तैव चोदना । यदि नामनामिपदयोरभिन्नता **कथं तर्हि श्येनै-कत्रिकादयो निरस्यन्ते ?** उत्तरम्—**अनाख्यातार्थत्वादेव ।** अनाख्यातार्थत्वेन हि सिद्धवत्तेषु [2]कर्मार्थावगतिरिति न विध्यर्थता । यद्यनाख्यातार्थत्वं निराकरणकारणं **भावार्थग्रहणमिदानीं किमर्थम् ?** उत्तरम्—**कर्मशब्दत्वेप्यभावार्थत्वेनानाख्यातार्थतैवेति ।** कर्मशब्दत्वेप्येषामनाख्यातार्थत्वं अपूर्वापरीभूतार्थत्वमिति[3] कथयितुं भावार्थग्रहणम् । भावार्थग्रहणे हि ज्ञायते नूनमभावार्था अपि केचित्कर्मशब्दास्सन्तीति । तेनैषामपूर्वा-परिभूतार्थत्वप्रतिपादनार्थं भावार्थग्रहणमपि सार्थकम् । **तस्मात् सूक्तमेतदस्माकं**—योऽयं **किमिहोदाहरणमित्येवमादेः** निबन्धनग्रन्थस्योपन्यासः ।

सर्वेषां भावोऽर्थ इति चेत् । इति सूत्रमनुभाष्याक्षिपति—**किमनेन पूर्वोक्तमाक्षिप्तम् ?** उत्तरम्—**यत्पूर्वोक्तं तदेवाक्षिप्तम् ।** आक्षेप्ता आह—**भावार्थेभ्यः क्रिया प्रतीयत इति**

---

(1) मन्वानःसमाहाराभिप्रायेण (2) G. कर्मावगति (3) G. भूतर्थत्व

श्येनेन अभिचरन् इत्येतयोश्च । तथा चित्रया पशुकामः इति; तस्मादेतेऽपि साकाङ्क्षत्वात् भाववचनाः; सर्वेषु भाव-

---

इति वदता कथमिदमाक्षिप्तं भवति ? यदि ह्यभावार्थानामपूर्वार्थतां वदेत् तदाऽऽक्षेपः संभवति । सर्वेषां भावोऽर्थ इति वदतो नैव द्रव्यगुण-शब्दाः सन्तीत्यभिप्रायो गम्यते । न पुनर्द्रव्यगुणशब्दाः अपि भावार्था इति शक्यते प्रतिपत्तुम् । कर्मशब्दसामानाधिकरण्याच्च विशेषतः । अयमभिप्रायश्चोदकस्य । द्रव्यगुणशब्दा अपि भाव-रूपापन्ना एव विध्यर्था भवन्ति ।

---

पूर्वमुक्तम् । सर्वेषां भावोऽर्थ इति वदता कथमिदमाक्षिप्तं भवति । एकग्रन्थेनाह —यदि ह्यभावार्थानामपूर्वार्थतां वदेत् तदाऽऽक्षेपः संभवति । ननु द्रव्यगुणशब्देभ्यो ऽपूर्वं नास्तीत्यादि पूर्वमेवोक्तम् । तत्र यदि सर्वेषां इत्यनेन सर्वेषामेवापूर्वार्थतोच्यते तदाऽस्त्येवाक्षेप इत्याशङ्क्याह—सर्वेषां भावोऽर्थ इति वदतो नैव द्रव्यगुणशब्दाः सन्तीत्यभिप्रायो गम्यते । न पुनर्द्रव्यगुणशब्दा अपि भावार्था इति प्रतिपत्तुं शक्यते । कर्मशब्दसामानाधिकरण्याच्च विशेषतः । अस्यार्थः । सर्वेषां भावोऽर्थ इति वदतोऽ-यमभिप्रायोऽवगम्यते द्रव्यगुणवाचिनः शब्दा न सन्त्येवेति; न पुनर्द्रव्यगुणवाचका-श्चापि शब्दाः भावार्था इति । विशेषतश्च भावार्थशब्दस्य कर्मशब्देन[1] सह सामानाधि-करण्यात् । यस्य हि शब्दस्य कर्म अभिधेयं स कर्मशब्दः । यश्च कर्मशब्दः नासौ द्रव्यगुणशब्दो भवितुमर्हति । तत्र च द्रव्यगुणशब्दापलापेन न किञ्चिदाक्षिप्तं भवति । समाधत्ते—अयमभिप्रायश्चोदकस्य द्रव्यगुणशब्दा अपि भावरूपापन्ना एव विध्यर्था भवन्ति अस्यार्थः । अविवादं तावदिदं विधिं प्रत्यैदमर्थ्यं यत् द्रव्यगुणशब्दानामपि तद्भावरूपापन्ना

---

(1) R. कर्मशब्दग्रहणेन

वचनेषु नास्ति विनिगमनायां हेतुः, कर्मशब्दा एवापूर्वस्य विधायकाः, न द्रव्यगुणशब्दाः इति ॥

येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामानि, तस्मात्तेभ्यः पराकाङ्क्षा भूतत्वात् स्वे प्रयोगे ॥ ३ ॥

**येषां शब्दानामुच्चारणोत्पत्तौ स्वे अर्थे प्रयुज्यमानानां रूप–**

---

तच्चेदं दध्ना जुहोतीत्यत्र प्रतिपादयिष्यामः । एवञ्चेत् सर्वेषां भावोऽर्थः द्रव्य-गुणावगतिस्तु नान्तरीयक्येव । तस्मादभिधानवन्न स्वरूपतः क्रियान्वयो द्रव्यगुणानाम् । तस्माद्भावार्था इति सूत्रं न विशेषावगतावलम् ।

**येषामुत्पत्तौ ।** सत्यं सर्वेषां भावार्थता, किन्त्वेकस्य स्वतः अन्यस्य तद्योगात् । किमिदं तद्योगादिति ? तदर्थानुप्रवेशादित्यर्थः ।

---

नामेव । **तच्चेदं तध्नाजुहोतीत्यत्र दर्शयिष्यामः । एवञ्चेत् सर्वेषां भावोऽर्थः द्रव्यगुणा-वगतिः नान्तरीयकी । तस्मान्न स्वरूपतः क्रियान्वयो द्रव्यगुणानाम् । अभिधानवत्** यथाऽभिधानमन्त्रस्य स्वरूपतः क्रियान्वयो नास्ति तथा द्रव्यगुणयोरपि । **तस्माद्भावार्था इत्येवं** सूत्रं न द्रव्यगुणविशेषावगतावलम् । सर्वेषां भावार्थत्वात् न कश्चित् भावशब्देन विशेषो गृह्यते । यावदुक्तं भवेत् सर्वपदानां विध्यन्वयिनां विध्यर्थतेति तावदेवोक्तं भवति भावार्थेभ्यः क्रिया प्रतीयत इति । तेन सूत्राक्षेपो भवत्येव; अविशेषकत्वे भावार्थ-ग्रहणस्यानर्थक्यप्रसङ्गात् ।

**येषामुत्पत्तौ । सत्यं सर्वेषां भावार्थता । किन्तु एकस्य स्वतः अन्यस्य तद्योगात् ।** भावार्थस्य स्वतो भावार्थता । द्रव्यस्य गुणस्य च तद्योगात् । **किमिदं तद्योगादिति ? तदर्थानुप्रवेशादित्यर्थः ।** क्रियानुप्रविष्टा हि द्रव्यगुणाः साध्या भवन्ति कारकत्वस्य

---

(1) तच्चभाव

मुपलभ्यते, यत् सकृदुत्पन्नं कालान्तरं तिष्ठति, न क्रियेवोत्पन्नमात्रं विनश्यतीत्यर्थः। तानि नामानि। ते द्रव्यगुणशब्दाः। ईदृशो द्रव्यगुणशब्दानामर्थः। 'ते द्रव्यगुणशब्दाः' इति वक्तव्ये "तानि नामानि" इति सूत्रितम्, अतो नामानि इति एषां पर्यायशब्दः। कथं गम्यते? यत एषां विभक्तयो नामिक्य उच्यन्ते। कतमास्ताः? वृक्षः वृक्षौ वृक्षाः, शुक्लः शुक्लौ शुक्लाः इत्येवमादयः; तस्मात् सम्यक् सूत्रितम्। यत एषां

---

कथं पुनरिदमवगम्यते—एकस्य स्वतः, अन्यस्य तद्योगादनुप्रवेशादिति? तत्स्वभावत्वात्, एकस्य हि सिद्ध एव स्वभावः, अन्यस्य साध्यः तत्र न साध्यतामन्यतोऽपेक्षते। सिद्धिः पुनः न साध्ययोगादृते साध्यतया प्रतिपत्तुं शक्यते। किं जहत्स्वभावा साध्यान्वयिता सिद्धस्य? भवतु, को दोषः? अयमेव दोषः सिद्धतैव नावगम्यते। अनन्वितानाञ्चायं विवेकः सूत्रकारेण प्रदर्शितः। तस्मान्नमः शब्दविद्भ्यो यैरयं विवेको निश्चीयते।

---

साध्यत्वात्। कथं पुनरिदमवगम्यते एकस्य स्वतोऽन्यस्य तद्योगादिति। उत्तरं—तत्स्वभावादेव। एतदेव विवृणोति—एकस्य द्रव्यस्य गुणस्य च सिद्ध एव स्वभावः। अन्यस्य च भावार्थस्य साध्यः। तत्र न साध्यः साध्यतामन्यतोऽपेक्षते। सिद्धः पुनः न साध्ययोगादृते साध्यतया प्रतिपत्तुं शक्यते। अत्र चोदयति-किं जहत्स्वभावा साध्यान्वयिता सिद्धस्य भवति। किं स्वभावभूतां सिद्धतां परित्यज्य साध्यान्वयी सिद्धो भवति। उत्तरम्—भवतु को दोषः। आक्षेप्ताऽऽह—अयमेव दोषः सिद्धतैव नावगम्यते सोऽपि भावार्थवत् साध्य एव प्रतीयते। अथानन्वितावस्थायां सिद्धता नास्ति तदयुक्तमित्याह—अनन्वितानाञ्चायं विवेकः सूत्रकारेण प्रदर्शितः। तस्याञ्चावस्थायां सर्वमेव साध्यमिति नास्ति विवेकः। तस्मान्नमः शब्दविद्भ्यो येरेवं विवेको निश्चीयते।

न क्षणिकोऽर्थः, ततः 'तेभ्यः पराकाङ्क्षा' प्रधानाकाङ्क्षा न विद्यते इति। नैषां उत्पत्तिः कर्तव्या, 'भूतत्वात् स्वे प्रयोगे' स्वप्रयोगकाले विद्यमानत्वात् इत्यर्थः ॥

येषां तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते, तान्याख्यातानि; तस्मात्तेभ्यः प्रतीयेताश्रितत्वात् प्रयोगस्य ॥ ४ ॥

येषां तु शब्दानामुच्चारणोत्पत्तौ 'स्वे अर्थे प्रयोगो न विद्यते' प्रयोगकाले येषामर्थो नोपलभ्यते इत्यर्थः, 'तान्याख्या-

---

यथाहाचार्यवान्। किन्तु निमित्तगतैषा कथा। निमित्ततश्च कार्यमकार्यंवेति परीक्षकैः वक्तव्यम्। तथा चेयं येषामुत्पत्ताविति भगवता सूत्रकारेण निमित्तावस्थोपवर्णिता उत्पत्तिशब्दं प्रयुञ्जानेन। येषामुत्पत्तौ निमित्तावस्थायामित्यर्थः। निमित्ततो ह्याकाङ्क्षा चाख्यातार्थस्यैवेति दर्शितम्।

---

समाधत्ते—यथाहाचार्यवान् भवान् किन्तु निमित्तगतैषा कथा। सिद्ध एकोऽपरः साध्य इति येयं कथा सा निमित्तगता। अनन्वितावस्था हि संबन्धग्रहणोपायतां गच्छन्ती वाक्यार्थप्रतिपत्तौ निमित्तम्। एवं सम्बन्धग्रहणम्। अयमर्थोऽनेन शब्देनाकाङ्क्षितसन्निहितयोग्यार्थान्तरेणान्वितस्सन्नभिधीयत इति। तेनास्ति निमित्तम्। भवतु निमित्तावस्थायां विवेकः तथापि किमित्यत आह—निमित्ततश्च कार्यमकार्यंवेति परीक्षकैर्वक्तव्यम्। निमित्तावस्थायां यस्य कार्यता[1] नैमित्तिकावस्थायामपि तस्य स्वाभाविकी कार्यता[2]। अन्यस्य तदयोगात्। तथाच भगवता सूत्रकारेण निमित्तावस्थोपवर्णिता उत्पत्तिसंबन्धशब्दं प्रयुञ्जानेन। उत्पत्तौ निमित्तावस्थायामित्यर्थः। शब्दोच्चारणमात्रेण हि अनन्वितस्वरूपेण पदार्थः स्मर्यते इति निमित्तावस्थैवोत्पत्तिरुच्यते। निमित्तावस्थायाञ्च द्रव्यगुणयोः साध्यावस्था[3] नास्तीति दर्शयति—निमित्ततो ह्याकाङ्क्षा चाख्यातार्थस्यैवेति दर्शितं भाष्ये निमित्तावस्थायामाख्यातार्थ एवाधि-

---

(1) G. यकार्यं सन्निहितं (2) G. तदेवकार्यं साध्यमिति वक्तव्यम (3) G. साध्यावगतिः

तानि' इति भावशब्दान् पर्यायशब्देनोपदिशति। कथं पर्यायशब्दता भावशब्दानाम्? यत एषां विभक्तय आख्यातिक्यः इत्युच्यन्ते। कतमास्ताः? पचति पचतः पचन्तीत्येवमादयः। तस्मात्तेभ्योऽपूर्वं प्रतीयेत; भव्यार्थास्ते भूतार्थैः समुच्चरिताः; भूतस्य भव्यार्थतायां दृष्टार्थता, भव्यार्थस्य प्रयोजनवत उत्पत्तिरर्थवती, सा च भूतेन क्रियते इति दृष्टोऽर्थः; भव्यस्य पुनर्भूतार्थतायां न किञ्चित् दृश्यते, कल्प्यते चादृष्टम्। तस्मान्न यागो द्रव्यार्थः।

किञ्च 'आश्रितत्त्वात् प्रयोगस्य' एतेषां प्रयोगः पुरुषेणाश्रितो भवति, पुरुषसंबद्धा भावनोच्यत, पुरुषं हि वदति, भावयेत् इति, तेन 'स्वर्गकामो यजेत' इति पुरुषोऽपि प्रतीयत, यागोऽपि संबन्धोऽपि; स्वर्गकामो द्रव्येणेति द्रव्यं प्रतीयते पुरुषश्च, न तु संबन्धः। ननु एतदुक्तं भवति, अर्थिनश्च द्रव्यस्य

---

कार्ये पुनः किं सिद्धसाध्यविवेको नास्ति? अस्ति तावत् आश्रितत्वात्प्रयोगस्येति। किमिदमाश्रितत्वात्प्रयोगस्येति? उच्यते। भावार्थानामेव प्रयोगः पुरुषेणाश्रित इति।

---

कारिणमपेक्षते। न द्रव्यगुणशब्दार्थः। यस्य चाधिकाराकाङ्क्षा स साध्यः। अनुष्ठानाय ह्यसावपेक्ष्यते। तेनाधिकार्यपेक्षाप्रदर्शनेन भाष्यकारेण आख्यातार्थस्यैव निमित्तावस्थायां साध्यतेत्युक्तम्। भाष्ये च प्रधानाकाङ्क्षाऽधिकार्याकाङ्क्षाऽभिमता। एवन्तावत् निमित्ताश्रयणेन विवेको दर्शितः। सम्प्रति नैमित्तिकावस्थायामपि दर्शयितुमाह—**कार्ये पुनः** नैमित्तिकेवाक्यार्थे तस्यां दशायामित्यर्थः। **किं सिद्धसाध्यविवेको नैवास्ति?** उत्तरम्—**अस्तितावत् आश्रितत्वात् प्रयोगस्येति।** उच्यते—**भावार्थानामेव प्रयोगः पुरुषेणाश्रित इति।**

च संबन्धं 'यजेत' इति वक्ष्यति, द्रव्येण भावयेत् इति; अतो द्रव्येण अर्थस्य भावना गम्येत, आकाङ्क्षा च इति। सत्यं गम्यते, द्रव्येण भावयेत् इति तु वाक्येन, यागेन भावयेदिति तु श्रुत्या; यदा तु, यागेन भावयेदिति यागसंबन्धो विधीयते, न तदा द्रव्येण भावयेदिति द्रव्यसंबन्धः; न च द्रव्यसंबन्धे विधीयमाने यजेतेत्यनेन संबन्धः; अनूद्यमाने तु सम्भवति, न च यौगपद्येन विध्यनुवादौ सम्भवतः। तस्मात् श्रुतिवाक्ययोर्विरोधः, विरोधे च श्रुतिर्बलीयसी, तेना-

---

किमिदं भावार्थानामेव प्रयोगः पुरुषेणाश्रित इति? यावता द्रव्यगुणानामपि किमिति नाश्रित इति? निमित्ताश्रितत्त्वात्कार्यस्य, यथानिमित्तमवभासते। तदिदं भाष्यकारेण [1]किञ्चेत्युक्त्वा कार्यादप्येवंभूतनिमित्ततैवेति प्रतिपादितम्, साक्षेपनिरपेक्षत्वात्कार्यावगतेः

---

पृच्छति—किमिदमुच्यते भावार्थानामेव प्रयोगः पुरुषेणाश्रित इति। यावता द्रव्यगुणानामपि किमिति नाश्रित इति। उत्तरम्—निमित्ताश्रितत्त्वात्कार्यस्य यथानिमित्तमवभासते। निमित्ताश्रितो हि वाक्यार्थः तेन यः सिद्धरूपः स सिद्धतया साधनत्वेनान्वयं याति। यः साध्यः स साध्यतयैवेत्यर्थः। तदिदं भाष्यकारेण किञ्चेत्युक्त्वा कार्यादप्येवंभूतनिमित्ततैवेति प्रतिपादितम्। कार्यान्नियोगादपि एवंभूतनिमित्ततैव वाक्यार्थस्यावगम्यत इति प्रतिपादितं भाष्यकारेण। यदा हि भावार्थविषयो नियोगः तदा द्रव्यगुणशब्दार्थो भावार्थनिष्पादकतयैव वाक्यार्थेऽन्वयं[2] याति। भावार्थत्वे साध्यतया। अन्यथा द्रव्यगुणशब्दानां नियोगार्थतानुपपत्तेः। तेन नियोगादपि सिद्धसाध्यतयैवावगतिः वाक्यार्थदशायामपि। कस्मात्पुनरेवंभूतेत्याह—सापेक्षनिरपेक्षत्वात्कार्यावगतेः। एकस्य

---

(1) p. 316 (2) G. भावार्थान्वयं

र्थिना न द्रव्यसंबन्धः ; तत्र द्रव्यमसति स्वर्गकामसंबन्धे स्वर्गार्थं भविष्यतीत्यनुपपन्नम् , एष विनिगमनायां हेतुः , येन भावशब्दा एवापूर्वस्य चोदकाः, न द्रव्यगुणशब्दाः इति, यदा, यागेन कुर्यादिति, तदा, यागवचनमेव भवति ; दर्शपूर्णमासाभ्याम् इति लक्षणया, दर्शे च पूर्णमासे च यागो विहितः इति ॥

---

क सापेक्षत्वं क वा निरपेक्षत्वमुक्तम् ? सिद्धसाध्ययोः साध्यस्यानपेक्षत्वं विध्यर्थे साध्यविषयत्वात् नियोगस्य। साध्यापेक्षिता च सिद्धस्येति गुणविधौ दर्शयिष्याम इत्युक्तम्। एष विनिगमनायां हेतुः।

---

सापेक्षा कार्यावगतिः। सापेक्षो नियोगसंबन्धावगमः। अन्यस्य निरपेक्षः। **क सापेक्षत्वं क वा निरपेक्षत्वम्?** उत्तरम्—**सिद्धसाध्ययोर्मध्ये साध्यस्यानपेक्षत्वं** साधनस्य सापेक्षत्वं **विध्यर्थे** नियोगसंबन्धे। कुत इत्याह—**साध्यविषयत्वान्नियोगस्य**[1]। **साध्यापेक्षिता तु सिद्धस्येति गुणविधौ दर्शयिष्याम इत्युक्तम्।** भावार्थत्वादेव भावार्थविषये नियोगे सति यदैकस्मादपूर्वं तदेतरत् तदर्थमिति न्यायेन द्रव्यगुणयोर्भावा[र्था]र्थतयैव नियोगसंबन्धः। तेन भावार्थसाधनत्वेनैव तयोः विध्यनुप्रवेशो नान्यथेति गुणविधौ दर्शयिष्याम इत्युक्तमत्रैव। तच्चेदं दध्ना जुहोतीति प्रतिपादयिष्याम इति। तेन सिद्धसाध्यार्थद्रव्यशब्दसंभवात् भावार्थाः कर्मशब्दा इति विशेषावगतौ समर्थं सूत्रम्। अधिकरणार्थमुपसंहरति—**एष विनिगमनायां हेतुः।** अत्र च नैमित्तिकावस्थायां द्रव्यगुणभावार्थानां सर्वेषामेव साध्यार्थत्वात्[2] साध्यार्थविषयत्वाच्च नियोगस्याविशेषेण विधिविषयसमर्पकत्वमिति पूर्वः पक्षः। राद्धान्तस्तु द्रव्यगुणयोर्विधिविषयत्वे क्रियायाश्च तादर्थ्ये यथाप्रतीयमानक्रियाकारकभावावगमविरोध इति भावार्थविषय एव नियोगो न द्रव्यगुणविषय इति।

---

(1) G. नियोगविषयस्य (2) साध्यत्वात्

अथ अपूर्वाधिकरणम् ॥

**कथं पुनरिदमवगम्यते ? अस्ति तदपूर्वम् इति। उच्यते—**

**चोदना पुनरारम्भः ॥ ५ ॥**

**चोदनेत्यपूर्वं ब्रूमः,—अपूर्वं पुनरस्ति, यत आरम्भः शिष्यते, स्वर्गकामो यजेत इति। इतरथा हि विधानं अनर्थकं**

---

**चोदना । कथं पुनरिदमवगम्यते अस्ति तदपूर्वमिति ?** ननु चायं प्रश्नो नोपपद्यते, अपूर्वं हि विध्यर्थः। विधितश्च प्रामाण्यमित्युक्तम् । कथं तदाक्षेप उपपद्यते । अत्रोच्यते । अयमभिप्रायश्चोदकस्य । नियोगो हि कर्माणि पुरुषं नियुङ्क्ते न स्वार्थे ।

---

चोदना । "कथं पुनरिदमवगम्यते अस्ति तदपूर्वं"इति भाष्यानुभाषणम् । आक्षिपति—**ननु चायं प्रश्नो नोपपद्यते** । कुत इत्याह—**अपूर्वं हि विध्यर्थः** । न पूर्वमपूर्वम् । पूर्वं तदुच्यते यदवगतं प्राक् । यत्तु केन चित्प्रागनवगतं प्रतीयते तदपूर्वम् । तथाभूतश्च विध्यर्थः । तथापि किमित्याह—**विधितश्च प्रामाण्यमित्युक्तम्** । प्रमाणान्तरगम्या हि क्रिया भावना वा यदि वाक्यार्थः स्यात् तदा वेदस्याप्रामाण्यमेव स्यात् । तयोर्हि प्रमाणान्तरगम्येन चेद्रूपेण वेदादवगतिः तदाऽनुवादादप्रामाण्यम् । अथ प्रमाणान्तरावगम्यरूपविपरीतेन रूपेण तदा विपर्ययादप्रामाण्यम् । विधेः पुनः प्रमाणान्तरावेद्यस्य यथैव शब्दादवगतिः तथैव प्रामाण्यं न्याय्यम् । प्रमाणान्तरवेद्ये चार्थे पौरुषेयत्वं वेदस्यापद्यत इति प्रथमपाद उक्तमेव । **अत्रोच्यते—अयमभिप्रायश्चोदकस्य नियोगो हि कर्मणि पुरुषं नियुङ्क्ते न स्वार्थे** । अस्यार्थः—लोके हि कार्यावगतिः प्रवृत्तौ निमित्तम् । बालोऽपि हि यावत कार्यतया स्तनपानादिकं नाववुध्यते तावन्न प्रवर्तते । तेन वृद्धव्यवहारेपि प्रयोज्यस्य लिङादिशब्दान्वितवाक्यश्रवणसमनन्तरभाविनीं प्रवृत्तिमुपलभ्य कार्यावगतिनिमित्तता-

---

(1) G. साध्यत्वात्

स्यात् , भङ्गित्वात् यागस्य, । यदि अन्यदनुत्पाद्य यागो विनश्येत्, फलं असति निमित्ते न स्यात् । तस्मात् उत्पादयति इति । यदि पुनः फलवचनसामर्थ्यात्तदेव न विनश्यति इति कल्प्यते । नैवं शक्यम्, न हि कर्मणोऽन्यत् रूपमुपलभामहे, यत् आश्रयं देशान्तरं प्रापयति, तत् कर्मेत्युच्यते, न तत् आत्मनि

---

कर्म चानित्यम् । न च स्वर्गाद्यनन्तरमुपलभ्यते । तस्माद्यागस्य वा नित्यत्वं कल्पयितव्यम् । आत्मनो वा संस्कारः कश्चित्, देवताप्रसादो वा न पुनस्तेनापूर्वं कृत्वेत्येतत्सूक्तमिव प्रतिभाति ।

---

लिङादेरवसीयते । तत्रापि चिन्त्यम्—किं कर्म गवानयनादिकं कार्यतया प्रत्याय्यते ? यदि वा कर्मातिरिक्तमन्यदिति ? तत्र कर्मणि प्रवृत्तिदर्शनात् तदेव कार्यतयाऽवगतमिति प्रतीयते । प्रतीतिप्रवृत्त्योः समानविषयत्वात् । आचार्यवाक्यानन्तरप्रवृत्तावप्येवमेव । तस्माल्लिङादिः कर्मण एव कार्यतामवगमयति व्युत्पत्तिप्रतिपत्त्योरेकविषयत्वात् । आचार्यवाक्यानन्तरं यदेव कार्यतया शब्दोऽवगमयति तत्रैव पुरुषो नियुज्यते । अन्यथा नियोगासम्भवात् । तेन कर्म कार्यतया लिङादिरवगमयन् कर्मण्येव पुरुषं नियुङ्क्ते । नान्यत्र कर्मव्यतिरिक्ते स्वार्थे । अन्यस्य स्वार्थत्वेनानवबोध्यमानत्वात् । एतच्च क्रियैव वाक्यार्थः । तस्या एव शब्देन कार्यतया प्रत्याय्यमानत्वात् । ततश्चैतदधिकरणसिद्धान्तसिद्धमेवापूर्वस्य वाक्यार्थत्वमाश्रित्य प्रामाण्यमित्युक्तम् । नन्वेवमपि कामिनां कर्मणि नियुक्तौ फलसिद्धिर्न स्यात् ; क्षणिकत्वात्कर्मणाम् । कालान्तरभावित्वाच्च फलसिद्धेः । तदिदमङ्गीकृत्यैवाह—**कर्म चानित्यम् । न च स्वर्गाद्यनन्तरमुपलभ्यते । तस्माद्यागस्य वा नित्यत्वं कल्पयितव्यम् । आत्मनो वा संस्कारः कश्चित् । देवताप्रसादो वा न पुनस्तेनापूर्वं कृत्वेत्येतत् सूक्तमिव प्रतिभाति ।** परं फलसिध्यन्यथानुपपत्त्या कर्मणो वा नित्यत्वं, आत्मनो वा संस्कारः कश्चित् , देवताप्रसादो वा कल्प्यताम् ।

समवेतं, सर्वगतत्वादात्मनः, सर्वत्र कार्य्योपलम्भः सर्वत्र भावे लिङ्गम्। ननु तदेव देशान्तरादागमनस्य, न हि असति आगमने किञ्चिद्विरुद्धं दृश्यते; यत्र समवेतमासीत्, तद्विनष्टं द्रव्यं, तस्य विनाशात्तदपि विनष्टम् इत्यवगम्यते। आश्रयोऽप्यविनष्टः

---

अत्राभिधीयते—नियोगः कर्मणि पुरुषं नियुङ्क्त इति न सम्यगवधृतं भवता। आरम्भे हि पुरुषं नियुङ्क्ते न कर्मणि। आरम्भविषयं हि कर्म। स चारम्भो विध्यर्थः।

---

अपूर्वन्तु कार्यरूपं शब्देनावगम्यत इति व्युत्पत्तिविपरीतं अशक्याध्यसानम्। अतो यस्य च शब्दस्यार्थेन फलं साध्यते तेनापूर्वं कृत्वा नान्यथेति यदुक्तं तद्दुरुक्तमिव प्रतिभाति। चोदना पुनरारम्भः। अत्राभिधीयते। नियोगः कर्मणि पुरुषं नियुङ्क्ते इति सम्यगवधृतं भवता। आरम्भे हि पुरुषं नियुङ्क्ते न कर्मणि। अयमाशयः—यदा तावत् षष्ठाद्यसिद्धान्तबलेन बादर्यधिकरणसिद्धान्तबलेन च फलसिद्धिसमर्थे कार्ये कामी नियुज्यत इति स्थितं तदा न कर्मणि [1]कामिनो नियोज्यता संभवति। तस्य कालान्तरभाविफलसाधकत्वाभावात्। अतो नियोज्यान्वययोग्यं यागादिव्यतिरिक्तं कालान्तरावस्थायि कार्यं लिङादिभिः प्रत्याय्यते। अतो लिङादयः स्वार्थे पुरुषं नियुञ्जते नतु कर्मणि। कस्मात् कर्मण्येव न पुरुषं नियुञ्जत इत्यत्राह—आरम्भविषयं हि कर्म। कार्यभूतस्य विध्यर्थस्य विषयभावेनान्वयं यागादिकर्म यातीति न तत्र पुरुषो नियुज्यते। नन्वेवमप्यारम्भः कार्यतया प्रतीयते न विध्यर्थः तत्राह—स चारम्भो विध्यर्थः। आरभ्यते अनेन इति व्युत्पत्त्या आरम्भः आरम्भार्थः पुनर्विध्यर्थः तस्य फलसाधनताऽवगम्यते फलकर्मेति वा। कथं विषयमिति नपुंसकलिङ्गता? कर्मशब्दसामानाधिकरण्यात्। तद्यथा प्रधानोऽयं लक्षणार्थ इति पुल्लिङ्गत्वम्। कथं पुनर्विध्यर्थस्य फलसाधनताऽवगम्यते? फलसाधनत्वे वा किमिति फलस्य वाक्यार्थता न भवतीत्यत्राह

---

(1) R. कामीनियोज्यतयाऽन्वयमनुभवति

इति चेत्। न, भस्मोपलम्भनात्। सत्यपि भस्मन्यस्ति

---

स्वर्गकामस्य चासावित्यारम्भात् स्वर्ग इति। ब्रूमः। कर्मणाऽस्या- रम्भः। कर्मादिनित्यत्वपरिकल्पना पुनः प्रमाणान्तरविरुद्धैव, अनिमित्ता च आरम्भे प्रत्यर्थिनि। कथं पुनः प्रमाणान्तरविरोधः ?

---

—**स्वर्गकामस्य चासावित्यारम्भात् स्वर्ग इति ब्रूमः**। यस्मात्स्वर्गकामस्य नियोज्यस्य असौ नियोगः। न चासौ फलमसाधयंस्तस्य भवति। अतो नियोज्यविशेषसंबन्धान्नियोगः फल- साधनतामवलम्बते। आत्मन एवासो संविद्धीनः फलसाधक इति [1]प्रधानभावं नातिवर्तते। नहि नियोज्यसम्बन्धं विना नियोगस्य सिद्धिरुपपद्यते। तदुक्तम्—

आत्मसिद्ध्यनुकूलस्य नियोज्यस्य प्रसिद्धये।
कुर्वन् स्वर्गादिकमपि प्रधानं कार्यमेव नः॥ (प्र.प.वाक्यार्थमा)

केन पुनरुपायेन तस्यापूर्वस्य सिद्धिः तत्राह—**कर्मणाऽस्यारम्भः** विषयभूतं कर्मैव[2] तस्य करणमिति दर्शितं **विषयकरणीये**। नन्वेवमपि कर्मणा विध्यर्थे सिद्धे किमिति कर्मानन्तरं फलं न भवति ? सहकार्यपेक्षणादिति ब्रूमः। दर्शितश्च तत् "तच्चैव हि कारणं शब्दश्चेति"। भाष्यं (१-१-५) एवञ्च कामाधिकारे यागादिव्यतिरिक्तकार्यवचना लिङादयो व्युत्पन्नाः। नित्याधिकारे निषेधाधिकारे[3] च तदेवावबोधयन्ति अनेकार्थकल्पनाया अन्याय्यत्वात्। लोके तु प्रमाणान्तरेण तस्यानुपलम्भात् न तत्प्रतिपादकतया लिङादयः प्रयोक्तुं शक्याः। किन्तु प्रमाणान्तरगम्ये कर्मणः कार्यत्वे लक्षणया प्रयुज्यन्ते। कर्मणो हि कार्यता। विध्यर्थः कार्यतां न व्यभिचरति। तेन तामव्यभिचारिणीं कार्यतां लक्षयितुं लिङादेः प्रयोगः। लाक्षणि- काभिमानस्तु लौकिकानां न्यायमविदुषां नास्ति। विदुषां पुनरस्त्येव। कस्मात्पुनः कर्मादी- नामेव नित्यत्वादिकं न परिकल्प्यते अत्राह—**कर्मादिनित्यत्वपरिकल्पना पुनः प्रमाणान्तर- विरुद्धैव; अनिमित्ता च आरम्भे प्रत्यर्थिनि। कथं पुनः प्रमाणान्तरविरोधः ?** उत्तरम्

---

(1) G. प्रधान भावना (2) कर्मैव तत्तुकरमिति (3) G. Omits this

इति चेत् न, विद्यमानोपलम्भनेऽप्यदर्शनात्। फलक्रिया लिङ्गम् इति चेत्। एवं सत्यदर्शने समाधिर्वक्तव्यः। सौक्ष्म्यादीनामन्यतमत् भविष्यति इति यदि चिन्त्यते, कल्पितमेवं सति किञ्चित् भवति इति। तत्रापूर्वं वा कल्प्येत, तद्वा? इत्यविशेषकल्पनायामस्ति हेतुः, न विशिष्टकल्पनायाम्। अनाश्रितं कर्म भविष्यति-इति चेत्। तदपि तादृशमेव।

---

भङ्गित्वं हि कर्मणां प्रसिद्धमेव। क्षणान्तरानुपलम्भाच्च। आत्मनश्च निष्क्रियत्वं सर्वगतत्वादात्मनः। पुरोडाशादेश्च कर्मवद्विनाशदर्शनात्। सौक्ष्म्यादेश्च विशेषस्य आरम्भे प्रत्यर्थिनि नास्ति कल्पनेत्युक्तम्। दर्शितं तद्भाष्यकारेण सामान्यकल्पनायां प्रमाणं न विशेषकल्पना-यामिति।

---

—**भङ्गित्वं हि कर्मणां प्रसिद्धमेव क्षणान्तरनुपलम्भाच्च।** स्वभावत एव तावत् कर्मणां क्षणभङ्गिता प्रसिद्धा। तथाऽऽश्रयविनाशादपि विनाशित्वम्। कथं पुनराश्रयस्यैव विनाश इत्यत्राह—**आत्मनश्च निष्क्रियत्वं सर्वगतत्वादात्मनः।** यदि हि कर्मणः आश्रयः आत्मा स्यात् न स्यादाश्रयविनाशाद्विनाशः। न त्वात्मनः कर्माश्रयत्वं निष्क्रियत्वादात्मनः। निष्क्रियता च सर्वगतत्वात्। उपपादिता च सर्वगतताऽस्माभिः **परिशिष्टे।** एतच्च चलनात्मिकां क्रियामङ्गी-कृत्योच्यते। यापि च यागादिक्रिया सापि शास्त्रीयरूपा नानाविधाऽनेकपरिस्पन्दावच्छिन्ना नात्मनि समवैति। **पुरोडाशादेश्च कर्मवद्विनाशदर्शनात्।** तदाश्रितस्य कर्मणः स्पष्ट एव विनाशः आश्रयविनाशात्। अथोच्येत [1]सूक्ष्मीभावात् पुरोडाशादेरनुपलब्धिः न पुन-र्विनाशादित्यत्राह—**सौक्ष्म्यादेश्च विशेषस्यारम्भे प्रत्यर्थिनि नास्ति कल्पनेत्युक्तम्। दर्शि-तञ्च भाष्ये सामान्यकल्पनायामस्ति प्रमाणं न विशेषकल्पनायामिति।**

---

(1) G. पुरस्तादभावात्

स्वभावान्तरकल्पनेन देशान्तरं न प्रापयिष्यतीति तादृश-मेव। तस्मात् भङ्गी यजिः, तस्य भङ्गित्वात् अपूर्वमस्ति इति। किं चिन्तायाः प्रयोजनम् ? यदि द्रव्यगुणशब्दाः अप्यपूर्वं चोदयन्ति, द्रव्यगुणापचारे न प्रतिनिधिरुपादातव्यः, यथा तर्हि पूर्वः पक्षः ; यथा तर्हि सिद्धान्तः, द्रव्यं गुणं वा प्रतिनिधाय प्रयोगोऽनुष्ठातव्यः इति ॥

अथ कर्मणां गुणप्रधानभावविभागाधिकरणम् ॥

तानि द्वैधं गुणप्रधानभूतानि ॥ ६ ॥

अवगतमेतत्, भावशब्दाः कर्मणो वाचकाः इति, बहु-प्रकाराश्च भावशब्दाः, यजति, जुहोति, ददाति इत्येवं

---

तानि द्वैधम्। अवगतमेतद्भावशब्दाः प्रधानकर्मणो वाचका इति। क पुनरिदमवगतम् ? भावशब्दाः प्रधानकर्मणो वाचका इति भावार्थाः कर्मशब्दा इत्येतत्समधिगतम्। कर्मणः पूर्वापरीभूतस्य

---

अस्यार्थः। सौक्ष्म्यादिकमपि पुरोडाशादीनां कल्प्यते कर्मणाञ्च स्थायित्वं यद्यन्यथा-नुपपत्तिः स्यात्। न चासावस्ति इति क्रियातिरिक्तं स्थायिकार्यं किञ्चिदस्तीति सामान्यकल्पन-यैवोपपत्तेः। देवताप्रसादात्मसंस्कारौ च नवमैकादशयोर्निराकरिष्यमाणत्वादिह न निराकृतौ।

तानि द्वैधम्॥ अवगतमेतत् भावशब्दाः प्रधानकर्मणो वाचका इति भाष्यमनुभा-षितमाक्षिपति—क्व पुनरिदमवगतं ? भावशब्दाः प्रधानकर्मणो वाचका इति। कर्म-शब्दा भावार्था इत्येतत्समधिगतम्। एतदेव विवृणोति—कर्मणः पूर्वापरीभूतस्य

---

(1) G. गुणभावादर्शनात्

प्रकाराः, दोग्धि, पिनष्टि, विलापयति इत्येवमादयश्च;। तेषु सन्देहः, किं सर्वे प्रधानकर्मणो विधायकाः, उत केचित् संस्कारकर्मणः ? इति। भावार्थत्वाविशेषात् सर्वे प्रधानकर्मणो वाचकाः इति प्राप्तं ; ततो ब्रूमः, तानि द्वैधं भवितुमर्हन्तीति द्विप्रकाराणि, कानिचित् प्रधानकर्मणो वाचकानि, कानिचित् संस्कारकर्मणः ; एवमपि सर्वाण्यर्थवन्ति, अर्थवत्त्वे सति सर्वेभ्यः

---

वाचका इति। न पुनः प्राधान्यं क्वचिन्निर्दिष्टम्। अथायमभिप्रायः इतरत्तदर्थमिति वदता नामार्थं प्रत्याख्यातार्थस्य प्राधान्यमुक्तमिति। तदयुक्तम्। स्वर्गकामपदार्थं प्रति गुणभावदर्शनात्। तथाचोक्तम् —ते स्वर्गकामपदसंबन्धात स्वर्गं भावयेदिति ब्रूयुरिति। तस्मान्न विद्मः किमिदं 'अवगतमेतद्भावशब्दाः प्रधानकर्मणो वाचका' इति। अत्राभिधीयते—प्राधान्यं हि नियोगविषयत्वमभिप्रेतम्। कुतः ? विषयत्वादेव।

---

वाचका इति न पुनः प्राधान्यं क्वचिन्निर्दिष्टम्। अथायमभिप्रायः इतरत्तदर्थमिति वदता नामार्थं प्रत्याख्यातार्थस्य प्राधान्यमुक्तमिति यदैकस्मादपूर्वं तदा इतरत्तदर्थमिति वदताऽपूर्वविषयभूतानामाख्यातार्थानां द्रव्यगुणापेक्षया प्राधान्यमुक्तमिति। तदयुक्तं स्वर्गकामपदार्थं पुरुषं प्रति गुणभावदर्शनात्। तथाचोक्तम ते स्वर्गकामपदसम्बन्धात् स्वर्गं भावयेदिति ब्रूयुरिति। तस्मान्न विद्मः किमिदमवगतमेतत् भावशब्दाः प्रधानकर्मणो वाचका इति। अत्राभिधीयते—प्राधान्यं हि नियोगविषयत्वमभिप्रेतम्। तेनायमर्थः—अवगतमेतत् भावशब्दाः नियोगविषयीभूतस्य कर्मणो वाचका इति। कस्मात्पुनः प्रधानशब्देन नियोगविषयः उच्यते ? तदाह—कुत इति। उत्तरम्—विषयत्वादेव। नियोगविषयो हि नान्योऽर्थो भवति। ननु नियोगविषयो नियोज्य एव तावत् गुणभावेन प्रतीयते

**न शक्यमपूर्वं कल्पयितुम्। अतो न सर्वाणि प्रधानकर्मणो वाचकानि ॥**

अथ प्रधानकर्मलक्षणम् ॥

यैर्द्रव्यं न चिकीर्ष्यते, तानि प्रधानभूतानि, द्रव्यस्य गुणभूतत्वात् ॥ ७ ॥

**एवं सति अल्पीयसी अदृष्टकल्पना न्याय्या। ननु न विनिगमनायां हेतुमवगच्छामः, कुतोऽपूर्वम्, कुतो न इति।**

---

विषयतया हि यागादयः प्रतीयन्ते नियोगार्थस्य। न कस्यचिदुत्पत्त्याद्यर्थतया। तदुक्तं “अधिकारलक्षणे वक्ष्यामः” इति। तस्माद्युक्तमुक्तमेतदवगतमिति। चिन्ता चोपपद्यते—किं सर्वाण्येव नियोगविषयतया प्रतीयन्ते ? उतोत्पत्त्याद्यर्थतयापि केचिदिति।

---

अन्यथा नियोगसिद्ध्यनुपपत्तेः इत्यत्राह—**नियोगविषयतया हि यागादयः प्रतीयन्ते न कस्यचिदुत्पत्त्याद्यर्थतया।** यथाऽवघातादयः कस्यचिदुत्पत्त्याद्यर्थतया प्रतीयन्ते न तथा यागादयः। किन्तु विषयतामात्रेण तेषामवगतिः शब्दतः। तथाऽवगतानाञ्च तेषामार्थिकी गुणभूतता। **यथा चैतत्तथाऽधिकारलक्षणे वक्ष्यामः।** तेन शाब्दीमवस्थामाश्रित्य प्रधानव्यपदेशः। **तस्माद्युक्तमेवैतदवगतमेतदिति। चिन्ता चोपपद्यते।** यदैवंभूतः प्रधानशब्दस्यार्थः तदा चिन्ताप्युपपद्यते। **किं सर्वाण्येव नियोगविषयतया प्रतीयन्ते ? उतोत्पत्त्याद्यर्थतया केचिदिति।** अन्यथा हि यदि द्रव्यगुणापेक्षया शेषितया प्रधानत्वमाश्रीयते तदा पेषणादेरपि प्रधानता दृषदुपलाद्यपेक्षयेति सर्वमेव प्रधानं स्यात्। ततश्च कोटिद्वयाभावे चिन्तानुपपत्तिः। अत्र चाधिकरणे श्रूयमाणामपि द्वितीयां अश्रूयमाणामिव कृत्वा चिन्ता। अत एव च भाष्यकारेण दोग्धि पिनष्टि विलापयती—

**तदुच्यते, यैर्भावकर्मभिर्न द्रव्यं संस्कर्तुमिष्यते, उत्पादयितुम् वा, तानि प्रधानभूतानि प्रधानकर्मणो वाचकानि, द्रव्यस्य गुणभूतत्वात् ; द्रव्यं हि गुणभूतं, कर्मनिर्वृत्तेरीप्सिततमत्वात् ॥**

---

युक्तं तावत् केषाञ्चिदुत्पत्त्याद्यर्थता कल्पयितुम् यद्येवंभूतानामपि नियोगसंस्पर्शितोपपद्यते; न तु तदद्यापि निर्णीयते। अथ तु निर्णयहेतुरस्ति ततो न सर्वस्यापूर्वार्थता न्याय्या। "एवमल्पीयस्यदृष्टानुमानप्रसङ्गकल्पना न्याय्या" इति भाष्यम्। तत्पुनरसङ्गतार्थमिति प्रतिभाति। नियोगार्थत्वेपि हि नैवादृष्टकल्पना। उच्यते।

---

स्येवमादय इत्येवोक्तम्। द्वितीयाङ्गीकारे हि पूर्वपक्षयितुमेव न शक्यते। तत्र पूर्वपक्षी मन्यते। सर्वेषान्तावदन्योत्पादकता। अतो युक्ता सर्वेषामेव नियोगविषयता। न हि साक्षात्सम्बन्धसम्भवे परम्पराश्रयणं न्याय्यम्! न च शब्दावगतक्रियाकारकभावविरोधः। द्वितीयामनङ्गीकृत्य विचाराभ्युपगमात्। राद्धान्तस्तु—लोके तावत् प्रमाणान्तरेणोत्पत्त्यादिसम्बन्धिता गोदोहनादीनामवगता। घटते च तद्द्वारेण नियोगार्थत्वम्। न च दृष्टस्वभावानुसारेण नियोगार्थत्वे उपपद्यमाने अदृष्टाश्रयणं युक्तमिति चिकीर्षितोत्पत्त्याद्यर्थतैव एषाम्। पूर्वपक्षमाह—**युक्तं तावत् केषाञ्चिदुत्पत्त्याद्यर्थता कल्पयितुम्। यद्येवम्भूतानामपि,** कार्यान्तरे व्यापृतानामपि **नियोगसंस्पर्शितोपपद्यते। न तु तदद्यापि निर्णीयते।** [1]**अथ तु निर्णये हेतुरस्ति ततो न सर्वस्यापूर्वार्थता न्याय्या।** न चासावस्ति। न च साक्षात्सम्बन्धसम्भवे परम्पराश्रयणं युक्तमिति भावः। राद्धान्तभाष्यमाक्षिपति—**एवमल्पीयस्यदृष्टानुमानप्रसङ्गकल्पना न्याय्येति भाष्यम्। तत्पुनरसङ्गतार्थमिव** प्रतिभाति। नियोगार्थत्वेऽपि हि नियोगविषयत्वेऽपि हि नैवादृष्टानुमानकल्पना। उच्यते।

---

(1) G. अयं तु

अथ गुणकर्मलक्षणम् ॥

यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत, तस्य द्रव्यप्रधानत्वात् ॥ ८ ॥

**येस्तु द्रव्यं चिकीर्ष्यते, गुणः तत्र प्रतीयेत कर्म। कुतः?। तस्य द्रव्यप्रधानत्वात्। प्रत्यक्षं 'यजेत' इत्येवमादिभिर्द्रव्यं न**

---

परिहृतमेतत् एवमल्पीयस्यदृष्टानुमानप्रसङ्गकल्पनेत्यत्र। ननु युक्तं तत्र प्रमाणान्तरदृष्टक्रियानिष्पत्तिपरित्यागेन नामार्थानां शब्दतो नियोगस्य निष्पादकत्वम्। एवमप्युपपद्यमाने न युक्तमिति। अत्रापि तुल्यं क्रियान्तरसाधनोत्पाद्यर्थतया सम्भवति शब्दे न नियोगसाधनता युक्ता। ननु च नियोगशून्यानां नियोगविषयसाधनोत्पत्त्याद्यर्थतैव नावसीयते। न चाविहितमङ्गं भवतीति वक्ष्यति। सत्यं नियोगादृते नाङ्गता। अस्त्येवात्र नियोगः।

---

परिहृतमेतदेवमल्पीयस्यदृष्टानुमानप्रसङ्गकल्पनेत्यत्र। **ननु युक्तं तत्र प्रमाणान्तरदृष्टक्रियानिष्पत्तिपरित्यागेन नामार्थानां शब्दतो नियोगनिष्पादकत्वं?।** न युक्तम्, एवमपि क्रियानिष्पादकत्वेनापि नियोगार्थत्वे उपपद्यमाने इति; इह तथा नास्तीति भावः। परिहरति—**अत्रापि तुल्यं क्रियान्तरस्य** यत्साधनं व्रीह्यादि **तदुत्पत्त्याद्यर्थतया सम्भवति** नियोगसंस्पर्शिनि **शब्दे नियोगसाधनता** साक्षात् **न युक्ता। ननु च नियोगशून्यानां नियोगविषयो** यो यागः तस्य यत्साधनं व्रीह्यादि **तदुपत्त्याद्यर्थतैव** अवघातादीनां **नावसीयते।** व्रीह्यादिशब्दानां जातिमात्रवचनत्वात्। **नचाविहितमङ्गं भवतीति वक्ष्यति।** विधिशून्यश्च न विहितं भवति। परिहरति—**सत्यम् नियोगादृते नाङ्गता। अस्त्येवात्रापि नियोगो**ऽधिकारविधिरूपः सन्निधिसमाम्नातसकलपदार्थग्राही। तद्ग्रहबलेनैव तदीये साधने विनियोग इत्यङ्गपारायणे निर्णीतम्। यदि नियोगादृते अङ्गता नास्ति भवतु तर्हि अङ्गेष्वपि नियोग

चिकीर्ष्यते, तस्मात्तानि प्रधानकर्मणो वाचकानि, द्रव्यस्य गुणभूतत्वात्; पिनष्टि इत्येवमादिभिः द्रव्यं संस्क्रियते, तस्मात्तानि गुणकर्मवचनानि; एष एव विनिगमनायां हेतुः। प्रयोजनन्तु पूर्वस्मिन् पक्षे प्रैयङ्गवेऽपि चरौ व्रीहय उत्पाद्या अवघातार्थत्वेन; सिद्धान्ते नोत्पाद्याः॥

अथ संमार्जनादीनामप्रधानताधिकरणम्॥

धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत ॥ ९ ॥

'स्रुचः संमार्ष्टि,' 'अग्निं संमार्ष्टि,' 'परिधिं संमार्ष्टि,' 'पुरोडाशं

---

न च नियोगार्थतेति तृतीये वक्ष्यामः। के पुनस्ते भावार्थाः? य एव लोके चिकीर्षितोत्पत्त्याद्यर्थतया प्रसिद्धा दर्शिता भाष्यकारेण। प्रयोजनमप्युक्तम्।

धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत्। उक्तमजहत्क्रियाकारकसम्बन्ध एव नियोगसम्बन्धः। कारकाणां भावार्थानाञ्च चिकीर्षितार्थानाम्। इहेदानीं यत्र दृष्टः संस्कारो नोपलभ्यते चिकीर्षितप्रतिपादिका च विभक्तिरस्ति तत्रापि किमजहत्क्रिया-

---

इत्यत्राह—न च नियोगार्थतेति तृतीये वक्ष्यामः तेषामर्थाधिकरणे। के पुनस्ते भावार्थाः ये क्रियान्तरसाधनोत्पत्त्याद्यर्थतया नियोगसंस्पर्शिनः। उत्तरम्—य एव लोके चिकीर्षितोत्पत्त्याद्यर्थतया प्रसिद्धाः। ते च दर्शिता भाष्यकारेण दोहनपेषणविलयनादयः। प्रयोजनमुक्तं भाष्यकारेण।

धर्ममात्रे तु कर्म स्यात्। उक्तमजहत्क्रियाकारकसम्बन्ध एव नियोगसम्बन्धः कारकाणां भावार्थानां च चिकीर्षितार्थानाम्। इहेदानीं यत्र दृष्टः संस्कारो नोपलभ्यते, चिकीर्षितप्रतिपादिका च विभक्तिरस्ति, तत्रापि किमजहत्क्रिया

पर्यग्निकरोति' इति श्रूयते; तत्र सन्देहः,--किं पर्यग्निकरणं, संमार्जनं च प्रधानकर्म उत गुणकर्म? इति। किं तावत् प्राप्तम्?। तत उच्यते,—कर्ममात्रं एवंजातीयकं अपर्याप्तं यत् प्रयोजनस्य दृष्टस्य, तद्धर्ममात्रमिति ब्रूमः, तत्र प्रधानकर्मत्वं स्यात्। कस्मात्?। अनिर्वृत्तेरुपकारस्य, न हि एवंजातीयकं द्रव्यस्योपकारकं, द्रव्यं त्वेवंजातीयकमभिनिर्वर्तयद्गुणभूतं; तस्य गुणभूतत्वादिदं प्रधानभूतम्॥

तुल्यश्रुतित्वाद्वा इतरैः सधर्मः स्यात्॥ १०॥

वाशब्दः पक्षं व्यावर्तयति। इतरैर्गुणकर्मभिः सधर्मः स्यादेवं

---

कारकसम्बन्धैव नियोगार्थता, उत यागादेरिव नियोगविषयतैव धात्वर्थस्येति। किं पुनरत्र युक्तम्? दृष्टस्याभावान्नियोगसिद्धिरेवावशिष्यते। तस्मात प्रयाजादिवन्नियोगार्थतैव सम्मार्गादेः।

ननु च चिकीर्षितार्थप्रतिपादिका द्वितीयाविभक्तिरविवक्षिता भवति। न चेयमैकान्तिकी। बल्बजान् शिखण्डकान् कुर्वित्येवमादिषु व्यभिचारात।

---

कारकसम्बन्धैव नियोगार्थता उत यागादेरिव नियोगविषयतैव धात्वर्थस्येति चिन्त्यते। अनेनावान्तरसङ्गतिः संशयबीजं संशयस्वरूपञ्चोपन्यस्तम्। किं पुनरत्र युक्तम्? पूर्वपक्षमाह—दृष्टस्याभावान्नियोगसिद्धिरेवावशिष्यते। यथा पूर्वत्र कार्यान्तरं दृष्टं तथेह नास्ति प्रोक्षणादीनां तेन नियोगसिद्धिरेव केवलं कार्यम्। यस्य च नियोगसिद्धिरेव कार्यं स विषय इति विषयत्वमेव प्रोक्षणादीनाम् तदाह—तस्मात्प्रयाजादिवन्नियोगार्थतैव संमार्गादेः। ननु चिकीर्षितार्थप्रतिपादिका द्वितीयाविभक्तिः अविवक्षिता भवति। परिहरति —न चेयमैकान्तिकी। बल्बजान् शिखण्डकान् कुर्वीतेत्येवमादिषु व्यभिचारदर्शनात्। न हि बल्बजाः तत्र चिकीर्षिताः। किन्तर्हि शिखण्डकाः। तेनासत्यपि चिकीर्षितार्थत्वे

जातीयकः, यथा व्रीहीनवहन्ति, तथा। कुतः? तुल्यश्रुतित्वात्, तुल्या हि द्वितीयाश्रुतिरेषां द्रव्येषु, यथा 'व्रीहीनवहन्ति' इति। एवम्' 'अग्निं संमार्ष्टि, पुरोडाशं पर्यग्निकरोति' इति। किं गुणकर्मणि द्रव्ये द्वितीया दृष्टा इति यतो द्वितीया-दर्शनादिहापि सामान्यतो दृष्टेन गुणकर्मता। नेति ब्रूमः, द्वितीया विभक्तिः कर्तुरीप्सिततमे स्मर्यते, सा चेह द्वितीया विभक्तिः, तत एव तदीप्सिततममिति गम्यते, तच्चेदीप्सिततमं,

---

वेदेऽपि सक्तून् जुहोतीति। तस्मात् करणार्थेपि अस्याः प्रयोगो दृष्टः। तुल्यश्रुतित्वाच्चेतरैः सर्वधर्मः स्यात्। उच्यते। यत्तावल्लोके व्यभिचारदर्शनमुपन्यस्तम्—तदयुक्तम्। लोके हि विवक्षातः कारकाणि भवन्ति। विवक्षा च पुरुषवशानुवर्तिनी। अतः चिकीर्षितविभक्तिदर्श-नात् तथैव विवक्षेति युक्तं प्रतिवक्तुम्। वेदे तु कथम्? उक्तमस्माभिः

---

द्वितीयाविभक्तिर्भवति इति न चिकीर्षितार्थत्वं प्रतिपादयितुमलम्। तथा वेदे च सक्तून् जुहोतीति [1]व्यभिचारिणी द्वितीया। तस्मात्करणार्थेप्यस्याः प्रयोगो दृष्टः। तेनादृष्ट-कार्यकल्पनायां नेयं प्रमाणमिति नियोगार्थत्वमेव सम्मार्गादेः तुल्यश्रुतित्वात्। उच्यते। यत्तावल्लोके व्यभिचारदर्शनमुपन्यस्तम् तदयुक्तम्। लोके हि विवक्षातः कारकाणि भवन्ति यादृशं कारकं पुरुषो विवक्षति अनेकरूपेप्यर्थे तादृशमेव शब्देनोच्यते। विवक्षा च पुरुषवशानुवर्तिनी-पुरुषस्येच्छानुवर्तिनी। वशशब्देनेच्छाऽभिधीयते। अतश्चिकीर्षित-विभक्तिदर्शनात् तथैव विवक्षेति युक्तं प्रतिपत्तुम्। तेन बल्वजानेव शिखण्डाकारेणे-ष्टान् प्रतिपत्तुं द्वितीयेयं प्रयुक्तेति कल्प्यते। तेन लोके तावत् व्यभिचारदर्शनं नास्ति। तेन चिकीर्षितार्थवाचिन्येव द्वितीयेति निश्चीयते। वेदे तु कथं? उत्तरम्—उक्तमस्माभिः

---

(1) G. omits this

कर्म गुणभूतम्। यद्यपि प्रत्यक्षादिभिर्गुणभावो न गम्यते, प्रमाणान्तरेण शब्देन गम्यते। तस्माद्गुणभूतमेवंजातीयकम् इति ॥

द्रव्योपदेश इति चेत ॥ ११ ॥

इति चेत् पश्यसि, द्वितीयादर्शनात् प्रधानभूतमिदं द्रव्य-मिति ; नैतदेवं, गुणभूतेऽपि द्वितीया भवति, तथाहि दृश्यते,—'सक्तून् जुहोति,' 'मारुतं जुहोति,' 'एककपालं जुहोति' इति ॥

---

कार्यार्थतया प्रामाण्यम्। इह चिकीर्षितार्थापरित्यागेन नियोग-संस्पर्शिता न शक्यते वक्तुम्। क्रियान्तरसाधनत्वेनाश्रवणात सक्तूनाम्। न च सक्तवो नियोगैक्येनेतिकर्तव्यताभावं प्रतिपत्तुं क्षमाः। किमिति नियोगैक्यं न भवति। अभावार्थत्वात् सक्तूनाम्।

---

कार्यार्थतया प्रामाण्यं सर्वेण पदजातेन नियोग एव प्रतिपाद्यते। तत्र तु केनचित साक्षात्तस्यैवाभिधानम्। केनचिच्च तदन्वितार्थाभिधानम्। इह च चिकीर्षितार्था-परित्यागेन नियोगसंस्पर्शिता न शक्यते जुहोतीत्यस्य वक्तुम्। कस्मादित्याह—क्रिया-न्तरसाधनत्वेन अश्रवणात् सक्तूनाम्। यथा व्रीह्यादयो नियोगविषयीभूतयागसाधनत्वेन श्रूयन्ते न तथा सक्तवः। तेन नास्ति तन्मुखेन नियोगसंस्पर्शिता जुहोतेः। ननु यद्यपि सक्तवः क्रियान्तरसाधनत्वेन न श्रूयन्ते तथापि प्रयानादिवन्नियोगानुप्रवेशित्वं भविष्यति। ततश्च तद्द्वारेण जुहोतेरपि नियोगानुप्रवेशिता घटिष्यते। अत्राह—न च सक्तवो नियोगैक्येन इतिकर्तव्यतां प्रतिपत्तुं क्षमाः। यथा प्रयाजादयो नियोगैक्येन इतिकर्तव्यतां करणो-पकारकतां प्रतिपत्तुं क्षमाः न तथा सक्तवः नियोगैक्याभावात्। किमिति नियोगैक्यं न भवतीति? उत्तरम्—अभावार्थत्वात सक्तूनाम्। येषां हि एकोऽधिकारनियोगः

न, तदर्थत्वात् लोकवत्तस्य च शेषभूतत्वात् ॥ १२ ॥

**न गुणभूतेऽपि द्वितीया, एवं हि अभियुक्ता उपदिशन्ति,—'कर्मणि द्वितीया' 'कर्तुरीप्सिततमं कर्म' इति, न च लोके गुणभूते**

---

कार्यार्थस्य हि करणांशोपनिपातिता, किमित्यंशोपनिपातिता वा। अतो नानुबन्धभावः। भिन्नानुबन्धानाञ्च किमित्यंशभाव एवैक्यम्। भिद्यते चात्र किमित्यंशभावः। अतो नैक्यं विधेः। अनेकत्वाच्च नेति-कर्तव्यता सक्तवः। तस्मादलौकिकोऽयं चिकीर्षितार्थसंयोगः, चिकीर्षित-त्वेन सक्तूनामनवगमात्। न चैतावता व्यभिचारिता शक्यते वक्तुं

---

साध्यः तेषामितिकर्तव्यतात्वम्। न च सक्तूनामभावार्थानां अन्योत्पादकत्वस्वभावहीनानां अधिकारनियोगः साध्यतया शक्यते वक्तुम्। प्रयाजादीनान्तु भावार्थानां शक्यतेऽव्यभि-चारेणान्योत्पादकतया उत्पाद्यस्वभावसन्निहिताधिकारनियोगसंबन्धोऽध्यवसातुम्। ननु विनापि नियोगैक्येन किमिति नेतिकर्तव्यतात्वम्? तत्राह—**कार्यार्थस्य हि करणांशोपनिपातिता। किमित्यंशोपनिपातिता वा।** यस्य हि कार्यार्थत्वं तस्य करणांशोपनिपातिता साक्षात्करणतया वा तदनुग्राहकतया वा तदनुग्राहकोऽपि करणांश एव। किमित्यंशोपनिपातिनोऽधिकारिविशेष-णांशे। अकार्यार्थस्य त्वेतदुभयमपि नोपपद्यते। तेनाकार्यार्थत्वात्सक्तूनां स्वतस्तावदनुबन्धभावो[1] नास्तीति। तदाह—**अतो न स्वतोऽनुबन्धभावः** नियोगसंबन्धित्वमित्यर्थः। न च [2]सक्त्वर्थ-होमद्वारेणापीत्याह—**भिन्नानुबन्धानाञ्च किमित्यंशभाव एवैक्यम्।** सक्तूनां हि भिन्ना-नामुत्पत्तिनियोगानामिव येऽनुबन्धास्तेषां साध्यांश एवैक्यम् यथाऽधिकारनियोगे। **भिद्यते चात्र किमित्यंशभावः** साध्यांशः एकत्र सक्तवः साध्याः। अपरत्राधिकारः। **अतो नैक्यं विधेः अनेकत्वाच्च नेतिकर्तव्यतात्वं सक्तूनां तस्मादलौकिकोऽयं चिकीर्षितार्थ-संयोगः चिकीर्षितत्वेन सक्तूनामनवगमात्। न चैतावता व्यभिचारिता शक्यते वक्तुं**

---

(1) G. अनुबन्धाभावः (2) G. सक्तुहोम (3) अनुबन्धानां च

क्वचित् द्वितीयां पश्यामः। यदपि च तण्डुलानोदनं पचेति, ओदनार्थं तण्डुलान् संस्कुरु इति ईप्सिता एव तण्डुलाः; बल्बजान् शिखण्डकान् कुर्विति, बल्वजा एव तेनाकारेण संबद्धा ईप्सिताः इति तत्राभिप्रायः; लौकिकश्च प्रयोगः शब्दार्थपरिच्छेदे हेतुर्न वैदिकः। यातु लौकिके जुहोतीति प्रयोगे द्वितीया, शक्यते तत्र वक्तुमीप्सिततमे एव स प्रयोगः इति, तण्डुलानद्य जुहुधि, तण्डुलानद्य होमेन संबन्धय इति। लोके भवति हि बहुप्रकारा विवक्षा; अन्यायश्चानेकार्थत्वं, तेन प्रधानभावेन सिद्धा सती द्वितीया गुणभावे न कल्प्येत। 'वेद तु कथं द्वितीयानिर्दिष्ट गुणभावः इति। द्वितीया-

---

द्वितीयायाः। यावद्दर्शनभावी हि छान्दसः प्रयोगः। तथा च व्याख्या-तारो दृष्टानुविधिश्छन्दसीत्युपदिशन्ति। अत एव च भगवता सूत्रकारेण तृतीया च होश्छन्दसि इति तृतीयार्थे छन्दसि द्वितीया दृष्टेत्युक्तम्।

---

द्वितीयायाः कस्मादित्याह-यावद्दर्शनभावी हि छान्दसप्रयोगः यावत्येव दृश्यते तावत्येव छान्दसप्रयोगो भवति तत्र सक्तूनां मारुतैककपालादिषु [1]विनापि चिकीर्षितत्वेन द्वितीया दृष्टेति तेष्वेव तथास्तु। अन्यत्र तु चिकीर्षितार्थवाचिन्येवासौ। तथा च व्याख्यातारो व्याकरण-व्याख्यातारो दृष्टानुविधिः छन्दसीत्युपदिशन्ति यत एव [2]चेयमचिकीर्षितार्थे द्वितीया अत एव भगवता सूत्रकारेण तृतीया च होश्छन्दसीति तृतीयार्थे छन्दसि द्वितीया दृष्टेत्युक्तम्। सूत्रस्य चायमर्थः—छन्दसि विषये जुहोतेः प्रयोगे द्वितीया भवति, तृतीया च। यदि द्वितीया भवत्येवेत्येतावदेवोच्यते तदा इह द्वितीयायाः तृतीयया बाधितत्वात्[3] सत्यपि करणत्वे तृतीया न स्यात्। तेन सापि तस्य विधीयते। अनेन चाभिप्रायेण वृत्तिकारेणाप्युक्तम् द्वितीयायां प्राप्तायां तृतीया विधीयत इति। चकारात्सापि भवतीति। अस्यायमर्थः—यदि चकारः

---

(1) G. क्रियापि (2) G. चेयमपि (3) G. अधिकृतत्वात्

निर्देशात् प्राधान्यमेवावगच्छामः, एवमवगते प्राधान्ये बलीयसा हेतुना नास्ति प्राधान्यम् इत्यवगम्यते। कुतः?। न होमस्य केनचित प्रकारेण सक्त्वर्थताऽवकल्प्यते, कुतः?। सक्तूनां निष्प्रयोजनत्वात्, न सक्तूनामन्यत्प्रयोजनं दृश्यते श्रूयते वा, यदि वा होमस्तदर्थो होमोऽपि निष्प्रयोजनः, अथारादुपकारको होमः, ततः प्रयोजनवान्, ज्योतिष्टोमप्रकरणे पाठात् गम्यते प्रयोजनवत्ता, नाप्रयोजनः इति शक्यते वक्तुम्, प्रयोगवचनेन हि स आकाङ्क्ष्यते। ननु सक्तूनामपि प्रकरणपाठात्प्रयोजन-

---

अत एवोपपदविभक्तितुल्यैषा। तस्मादजहत्स्वार्थवृत्तित्वान्नियोगार्थस्य चिकीर्षितार्थैवेयं "ग्रहं सम्मार्ष्टि" "व्रीहीन् प्रोक्षती"ति द्वितीया। ननु च दृष्टोऽर्थो नास्तीत्युक्तम्। नियोगार्थस्य साध्यत्वं न चिकीर्षि-

---

सूत्रे न प्रयुज्यते तदा तृतीयैव केवला सूत्रेणोक्ता भवति। ततश्च द्वितीयाविधिर्न ज्ञायते। अत एव प्राधान्येन द्वितीयाविधानार्थत्वात् सूत्रस्य द्वितीयाधिकारोऽयमित्युत्तरसूत्रेपि द्वितीयैवानुवर्तते। यत्तु कात्यायनेनोक्तम्—कर्मणां करणसंज्ञा वक्तव्या संप्रदानस्य च करणसंज्ञेति तत असद्वादित्वादस्य अनादरणीयम्। न हि यागे हविषः कर्मता। **अत एव चोपपदविभक्तितुल्यैषा द्रष्टव्या।** यथा अन्तरान्तरेणशब्दप्रयोगे द्वितीया तथाभूतैषा द्रष्टव्या। लोकप्रसिद्धद्वितीयार्थभावात्। लोकतश्च सम्बन्धाध्यवसायः तत्र[1] च व्यभिचारो दर्शितः। **तस्मादजहत्स्वार्थवृतित्वान्नियोगार्थस्य।** अजहत् स्वार्थवृत्तिः यः सोऽजहत्स्वार्थवृत्तिः नियोगार्थः तस्य भावस्तत्त्वम्। तस्मात् **चिकीर्षितार्थैवेयं ग्रहं सम्मार्ष्टि व्रीहीन् प्रोक्षती**[2]त्येवमादिषु **द्वितीया।** तेन नियोगविषयता सम्मार्गादीनामपि। **ननु च दृष्टोऽर्थो नास्तीत्युक्तम्।** अतो न चिकीर्षितार्थत्वसम्भवः। परिहरति—**नियोगार्थस्य च साध्यत्वं न चिकीर्षि-**

---

(1) R. चान्यभि　(2) R. adds नास्ति

वत्त्वं भविष्यति। को वा ब्रूते नेति, प्रयोजनवत्त्वैव, प्रयोजनवत्त्वन्तु होममभिनिर्वर्तयताम्, नान्येन प्रकारेण। ननु तेऽपि प्रयोगवचनेनाकाङ्क्ष्यन्ते। तदुच्यते, न द्रव्यं तेनाकाङ्क्ष्यते, इतिकर्तव्यतां हि स आकाङ्क्षति, होमश्च इतिकर्तव्यता, न द्रव्यम्। ननु होमे कृते सक्तुभ्योऽदृष्टं निष्पत्स्यते। नास्त्यत्र प्रमाणम् ननु द्वितीया विभक्तिः प्रमाणम्। न हि। द्वितीयाविभक्तिर्होमस्य सक्त्वार्थताम् ज्ञापयति। न सक्तवः प्रयोजनवन्तः

---

तार्थेषु सम्भवतीत्यप्युक्तम्। न चान्यत प्रमाणमस्ति येन कार्यकल्पना स्यात्। चिकीर्षितार्थाभिधानात्। नियोगार्थसंस्पर्शित्वाच्च सिद्धमदृष्टकार्यत्वं लोकवत कार्यान्तरसंयोगात्। लोकेऽपि कार्यान्तरयोगित्वात हस्त्यादीनां सिद्धं नीराजनादेरदृष्टार्थत्वं प्रयोजनम्। वरुणप्रघासेषु श्रूयते —शमीमय्यः स्रुचो भवन्ति हिरण्मय्यो वेति। प्रकृतौ नानावृक्षीय-

---

तार्थेषु सम्भवतीत्यप्युक्तम्। अस्यार्थः—यथा दृष्टार्थो नास्तीति भवद्भिरुक्तम् तथाऽस्माभिरप्येतदुक्तम् ये भावार्थाश्च चिकीर्षितार्थाः तेषु नियोगार्थस्य साध्यत्वं नास्तीति। एकग्रन्थेनाह —नचान्यत् प्रमाणमस्ति येन कार्यकल्पना स्यात् नियोगाङ्गग्रहादिगतं परित्यज्य येन प्रमाणान्तरेण कार्यान्तरकल्पना स्यात् तत् प्रमाणान्तरं नास्तीति। ततश्चिकीर्षितार्थाभिधानात् नियोगार्थसंस्पर्शित्वाच्च सिद्धमदृष्टकार्यत्वम्। लोकवत्कार्यान्तरसंयोगात् ग्रहणादीनां, यथा चिकीर्षितार्थाभिधायिनी द्वितीयोपपद्यते यथा च नियोगसंस्पर्शिता भवति तथाऽनुसरतां नियोगसंस्पर्शानुगुणग्रहादिगतादृष्टकल्पनैव न्याय्याऽवभाति। संभवति च नियोगानुगुणनियोगाङ्गग्रहादीनां कार्यान्तरयोगित्वात्। लोकवदिति दृष्टान्तं व्याचष्टे—लोकेऽपि कार्यान्तरयोगित्वात् हस्त्यादीनां सिद्धं नीराजनादेरदृष्टार्थत्वं प्रयोजनम्। वरुणप्रघासेषु श्रूयते "शमीमय्यः स्रुचो भवन्ति हिरण्मय्योवा" इति। प्रकृतौ नानावृक्षीय-

इति भवेत् होमः सक्त्वर्थः, होमसंबद्धाः सक्तवः स्युरिति, भवन्ति होमे कृते सक्तवो होमसंबद्धाः। न होमस्य सक्त्वर्थता निष्प्रयोजनेषु सक्तुषु घटते, सक्त्वर्थतावचनन्तु न पुरुषस्योपकारकं न क्रतोः, तदनर्थकमेव स्यात्। यतो न तद्वचनाच्छक्यमन्यत् कल्पयितुम्। स एष द्वितीयान्तः सक्तूनां होमस्य च सम्बन्धं करोति, संबन्धे च सति द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः इति भूतत्वात्, गुणभावे च तृतीया, तेनोच्यते,—तृतीयायाः स्थाने द्वितीया इति, तेन तदर्थत्वात् होमार्थत्वात् सक्तूनां न प्राधान्यं द्वितीयासंयोगेऽपि। एवं सत्यर्थवद्वचनम्, न चार्थवत्त्वे सति आनर्थक्यम् इत्युच्यते। तस्य च

---

स्रुक्सम्मार्गव्यङ्ग्यमपूर्वमिति नानावृक्षीयाः स्रुच उत्पादयितव्याः सम्मार्गार्थेन यथा पूर्वपक्षः। यथा तर्हि सिद्धान्तः शमीमय्य एव हिरण्मय्यो वा सम्मार्जयितव्याः। तथा परिध्यादिषु।

ननु च पूर्वपक्षेऽप्यङ्गप्रधानार्थमेतद्विधानं भविष्यति बर्हिर्वत्। नैवम्। यत्र ह्यङ्गप्रधानार्थ एवोपदेशविधिः कार्यविधिरपि तथैव तत्र।

---

स्रुक्सम्मार्गव्यङ्ग्यमपूर्वमिति नानावृक्षीयाः स्रुच उत्पादयितव्याः। सम्मार्गार्थेन यथा पूर्वः पक्षः यथा तर्हि सिद्धान्तः शमीमय्य एव हिरण्मय्यो वा सम्मार्जयितव्या इति तथा परिध्यादिषु, अनेन भाष्येणोक्तं प्रयोजनमनुभाषितम्। ननु च पूर्वपक्षेऽप्यङ्गप्रधानार्थमेतद्विधानं भविष्यति बर्हिर्वत्। अनेन स्रुगुदाहरणप्रयोजनमाक्षिपति। अर्थस्तु यथा बर्हिषि हवींष्यासादयतीत्यङ्गप्रधानार्थबर्हिर्विधीयते तथा शमीमयत्वं हिरण्मयत्वं वा। ततश्च सम्मार्गेऽपि तद्विधानात् तत्सम्मार्ग एव कर्तव्यः न नानावृक्षीयसम्मार्ग इति न प्रयोजनसिद्धिः। परिहरति नैवम्। यत्र ह्यङ्गप्रधानार्थ एवोपदेशविधिः कार्यविधिरपि तत्र तथैव। यत्र पुनः

पुरोडाशादेर्यागादिषु शेषभावः, तेन प्रयोजनवन्तः, तत्र संस्कारो नानर्थकः। न स दृष्टोपकाराय इति चेत्। अदृष्टार्थो भविष्यति, अदृष्टोऽपि संस्कारोऽस्ति इति अवगम्यते लोके, यथा ग्रामान्तरादागतानां पुरुषाणां पर्यग्निकरणेनादृष्ट उपकारः क्रियते इत्युच्यते; लोके च नानुपपत्तिः।

प्रयोजनं च वरुणप्रघासेषु श्रूयते, 'शमीमय्यः स्रुचो भवन्ति हिरण्मय्यो वा' इति, प्रकृतौ नानावृक्षस्रुक्सम्मार्गसाध्यम-पूर्वम् इति, नानावृक्षस्रुच उत्पादयितव्याः संमार्गार्थत्वेन

---

यत्र पुनरुपदेशो विधिभेदः कार्यविधिरपि तत्र प्रकरणात् प्रधानस्यैव दर्शितम्—'आनर्थक्यात्तदङ्गेषु' इति। यत्र हि प्रधानस्य तत्कार्यं न भवति तत्रानर्थक्यात्तदङ्गानाम्। यत्र पुनः सम्भवति तत्र

---

उपदेशविधिभेदः तत्र कार्यविधिः प्रकरणात् प्रधानस्यैव। अस्यार्थः। प्रकृतौ यो विधिः स उपदेशविधिः उपदिश्यत इत्युपदेशः पदार्थः तस्मिन् योऽसौ विधिः न कार्यं। पदार्थो-पदेशपूर्वकत्वात् तत्कल्पनायाः। विकृतौ तु यो विधिः स कार्ये प्राकृतोपदेशप्रकल्प्ये विधानात्। तत्र यदि प्रकृतावेक एव विधिरङ्गप्रधानार्थः तदा तत्कल्प्यं कार्यमपि अङ्ग-प्रधानार्थम्। कार्यविधिरपि तत्र कार्यस्यैकत्वात् अङ्गप्रधानार्थ एव भवति। यथा शरविधिः यत्र पुनरुपदेशविधिभेदः तत्र भिन्नं कार्यम्। कार्यविधिश्च[1] एकस्मिन्नेव कार्ये युक्तः। एकत्रैव बाधेन चरितार्थत्वान्न शक्नोत्यनेकत्र बाधितुमिति। कार्यविधिना हि बाधमानेनानु-प्रवेष्टव्यम्। तत्र च प्रकरणबलेन प्रधानसम्बन्धिनैव कार्यविधिना भवितव्यम्। दर्शित-मानर्थक्यात्तदङ्गेष्विति। नन्वङ्गेषु विधिरनेन दर्शितः न प्रधाने इत्यत्राह—यत्र हि प्रधानस्य तत्कार्यं न सम्भवति तत्रानर्थक्यात्तदङ्गानाम्। यत्र पुनस्सम्भवति तत्र

(1) G. कार्यविधिना। ततश्च

यथा पूर्वपक्षः; यथा तर्हि सिद्धान्तः, शमीमय्य एव हि हिरण्मय्यो वा संमार्ष्टव्याः। तथा यत्र बाणवन्तः परिधय-स्तत्रापि पालाशा उत्पादयितव्याः पूर्वपक्षे; सिद्धान्ते बाणवन्त एव संमार्ष्टव्याः। अवभृथे च पूर्वपक्षे उत्पादयितव्योऽग्निः सम्मार्गाय, सिद्धान्ते चापः संमार्जनीयाः। तथा 'षट्त्रिंशत्—संवत्सरे 'तरसमयाः पुरोडाशाः सवनीयाः' इति श्रूयते; तत्रापि पिष्टमयः पुरोडाश उत्पादयितव्यः पर्यग्निकरणार्थत्वेन पूर्वपक्षे, सिद्धान्ते मांसमया एव पर्यग्निकर्तव्याः इति ॥

---

प्रधानार्थ एव इति प्रकृतत्वादित्युक्तम्। यथा सहस्रदक्षिणादयः प्रधानद-क्षिणासु। नोदाहरणमादरणीयं मध्वशनादिषु दर्शनात।

---

प्रधानार्थ एव भवति प्रकृतत्वात् इत्युक्तम्। यथा सहस्रदक्षिणादयः प्रधानदक्षिणासु आनर्थक्यात् तदङ्गेष्वित्यनेन अर्थादिदमुक्तम्। प्रधानस्य सम्भवे नाङ्गे विधानम्। किन्तु प्रधानस्यैव यथा सहस्रदक्षिणा अहीनानामिति प्रधानदक्षिणाकार्ये सहस्रदक्षिणाविधानं नाङ्गदक्षिणाकार्ये। इह जुह्वा जुहोतीत्युपदेशेन एकं प्रधानसम्बन्धि कॢप्तम्। स्रुच-स्सम्मार्ष्टीत्यनेनापरमङ्गसम्बन्धि। तत्र विकृतौ शमीमयत्वञ्च विधीयमानं प्रधानकार्य एव वृक्ष—जातं विकरोति नाङ्गकार्ये। ततश्चाबाधितत्वात पर्णादिवृक्षाणां सम्मार्ग[गार्थ]त्वेन नानावृक्षीयाः स्रुचः उत्पाद्याः। प्रकृतौ तु पर्णमयत्वादिस्रुक्पदार्थोद्देशेनैव विधीयमानं होमादौ सम्मार्गे च भवतीति प्रधानं समर्थितं प्रयोजनम्। एवन्तावत् स्रुगुदाहरणं समर्थितम्। ननु परिध्युदाहरणे यद्यपि प्रधानकार्य एव बाणविधिः तथापि सम्मार्गेपि तेनैव(वेति)वक्त-व्यम् परिधेस्सतस्तत्र विनियोगात। तथाऽग्न्युदाहरणमयुक्तम्। अपूर्वत्वादवभृथस्येत्यत्राह —न चोदाहरणमादरणीयं मध्वशनादिषु दर्शनात् उदाहरणानादरस्य। पुरोडाशोदाहरणे तु यागोद्देशेन व्रीहिविधानात पर्यग्निकरणे व्रीहयो नाङ्गमिति विकृतावपि न व्रीहीणां प्राप्तिः।

स्तोत्रादिप्राधान्याधिकरणम् ॥

स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वात् ॥ १३ ॥

**'प्रउगं शंसति, निष्केवल्यं शंसति, आज्यैः स्तुवते, पृष्ठैः स्तुवते' इति गुणवचनं स्तवनं शंसनञ्च, यथा 'इन्द्रस्य नु वीर्याणि प्रवोचम्' इति, यदेतद्गुणवचनं श्रूयते, किमेतद्गुणभूतं देवतां प्रति, उत प्रधानम्? इति; तत्रोच्यते, स्तुतशस्त्रे संस्कार-**

---

**स्तुतशस्त्रयोः ॥** अत्रापि स एव संशयः। किन्तु स्तुतशस्त्रयोः चिकीर्षितार्थत्वमुत विधिविषयतैवेति। ननु चिकीर्षितार्थत्वे स्तुत्यर्थोऽपि हीयते स्तौति शंसतीति च तदर्थाभिधानम्। तस्मात् नात्र संशयं

---

**स्तुतशस्त्रयोः॥** अत्र भाष्यकार एवं विचारयति—यदेतत् गुणवचनं तत् गुणिनीं देवतां प्रति गुणभूतं उत प्रधानभूतमिति। तदनुपपन्नम्। नात्र नियोगविषयत्वाविषयत्वलक्षणः प्रधानगुणभावश्चिन्त्यते। किन्तु देवतापेक्षः शेषशेषिभावरूपः। स चासङ्गतोऽत्राध्याये नियोगविषयवस्तुविचारस्तु उपोद्घातत्वेन सङ्गतः। सति विषयभावे तद्भेदेन शास्त्रभेदो भवति अन्यथा नेति मत्वाऽऽह—**अत्रापि स एव संशयः। किन्तु स्तुतशस्त्रयोः चिकीर्षितार्थत्वं उत विधिविषयतैवेति।** भाष्ये नियोगविषयत्वपक्षे स्तुतशस्त्रयोः देवतापेक्षया तयोः प्रधानभावः। अविषयत्वपक्षे तु गुणभाव इत्युक्तम्। अत्र चोदयति—**ननु चिकीर्षितार्थत्वे स्तुत्यर्थोऽपि हीयते स्तौति शंसतीति च तदर्थानिधानम्।** अस्यार्थः—यागदेवतासंस्कारार्थतया स्तुतशस्त्रयोश्चिकीर्षितार्थत्वम्। तत्र मन्त्रवाक्येन यदि यागदेवताप्रकाशनं क्रियते तदाऽभिधानतैव स्यात् याज्यावत्, न स्तुतिरूपता। यदि पुनः [1]स्तुतिः न च देवताप्रकाशनं मन्त्रवाक्येन क्रियते तदा यागीयस्मरणानुपपत्तेः न चिकीर्षितार्थत्वम्। **तस्मान्नात्र संशयं**

---

(1) R. स्तुतिगतदेव

कर्मणी इति। कुतः?। देवताभिधानत्वात्, गुणवचने निर्वर्त्य-माने गुणिनी देवता संकीर्त्यते, नान्यथा तद्गुणवचनं भवति, तत्र प्रत्यक्षं देवताभिधानं गम्यते, देवताप्रकाशनेन च प्रत्यक्ष उपकारो यागसिद्धिः। तस्मात् संस्कारकर्मणी याज्यावत्,

---

पश्यामः। अजहत्स्वार्थे तृष्णया हि चिकीर्षितार्थत्वं गृह्यते। विपरीतश्च तदत्र। अथायमभिप्रायः पशुपुरोडाशवत्; यागस्य सतो देवतार्थत्वम्। देवतार्थत्वे च चिकीर्षितार्थत्वम्। न च यज्यर्थोऽपैति। तस्मादत्रापि स्तुतेरेव देवतास्मरणं यजेरिव प्रयोजनं भविष्यतीति। विषम उपन्यासः। तत्र हि देवतासाधनको यागः। अतोऽजहत्स्वार्थवृत्तित्वं युज्यते यजेः। न देवतासंस्कारत्वे कश्चिद्विरोधः। इह पुनः स्तुतिः स्तुत्यमपेक्षते न देवताम्। एवञ्च देवतार्थत्वे हीयेत स्तुत्यर्थः। ननु स्तुतिभाजोऽपि देवा इति देवताविदः

---

पश्यामः। अजहत्स्वार्थे[2] तृष्णया हि चिकीर्षितार्थत्वं गृह्यते विपरीतश्च तदत्र स्तुति-रूपताहानिप्रसङ्गात्। अथायमभिप्रायः पशुपुरोडाशवत् चिकीर्षितार्थता। दृष्टान्तं विवृणोति—यागस्य सतो देवतार्थत्वं देवतार्थत्वे च चिकीर्षितार्थत्वम्। न च यज्यर्थोऽपैति। उपसंहरति—तस्मात् स्तुतेरेव देवतास्मरणं प्रयोजनं भविष्यति यजेरिव। दूषयति—विषम उपन्यासः। वैषम्यमेव दर्शयति—तत्र हि देवतासाधनको यागः योऽसौ पुरोडाशयागः स देवतासाधनकः तेन देवतां संस्कर्तुं शक्नोति। अतोऽजहत्स्वार्थ-वृत्तित्वं युज्यते यजेर्न देवतासंस्कारकत्वे कश्चिद्विरोधः। इह पुनः स्तुतिः स्तुत्यम-पेक्षते न देवताम्। तेन स्तुतिः स्तुत्यमात्रप्रकाशने समर्था न देवतास्मरणे। एवञ्च देवार्थत्वे हीयेत स्तुत्यर्थः। ननु च स्तुतिभाजोऽपि देवा इति देवताविदः तेन स्तुत्योऽपि

---

(1) G. स्वार्थवृत्त्याहि

यथा 'याज्यामन्वाह' 'पुरोनुवाक्यामन्वाह' इति स्तुतिवचनं देवताप्रकाशनेनार्थवत्, तद्वदेतदपि इति ॥

अर्थेन त्वपकृष्येत देवतानामचोदनार्थस्य गुणभूतत्वात् ॥ १४ ॥

यदि संस्कारकर्मणी एव स्तोत्रशस्त्रे, अर्थेनापकृष्येत देवतानाम्नश्चोदनार्थस्य गुणभूतत्वात्, देवतार्थस्य गुणभूतो मन्त्र इति तत्प्रधानभावे यत्र प्रधानं तत्र नीयेत, तत्र क्रमसन्निधी उपरुध्येयातां; तस्मादेष दुष्टः पक्षः इति पर्युदसितव्यः ।

---

देवता चेत्साम्यं पशुपुरोडाशेन । मैवं वोचः । घोटारूढस्य विस्मृतो घोट इति । स्तुतिभाजश्च देवता इति ब्रवीषि । हविर्भाजश्च संस्कारं मन्यसे । पुरोडाशे त्वविभागाद्युक्तम् । तस्मान्नात्र पूर्वपक्षं पश्यामः । अय-

---

देवतारूप इति तेन स्तुतिरपि स्तुत्यमपेक्षमाणा देवतामेवापेक्षते । अतो भवत्येवासौ देवताप्रकाशनसमर्था । न च स्वरूपमपि जहाति तदाह—**देवता चेत् स्तुत्या तर्हि साम्यं पशुपुरोडाशेन । मैवं वोचः घोटारूढस्य विस्मृतो घोटः ।** विस्मृत इति कर्मकर्तरि निष्ठा विस्मृतः चित्तादपक्रान्त इत्यर्थः । एकग्रन्थेनाह—**स्तुतिभाजश्च देवता इति ब्रवीषि हविर्भाजश्च संस्कारं मन्यसे ।** उद्देश्यतया हि यागे देवताभावः, प्रकाश्यमानगुणतया च स्तुतौ देवता । तेन यस्याः संस्कारमिच्छसि सैव देवता विस्मृता । स्तुतिभाजोऽपि देवता इति वदता स्तुतिभाजि देवतायां प्रकाशितायां न हविर्भाक् प्रकाशिता भवति, देवताभावभेदात् । **पुरोडाशे[1]त्वविभागाद्युक्तम् ।** पशावपि हविर्भाक्त्यैव देवतात्वं पुरोडाशेऽपि । तेन तत्र युक्तं पुरोडाशयागस्य पशुदेवताप्रकाशकत्वम् । इह पुनः ग्रहयजिदेवताप्रकाशकत्वं(अ) स्तुतेरनुपपन्नं देवताभावप्रकारभेदात् । **तस्मान्नात्र पूर्वपक्षं पश्यामः** समाधत्ते—**अय-**

---

(1) G. त्वहविर्भागाद्युक्तम् ।

कतमः पुनरसौ मन्त्रः ? अभि त्वा शूरेत्यैन्द्रः प्रगाथो माहेन्द्रस्य ग्रहयजेः सन्निधावाम्नातो यत्र इन्द्रस्तत्राप कृष्येत ॥

वशावद्वा गुणार्थं स्यात् ॥ १५ ॥

न पर्युदसिष्यामः इमं पक्षं, संस्कारकर्म्मणी एव स्तोत्रशास्त्रे, देवताभिधानत्वादेव, यत्तूक्तं, प्रगाथस्योत्कर्षः इति, तन्न,

---

मेवात्र पूर्वः पक्षः। स्तौतिः स्तुत्यर्थेति, न चाचिकीर्षितः स्तुत्यः। यागसम्बन्धित्वेनाभिधेयाभेदात्। न पुनः पुरोडाशवद्देवताभेदा—दिति ब्रूमः। तत्र देवताप्रत्यभिज्ञानमेवाभिप्रेतम्। तच्च तत्रैव प्रतिपादयिष्यामः। अत्र त्वभिधानाभेदमात्रेणैवाजहत्स्वार्थवृत्तित्वमुपपद्यत इति पूर्वपक्षवादी मन्यते।

---

मेवात्र पूर्वः पक्षः स्तौतिशंसती स्तुत्यर्थे इति। न चाचिकीर्षितः स्तुत्यः सक्तुवत्—यागसंबन्धित्वेन स्तुत्यस्य। ननु नानेन रूपेण द्रव्यत्यागं प्रति हेतुता। कुतो यागसंबन्धितेत्याह—अभिधेयाभेदात्। इन्द्रादिशब्दानामभिधेयं यदिन्द्रादिस्वरूपं तत्र स्तुतौ यागे च न भिद्यते देवताभावप्रकारभेदेऽपीति यागसंबन्धिता स्तुत्यस्य। न तु पुरोडाशवद्देवताऽभेदात् यागसम्बन्धितेति ब्रूमः। यथा पशुपुरोडाशयोर्देवताभावप्रकारभेदो नास्ति। तथेह नास्ति। तत्र हि देवताप्रत्यभिज्ञानमेवाभिप्रेतम्। येनैव रूपेण द्रव्यत्यागं प्रत्युद्देश्यतया पशावग्नीषोमयोः देवताभावः तेनैव पुरोडाशेऽपीति देवताप्रत्यभिज्ञानम्। तच्च तत्रैव वक्ष्यामः। अत्र तु अभिधानाभेदमात्रेणैव अजहत्स्वार्थवृत्तित्वमुपपद्यत इति पूर्वपक्षवादी मन्यते। अभिधानाभेदेन स्वरूपस्य बुद्धिस्थत्वात्। यागगतापि तस्यावस्था स्मर्यते प्रयोजनाकाङ्क्षायां च स्तुतेः तदेव प्रयोजनं भविष्यतीति। गुणप्रकाशने तु मन्त्रवाक्यस्य तात्पर्यमिति न स्तुतिरूपताहानिः।

इन्द्रशब्देन महेन्द्रोऽभिधायिष्यते, स एवेन्द्रो महत्त्वेन गुणेन महेन्द्र इत्युच्यते, प्रत्यक्षं हि इन्द्रशब्दं देवतावचनमुपलभामहे,

---

इतरस्तु चोदयति यद्येवं माहेन्द्रस्य ग्रहयजेः सन्निधौ ऐन्द्रीस्तुतिस्तत्रैकाभिधानाभावात् न चिकीर्षितार्था स्यात्। उत्कर्षो वा कल्पनीयः। उच्यते। नोत्कर्षः कल्पनीयः। इन्द्र एव हि महेन्द्रः अभिन्नार्थाभिधानं हि सामानाधिकरण्यमुच्यते।

ननु च नीलोत्पलमिति भिन्नार्थावगतेः कथमभिन्नार्थाभिधानम्; भिन्नार्थाभिधाने वा कथं सामानाधिकरण्यम्? उत्पलगत-

---

**इतरस्तु** राद्धान्तैकदेशी **चोदयति**—**यद्यव माहेन्द्रग्रहयजेरैन्द्री स्तुतिः तत्रैकाभिधानाभावात् न चिकीर्षितार्था स्यात्**। इन्द्रमहेन्द्राभिधानयोर्भेदात्। ततश्च तत्र नियोगाविषयत्वम्। तथा विषयत्वमेवोत्कर्षः कल्पनीयः स्यात्। न चासौ युक्तः। तस्मान्नियोगविषयत्वमेव पूर्वपक्षैकदेशी तावत् समर्थयते—**नोत्कर्षः कल्पनीयः**। कुत इत्याह—**इन्द्र एव हि महेन्द्रः**। कुतः इत्याह—**अभिन्नार्थाभिधानं हि सामानाधिकरण्यमुच्यते** महेन्द्र इति महच्छब्दस्येन्द्रशब्देन सह सामानाधिकरण्यम्। एकार्थाभिधानञ्च सामानाधिकरण्यम्। तेन य एवासाविन्द्रशब्दार्थः स एव महच्छब्दस्यापीति इन्द्रमहेन्द्रयोः समानार्थत्वात नोत्कर्षः कल्पनीयः। अत्र राद्धन्तैकदेश्याह—**ननु च नीलोत्पलमिति भिन्नार्थावगतेः कथमभिन्नार्थाभिधामम्**। नहि उत्पलशब्देन केवलेन यादृशोऽर्थः प्रत्याय्यते जातिमात्रं तादृश एव नीलोत्पलशब्दादपि प्रतीयते गुणाधिक्यात्। ततश्च कथमभिन्नार्थाभिधायिता। पूर्वपक्षैकदेश्याह—**भिन्नार्थभिधाने वा कथं सामानाधिकरण्यं?** समानाधिकरणसमासोऽयमिति सर्ववादिनां सम्मतम्। तत्र यद्यर्थभेदः कथं सामानाधिकरण्यम्? अर्थ एव हि शब्दस्याधिकरणमुच्यते। राद्धान्तैकदेश्याह—**उत्पलगत-**

महत्त्ववचनं च महच्छब्दं, यथा राजा महाराजः, ब्राह्मणो महाब्राह्मणः इति, वशावत्,—यथा 'सा वा एषा सर्वदेवत्या यदजा वशा, वायव्यामालभेत'—इत्यजावशाशब्देन चोदिते कर्मणि छागशब्देन निगमा भवन्ति, तद्वत्सगुणे चोदिते निर्गुणेनाभिधानं भविष्यति; तेन न भविष्यत्युत्कर्षः इति॥

न, श्रुतिसमवायित्वात् ॥ १९ ॥

नैतदेवं, इन्द्रोऽस्य ग्रहस्य देवतेति तद्धितसंयोगेन विज्ञायते, न चास्य महत्त्वमपेक्षमाणस्य तद्धितसंयोग उपपद्यते, तद्धित-

---

गुणाभिधानादिति ब्रूमः। आगतोऽसि तर्हि मदीयं पन्थानम्। तत्र प्रयुक्तः तद्गुणाभिधानसमर्थो भवति। यत्र च शब्दः प्रयुज्यते तमाचष्टे। अत एव च गुणमभिधाय गुणिनि प्रवर्तन्ते ये गुणशब्दास्त इह गृह्यन्ते गुणवचनतयेति समासप्रतिषेध उक्तः। तस्मात्सिद्धमेकाभिधानम्। गुणावगतिर्हि सामानाधिकरण्ये

---

गुणाभिधानादिति ब्रूमः। आगतोऽसि तर्हि मदीयं पन्थानम्। एकग्रन्थेनाह—पूर्वपक्षैकदेश्याह-तत्रोत्पले प्रयुक्तः स नीलशब्दः तद्गुणाभिधानसमर्थो भवति। अन्यथा हि यस्य कस्यचिद्गुणः प्रत्याय्येत विशेषाभावात्। अस्तु तत्र प्रयुक्तः तथापि किमित्याह —यत्रशब्दः प्रयुज्यते तमाचष्टे। प्रयोगायत्तत्वादभिधानस्य। यत एव गुणवचना अपि नीलादिशब्दाः गुणिन्येव वर्तन्ते। अत एव गुणमभिधाय गुणिनि वर्तन्ते ये गुणशब्दास्त इह गृह्यन्ते गुणवचनतयेति समासप्रतिषेधे पूरणगुणेत्यत्रोक्तं व्याख्यातृभिः। तस्मात्सिद्धम् इन्द्रमहेन्द्रयोरेकाभिधानत्वम्। यदि गुणिन्येव प्रयोगः तदभिधानञ्च तदा गुणावगतिः कथं तत्राह— गुणावगतिर्हि वाजिनस्थानीया सामानाधिकरण्ये।

योगापेक्षस्य वा महत्त्वसंबन्धात्समासकल्पना। न च तद्धितार्थे वृत्तस्य महत्त्वसम्बन्धः, न च समासार्थे वृत्तस्य तद्धितसंबन्धः। न चास्मिन्नेव प्रयोगे समासार्थे वृत्तिरिष्यते, एतस्मिन्नेव तद्धितार्थे। न चायमिन्द्रशब्दोऽविहितवत्स्वार्थं तद्धितार्थेन सम्बध्येत, विहितवच्च परार्थं महत्त्वेन सम्बद्धुमनूद्येत। विस्पष्टश्चायमन्योऽर्थो महेन्द्रो भवति, महानिन्द्रो भवतीति महेन्द्रः, अन्यश्चेन्द्रो हविषो देवता भवतीति सकृदुच्चारणे च

---

वाजिनस्थानीया। अतश्चिकीर्षितार्थत्वं स्तुतेरैन्द्र्याः। तदिदमयुक्तम्। निरस्तोऽयमर्थः अनन्वितोऽप्यवसीयत इति। कार्ये तु कदाचिदन्वेति कदाचिन्नेति। अवगतौ पुनः न तटस्थं पदार्थावबोधनमित्युक्तम्।

---

यथा आमिक्षार्थे दध्यानयनेऽचिकीर्षितं वाजिनमपि निष्पद्यते वस्तुस्वभावेन तथा गुणावगतिरपि। न पुनः सापि कर्तुमभिमता। यत एकार्थाभिधानतेन्द्रमहेन्द्रशब्दयोः। अतः चिकीर्षितार्थत्वं स्तुतेरैन्द्र्याः। राद्धान्तैकदेशी दूषयति--तदिदमयुक्तम्। यस्मान्निरस्तोऽयमर्थः अनन्वितोऽप्यवसीयत इति। अस्यार्थः। महच्छब्देन तावत् वृद्धव्यवहारानुसारेण महत्वमभिधीयते। तेन महच्छब्दप्रयोगे तदेव प्रतीयते। प्रतीयमाने चानेनान्वयिना भवितव्यम् तेन माहेन्द्रग्रहयजौ सगुणस्य देवतात्वात न तस्य इन्द्रशब्दवाच्यत्वम्। नचेदं वाच्यम् यद्यपि महच्छब्देन महत्वमुच्यते तथापि तस्य यागे अन्वयिता न सम्भवतीति। निरस्तत्वादस्यार्थस्य। अन्वितमेव ह्यर्थं पदमभिधत्त इति तद्भूताधिकरणे दर्शितम्।

ननु राजपुरुषमानयेत्यादौ राज्ञ आनयनेऽनन्वितस्यापि अभिधानमित्याशङ्क्याह --कार्येतु कदाचिदन्वेति कदाचिन्नेति। अवगतौ पुनर्न तटस्थं[1] पदार्थाववोधनमित्युक्तम्।

(1) पू. मी. 1-1-25.

नोभयं शक्येत। तस्मान्नेन्द्रो देवता महत्त्वविशिष्टः, महेन्द्र-शब्दात्तु तद्धित उत्पन्नः, तस्मात्तत्प्रातिपदिकमर्थवदिति गम्यते, न त्ववयवसम्बन्धेन; तस्माद्देवतान्तरमिन्द्रान्महेन्द्रः, तेनैन्द्रस्य प्रगाथस्योत्कर्षः प्राप्नोति, अतः पर्युदसितव्यः एष पक्षः। यदप्युच्यते, इन्द्रस्य वृत्रवधोत्तरकालं महेन्द्रत्वं दर्शयति, 'महान् वाऽयमभूत् यो वृत्रमवधीत्' इति, तथा वेदस्यादि-मत्तादोषः प्रसज्येत अतोऽन्य इन्द्रो महेन्द्रात् ॥

व्यपदेशभेदाच्च ॥ १७ ॥

---

माभूत्तदर्थावगतौ। कार्ये पुनरुत्तरपदार्थप्रधानत्वात् समासस्य इन्द्र एव कार्यभाक् अन्यथा ह्यनुपपन्नैव शब्दविदां वागियं "उत्तरपदार्थप्रधानोऽयं समासः अयं पूर्वपदार्थप्रधान" इति। किञ्चिज्ज्ञो देवानां प्रियः। समासो हि नाम परस्परानुगमपूर्वकं पदार्थान्तरानुगमनम्, तत्रापि कदाचित्

---

सर्वथा तावत् पदार्थस्यावगतिदशायां अन्वितस्यैवाभिधानम्। न तटस्थस्य। कार्यावस्थायान्तु कदाचिदन्वयः कदाचिन्न। राजपुरुषादावपि प्रतीत्यन्वयिता राज्ञो न शक्यतेऽपन्होतुम्। तेना[1]न्वितस्याभिधानमसिद्धम्। पुनः पूर्वपक्षैकदेश्याह—माभूत् पदार्थावगतावनन्वयः। कार्ये पुनरुत्तरपदार्थप्रधानत्वात् अस्य समानाधिकरणसमासस्येन्द्र एव कार्यभाक्, स एव केवलो देवतेत्यर्थः। अन्यथा हि यदि पुनरुपसर्जनपदार्थस्यापि कार्यान्वयिता तथाप्यनुपपन्नैव शब्दविदां वागियम्—अयं पूर्वपदार्थप्रधानोऽयमुत्तरपदार्थप्रधान इति। राद्धान्तैकदेश्याह—किञ्चिज्ज्ञो देवानां प्रियः कश्चित्समासः पूर्वपदार्थप्रधानः कश्चिच्चोत्तर-पदार्थप्रधान इत्येतावन्मात्रं भवान् जानाति, न पुनर्यथा प्रधानता तं प्रकारम्। कुत इत्याह—समासो हि नाम परस्परानुगमपूर्वकं पदार्थान्तरानुगमनम्। तत्रापि कदाचित्

---

(1) G. तेनानन्वितस्य

व्यपदेशभेदश्च भवति, 'बहुदुग्धीन्द्राय देवेभ्यो हविः' इति 'बहुदुग्धि महेन्द्राय देवेभ्यो हविः' इति, अतोऽपि देवतान्तरम्, एकदेवतात्वे मन्त्रविकल्पः स्यात् ॥

गुणश्चानर्थकः स्यात् ॥ १८ ॥

यदा विधिशब्दादवगतमेतद्भवति,– इन्द्रो देवतेति, तदाऽस्य गुणान्वाख्याने किं प्रयोजनं, महत्त्वं नाम इन्द्रस्य गुणो भवति इति देवताभिधानम्। कथं तस्यै देवतायै दीयते? इति।

---

पूर्वं पदं उत्तरमन्वेति। कदाचिदुत्तरं पूर्वम्। किमिदमन्वेतीति? इदमिदं इदमाश्रित्यायं पदार्थोऽर्थान्तरान्वयीभवतीति। ततः किम्? इदं ततो भवति। नानाभिधानतैव स्थास्यति सगुणस्यान्वयात्। अथ मतं अर्थान्तरसंबन्धः पुनः अर्थान्तरेण संबध्यत इति।

---

**पूर्वं पदमुत्तरं पदमन्वेति कदाचिदुत्तरं पूर्वम्।** एतदेव विवरीतुं प्रश्नमाह—**किमिदमन्वेतीति।** उत्तरम्—**इदमिदं इदमाश्रित्यायं पदार्थोऽर्थान्तरान्वयी भवति इति** तत्र च यमाश्रित्य पदार्थान्तरान्वयिता स प्रधानभूतः यश्चान्यमाश्रित्यान्वयी भवति स गुणभूतः। तेन यद्यपि महेन्द्रशब्द उत्तरपदार्थप्रधानः तथापि महच्छब्दस्य कार्यान्वयितया स्वार्थाभिधायकत्वम्। ततश्च माहेन्द्रग्रहयजने महत्वस्यापि देवताभावेनान्वयः। यदि परमुत्तरपदार्थं प्रधानभूतमाश्रित्य ततः किं? उत्तरम्—**तत इदं भवति नानाभिधानतैव स्थास्यति सगुणस्यान्वयात्।** माहेन्द्रग्रहयजौ महेन्द्रशब्दोऽन्यां सगुणां देवतामभिधत्ते। ऐन्द्र्यां तु स्तुतौ इन्द्रशब्दोऽन्यां निर्गुणामिति। राद्धान्तैकदेशी पूर्वपक्षैकदेशिनो मतमाशङ्कते—**अथ मतं अर्थान्तरसम्बन्धः पुनः अर्थान्तरेण** केवल एव **सम्बध्यत इति।** महत्वेनार्थान्तरेण संबन्धो यद्यपि इन्द्रशब्दस्यार्थः तथापि केवल एव तद्धितार्थेन संबध्यते। अथ वा तद्धितार्थेन केवलस्सम्बन्धः

गुणेऽपि हि विहिते सति तस्या एव देवतायै दीयते, अविहितेऽपि; तस्माद्गुणविधानमनर्थकम्। अथोच्येत,—'योऽस्मिन् ग्रहे इन्द्रः स महान्' इति। नैवं, ग्रहसम्बन्धस्याप्रसिद्धत्वात् विशेषणं नात्र कल्प्यते, गुणसम्बन्धस्य चाप्रसिद्धत्वात् गुणेन विशेषणमनवक्लृप्तम्; तस्मादपि देवतान्तरम्॥

तथा याज्यापुरोरुचोः॥ १९॥

एवं सति याज्यापुरोनुवाक्ययोर्भेदेन दर्शनमुपपद्यते, 'एन्द्र सानसिं रयिम्' इत्यैन्द्रयाज्यापुरोनुवाक्याद्वयं, 'महान् इन्द्रो य ओजसा' इति भेदेन माहेन्द्रं दर्शयति, तदेकत्वे विकल्प्येत। तत्र पक्षे बाधः स्यात्॥

---

उक्तं परस्परान्वये समासः। ततोऽर्थान्तरान्वयः। तस्मान्नार्थान्तराक्षेपस्य समासः। न च समस्तस्य केवलस्यार्थान्तरसंबन्धः। अतः सगुणदेवता न केवलेनाभिधातुं शक्यते। भवति वै प्रधानस्य सापेक्षस्यापि समास इति समासविदां गिरः श्रूयन्ते। प्रधानं चेन्द्रार्थः। अतो द्रव्यसंबन्धस्यापि

---

पश्चान्महत्वेन। तेन[1] सगुणस्य देवतात्वेनान्वय इति। दूषयति—उक्तं [2]परस्परान्वये समासः ततोऽर्थान्तरान्वयः। यत्रैव परस्परसंबद्धयोरेव समस्यमानार्थयोरर्थान्तरसम्बन्धः तत्रैव समास इत्युक्तम्। तस्मान्नार्थान्तरापेक्षस्यार्थान्तरसंबन्धस्य पूर्वं पश्चात्समासः[3]। नापि समस्तस्य पूर्वं पश्चात् केवलस्यार्थान्तरसंबन्ध इति। अतः सगुणादेवता केवलेनेन्द्रशब्देन न शक्याभिधातुमित्युत्कर्षः प्राप्नोति। पूर्वपक्षैकदेश्याह—भवति वै प्रधानस्य सापेक्षस्यापि समास इति समासविदां गिरः श्रूयन्ते। तथापि किमित्याह—प्रधानं चेन्द्रार्थः। अतो द्रव्यसंबन्धस्यापीन्द्रस्य

---

(1) B. adds न (2) समस्यमानपदार्थयोरसमस्तयो (3) G. पश्चान्न समासः

वशायामर्थसमवायात् ॥ २० ॥

यदुक्तम्, अजावशाशब्देन चोदिते कर्मणि छागशब्देन निगमा भवन्ति इति, तत् युक्तम्, वशायामर्थसमवायित्वं वयं

---

महत्वमुपपद्यते । न सम्यगवधृतं भवता समासविद्वचः । पदार्थान्तरसंबन्धप्रधानस्य समस्तस्यापि समासो निरुणद्धीति तस्यार्थः, न पुनः समासपदनिरपेक्षस्यार्थान्तरसंबन्ध इति । ननु चासमर्थसमासा अपि व्याख्यातृभिरुदिताः । सत्यं, उदितो यत्र तत्रैव ते भवन्तु । अत्र पुनः समर्थः पदविधिरित्येतदेव न्याय्यम् । असामर्थ्यादर्शनात् ।

---

**महत्त्वेन संबन्ध उपपद्यते ।** तद्धितार्थसंबन्धस्यापि महच्छब्देन समासो भविष्यति । ततश्च केवलस्य तद्धितार्थसंबन्धान्निर्गुणा देवता भवत्विति । राद्धान्तैकदेशी दूषयति—**न सम्यगवधृतं भवता समासविद्वचः ।** कस्तस्यार्थो वचस इत्यत्राह—**पदार्थान्तरसंबन्धप्रधानस्य समस्तस्यापि समासो निरुणद्धीति तस्यार्थः ।** न पुनः समासपदनिरपेक्षस्यार्थान्तरसंबन्ध इति । यथा किल समस्तस्याप्रधानपदार्थस्यार्थान्तरेण संबन्धो न भवति ऋद्धस्य राजपुरुष इति न तथा प्रधानस्य भवति राजपुरुषः शोभन इति । प्रधानपदार्थस्यापि यः पदार्थान्तरसंबन्धः नासौ पदार्थान्तरनिरपेक्षः । न च शोभनता पुरुषसंबन्धिनी प्रतीयते । अपि तु राजीयपुरुषसंबन्धिनी तद्रीत्या अत्रापि भवत्विन्द्रस्य तद्धितार्थसंबन्धः न त्वसौ निरपेक्षः इति सगुणैव देवता । पूर्वपक्षैकदेश्याह—**ननु चासमर्थसमासा अपि व्याख्यातृभिरुदिताः ।** तेन यद्यपि महत्वस्येन्द्रशब्देन सह संबन्धो नास्ति तथापि समासो भविष्यति इति महत्वनिरपेक्षैव देवताऽस्तु । राद्धान्तैकदेश्याह—**सत्यमुदितः यत्रैव तत्रैव ते भवन्तु । अत्र पुनः समर्थः पदविधिरित्येतदेव न्याय्यम् । असामर्थ्यस्यादर्शनात् ।** यत्र हि प्रमाणान्तरेणासामर्थ्यं प्रतीयते समासश्च तत्रासमर्थसमासः इह पुनरसामर्थ्यस्य प्रमाणं नास्ति । तेन समर्थसमास एवायम् ।

प्रत्यक्षमवगच्छामः, 'छागस्य वपाया मेदसोऽनुब्रूहि' इति यैव वशा सैव छागेति। तस्मात् प्रगाथस्योत्कर्षः संस्कारपक्षे, अतः प्रधानकर्मणी इति ॥

यत्रेति वाऽर्थवत्त्वात् स्यात् ॥ २१ ॥

वाशब्दः पक्षं व्यावर्तयति, संस्कारकर्मणी एव स्तोत्रशस्त्रे, यच्चैतत् प्रगाथस्योत्कर्षः इति, उत्कृष्यतां यत्र इन्द्रस्तत्र प्रगाथः, लिङ्गेन हि क्रमसन्निधी बाधितव्यावेव ॥

न त्वाम्नातेषु ॥ २२ ॥

अपरेषां मन्त्राणामुत्कृष्टानामन्यत्रार्थवत्ता नास्ति, तेषामानर्थक्यं स्यात् , यथा, याम्याः शंसन्ति, शिपिविष्टवतीः शंसति

---

नन चेदमेवासामर्थ्यम् माहेन्द्रो ग्रहयजिः ऐन्द्री स्तुतिरिति । एवं चाजहत्स्वार्थतोपपन्ना । एवमितरेतराश्रयं प्राप्नोति । चिकीर्षितार्थत्वे महेन्द्रस्य असामर्थ्यं, असामर्थ्ये चिकीर्षितार्थत्वमिति । इतरेतराश्रयाणि

---

पूर्वपक्षैकदेश्याह—ननु चेदमेवासामर्थ्यं माहेन्द्रो ग्रहयजिः ऐन्द्री स्तुतिरिति । एवञ्चाजहत्स्वार्थतोपपन्ना । चिकीर्षितार्थत्वे भवतीति । यद्ययं समर्थसमासः स्यात् तदा चिकीर्षितार्थत्वं न भवति स्तुतिस्वभावेन स्तुत्यर्थता प्रतिभाति । तेन स यथा निर्वहति तथाऽऽश्रयणीयमित्यसमर्थसमासोऽयमित्यस्ति प्रमाणान्तरम् । राद्धान्तैकदेश्याह—एवमितरेतराश्रयं प्राप्नोति । चिकीर्षितार्थत्वेन महेन्द्रस्यासामर्थ्यं असामर्थ्ये चिकीर्षितार्थत्वम् । असमर्थसमासे निश्चिते अनया स्तुत्या महेन्द्रस्य चिकीर्षितार्थत्वं महेन्द्रस्य चिकीर्षितार्थत्वेऽसमर्थसमासोऽयमित्यस्तीतरेतराश्रयत्वम् । इतरेतराश्रयाणि वस्तूनि

पितृदेवत्याः शंसति आग्निमारुते, कुषुम्भकसूक्तं, अक्षसूक्तं, मूषिकासूक्तमित्येवमादीनाम् ॥

दृश्यते ॥ २३ ॥

तदुच्यते, सर्वेषामर्थवत्ताऽस्ति मण्डूकसूक्तस्याग्नौ, अक्षसूक्तस्य राजसूये, मूषिकासूक्तस्यैकादशिन्यां, सर्वेषां वाचस्तोमे, 'सर्वा ऋचः सर्वाणि यजुंषि सर्वाणि सामानि वाचस्तोमे, पारिप्लवं (अश्वमेधे) शंसति' इति, तथा 'यस्याश्विने शस्यमाने

---

न प्रकल्प्यन्त इत्युक्तम्। यद्येवमसमर्थसमासोऽपि न प्राप्नोति। प्राधान्ये भावार्थस्य सामर्थ्यं सामर्थ्ये च प्राधान्यमिति। मैवं वोचः अभिधानतः सामर्थ्यावगतेः तस्मात् सगुणैव देवता। अवश्यं चैतदेवमवगन्तव्यम्। अन्यथा गुणवचनमसंस्पर्शि स्यात्। न च संभवन्त्यां गतौ तद्युक्तम्। तस्मादुत्कर्ष एव प्राप्नोति। भवतु तर्हि उत्कर्षः। नैतावता चिकीर्षितार्थत्वं त्यक्तुं शक्यते।

---

शास्त्रेण न प्रकल्प्यन्त इत्युक्तम्। पूर्वपक्षैकदेश्याह—यद्येवमसमर्थसमासोऽपि न प्राप्नोति प्राधान्ये भावार्थस्य सामर्थ्यं समर्थसमासनिश्चये सामर्थ्ये च प्राधान्यमिति। राद्धान्तैकदेश्याह—मैवम्। अभिधानतः सामर्थ्यावगतेः। सामर्थ्यं परस्परसंबन्धः। स चाभिधानत एवावगम्यते। तस्मात् सगुणैव देवता। युक्त्यन्तरं चाह—अवश्यं चैतदेवमभ्युपगन्तव्यम् सगुणैव देवतेति। अन्यथा हि गुणवचनमनियोगसंस्पर्शि स्यादिति। न च संभवन्त्यां गतौ तद्युक्तम्। तस्मादुत्कर्ष एव प्राप्नोति। एवं निराकृते पूर्वपक्षैकदेशिनि परमपूर्वपक्ष्याह-भवतु तर्ह्युत्कर्षः नैतावता चिकीर्षितार्थः शक्यते त्यक्तुम्।

सूर्यो नोदियादपि सर्वा दाशतयीरनुब्रूयात्'—इति, तस्मादस्त्यर्थवत्ता उत्कृष्टानाम्; अतः संस्कारकर्मणी स्तोत्रशस्त्रे—इति ॥

अपि वा श्रुतिसंयोगात्प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदध्याताम् ॥ २४ ॥

**अपि वा प्रधानकर्मणी स्तोत्रशस्त्रे स्यातातम् । कुतः ? । श्रुति–**

---

अतन्त्रे हि क्रमसन्निधी विपक्षभूते सामर्थ्ये । ननु चोत्कर्षे सति बहूनां मन्त्राणां निष्प्रयोजनता प्राप्नोति मण्डूकसूक्तादीनाम् । न निष्प्रयोजनता, यस्य यत्रार्थः स तत्र यातीति दर्शितं भाष्यकारेण । कथं पुनर्वाचस्तोमे आश्विने च सामर्थ्यं भिन्नार्थानां ? वचनादेकार्थता भविष्यति ऐन्द्रीवत् । अपि वा श्रुतिसंयोगात् । अपि च न स्तौतिशंसती चिकीर्षितार्थौ भवतः ।

---

ननूत्कर्ष एवाप्रमाणकः परमपूर्वविषयत्वमेवेत्यत्राह[1]—**अतन्त्रे हि क्रमसन्निधी (विवक्षिते) विपक्षभूते सामर्थ्ये ।** स्थानप्रकरणयोः सामर्थ्यरूपालिङ्गतो दुर्बलत्वाद्धेतोर्यत्र सामर्थ्यकल्पितं न कार्यं तत्रोत्कर्षो युक्तः । स्तुतेर्हि स्तुत्यप्रतिपादनं लिङ्गेन कार्यमुपगम्यते । समाख्या च सामान्यसंबन्धप्रतिपादिका[2] भविष्यतीति न दोषः । **ननूत्कर्षे बहूनां निष्प्रयोजनता प्राप्नोति मण्डूकसूक्तादीनाम् ।** परिहरति—**न निष्प्रयोजनता । यस्य यत्र** कर्मण्यर्थः [3]**स तत्र यातीति दर्शितं भाष्यकारेण । कथं पुनर्वाचस्तोमे आश्विने च सामर्थ्यं भिन्नार्थानां** सूक्तानां ? परिहरति—**वचनादेकार्थता** प्राप्नोति **ऐन्द्रीवत् ।** यथैन्द्री ऋक् वचनात् गार्हपत्ये विनियुक्ता सती गौण्या लाक्षणिकया वा वृत्त्या प्रतिपादिका भवति । तथाऽत्रापीत्यदोषः ।

**अपि वा ॥ अपि च स्तौतिशंसती चिकीर्षितार्थौ न भवतः ।** कस्मात् ?

---

(1) त्याह (2) B. सामान्यप्रति (3) G. स न तत्र

**संयोगात्, सप्तमीश्रुतिसंयोगो हि भवति, 'कवतीषु स्तुवते, शिपिविष्टवतीषु स्तुवते' इति, यदि स्तुतिः, ततः कवत्यक्षरेषु आहिता; यदि प्रकाशनं, ततो देवतायां, तत्र करणं कवत्य-स्तृतीयया अश्रोष्यन्त, न सप्तम्या।**

**अपि च, श्रुतिसंयोगो भवति,—'प्रउगं शंसति, निष्केवल्यं**

---

कस्मात् ? देवताप्रत्यभिज्ञानाभावात्। ननु चाभिधानतः प्रत्यभि-ज्ञानमुदितम्। तदयुक्तम्, यत्र हि प्रमाणान्तरेण प्रत्यभिज्ञानमस्ति तदेवेदमिति तत्राभिधानं न भेदार्थं भवितुमर्हति तथा च दर्शितं —**वशायामर्थसमवायादिति**। यत्र पुनः अभिधानादेव प्रत्यभि-ज्ञानं तत्र यागान्वयी स्तुत्यन्वयीति न शक्यते प्रतिपत्तुम्।

---

उत्तरं—देवताया अप्रत्यभिज्ञानात्। न देवताभावप्रकारः प्रत्यभिज्ञायते यतः। अन्यथा हि यागे देवताभावः अन्यथा च स्तुतौ। यद्यपि स्तुतौ स्तुत्यप्रकाशनमप्यस्ति तथापि यागीय-प्रत्यभिज्ञानाभावान्न तादर्थ्यं स्तुतेरवगम्यते। **नन्वभिधानतः प्रत्यभिज्ञानमुदितम्**। परिहरति —**तदयुक्तमुक्तम्**। कुत इत्याह—[1]**यत्र हि प्रमाणान्तरेण प्रत्यभिज्ञानमस्ति तदेवेदमिति** [2]**तत्राभिधानं न भेदायालं भवति। तथा च दर्शितम्—वशायामर्थसमवायादिति यत्र पुनरभिधानादेव प्रत्यभिज्ञानं तत्र यागान्वयी स्तुत्यन्वयीति न शक्यते** [3]प्रतिपत्तुम्। अस्यार्थः। अभिधानं प्रत्यभिज्ञाने कारणं यदि हि तथा [4]स्यात्। यत्रापि प्रमाणान्तरेण तदेवेदमिति निश्चयः तत्राप्यभिधानभेदात् भेदः स्यात्। न चैतदस्ति। यत्र पुनरभिधान-मेव प्रत्यभिज्ञाकारणं तत्र प्रत्यभिज्ञा नास्ति। न हि यागान्वयी यः स एव स्तुत्यन्वयीति शक्यते वक्तुम्। ननु चानन्वितेन साधारणेन रूपेणाभिधानात् भविष्यति प्रत्यभिज्ञानमिति

---

(1) G. adds **तर्हि** (2) G. **तेनाभिधानं च तदादानायालं** (3) R. **वक्तुम्**
(4) G. **तथार्थज्ञानामपि**

शंसति' इति; अतः स्तुतिरभिनिर्वर्तयितव्या तेन मन्त्रेण गुणवचनः शब्दः स्तुतिनिर्वर्तनार्थो दृष्टमर्थं करिष्यति; तस्मात् प्रधानकर्मणी।

अपि च, श्रुतिसंयोगो भवति षष्ठीविभक्तिसंयोगः, यथा 'इन्द्रस्य तु वीर्याणि प्रवोचम्'—इति; तेन देवताशब्दः स्तुतिसंबन्धार्थ इत्युच्यते, देवताभिधानार्थे प्रातिपदिकार्थत्वात्प्रथमा स्यात्। अथ यत्प्रथमान्तं, तद्देवतार्थं भवितुमर्हति, यथा, इन्द्र यातोऽवसितस्य राजेति'। नेत्युच्यते, तदपि वाक्यसंयोगात् स्तुत्यर्थमेव। ननु वाक्याल्लिङ्गं बलीयः'। सत्यम्, एतदपि

---

न चानन्वियिनोऽभिधानमस्तीति तत्र तत्रोक्तम्। तस्मान्न चिकीर्षितार्थत्वं स्तौतेः शंसतेश्च। अतो नियोगविषयतैवावसीयते। अत एवामी श्रुतिसंयोगा दर्शिता भाष्यकारेण स्तुतेः प्राधान्यावगमहेतवः। कथं पुनः प्राधान्यावगमहेतवः सप्तमीसंयोगो हि अभिधानेऽपि तुल्यः। न, अभिधानस्य परार्थत्वात्। अभिधेयभावस्थं ह्यभिधानं स्तुतौ पुनः स्तुत्यार्थम्।

---

अत्राह—न चानन्वयिनोऽभिधानमस्ति इति तत्र तत्रोक्तम्। तस्मात् प्रत्यभिज्ञाऽभावात न चिकीर्षितार्थत्वं स्तौतेः शंसतेश्च। अतो नियोगविषयतैवावसीयते। यत एव चेयं मूलयुक्तिरस्ति अत एवामी भाष्यकारेण श्रुतिसंयोगा दर्शिताः स्तुतेः प्राधान्यावगमहेतवः। यैः स्तुतौ नियोगविषयत्वमवगम्यते ते श्रुतिसंयोगा दर्शिताः। कथं पुनः सप्तमीश्रुतिसंयोगे प्राधान्यं अप्राधान्यं कुतो न स्यात् इत्याह—सप्तमीश्रुतिसंयोगोऽभिधानेऽपि तुल्यः। कवतीषु स्तुवत इति सप्तमीश्रुतिः देवताभिधानेऽपि तुल्या। अतो न सिद्धान्तसिद्धये समर्था। उत्तरं—न, अभिधानस्य परार्थत्वात्। अभिधेयभावस्थं ह्यभिधानं अभिधेयो यो भावः तस्मिन्नभिधानं स्थितं तद्विषयमित्यर्थः। स्तुतौ पुनः स्तुत्यार्थं

लिङ्गं, यत् स्तुतिवाक्यस्य साकाङ्क्षस्य निराकाङ्क्षीकरणसामर्थ्यम्। तथाप्युभयथा लिङ्गेऽनुगृह्यमाणे कुतो निर्णयः ?। वाक्यशेषादेव, न देवताभिधानार्थः इति; देवताभिधानार्थ इत्येतस्मिन् पक्षे स्तुत्यर्थं साकाङ्क्षवचनमनर्थकमेव स्यात्। तस्मात् अदृष्टार्थत्वात् स्तुतिवचनस्य प्रधानकर्मणी स्तोत्रशस्त्रे।

---

तच्च स्तुत्यं कवतीष्वेव नान्यत्र प्रमाणान्तरानवगमात्। अतः कवतीषु स्तुवत इति युक्तम्। न चात्र पुरुषवशात् विवक्षातः कारकाभिधानं शक्यते वक्तुम्। कथं तर्हि ? अभिधानत एव। तच्चाभिधानं कवतीस्थमित्युक्तम्। तथा द्वितीयाश्रुतिसंयोगः प्राधान्यमुत्सर्गात् गमयति। अन्यतो हि गुणभावो वक्तव्यः। तथा इन्द्रस्य नु वीर्याणीति नाभिधाने पर्यवसानमिति कथयति।

---

स्तवनं तच्च स्तुत्यं कवतीष्वेव नान्यत्र। प्रमाणान्तरानवगमात्। यथाऽभिधेयं प्रमाणान्तरभूतयागचोदनयाऽवगम्यते, न तथा स्तुत्यं कवतीव्यतिरेकेणान्यत्र। एवञ्च कवतीषु स्तुवत इति युक्तम्। ननु विवक्षावशेनाभिधानपक्षेऽपि कवतीनामधिकरणनिर्देशो भविष्यति। तत्राह—न चात्र पुरुषवशाद्विवक्षातः कारकाभिधानं शक्यते। पुरुषस्य विवक्षितुरभावात्। कथं तर्हि ? अभिधानत एव यादृशमेवाभिधानं तादृशमेवाभिधेयम्। न देवताभिधानापेक्षया विभक्त्यन्तरं प्रयुक्तम्। तच्चाभिधानं कवतीस्थमित्युक्तम् तेन युज्यते सप्तमीश्रुतिसंयोगः सिद्धान्ते। पूर्वपक्षे तु तृतीया स्यात्। तथा द्वितीयाश्रुतिसंयोगः प्राधान्यं प्रधानकर्मत्वमुत्सर्गात् गमयति। अन्यतो हि गुणभावो वक्तव्यः। तेन प्रउगं शंसतीति द्वितीयाश्रुतिसंयोगात प्रधानकर्मतयाऽध्यवसानम्[1]। तथा इन्द्रस्य नु वीर्याणीति षष्ठीश्रुतिसंयोगोऽभिधाने इन्द्राभिधाने अभिधानस्य पर्यवसानं नास्तीति कथयति

---

(1) G. अभिधानम

अपि च, स्तौतिशंसतीति साक्षाद्गुणवचनौ लक्षणया अभिधानार्थौ स्यातां, तस्मात् क्रियोत्पत्तिं अपूर्वोत्पत्तिं विदध्यातामिति।

शब्दपृथक्त्वाच्च ॥ २५ ॥

शब्देन पृथक्त्वमेव गम्यते,–'द्वादशस्तोत्रशस्त्रोऽग्निष्टोमः', इतरथा हि द्वादशत्वं न स्यात् स्तोत्राणां शस्त्राणां च एकमेव शंसनं स्तवनं च, अथ भेद आश्रीयते, ततो न द्वादशत्वेऽवतिष्ठते ॥

---

प्रथमा पुनर्लिडाद्यभिहिते हि पदार्थ उपपद्यते। एवमजहत्स्वार्थता च स्तुतेः प्राप्नोति स्तुत्याभिधानादिति प्रदर्शितम्। शब्दपृथक्त्वादिति शास्त्रपृथक्त्वं च दर्शयति। तस्य विषयभूते भावार्थ उपपद्यते न तु गुणभूते, नियोगशून्यत्वादिति प्रदर्शितम्। नियोगशून्यत्वं च तृतीये वक्ष्याम

---

प्रतिपदिकार्थमात्रे प्रथमेति प्रथमासंयोगात। ननु यत्र प्रथमा तत्र तर्हि भवतु देवताप्राधान्यं तत्राह–**प्रथमा पुनर्लिडाद्यभिहिते पदार्थ उपपद्यते** लकारेण यदा ह्यर्थः प्रतिपाद्यते तदपेक्षयापि प्रथमोपपद्यते अभिहिते कर्मणि कर्तरि वा प्रथमोपपद्यत इत्यर्थः। [अ]-**जहत्स्वार्थता च स्तुतेः प्राप्नोति। स्तुत्याभिधानात्** देवताभिधानरूपापत्तेरिति **प्रदर्शितम्।** भाष्ये शब्दपृथक्त्वात इति व्याख्येयानुभाषणम्। व्याख्यानमाह—**शास्त्रपृथक्त्वं च दर्शयति** द्वादशस्तोत्रशस्त्रोऽग्निष्टोमः। तच्च शास्त्रपृथक्त्वं **विषयभूते भावार्थे** उपपद्यते **न गुणभूते नियोगशून्यत्वादिति प्रदर्शितम्।** अनुबन्धभेदेन हि शास्त्रभेदो भवति। नियोगविषयभावश्चानुबन्धत्वम्। यत्र च नियोगोऽस्ति तत्र नियोगविषयत्वम्। न च गुणकर्मसु नियोगोऽस्तीति दर्शितं तानि द्वैधमित्यत्र। **नियोगशून्यत्वं च तृतीये वक्ष्याम**

अनर्थकं च तद्वचनम् ॥ २६ ॥

अग्निष्टुति श्रूयते,—'आग्नेया ग्रहा भवन्ति' इति, तत्र पुनरुच्यते, आग्नेयीषु स्तुवन्ति, आग्नेयीषु शंसन्ति' इति, तत्र विधातव्यमेव यदि संस्कारकर्मणी; तस्मादपि प्रधानकर्मणी—इति ॥

अन्यश्चार्थः प्रतीयते ॥ २७ ॥

'संबद्धे वै स्तोत्रशस्त्रे वा' इति, यद्यन्यत्स्तोत्रमन्यच्छस्त्रं, ततस्तयोः संबन्धः; यदि वा अपूर्ववचने ततोऽन्यत्स्तोत्रमन्यच्छस्त्रं, इतरथा यदेव स्तोत्रं तदेव शस्त्रं स्यात् ॥

---

इत्यप्युक्तम्। किञ्चाग्निष्टुति आग्नेयीविधानात् प्रधानार्थतैव गम्यते। गुणपक्षे हि कार्यत एव प्राप्नोति। अन्यश्चार्थः प्रतीयत इति। अनेनापि शास्त्रभेद एव कथ्यते। इयांस्तु विशेषः पूर्वत्र स्वतः। इह तु संबन्धोपाधिकः। "प्रधानकर्मवदभिधानं" इति प्रधानस्यैवोचितं

---

इत्यप्युक्तम्। किञ्चाग्निष्टुति आग्नेयीविधानात् प्रधानार्थतैवावगम्यते। कुत इत्याह —गुणपक्षे हि कार्यत एव प्राप्नोति। आग्नेयत्वाद्ग्रहाणामाग्नेय्य एवर्चः स्युः कार्येणोहस्य प्राप्तत्वात्। अन्यश्चार्थः प्रतीयत इति व्याख्येयानुभाषणम्। एतदाक्षिपति—अनेनापि शास्त्रभेद एव कथ्यते। तेन शास्त्रपृथक्त्वादित्यनेन पौनरुक्त्यम्। परिहरति—इयान् विशेषः पूर्वत्र स्वतो भेदः द्वादशसङ्ख्याश्रवणात्। इह तु संबन्धोपाधिकः संबद्धे वै स्तोत्रशस्त्रे इति संबन्धं वदन् भेदं दर्शयति। यद्येकत्वं न संबन्ध उपपद्यत इत्यर्थात् भेदः। प्रधानकर्मवदभिधानमिति व्याख्येयानुभाषणम्। तदेव व्याचष्टे—प्रधानस्योचितं

अभिधानं च कर्मवत् ॥ २८ ॥

प्रधानकर्मण इव चाभिधानं भवति द्वितीयासंयोगेन, प्रउगं शंसति निष्केवल्यं शंसतीति ॥

फलनिर्वृत्तिश्च ॥ २९ ॥

फलनिर्वृत्तिदर्शनं च भवति, स्तुतस्य स्तुतमसीत्येवमादि, 'इन्द्रवन्तो वनामहे धुक्षीमहि प्रजामिषं सा मे सत्याशीर्यज्ञस्य भूयात्' इति स्तोत्रफलमनूद्यते, न देवतायाः; तस्मात्प्रधान-

---

नामेति कथयति। कुतः? भेदावगमात्। गुणकर्मणां भेदो नास्तीति सोमं क्रीणातीत्यत्र दर्शयिष्यामः। भेदानुपाति च नाम। तस्मादनुचितं गुणकर्मणां भिन्नं नाम। फलनिर्वृत्तिं च कर्मणः सकाशाद्दर्शयति न चिकीर्षितात् देवतातः। तस्मादचिकीर्षितार्थत्वं सिद्धम्। प्रयोजनं त्वन्यत्रेत्युक्तं भाष्यकारेण।

---

नामेति। कुतः? उत्तरं—भेदावगमात्। प्रधानपक्षे भेदोऽवगम्यते। गुण-कर्मणां तु भेदो नास्तीति सोमं क्रीणातीत्यत्र दर्शयिष्यामः द्वादशे क्रयाणां समुच्चयं वर्णयितुम्। तथापि किमित्याह—भेदानुपाति च नाम। भिन्ना हि संज्ञा संज्ञिनोर्भेदे सत्युचिता। तस्मादनुचितं भिन्नं नाम गुणकर्मणां[1] फलनिर्वृत्तिं च कर्मणः सकाशाद्दर्शयति—स्तुतस्य स्तुतमसीत्यादिना। न पुनः चिकीर्षिताद्वस्तुनः। अथ न कस्माच्चिकीर्षितादित्याह देवतातः। गुणकर्मपक्षे न कर्म फलान्तरयोग्यं किन्तु यदेतत् चिकीर्ष्यते तत एव फल-मुचितम्। तस्मादचिकीर्षितार्थत्वं सिद्धम्। प्रयोजनमन्यत्रेत्युक्तं भाष्यकारेण। दशमे प्रयोजनं सूत्रोपनिबन्धनं तत्र सङ्गतत्वादिति।

---

(1) गुणकर्मणी

कर्मणी स्तोत्रशस्त्रे ॥ अन्यत्र सूत्रबद्धं प्रयोजनं, दशमेऽध्याये ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः प्रधानकर्मत्वादविकारः स्यात् ॥

अथ मन्त्राविधायकत्वाधिकरणम् ॥

विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात ॥ ३० ॥

इदं समाम्नायते, 'न ता नशन्ति, न दभाति, तस्करो नासाममित्रो व्यथिरादधर्षति । देवांश्च याभिर्यजते, ददाति

---

विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात । किं यद्वद्ब्राह्मणे भावशब्दो विधायकः तद्वन्मन्त्रेष्वपि, उत तन्मन्त्रेऽविधायक इति । किमिदमुपन्यस्तम् ? ननु न श्रुतं भवता यदुपन्यस्तम् । सत्यं श्रुतं किन्तु असम्बद्धमिव प्रतिभाति । कथमसम्बद्धम् ? विनियुक्तो हि मन्त्र इति स्थितम् । प्रयोगसमवायी च मन्त्रः स्मरणेनोपयुज्यत इति स्थितम् । अतः काऽत्र विधायकाशङ्का ? अथ मन्यसे नियोग-

---

विधिः । किं यद्वत् ब्राह्मणेषु गतः भावशब्दो विधायकः तद्वन्मन्त्रेऽपि, उत मन्त्रेऽ[1]विधायक इति भाष्यमनुभाष्याक्षिपति—किमिदमुपन्यस्तम ? समाधाता आह—ननु न श्रुतं भवता यदुपन्यस्तं येनैवं पृच्छसि । आक्षेप्ता आह—सत्यं श्रुतं किन्तु असंबद्धमिव प्रतिभाति । समाधाता आह—कथमसंबद्धम् ? आक्षेप्ता आह—विनियुक्तो हि मन्त्र इति स्थितम । अस्यार्थः—यस्य मन्त्रस्य विनियोगो नास्ति वसन्ताय कपिञ्जलानालभेत इत्यादेः सोऽत्रोदाहरणं न भवति । किन्तु यो विनियुक्तः । तथापि किमित्याह—प्रयोगसमवायी च मन्त्रः स्मरणेनोपयुज्यत इति स्थितम । यो हि मन्त्रो विनियुक्तः स कर्मण्यङ्गीकृतः प्रयोगकाले स्मरणेनोपयुज्यत इति । अतः काऽत्र विधायकाशङ्का । न हि स्मारकस्य विधायकत्वाशङ्का । आक्षेप्ता समाधातुराशङ्कान्तरमाह—अथ मन्यसे नियोगशब्द-

---

(1) G. ऽभिधायक

च ज्योगित्ताभिः सचते गोपतिः सह' इति; यजते ददातीत्युदाहरणम्, किं यद्वद्ब्राह्मणे भावशब्दो विधायकस्तद्वत् मन्त्रेऽपि, उत मन्त्रेऽविधायकः? इति। किं तावत्प्राप्तम्, विधौ मन्त्रे चाम्नायमानस्य भावशब्दस्य एक एवार्थः स्यात्, ऐक-

---

श्रवणात् भवत्याशङ्केति तदपि निराकृतं 'य एवं विद्वान् पौर्णमासीं यजत' इत्येकार्थतावगमात्। एवं तर्हि एकार्थतयैव विधायकताशङ्का ब्राह्मणप्रतिपादितमर्थं मन्त्रोऽभिधत्त इति। अतोऽभिन्नार्थत्वात् अभिन्नार्थस्य विधान—मभिधानं च न सम्भवतीति पूर्वपक्षः। अर्थतश्चैकत्वं नानात्वं च शब्दानाम्। ननु चैवमभिधायकत्वं हीयते मन्त्राणां समिदादीनामिव परस्परम्।

---

श्रवणात् लिङादिश्रवणात् **भवत्याशङ्केति**। दूषयति—**तदपि निराकृतम्।** सत्यपि नियोगश्रवणे **पौर्णमासीं यजत इति एकार्थतावगमात्।** यथा तत्रैकार्थावगमाद्विधायकत्वं न भवति तथाऽत्रापीति युक्तमित्यर्थः। समाधाता आह—**एवं तर्ह्येकार्थतयैवाऽत्र विधायकताशङ्का।** एतदेव विवृणोति—**ब्राह्मणप्रतिपादितमर्थं मन्त्रोऽभिधत्त इति।** अतोऽभिन्नार्थता मन्त्रब्राह्मणयोः। **अभिन्नस्य चार्थस्य विधानमभिधानं च न संभवतीति पूर्वः पक्षः।** यथा विधेयतया सोऽर्थो ब्राह्मणे प्रतीयते तथा मन्त्रेऽपि विधायकतयैव प्रत्येतव्यः एकार्थत्वात्। तथा ब्राह्मणवन्मन्त्रस्यापीति विधायकत्वमेवेति पूर्वः पक्षः। अभ्युच्चयमाह—**अर्थतश्चैकत्वं नानात्वं वा शब्दानाम्** यदैकार्थत्वं तदैकशब्दत्वमुपपद्यते। अर्थभेदे तु शब्दभेद एव युक्तः। एकश्चायं लिङादिशब्दः तेनात्रापि एक एव युक्तः। **ननु चैवमभिधायकत्वं हीयते मन्त्राणां समिदादीनामिव परस्परम्** यथा समिधो यजतीति प्रत्यभ्यासमर्थभेदः तथाऽत्रापि विधायकत्वपक्षेऽर्थभेदेन भवितव्यम्। ततश्च यत्रार्थे मन्त्रविनियोगो मन्त्रस्य तदभिधायकत्वमेव हीयते।

**शब्यात्, स एवायमेकः शब्दो ब्राह्मणगतो विधास्यति, मन्त्रगतो न शक्नोति विधातुमित्यनुपपन्नं, तस्मात् विधायकः ॥**

अपि वा प्रयोगसामर्थ्यात् मन्त्रोऽभिधानवाची स्यात् ॥ ३१ ॥

**अपि वा इति पक्षो व्यावर्त्यते, एवंजातीयको मन्त्रो अभिधानवचनः स्यात्, प्रयोगसामर्थ्यात्, प्रयोगे क्रियमाणे अस्य**

---

उच्यते—नैतत्। तन्निमित्तत्वाद्विधेः। निमित्तं हि विधिर्न बाधत इति न्यायविद्भिरुक्तम्। अतः सिद्धमविशेषात् द्वयोर्विधायकत्वम्।

**अपि वा प्रयोगसामर्थ्यात्**। उच्यते। अभिधायकतया ह्येकार्थत्वं मन्त्रस्य प्रतिपन्नम्। कस्याभिधायकतया ? विहितस्य। न च विहिताभिधाने विधानं शक्यते। विधाने हि कर्मान्तरापत्तिः।

---

तथा च सति विनियोगविरोधश्च आपद्यत इति। उच्यते। नाभिधायकत्वं हीयते। **तन्निमित्तत्वात्** [1]अभिधायकत्वनिमित्तत्वाद्विधेः **निमित्तं विधिर्न बाधत** इत्युक्तं **शब्दन्यायविद्भिः। अत सिद्धमविशेषात् द्वयोर्मन्त्रब्राह्मणयोर्विधायकत्वम्।**

**अपिवा। उच्यते—अभिधायकतया ह्येकार्थत्वं मन्त्रस्य प्रतिपत्तव्यम्।** विनियोगपर्यालोचनया मन्त्रस्याभिधायकत्वेन ब्राह्मणेन सहैकार्थत्वं प्रतिपन्नम्। ननु भवत्वभिधायकत्वं तथापि विधेयतयाऽभिधायकत्वेन विधायकत्वमेवास्त्विति मत्वा पृच्छति—**कस्याभिधायकतयैकार्थत्वं ?** किं विधेयस्याभिधायकतया ? राद्धान्ती वदति—**विहितस्याभिधायकतया** ब्राह्मणेनैकार्थ्यं मन्त्राणाम्। यद्ब्राह्मणेन विहितं तदभिधायकतया विनियोगावगमाच्च। **न च** विहिताभिधाने विधानं प्रतिपत्तुं शक्यते विहितस्य विधानासंभवात्। कस्मात् पुनर्विहितस्यैवाभिधायकता ? यावता विधेयत्वेनैव किमिति न भवति। ततश्च मन्त्रेण विधानमेव तस्यार्थस्येत्यत्राह—**विधाने हि कर्मान्तरापत्तिर्विधिबलादापद्यते विधा-**

---

(1) B. अभिधायकनिमि

सामर्थ्यं विद्यते, गोदानं गोयागञ्च प्रत्याययितुम्, न विधातुम्। कुतः ?। विहितत्वात् गोदानस्य दक्षिणाविधाने, गोयागस्य त्वनुबन्धयागाम्। कर्मान्तरं भविष्यति इति चेत्। न, असकृ-दप्युच्यमाने तत्प्रत्ययादेव। स्तुत्यर्थकल्पनायामप्यानर्थक्यं, परि-

---

कर्मान्तरत्वे वा अनभिधायकत्वं समिदादीनामिव परस्परम्। ततश्च विनियोगश्रुतेः बाधः। भवत्विति चेत न, अभिधायकतया हि नियोग-संस्पर्शसिद्धेः। तस्मान्न नियोगान्तरमर्हति। स्तुत्यर्थतायामप्यानर्थक्य-मिति। केयमकाण्डे स्तुत्यर्थताशङ्का। उच्यते—स्तुतावपि विहिताभिधानं

---

नस्य विहिताद्भेदकल्पकत्वात्। कर्मान्तरत्वे [1]वाऽ[2]नभिधायकत्वं समिदादीनामिव पर-स्परम्। ततश्च विनियोगश्रुतेर्बाधः। अयमभिप्रायः। एकार्थं तावत विनियोगवशेन प्रतीयते। तत्र यदि विधेयत्वेनोच्येत तदा एकार्थत्वमेव बाध्यते। तस्मात् विहिततयैवाभिधानेनैकार्थत्वमाश्रयितुं युक्तमविरोधात्। भवतु विनियोगश्रुतेर्बाधो विधेय-त्वेनाभिधानमिति चेत्। दूषयति—न युक्तो विनियोगश्रुतेर्बाधः विहिताभिधायकतया नियोगार्थसंस्पर्शसिद्धेः। यदि हि मन्त्राणां विहितस्मारकतायां नियोगस्पर्शो न सिद्ध्येत् तदा विधेयाभिधायकतामाश्रित्य विनियोगश्रुतेर्बाध आश्रीयेत। उपपद्यते विहितस्मारकतयाप्य-धिकारसंस्पर्शः। तस्मान्न नियोगान्तरमर्हति। न च विधेयत्वाभिधानपक्षेऽप्यर्थवादो[3] न भविष्यत्येकार्थत्वाद्विधेरिति शक्यते वक्तुं विधिस्वभावविरोधात। तस्माद्विधिस्वभावाविरोधाय विहितत्वेनैवाभिधानमाश्रयितुं युक्तम्। न तु विधेयविहिताभिधायकयोः मन्त्रब्राह्मणयोः अर्थभेदः स्मृतिप्रमाणयोरिवावस्थामात्रभेदात। "स्तुत्यर्थतायामप्यानर्थक्यं" इति भाष्यमनु-भाष्याक्षिपति—केयमकाण्डेऽप्रस्तावे स्तुत्यर्थताशङ्का पूर्वपक्षिणो विधायकत्वमभिमतम्। तस्येयं स्तुत्यर्थताऽऽशङ्का नोपपद्यते। उत्तरं—उच्यते स्तुतावपि हि विहिताभिधानं

---

(1) B. च (2) G. omits न (3) G. अर्थभेदो

**समाप्तेन सार्थवादकेन वाक्येन विहितत्वात् यागस्य । तस्मान्न मन्त्रगतो भावशब्द एवंजातीयको विधायकः इति ॥**

---

दृष्टम् । ततः किम् ? एकवाक्यतायामेवैतदुपपन्नं, विहिताभिधानं नाम । न वाक्यभेदे, अभिन्नं च विधिवाक्यान्मन्त्रवाक्यम् । तस्मादभिधायकत्वमुपपादयितुं दुश्शकम् । ननु च विनियोगेन विहिताभिधायकत्वम् । उच्यते—ऐदमर्थ्ये हि प्रभविष्णुता विनियोगस्य नेदं कार्यत्वे । सत्यम् ।

---

**दृष्टम्** । यथा वायव्यं श्वेतमालभेत इति विहितस्य वायोरभिधानम् । एतदुक्तं भवति । राद्धान्ताभासिनः कस्यचिदियं स्तुत्यर्थताशङ्का भवति विहिताभिधानं यदि मन्त्रे क्रियते तदा स्तुत्यर्थतापि किमिति न भवति । ननु स्तुत्यर्थता भवतु न कापि क्षतिः अतः किमिति निराक्रियते इति मन्वानः पृच्छति—**ततः किमिति** । उत्तरं—**एकवाक्यतायामेवैतदुपपन्नं विहिताभिधानं नाम न वाक्यभेदे** । यत्स्तुतौ विहिताभिधानं नाम तदेकवाक्यतायामेवोपपन्नम्, न वाक्यभेदे । **अभिन्नं च विधिवाक्यान्मन्त्रवाक्यम्** । **तस्मादभिधायकत्वं दुश्शकमुपपादयितुम्** । अत्रायं भावः—यदि स्तुतये विहिताभिधानमिति पक्षः स्वीक्रियते तदा विहिताभिधानलक्षणो राद्धान्त एव न सिद्ध्येत् । एकवाक्यत्वे हि स्तुतये विहिताभिधानं न भिन्नवाक्यत्वे । स्पष्टश्च विधिमन्त्रयोर्वाक्यभेदः । ततश्च विहिताभिधानमेव भज्येत । विधायकत्वमेवोपपद्येतेति । **ननु विनियोगेन विहिताभिधायकत्वं** स्तुतये भविष्यति । परिहरति—**उच्यते, ऐदमर्थ्ये हि विनियोगस्य प्रभविष्णुता नेदं कार्यत्वे** विनियोगेन ह्यस्यात्र शेषभाव इत्येतावन्मात्रं प्रतिपाद्यते न पुनः स्तुतिरस्य कार्यमिति शक्यते कल्पयितुम् । उपादानेनापि शक्यमेव कार्यमुपादीयते न पुनरशक्यम् । भिन्नवाक्ये च स्तुतिरूपं कार्यमशक्यम् । अतो राद्धान्तसिद्ध्यर्थं स्तुतये विहिताभिधानमिति राद्धान्ताभासनिराकरणम् । कः पुनः निराकरणे

अथ मन्त्रनिर्वचनाधिकरणम् ॥

तच्चोदकेषु मन्त्राख्या ॥ ३२ ॥

**मन्त्रगतो भावशब्दो विधायको नेति परीक्षितम्। कोऽयं**

---

यत्र पदनिबन्धनमेकवाक्यत्वं तत्र श्रुत्यैव विहिताभिधानम्। इह पुनः उपादानतः। तस्मान्न स्तुतिः संभवति। पदनिबन्धनोत्तरकालभावित्वात्। अतो भिन्नवाक्यानामपि भवति विहिताभिधायकत्वम्। इदं कार्यत्वे ह्युपादानं भवति। तस्मात्सिद्धं विहिताभिधानं मन्त्राणां कार्यम्।

**तच्चोदकेषु मन्त्राख्या। उक्तं मन्त्रगतो भावशब्दोऽभिधायक इति। अभिधायको न विधायक इत्येतावद्वक्तव्यम्।**

---

हेतुरित्यत्राह—**सत्यम्**। स्तुतावपि **यत्र पदनिबन्धनमेकार्थत्वं तत्र श्रुत्यैव** विहिताभिधानम्। यथा वायुर्वै क्षेपिष्ठेति। **इह पुनरुपादानतः** एकार्थत्वम्। ग्राहकलक्षणेन विधिव्यापारेण स्वीकृते मन्त्रे ब्राह्मणेन सहैकवाक्यत्वम्। **तस्मान्न स्तुतिः संभवति पदनिबन्धनोत्तरकाल-भावित्वात्।** इदं चाकृतं विधिशेषभूता स्तुतिर्भवति इति। यच्च भिन्नेन ब्राह्मणवाक्येन विहितं तत्र स्तुतिरर्थवती। तस्मान्न स्तुत्यर्थतया विहिताभिधानम्। किन्तु स्मृत्यर्थतया। अधिकरणार्थमुपसंहरति—**अतो भिन्नवाक्यानामपि भवति विहिताभिधायकत्वम्। इदं कार्यत्वे ह्युपादानं प्रभवति।** ग्राहकेण गृहीतस्य मन्त्रस्य स्वतोऽभिधानसमर्थस्य प्रयोगकालापेक्षितार्थाभिधानमेव कार्यं कल्प्यते ग्राहकग्रहणबलेनैव। **तस्मात् सिद्धं विहिता-भिधानं मन्त्राणां कार्यम्।**

**तच्चोदकेषु।** '**उक्तं मन्त्रगतो भावशब्दोऽभिधायक इति**' भाष्यमनुभाष्याक्षि-पति—**अभिधायकोऽयं न विधायक इत्येतावद्वक्तव्यम्।** विनियुक्तवाक्यगतो भावशब्दोऽभि-

**मन्त्रो नामेति ? उच्यते। अज्ञाते मन्त्रे तद्गतो भावशब्दः कथं विचारितः ? इति, इदमर्थतोऽधिकरणम् पूर्वं द्रष्टव्यम्। कथं-**

---

किं मन्त्रशब्देन ? न च मन्त्रशब्दाभिधेयतया। कथं तर्हि ? इषेत्वेत्येवमादिभिः प्रतीकैः ? तस्मान्मन्त्रशब्दाभिधानमतिरिच्यत इतीव प्रतिभाति। क्रियमाणेऽपि मन्त्रशब्दाभिधाने न मन्त्रत्वादभिधायकत्वं, विधायकत्वमपि मन्त्रेषु वसन्ताय कपिञ्जलानालभत इत्येवमादिषु दृष्टम्।

यदपि भाष्यकारेणोक्तम्—**अज्ञाते मन्त्रशब्दे तद्गतो भावशब्दः कथं विचार्यो भविष्यति ? इदमर्थतोऽधिकरणं पूर्वं द्रष्टव्यमिति।** एतदप्ययुक्तमिव। न मन्त्रत्वादभिधायकत्वं ; किं तर्हि ? विनियुक्तत्वादिति। विनियोगश्च इषेत्येवमादिभिः प्रतीकैः इत्युक्तम्।

---

धायको न विधायक इत्येतावद्वक्तव्यम्। किं मन्त्रशब्देन। यद्यपि मन्त्रशब्दस्तत्र न भवति तथापि राद्धान्तो लभ्यत एव। विनियुक्तत्वं ह्यभिधायकत्वे हेतुः। न च विनियोगोऽपि मन्त्रशब्दाभिधेयतया। कथं तर्हि ? इषेत्वेत्येवमादिभिः प्रतीकैः। तस्मान्मन्त्रशब्दाभिधानमतिरिच्यते न चाभिधायकत्वसिद्ध्यर्थमेव मन्त्रशब्दाभिधानम्। यतः क्रियमाणेऽपि मन्त्रशब्दाभिधाने न मन्त्रत्वादभिधायकत्वं भवति। विधायकत्वमपि मन्त्रेषु वसन्ताय कापिञ्जलानालभत इत्येवमादिषु दृष्टम्। यदपि भाष्यकारेणोच्यते अज्ञाते मन्त्रे कथं तद्गतः भावशब्दो विचार्यो भविष्यति इति। इदमर्थतोऽधिकरणं पूर्वं द्रष्टव्यमिति। एतदप्ययुक्तमेवोक्तमिति। कुत इत्याह-न मन्त्रत्वादेवाभिधायकत्वम्। कि तर्हि ? विनियुक्तत्वादिति। तेनाज्ञातेऽपि मन्त्रत्वे शक्यत एवाभिधायकत्वमुपपादयितुं विनियोगश्च प्रतीकादिभिरिति।

(1) B. किं तर्हि

लक्षणो मन्त्रः ? इति, तच्चोदकेषु मन्त्राख्या, अभिधानस्य चोदकेष्वेवंजातीयकेष्वभियुक्ता उपदिशन्ति,—मन्त्रानधीमहे, मन्त्रानध्यापयामः, मन्त्राऽऽवर्तन्ते इति। प्रायिकमिदं लक्षणं, अनभिधायका अपि केचित् मन्त्रा इत्युच्यन्ते, यथा 'वसन्ताय कपिञ्जलानालभते' इति, न शक्यं पृष्ठाकोटेन तत्र तत्रोप-

---

अन्यथापि चायं सूत्रार्थो गच्छत्येव। मन्त्रशब्दोऽभिधायकेषु पूर्वस्मिन्नधिकरणे प्रयुक्तः। तद्व्याख्यानार्थमभिधायकेषु किं मन्त्रशब्दाभिधानमस्ति। बाढमस्ति। तच्चोदकेषु मन्त्रशब्दमभियुक्ताः प्रयुञ्जते। एवं च "प्रायिकं" इत्येतदपि न वक्तव्यम्। मन्त्राभिधानप्रसिद्धिकथनार्थमित्येतत्सूत्रं न मन्त्रलक्षणपरम्। "लक्षणेन तु सिद्धानां" इत्येवमाद्यसमञ्जसमेव। तस्मादव्यापितालक्षणदोषकथनेन स्वकौशलप्रदर्शनार्थं लक्षणसूत्रत्वमध्यारोप्यते। अत्राभिधीयते-भाष्यकारस्यापि पूर्वोक्तमन्त्रपदव्याख्यानमेवैतदभियुक्ता उपदिशन्ति। मन्त्रा आवर्तन्त इति वदतः

---

तत्रापि मन्त्रत्वमनुपयोगि। आक्षेपान्तरमाह—अन्यथापि चायं सूत्रार्थो गच्छत्येव। मन्त्रशब्दोऽप्यभिधायकेषु प्रयुक्तः पूर्वस्मिन्नधिकरणे सूत्रे तद्व्याख्यानार्थं सूत्रं अभिधाकेषु किं मन्त्रशब्दाभिधानमस्ति। बाढमस्ति। तच्चोदकेषु मन्त्रशब्दमभियुक्ताः प्रयुञ्जते। एवं च प्रायिकमेतदित्येतदपि न वक्तव्यम् यस्मात् मन्त्राभिधानप्रसिद्धिकथनार्थमेतत्सूत्रं न मन्त्रलक्षणार्थम्। लक्षणार्थत्वे हि प्रायिकत्वकथनमुपपद्यते, नाभिधानप्रसिद्धिकथने। यस्मादिदं लक्षणं न भवति तस्माल्लक्षणेन तु सिद्धानामित्येवमाद्यसमञ्जसम्। अतोऽव्यापितालक्षणदोषकथनेन स्वकौशलप्रदर्शनार्थं लक्षणसूत्रत्वमध्यारोप्यते। अत्राभिधीयते। भाष्यकारस्यापि पूर्वोक्तमन्त्रशब्दव्याख्यानमेतदिति सम्मतमभियुक्ता उपदिशन्ति। मन्त्रा आवर्तन्त इत्येवं वदता भाष्यकारेणाप्यभियुक्त-

देष्टुमिति लक्षणमुक्तम्—

"ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्त्वशः।
लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः"।

उदाहरणम्, 'मेधोऽसि' इत्येवमादयोऽस्यन्ताः 'इषे त्वा' इत्येवमादयस्त्वान्ताः, 'आयुर्दा असि' इत्याशीः, 'अग्निर्मूर्द्धा' इति स्तुतिः, सङ्ख्या 'एको मम' इति, प्रलपितं 'अक्षी ते इन्द्रपिङ्गले दुलेरिव' इति, परिवेदनं 'अम्बे' 'अम्बिके' इति, प्रैषः 'अग्नीदग्नीन्' इति, अन्वेषणं 'कोऽसि कतमोऽसि' इति

---

पदार्थकथनपरं चैतद्भाष्यम्। अतो यदन्यत तल्लक्षणदूषणपरमेव। प्रायिकमेतदिति प्रकटितम्। अत एव वृत्तिकारोदाहरणप्रपञ्चोक्तिरपि नैव मृष्यते भाष्यकारेण। लक्षणाभिधानपक्षे हि लक्षणविशेषाभिधानमुपपद्येतापि। पदार्थव्याख्याने पुनः अनवसर एव तल्लक्षणविशेषाभिधानस्य। तच्चैतत वृत्तिकारेणोदाहरणापदेशेनेति वदता असंबद्धतैव कथिता। तस्मान्मन्त्रपदार्थकथनमेवैतत सूत्रं न मन्त्रलक्षणपरम्।

---

कथनार्थं सूत्रमित्युक्तम्। पदार्थकथनपरं चैतत् भाष्यमेवञ्जातीयकेष्वभियुक्ता उपदिशन्तीत्यादि। अतो यदन्यत्तल्लक्षणदूषणपरमेवैतत्। ये च लक्षणपरमेवैतत्सूत्रमिति मन्यन्ते तन्मतं भाष्यकारेण दूष्यते। प्रायिकमित्यनेन प्रकटितमेतत्। अत एव वृत्तिकारेणोदाहरणप्रपञ्चोक्तिरपि न मृष्यते भाष्यकारेण। लक्षणाभिधानपक्षे हि लक्षणविशेषाभिधानमुपपद्येतापि। पदार्थव्याख्याने पुनरनवसर एव तल्लक्षणविशेषाभिधानस्य वृत्तिकारकृतस्य। तच्चेदं वृत्तिकारेणोदाहरणापदेशेन इति वदता वृत्तिकारकृतलक्षणविशेषस्यासंबद्धतैव कथिता। तस्मान्मन्त्रपदस्य प्रयोगकथनपरमेतत् सूत्रं न मन्त्रलक्षणपरम्।

पृष्टं 'पृच्छामि त्वा' इति, आख्यानं 'इयं वेदिः' इति, अनुषङ्गः 'अच्छिद्रेण पवित्रेण' इति। प्रयोगः 'त्रैस्वर्यं चातुस्वर्यंश्च', सामर्थ्यमभिधानम्, तच्चैतद्वृत्तिकारेणोदाहरणापदेशेनाख्यातम्। एतदपि प्रायिकमेव, असिमध्या अपि च मन्त्राः भवन्ति, 'ईड्यश्चासि वन्द्यश्च वाजिन्' इति, त्वामध्याश्च 'तत्त्वा यामि' इति। आशीर्ब्राह्मणमपि, 'सोऽकामयत प्रजाः सृजेय' इति, स्तुतिरपि 'वायुर्वै क्षेपिष्ठा देवता' इति, प्रलापो 'नचैतद्विद्मो यदि ब्राह्मणा वा स्मोऽब्राह्मणाः स्मो वा' —इति, परिदेवनम् 'ये मामधुक्षन्त ते मां प्रत्यमुञ्चन्त'—इति, प्रैषः 'अमुतः सोममाहर' इति, अन्वेषणम् 'इह वा स इह वा' इति, प्रश्नः 'वेद कर्णवतीं सूर्मिम्' इति, प्रतिवचनम् 'विद्मो वा' इति, अनुषङ्गः 'हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षस' इति, प्रयोगः 'त्रैस्वर्यंश्चातुस्वर्यंश्च' इति, सामर्थ्यं 'स्रुवेण अवद्यति द्रवेषु' इति। लक्षणकर्मणि प्रयोजनं प्रसिद्धत्वात् न वक्तव्यं, लघीयसी प्रतिपत्तिर्लक्षणेन,

'आक्षेपेष्वपवादेषु प्राप्त्यां लक्षणकर्मणि।
प्रयोजनं न वक्तव्यं यच्च कृत्वा प्रवर्तते॥

आक्षेपेषु पूर्वाधिकरणस्य प्रयोजनं, अपवादेषु उत्सर्गस्य, प्राप्त्यामुत्तरविवक्षा, कृत्वाचिन्तायां पूर्वाधिकरणस्य प्रयोजनम्। अस्ति वेदे मन्त्रशब्दो यस्यायमर्थः परीक्षितः, 'अहे बुध्निय मन्त्रं मे गोपाय यमृषयस्त्रयीविदा विदुः, ऋचः सामानि यजूंषि'—इति॥

अथ ब्राह्मणनिर्वचनाधिकरणम् ॥

शेषे ब्राह्मणशब्दः ॥ ३३ ॥

अथ किंलक्षणं ब्राह्मणम् ?। मन्त्राश्च ब्राह्मणञ्च वेदः, तत्र मन्त्रलक्षणे उक्ते परिशेषसिद्धत्वात् ब्राह्मणलक्षणमवचनीयं, मन्त्रलक्षणवचनेनैव सिद्धम्, यस्यैतल्लक्षणं न भवति, तद्ब्राह्मणं इति परिशेषसिद्धं ब्राह्मणम्। वृत्तिकारस्तु शिष्यहितार्थं प्रपञ्चितवान्—इतिकरणबहुलं, इत्याहोपनिबद्धं आख्यायिकास्वरूपं, हेतुः 'शूर्पेण जुहोति तेन ह्यन्नं क्रियते' इति, निर्वचनं, 'तत् दध्नो दधित्वं', निन्दा 'उपवीता वा एतस्याग्नयः', प्रशंसा 'वायुर्वै क्षेपिष्ठा देवता' इति, संशयः 'होतव्यं गार्हपत्ये न होतव्यम्' इति, विधिः 'यजमानसम्मिता औदुम्बरी भवति', परकृतिः माषान्मे पचत —इति, पुराकल्पः उल्मुकैर्हस्म पूर्वे समाजग्मुः' इति,

---

शेषे ब्राह्मणशब्दः। तच्चोदकेषु मन्त्राख्येति मन्त्रशब्दार्थकथनपरे सूत्रे कः पुनः प्रसङ्गः शेषे ब्राह्मणशब्द इति। लक्षणपरे पुनः सूत्रमुपपद्यत एव, लक्षणपरेऽप्युक्तो दोषः। अतो न विद्मः कथमिदमिति। अत्रोच्यते—शब्दार्थकथनपरमेवैतत्सूत्रद्वयं विधिमन्त्रयोरैकार्थ्यमिति। किमिदं

---

शेषे। तच्चोदकेषु मन्त्राख्येति मन्त्रशब्दार्थकथनपरे सूत्रे कः प्रसङ्गः शेषे ब्राह्मणशब्द इति। अस्य लक्षणपरे तु सूत्रे प्रसङ्गादप्युपपद्यते एव ब्राह्मणलक्षणम्। एकग्रन्थेनाह —लक्षणपरेऽप्युक्तो दोषः पूर्वमतो न विद्मः कथमिदमिति। अत्रोच्यते। शब्दार्थकथनपरमेवैतत्सूत्रद्वयम्। एतदेव विवृणोति—विधिमन्त्रयोरैकार्थ्यमिति। किमिदं

व्यवधारणकल्पना 'यावतोऽश्वान् प्रतिगृह्णीयात्' इति; "हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः। परक्रिया पुराकल्पो व्यवधारणकल्पना। उपमानं दशैते तु विधयो ब्राह्मणस्य तु। एतद्वै सर्ववेदेषु नियतं विधिलक्षणम्"। एतदपि प्रायिकम्, —इतिकरणबहुलो मन्त्रोऽपि कश्चित्,—'इति वा इति मे मनः', इत्याहोपनिबद्धश्च, 'भगं भक्षीत्याह', आख्यायिकास्वरूपश्च 'उग्रो ह भुज्यम्' इति, हेतुः 'इन्दवो वामुशन्ति हि', निर्वचनं 'तस्मादापोनुस्थन' इति, निन्दा 'मोघमन्नं विन्दते अप्रचेताः' इति, प्रशंसा 'अग्निर्मूर्धा' इति, संशयः अधः स्विदासीदुपरिस्विदासीत्' इति, विधिः 'पृणीयादिन्नाधमानात्' इति, परकृतिः 'सहस्रमयुताददत्', पुराकल्पः 'यज्ञेन यज्ञमयजन्त देवाः' इति॥

---

विधिमन्त्रावित्याशङ्क्यते? अस्तीदं द्वयं वेदे केचिन्मन्त्राः किञ्चिद्ब्राह्मणमिति। यत्राभियुक्ता मन्त्रशब्दं प्रयुञ्जते स मन्त्रः। यत्र च विधिरिति च ब्रुवते तद्ब्राह्मणम्। वृत्तिकारमतोपन्यासस्तु पूर्ववत् द्रष्टव्यः।

---

विधिमन्त्रावित्येवमाशङ्क्यते? तत्रेदमुत्तरं—अस्ति द्वयं वेदे। केचिन्मन्त्राः किञ्चित् ब्राह्मणं इति। यत्राभियुक्ता मन्त्रशब्दं प्रयुञ्जते स मन्त्रः। यत्र च विधिरिति ब्रुवते तद्ब्राह्मणम्। वृत्तिकारमतस्य योऽयमुपन्यासः सः पूर्ववद् द्रष्टव्यः असंबद्ध इत्यर्थः।

ऊहाद्यमन्त्रताधिकरणम् ॥

अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः ॥ ३४ ॥

**ऊहप्रवरनामधेयेषु संशयः,—मन्त्राः उत न ? इति ; अभि-**

---

**अनाम्नातेष्वमन्त्रत्वम् ।** ऊहप्रवरनामधेयानि चिन्त्यन्ते—किं मन्त्रशब्दाभिलप्यान्येतानि उत नेति । ननु तच्चोदकेषु मन्त्राख्येति यत्राभियुक्ता मन्त्रशब्दं प्रयुञ्जते स मन्त्र इत्युक्तम् । न चाभिधायकत्वं मन्त्रत्वे लक्षणम् । न चोहादीन्यभियुक्तैः मन्त्रत्वेनाभिलप्यन्ते तस्मादनुपपन्नः संशयः । अत्राभिधीयते—ऊहप्रवरनामधेयैर्हि क्रतुषु मन्त्रकार्यं क्रियते । न चामन्त्रैः मन्त्रकार्यं निष्पद्यत इति पूर्वपक्षवादिनोऽभिप्रायः । राद्धान्तवादीतु मन्यते-सत्यं अमन्त्रैः मन्त्रकार्यं न भवति न पुनरमन्त्रानुगृहीतैः मन्त्रैः । ऊहप्रवरनामधेयानि च मन्त्राणा-

---

अनाम्नातेषु । ऊहप्रवरनामधेयानि चिन्त्यन्ते—किं मन्त्रशब्दाभिधेयानि ? उत नेति । अनेनाक्षेप्तुं सन्देहोऽनुभापितः । आक्षिपति—ननु तच्चोदकेषु मन्त्राख्येत्यनेन यत्राभियुक्ताः मन्त्रशब्दं प्रयुञ्जते स मन्त्र इत्युक्तम् । न चाभिधायकत्वं मन्त्रत्वे लक्षणम् । येनोहादीनामपि मन्त्रत्वं स्यात् । नचोहादीन्यभियुक्तैः मन्त्रत्वेनाभिलप्यन्ते । तस्मादनुपपन्नः संशयः । अत्राभिधीयते । ऊहप्रवरनामधेयैर्हि क्रतुषु मन्त्रकार्यं क्रियते । नचामन्त्रैः मन्त्रकार्यं निष्पद्यत इति पूर्वपक्षवादिनोऽभिप्रायः । मन्त्रकार्यकारित्वादेषां बलात् मन्त्रत्वमभ्युपगमनीयम् । अन्यथा तत्कार्यानुपपत्तेः । राद्धान्तवादी तु मन्यते सत्यं, अमन्त्रैः मन्त्रकार्यं न भवति । न पुनः अमन्त्रानुगृहीतैः । य एव मन्त्राः त एव मन्त्रकार्यं कुर्वन्ति । अमन्त्रास्तु तेषामनुग्रहं कुर्वन्ति । न चामन्त्रानुगृहीतत्वेन मन्त्राणामप्यमन्त्रता । ननूहप्रवरादीन्येवार्थाभिधानं कुर्वन्ति न पुनर्मन्त्रानुग्रहं इत्यत्राह—ऊहप्रवरनामधेयानि च मन्त्राणा-

धायकत्वान्मन्त्राः इति प्राप्ते ब्रूमः, अनाम्नातेषु मन्त्रत्वं न स्यादभिधायकेष्वपि, नाभिधायकत्वं मन्त्रत्वे हेतुः, किं तर्हि ? अभियुक्तप्रयोगः, ये अभियुक्तैर्मन्त्राः इति नोच्यन्ते, न ते

---

मुपकारं कुर्वन्ति सन्त्यनुग्राहकाणि प्रयत्नकरणादिवत्। न चानुग्राहकं मन्त्रशब्दाभिलप्यं प्रयत्नकरणमिव। तस्मादमन्त्रत्वम्। कः पुनरेभिरनुग्रहो मन्त्रस्येति ? यथैव ताल्वादिभिरर्थाभिधाने साहाय्यम्।

नन्ु चोहप्रवरनामधेयानि स्वयमभिधानं कुर्वन्ति न साहाय्यम्। न खल्वत्र कश्चिद्विशेषः। केचित् प्रधानकार्ये उपकुर्वन्ति केचिदङ्ग-कार्ये। यथा स्वामिसंस्काराः प्रयाजादयश्च। तस्मादुपपन्नममन्त्रत्वं स्वामिसंस्काराणामिव न प्राधान्यम्। प्रयोजनं भाष्योक्तम्।

---

मुपकारं कुर्वन्ति सन्त्यनुग्राहकाणि प्रयत्नकरणादिवत्। तस्मादमन्त्रत्वमूहादीनाम्। न चानुग्राहकं मन्त्राभिलप्यं प्रयत्नकरणमिव। तस्मादमन्त्रत्वमूहादीनाम्। कः पुनरेभिरनुग्रहः ? यथैव ताल्वादिभिरर्थाभिधाने साहाय्यम्। यथा ताल्वादीन्यप्यभिव्यञ्जकानि सन्ति अर्थाभिधाने साहाय्यं कुर्वन्ति तथोहादीन्यपि। ननु चोहप्रवरनामधेयानि स्वयमभिधानं कुर्वते न साहाय्यं ताल्वादिकमिव। अतः कथमनुग्राहकत्वम्। परिहरति—न खल्वत्र कश्चिद्विशेषः। केचिदनुग्राहका अपि प्रधानकार्ये उपकुर्वन्ति। केचिदङ्गकार्यम्। यथा स्वामिसंस्काराः प्रयाजादयश्च। तस्मादुपपन्नममन्त्रत्वं, अभिधायकत्वेऽपि मन्त्रानुग्राहकत्वेन स्वयं मन्त्रकार्यकरत्वाभावात्। स्वामिसंस्काराणामिव न प्राधान्यं यथा कार्ये अनुग्राहका अपि स्वामिसंस्कारा न प्रधानं, तथोहादयोऽपि। प्रयोजनं भाष्योक्तं मन्त्रातिपत्तौ यत्प्रायश्चितं तत् अमन्त्रे न भवतीति।

मन्त्राः, नचैवमादायो मन्त्रसमाम्नाये सन्ति, तस्मात् अमन्त्राः । प्रयोजनं, मन्त्रे भ्रष्टे यत् प्रायश्चित्तममन्त्रेषु तन्न ॥

ऋग्लक्षणाधिकरणम् ॥

तेषामृग्यत्रार्थवशेन पादव्यवस्था ॥ ३५ ॥

ऋच इत्यस्ति वेदे,—'अहेबुध्निय मन्त्रं मे गोपाय यमृषय-स्त्रयीविदा विदुः ऋचः सामानि यजूंषि' इति । कथंलक्षणिका ऋचः ? । 'तेषामृग्यत्रार्थवशेन पादव्यवस्था', यत्र पादकृता व्यवस्था स मन्त्र ऋङ्नामा, यथा 'अग्निमीले—इति, एवं जातीयकेषु मन्त्रेषु अभियुक्ता उपदिशन्ति, ऋचोऽधीमहे, ऋचोऽध्या-

---

तेषामृग्यत्रार्थवशेन पादव्यवस्था । केन प्रसङ्गेनेदमायातं ? अनेनेदमायातम् । मन्त्रब्राह्मणशब्दयोः वेदाभिधेयस्यार्थस्य वाच्यतया नियम उक्तः । ऋगादिशब्दैश्च व्यवहारो दृश्यते वेदशब्दाभिधेयार्थ एव । ऋचो यजूंषि सामानीति ऋग्यजुस्सामशब्दैरेवाभिदधाति । अतः को भागः ऋक्शब्देनोच्यते ? को वा यजुश्शब्देन ? को वा सामशब्देनेति ? तत्र ऋक्शब्दाभिधेयप्रदर्शनार्थमिदमारब्धम् ।

---

तेषाम ॥ केन प्रसङ्गेनेदमायातम् ? उत्तरं—अनेनेदमायातम् । मन्त्रब्राह्मणशब्दयोः वेदाभिधेयस्यार्थस्य वाच्यतया नियम उक्तः ऋगादिशब्दैश्च व्यवहारो दृश्यते वेदशब्दाभिधेय एवार्थ ऋचो यजूंषि सामानीत्यृग्यजुस्सामशब्दैरभिदधति वेदशब्दवाच्यमेवार्थम् । तत्राशङ्क्यमापद्यते । अथ को भाग ऋक्शब्देनोच्यते । को वा यजुश्शब्देन, को वा सामशब्देनेति तत्र ऋक्शब्दाभिधेयप्रदर्शनार्थमिदमारब्धम् । प्रसङ्गात् सङ्गतिरित्यर्थः ।

पद्यामः, ऋचो वर्तन्ते इति। यद्यर्थवशेन इत्युच्यते, यत्र यत्र वृत्तवशेन तत्र न प्राप्नोति 'अग्निः पूर्वेभिर्ऋषिभिः' इति। यतो न 'अर्थवशेन,' इति वृत्तादिवशव्यावृत्त्यर्थं, किं तर्हि अनुवाद एव प्रदर्शनार्थः; अवश्यश्चैतदेवं विज्ञेयं, वृत्तादिनिवृत्त्यर्थे सति वाक्यं भिद्येत। तस्मात् यत्र पादकृता व्यवस्था, सा ऋगिति॥

सामलक्षणाधिकरणम्॥

गीतिषु सामाख्या॥ ३६॥

अथ साम्नः किं लक्षणं?। विशिष्टा काचिद्गीतिः सामेत्यु-

---

यत्र पादव्यवस्था स ऋक्शब्दाभिधेयोऽर्थ इति निरूपितम्। अर्थग्रहणं त्वनुवाद इत्युक्तं भाष्यकारेण। कः पुनरयं पादो नाम? गायत्र्यादीनां छन्दसां भागसम्मितोऽक्षरसमूहः पादः।

गीतिषु सामाख्या। प्रगीतो मन्त्रः सामेति वक्तव्ये गीतिषु सामाख्ये त्युच्यते। कथं नाम रथन्तरादयः सामविशेषशब्दाः गीतिविशेषस्य

---

यत्र पादव्यवस्था स ऋक्शब्दाभिधेयोऽर्थ इति निरूपितम्। अर्थग्रहणं चानुवाद इत्युक्तं भाष्यकारेण। तेन वृत्तवशेनापि यत्र पादव्यवस्था सा ऋक्। कः पुनरयं पादो नाम? उत्तरं—गायत्र्यादीनां छन्दसां भागसम्मितोऽक्षरसमूहः पादः तादृशे पादशब्दप्रयोगादभि-युक्तानाम्।

गीतिषु। प्रगीतो मन्त्रः सामेति वक्तव्ये गीतिषु सामाख्येत्युच्यते मन्त्रत्रैविध्ये प्रतिपाद्ये प्रगीतो मन्त्रः सामेति वक्तव्यम्। न गीतिमात्रं सामेति। तथापि गीतिषु सामाख्येत्युच्यते। तत्कथं नाम रथन्तरादयः सामविशेषशब्दा गीतिविशेषस्य

च्यते, प्रगीते हि मन्त्रवाक्ये सामशब्दमभियुक्ता उपदिशन्ति, सामान्यधीमहि, समान्यध्यापयाम:, सामानि वर्तन्ते इति, अभि- युक्तोपदेशश्च नः प्रमाणं; यथा अम्लं दधि, मधुरो गुडः

---

वाचकाः स्युरिति। ननु च गीतिमात्रे नाभियुक्ताः साम- शब्दं प्रयुञ्जते, यतो रथन्तरमधीष्वेत्युक्तः सर्कामेव गीतिमधीते न गीति- मात्रम्। नाक्षरान्तरेष्ववस्थितम्। नाक्षरान्तरेष्वप्यन्यत्र वचनात्। अथायमभिप्रायः—न च पदशून्यं गीतकमस्तीति; सर्का हि गीतिः सामशब्दवाच्या। गीतिस्वरूपाभिव्यक्त्यर्थमक्षरोपादानमिति चेत्, विपरीतं

---

वाचकाः स्युरिति। ये रथन्तरादयः शब्दाः सामविशेषस्य वाचकास्ते कथं गीतिविशेषस्य वाचकाः स्युः इति।

ननु च गीतिमात्रे सामशब्दमभियुक्ता न प्रयुञ्जते यतो रथन्तरमधीष्वेत्युक्तः सर्कां गीतिमधीते लोके न गीतिमात्रम्, न चाक्षरान्तरेष्ववस्थितम्। अक्षरान्तरे पुनः सामतैव नास्ति अन्यत्र वचनात्। अस्यार्थः—यदि गीतिमात्रमेव साम तदा ऋगन्तरेषु चाध्येतव्यम्। न पुनः ऋच्यादरः कर्तव्यः। अक्षरान्तरगतापि गीतिः वाच्यैव। नचैतदुभ- यमपि दृश्यते। किन्तु गीतिविशिष्टां ऋचमेवाधीते यत्र वचनं नास्ति। सति वचने ऋगन्तर- मुपादीयते। तत्र रथन्तरादिशब्दो गीतिमात्रे लाक्षणिको द्रष्टव्यः। अथायमभिप्रायः न च पदशून्यं गीतकमस्ति तेन ऋच्यादर इति। दूषयति—सर्का हि गीतिः सामशब्दवाच्या, ऋगव्यभिचारात् गीतिमात्रे प्रयोगादर्शनान्न गीतिमात्रं सामशब्दाभिधेयम्। किन्तु गीतिवि- शिष्टा ऋक्। गीतिस्वरूपाभिव्यक्त्यर्थमक्षरोपादानमिति चेत् यदिदं रथन्तरमधीष्वेत्युक्ते ऋगुपादानं तद्गीतिस्वरूपाभिव्यक्त्यर्थं, ऋगभावे ऋगन्तरोपादाने वा गीतिस्वरूपं नाभिव्यज्यते

इति, गीतिविशिष्टे तावन्मन्त्रे गीतिशब्दः, गीतिसंबन्धान्मन्त्रे संप्रत्ययः इत्यवगन्तव्यम् ॥

---

तत्, अक्षराभिव्यञ्जिका हि गीतिरिति वक्ष्यामः। अतो गीतिमात्र-वचनत्वे प्रतिभामात्रं सूत्रकारस्य।

अत्राभिधीयते—अन्वयव्यतिरेकावगम्यं हि पदपदार्थनिरूपणम्। तत्र या अभिवती ऋक्समाम्नाये पठ्यते सा न रथन्तरशब्दाभिलप्या। किञ्च रथन्तरबुद्धेरुत्पादिका गीतिः। न पुनः ऋगेव ऋगादिष्वपि प्रयुज्यमाना अध्येतृणां रथन्तरबुद्धिमुत्पादयति। ब्रुवते च रथन्तरमनेन श्लोकेन न गीतमिति। तस्मात् सूक्तं गीतिषु सामाख्येति।

---

तेन नियतर्गुपादानमिति चेत्। दूषयति—विपरीतं तत्। यथाऽक्षराभिव्यञ्जिका गीतिस्तथा नवमे वक्ष्यामः। अतो गीतिमात्रवचनत्वे प्रतिभामात्रं सूत्रकारस्य। अत्राभिधीयते —अन्वयव्यतिरेकगम्यं हि पदपदार्थनिरूपणम्। तत्र या अभिवती ऋक्समाम्नायते पठ्यते सा न रथन्तरशब्दाभिलप्या। किञ्च रथन्तरबुद्धेः उत्पादिका गीतिः न पुनः ऋगेव ऋगादिष्वपि प्रयुज्यमाना अध्येतृणां रथन्तरबुद्धिमुत्पादयति। ब्रुवते च रथन्तरमनेन लोकेन न गीतमिति। तेन ऋचं विनापि गीतौ रथन्तरशब्दप्रयोगात् गीतिं विनापि च केवलायां ऋच्यप्रयोगात् गीतिरेव रथन्तरशब्दवाच्या। यत्तु रथन्तरमधीष्वेत्युक्ते नियतामेव योनिमुपादत्ते तत् सौकर्यात्। तस्यां हि तदभ्यस्तं, ऋगन्तरोपादाने च संशरविलेशौ विकारभूतौ कौचिदापद्येते। नचाश्रुतो विकार आश्रयितुं न्याय्य इति योनेरादरात्। तस्मात् सूक्तं गीतिषु सामाख्येति।

यजुर्लक्षणाधिकरणम् ॥

शेषे यजुः शब्दः ॥ ३७ ॥

अथ यजुषः किं लक्षणम् ? इति । यजुषो लक्षणं न वक्तव्यं ऋग्लक्षणसामलक्षणाभ्यामेव यजुर्विज्ञास्यते वैपरीत्येन, या न गीतिर्न च पादबद्धं, तत् प्रश्लिष्टपठितं यजुः इति ॥

निगदानां यजुष्ट्वाधिकरणम् ॥

अथ निगदो नाम किं यजूंषि उत यजुषोऽन्यः ? इति,

निगदो वा चतुर्थं स्याद्धर्मविशेषात् ॥ ३८ ॥

निगदाः न यजूंषि । कुतः ? । धर्मविशेषात्, 'उच्चैः ऋचा क्रियते, उच्चैः साम्ना, उपांशु यजुषा, उच्चैर्निगदेन' इत्येष

---

शेषे यजुःशब्दः । गीतिपादबद्धाभ्यां यदन्यन्मन्त्रजातं तद्यजुः अनयोः यल्लक्षणं तच्छून्यतैव लक्षणं यजुषः । कथितः त्रिविधो मन्त्रः ऋचो यजूंषि सामानीति ।

निगदो वा चतुर्थं स्यात् । उक्तं ऋचो यजूंषि सामानीति त्रिविधा मन्त्राः । अयमपरः चतुर्थो व्यपदेशः श्रूयते निगदा इति ।

---

शेषे ॥ गीतिपादबद्धाभ्यां यदन्यन्मन्त्रजातं तद्यजुः । अनयोः पुनर्लक्षणं तच्छून्यतैव यजुषो लक्षणम् । ऋक्सामव्यतिरिक्तो मन्त्रो यजुश्शब्देनोच्यते । उक्तास्त्रिप्रकारा मन्त्राः ऋचो यजूंषि सामानीति ।

निगदो वा । अवान्तरसङ्गतिं वदन् पूर्वपक्षमाह— उक्तमेतत् ऋचो यजूंषि सामानीति त्रिविधा मन्त्रा इति । अयमपरश्चतुर्थो व्यपदेशः श्रूयते निगदा इति । ननु वेदे व्यपदेशो न श्रूयते "यमृषयस्त्रैविदा विदुः ऋचस्सामानि यजूंषि" इत्येतावन्मात्रश्रवणात् इत्यत्राह

धर्मविशेषः, उच्चैर्निगदेन इत्यनूद्यते, यदि यजुषो निगदत्वं स्यात्, न च तस्योच्चैस्त्वं धर्मो दृश्येत। दृश्यते तु तस्माच्चतुर्थं मन्त्रजातं निगदो नाम ॥

व्यपदेशाच्च ॥ ३९ ॥

व्यपदेशोऽपि भवति,—यजूंषि वर्तन्ते, न निगदाः; निगदा वर्तन्ते, न यजूंषि इति; तस्मादपि मन्त्रान्तरम् ॥

यजूंषि वा तद्रूपत्वात् ॥ ४० ॥

यजूंष्येव वा निगदाः। कुतः?। 'तद्रूपत्वात्', तदेवैषां रूपं, यत् यजुषां प्रश्लिष्टपाठः, ऋक्सामलक्षणविलक्षणता च ॥

वचनाद्धर्मविशेषः ॥ ४१ ॥

'वचनात्' प्रत्यायनसामर्थ्यात्, अस्ति हि पुरुषान्तरप्रत्यायनसामर्थ्यं केषाञ्चित् यजुषाम् ॥

अर्थाच्च ॥ ४२ ॥

अस्ति च तैः पुरुषान्तरैः प्रत्यायितैः प्रयोजनं, नोपांशुच्चार्य-

---

एवमध्येतारो व्यपदिशन्ति निगदा वर्तन्ते न यजूंषि, यजूंषि वर्तन्ते न निगदा इति। उपांशुत्वेन प्रयोगो नेष्यते निगदानाम्। किमिति

---

—एवमध्येतारो व्यपदिशन्ति- निगदा वर्तन्ते न यजूंषि, यजूंषि वर्तन्ते न निगदा इति। यद्यपि वेदे न श्रूयते तथाप्यध्येतृव्यपदेशः श्रूयत एव तेन ते यजुर्भ्योऽन्ये निगदा इति गम्यते। युक्त्यन्तरं चाह—उपांशुत्वेन प्रयोगो नेष्यते निगदानाम्। यदि ते यजूंषि भवेयुस्तदा तेषामुपांशुत्वं प्रसज्येत, यजुषां उपांशु यजुषेत्युपांशुत्वविधानात्। राद्धान्तैकदेश्याह-किमित्युपांशुत्वं

माणाः पुरुषान्तरं प्रत्याययेयुः; तस्मात् धर्मविशेषोऽर्थवान्; यानि च यजूंषि उच्चैरुच्चार्यन्ते ते निगदाः। कुतः?। निशब्दः प्रकर्षस्य वक्ता, यथा प्रकर्षेण रक्तं नितरां रक्तम् इत्युच्यते; गदतिर्गदनार्थः पाठवचनः; एष एव हि प्रकर्षो यदुच्चैस्त्वावच्छिन्नत्वम्। ननु वाचनिको गुणो यजुषामुपांशुत्वम्। नेति ब्रूमः,—गुणो नाम स भवति, यः स्वकार्यं कुर्वतामुपकारे वर्तते, न च परसंबोधनार्थानां यजुषामुपांशुत्वं साहाय्ये वर्तते, तद्धि स्वकर्मक्रियाविघात करोति, तेन पुरुषान्तरसम्बोधनार्थमुच्चैस्त्वं गुणः। इतरार्थन्तु वचनं भविष्यति, इतराणि यानि यजूंषि न परसम्बोधनार्थानि, तेषु उपांशुत्वं निवेक्ष्यते॥

गुणार्थो व्यपदेशः॥ ४३॥

अथ यदुक्तं व्यपदेशः इति, स चैकत्वेऽपि गुणतो भवति, यथा इतो ब्राह्मणा भोज्यन्ताम्, इतः परिव्राजकाः इति;

---

नेष्यते? वचनात्। कार्यस्यासिद्धेर्नेष्यत इति स्यात्, न; वचनपूर्वकत्वात कार्यस्य। अत एवेदं चतुर्थं मन्त्रजातमिष्यते। माभूत कार्यविरोधो वचनस्य

---

निगदानां **नेष्यते** उपांशु यजुषेति श्रवणात। कार्यस्य पुरुषान्तरबोधनलक्षणस्यासिद्धेरुपांशुत्वं निगदानां **नेष्यते** इति चेत् नोपांशुत्वेऽपि वचनस्यासिद्धिः। **वचनपूर्वकत्वात् कार्यस्य** परसंबोधनमेव निगदानां कार्यं न भवति। यद्यपि तेषां स्वरूपमात्रालोचनया तत्कार्यं प्रतिभाति तथापि वाचनिकोपांशुत्वधर्मयोगात तत्कार्यमसंभाव्यमानतया त्यज्येत। अन्यच्च कल्प्येत वैदिके व्यवहारे वचनमूलमेव कार्यं यतः पूर्वपक्ष्याह—यत एव वचनबलेन यजुरपेक्षे लैङ्गिककार्यबाधः **अत एवेदं चतुर्थं मन्त्रजातमिष्यते माभूत् कार्येण सह वचनविरोध इति**। चतुर्थे हि मन्त्रजाते उपांशुत्वाप्रसक्तेः कार्येण सह वचनविरोधो न भवति।

एवमुच्चैस्त्वेन गुणेन तान्येव यजूंषि व्यपदिश्यन्ते, निगदाः इति ॥

सर्वेषामिति चेत् ॥ ४४ ॥

यदि य उच्चैर्गद्यते स निगदः, ऋगपि निगदः प्राप्नोति ॥

न, ऋग्व्यपदेशात् ॥ ४५ ॥

न ऋचो निगदाः व्यपदिश्यन्ते, 'अयाज्या वै निगदा ऋचैव यजन्ति' इति पृथक्त्वनिमित्ता हि व्यपदेशा भवन्ति। उच्यते,

अजहत्स्वार्थं वचनमिति स्थितम्। ननु चोच्चैर्निगदेनेत्यपि वचनमस्ति। अयमपरो दोषः अविभागे हि विकल्पः प्राप्नोति।

---

अतोऽविरोधसिद्ध्यर्थं चतुर्थं मन्त्रजातमिष्यते। ननु भवतु विरोधः बाध्यतां च कार्यं वचनबलेनेत्यत्राह—**अजहत्स्वार्थं च वचनमिति स्थितम्।** यो यस्य स्वार्थं कार्यं सोऽनहद्यस्मिन् वचने तदजहत्स्वार्थं वचनमिति स्थितम्। यथा गोदोहनादिवचनं दोहनादिकार्यापरित्यागेनैव वर्ण्यते, तथाऽत्रापि वर्णना युक्ता। **ननु चोच्चैर्निगदेनेति वचनमस्ति।** तेन वचनेन विशेषविषयेण सामान्यविहिते उपांशुत्वे बाधिते सति कार्यस्यापि विरोधो नास्ति। तेन भवतु यजुष्ट्वं तथापि न कश्चिद्दोषः। परिहरति—**अयमपरोऽस्य दोषः। अविभागे हि विकल्पः प्राप्नोति।** यो वादी यजुष्ट्वं निगदानामिच्छति तस्य तावत्कार्येण सह विरोधलक्षणो दोषोऽस्ति उपांशु यजुषेत्यनया तावत्प्राप्त्या कार्यं विरुद्ध्यते। यदि परं तस्यां बाधितायां कार्यस्याविरोधः। अपरोऽपि तस्यायं दोषोऽस्ति। यजुर्भ्यो निगदानामविभागे अभेदे विकल्पः प्राप्नोति। उपांशुत्वोच्चैष्ट्वयोः वचनद्वयेन समर्पितत्वात्। न च पदादिभिरिवाहवनीयस्य उपांशुत्वस्योच्चैष्ट्वेन बाधः। उपांशुत्वविधिसापेक्षत्वादुच्चैष्ट्वविधेः यावदुपांशुत्वविधिर्नाश्रीयते तावत परसंबोधनकार्यनिबन्धनमुच्चैष्ट्वं प्राप्तमेवेति न विरोधावकाशः। तेन

व्यपदेशो लिङ्गं, प्राप्तिरुच्यताम् इति। अपादबद्धे गदतिर्वर्तते, अपादबद्धो हि गद्यः इत्युच्यते॥

---

तस्मात् सिद्धं निगदो वा चतुर्थं स्यादिति। अत्राभिधीयते। नेदं चतुर्थं मन्त्रजातम्। यजूंष्येव निगदाः अपादबद्धत्वादप्रगीतत्वाच्च। व्यपदेशश्चैव-मुपपद्यते। यदुक्तं व्यपदेशादन्यत्वमिति तत् प्रकर्षाभिधानात्परिहृतम्। यदु-क्तमुपांशुत्वं वचनादिति तदप्युच्चैर्निगदेनेति प्रकर्षाभिधानोपपत्तेः परिहृतम्।

---

वचनबलेन कार्ये प्राप्ते उच्चैष्ट्वे निराकृते वचनस्यावकाश इति। तदपेक्षत्वान्नैकान्ततः उपांशुत्वस्य बाधः। वाचनिकप्राप्त्युपजीवनेनोच्चैष्ट्वविधिरिति। तस्माद्विकल्पपरिहाराय चतुर्थं मन्त्रजातमिष्य-ताम्। तस्मिंश्च पक्षे उच्चैर्निगदेनेति वचनमनुवादकम्। उपसंहरति—तस्मात्सिद्धं निगदो वा चतुर्थं मन्त्रजातं स्यात् इति।

**अत्राभिधीयते—नेदं चतुर्थं मन्त्रजातं यजूंष्येव निगदाः अपादबद्धत्वात् अप्रगीतत्वाच्च। त्रयीव्यपदेशश्चैवमुपपद्यते,** अन्यथा चतुष्टयी स्यात्।

**यदुक्तं व्ययदेशादन्यत्वमिति तत्प्रकर्षाभिधानात् परिहृतम्।** तदन्यत्वं भाष्य-कारेण प्रकर्षं व्यपदेशहेतुमभिधाय परिहृतं निराकृतम् प्रकर्षलक्षणधर्मयोगेन सत्यपि यजुष्ट्वे व्यपदेशभेदो युज्यत एवेति। **यदुक्तं उपांशुत्वं वचनात् प्राप्नोतीति तदप्युच्चैर्निगदेनेति प्रकर्षाभिधानोपपत्तेः परिहृतम्।** गोबलीवर्दवत्। यथा गोपदं बलीवर्दसन्निधाने तदतिरिक्त-व्यक्तिपरमेवावतिष्ठते तथोपांशु यजुषेत्यत्रापि यजुश्शब्दः सन्निहितउच्चैर्निगदेनेत्येतच्छ्रुत्युप-निपातमात्रेणैतत्परित्यागेन विशेषान्तरमुपलभते। इयं च लौकिकी व्युत्पत्तिः तेन कार्यप्राप्ते उच्चैष्ट्वेऽनिरस्ते वचनमिदमुच्चैर्निगदेनेति अनुवादवाक्यमित्यभिप्रायः। अक्षरार्थस्तु यदप्युपांशुत्वं पूर्वपक्षे उक्तं तदपि उच्चैर्निगदेन कर्म क्रियते इत्येतादृशस्य प्रकर्षस्य यदभिधानं कृतं तस्योपपन्नत्वात् परिहृतं गोबलीवर्दयोरिव। यदि निगदः उच्चैः पठ्यते तदा ऋगेव किमिति

एकवाक्यत्वलक्षणाधिकरणम् ॥

अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् ॥ ४६ ॥

अथ प्रश्लिष्टपठितेषु यजुष्षु कथमवगम्येत इयदेकं यजुरिति ? । यावता पदसमूहेनेज्यते, तावान् पदसमूहः एकं यजुः । कियता चेज्यते ? यावता क्रियाया उपकारः प्रकाश्यते, तावत् वक्तव्यत्वात् वाक्यम् इत्युच्यते ; तेनाभिधीयते,— अर्थैकत्वादेकं वाक्यम् इति, एतस्माच्चेत् कारणादेकवाक्यता भवति ; तस्मादेकार्थः पदसमूहो वाक्यं, यदि च विभज्यमानं साकाङ्क्षं पदं भवति । किं उदाहरणम् ? देवस्य त्वा सवितुः प्रसवे इति । ननु पदं पदमत्रैकार्थम् । सत्यं, नतु तद्विभागे

---

गोबलीवर्दवत् । न चोचैष्ट्येन ऋक्त्वं अपादबद्धत्वादित्युक्तम् । तस्मात् सिद्धं ऋचो यजूंषि सामानीति ।

अर्थैकत्वादेकं वाक्यम् । उक्तं त्रिप्रकारो मन्त्र इति । पाठादेव ज्ञातपरिमाणं द्विविधं मन्त्रजातम् । यजूंषि पुनः पाठात् परिमाणतः न शक्यन्ते ज्ञातुं कियदेकं यजुरिति ।

---

न भवतीत्यत्राह—नचोच्चैष्ट्येन ऋक्त्वं निगदानां, अपादबद्धत्वादित्युक्तं पूर्वम् । तस्मात्सिद्धं ऋचो यजूंषि सामानीति मन्त्रा इति ।

अर्थैकत्वाद् । ननु यथा ऋचः सामानि च पाठत एव परिमाणतो ज्ञायन्ते तथा यजूंषि । कथमिदमुच्यते इत्यत्राह—उक्तं त्रिप्रकारो मन्त्रः । पाठादेव ज्ञातपरिमाणं द्विविधं मन्त्रजातं ऋचः सामानि च । यजूंषि पुनः पाठतः परिमाणतो न ज्ञातुं शक्यन्ते इति कियदेकं यजुरिति । परिमाणज्ञानोपायाभावान्न शक्यते वक्तुं इयदेकं

साकाङ्क्षम्। न तर्ह्यर्थैकत्वमुपपद्यते। बहुत्वात्पदार्थानाम्, पदसमुदायस्य च पृथगर्थो नास्ति इत्युक्तम्। भेदः संसर्गो वा वाक्यार्थः इति यद्युच्यते, तथाप्येकार्थता न स्यात्, बहुपदे भेदानां संसर्गाणां च बहुत्वात्। एकप्रयोजनत्वादुपपन्नम्, यथा

---

ननु विनियोगाद्यजूंष्यपि ज्ञातुं शक्यन्ते परिमाणतः। इषेत्वेत्याच्छिनत्ति ऊर्जेत्वेत्यनुमार्ष्टि इति। मैवम्। विनियोगाद्धि तादर्थ्यमवसीयते न परिमाणम् तदर्थोऽयं प्रयासः ज्ञातपरिमाणविनियोगादैदमर्थ्यम्। ननु चेति शब्दःपूर्वोक्तस्य करणतामापादयति। कस्य पूर्वोक्तस्य ? वर्णस्य वेति न विद्मः। न चार्थसंबन्धादृते वर्णो वर्णस्यान्वयी भवति पदं वा पदस्य।

---

यजुरिति। अत इदमारब्धम्। **ननु विनियोगाद्यजूंष्यपि ज्ञातुं शक्यन्ते परिमाणतः इषेत्वेति शाखामाच्छिनत्ति। ऊर्जेत्वेत्यनुमार्ष्टि इति।** यावत एकत्र विनियोगस्तावदेकं यजुरिति विनियोगवशेन यजुः परिमाणं ज्ञातुं शक्यते। परिहरति—मैवं विश्वसीः। **विनियोगाद्धि तादर्थ्यमवगम्यते न परिमाणं तदर्थश्चायं प्रयासः,** न तादर्थ्यपरिज्ञानार्थः। ननु यावतो विनियोगस्तदैदमर्थ्यं तावदेकं यजुरिति अत्राह—**ज्ञातपरिमाणस्य विनियोगादैदमर्थ्यम्।** नैदमर्थ्यात् परिमाणज्ञानम्। **ननु चेतिशब्दः पूर्वोक्तस्य करणतामापादयति।** तेन यत्पूर्वमुक्तं तस्य इतिशब्देन करणतया विनियोगः। तेन ज्ञायत एवेयतो विनियोगः इति। यावतश्च विनियोगः तावदेकं यजुरिति। परिहरति—**कस्य पूर्वोक्तस्य वर्णस्य पदस्य वाक्यस्य वेति न विद्मः।** सत्यम्। पूर्वोक्तस्य इतिशब्दः करणतामापादयति। तदेव पूर्वोक्तं न ज्ञायते किं वर्णं पदं वाक्यं वेति। ननु यावतः परस्परसंबन्धः तावतः पूर्वोक्तस्य करणता इतिशब्देनोच्यते इत्यत्राह—**नचार्थसंबन्धादृते वर्णो वर्णस्यान्वयी भवति। पदं वा पदस्य।** यदि ह्यर्थसंबन्धव्यतिरेकेण वर्णानां परस्परसंबन्धो भवेत् तदा

तावत् 'देवस्य त्वा' इति निर्वापप्रकाशनं, तस्य विशिष्टस्य वाचक एतावान् पदसमूहः, तत् वाक्यम्। नन्वत्र 'देवस्य त्वा सवितुः प्रसवे निर्वपामि' इत्येकं वाक्यं, 'अश्विनोर्बाहुभ्यां निर्वपामि' इत्यपरम्, एवं बहूनि वाक्यानि। यदि निर्वपामि इत्यनुषङ्गः, ततो बहूनि वाक्यानि, न त्वेवमनुषङ्गो भवति, यदि गुणभूतो निर्वपामीति, तदा प्रतिप्रधानं भिद्येत। न च

---

तस्मात् तस्यैकस्य पूर्वोक्तस्येतिशब्दः करणतामापादयति। स त्वन्यतो विज्ञेयो वर्णपदवाक्यतया। न ह्यर्थादृते वर्णव्यतिरेकेण शक्यते वर्णसमूहस्येति शब्दसंबन्धो वक्तुम्। ननु च ब्राह्मणवाक्यवत् मन्त्रवाक्यमपि एकवाक्यतयाऽवसीयते। सत्यं, यदि स्वतन्त्रादर्थप्रतिपत्तिः स्यात्। विनियोगसव्यपेक्षं हि मन्त्राणामर्थप्रतिपादनसामर्थ्यमित्युक्तं मन्त्राधिकरणे।

---

अर्थैकत्वादित्यतोऽन्यत् उपायान्तरमेकयजुष्ट्वे भवेत्। न चैतदस्ति। तस्मात् तस्यैकस्य पूर्वोक्तस्य करणतामापादयति इतिशब्दः स त्वन्यतो विज्ञेयो वर्णपदवाक्यतया। अतिशयमाह न ह्यर्थादृते शक्यते वर्णव्यतिरेकेण वर्णसमूहस्येति शब्दसंबन्धो वक्तुम्। अस्यार्थः -इतिशब्दसंबन्धेन करणतया विनियोगः। स चेतिशब्दसंबन्धः एकस्यैव वर्णस्य प्रतीयते। न वर्णसमूहस्य। अर्थावच्छेदं विना समूहानुपपत्तेः। तस्मादितिशब्देन वर्णस्यैव विनियोगोऽर्थावच्छेदमन्तरेण स्यात्। ननु च ब्राह्मणवाक्यवन्मन्त्रवाक्यमप्येकवाक्यतयाऽवसीयत एव। यथा ब्राह्मणमेकार्थप्रतिपादकतया एकवाक्यमवसीयते तथा मन्त्रवाक्यमपि। किमत्र परिमाणज्ञानाय प्रयत्नेन। परिहरति—सत्यं यदि स्वतन्त्रान्मन्त्रादर्थप्रतिपत्तिः स्यात् ब्राह्मणादिवत्। विनियोगसव्यपेक्षं तु मन्त्राणामर्थप्रतिपादनमित्युक्तं मन्त्राधिकरणे। तेन यावतो विनियोगो यस्मिन्नर्थे तावतस्तदर्थप्रतिपादकत्वं; ततश्चैयतो विनियोग इत्यन्यतो विज्ञेयम्।

निर्वापो देवस्य त्वेत्येवमादीनामर्थेनोच्यते, साधनप्राधान्ये हि अदृष्टार्थता वचनस्य स्यात्। निर्वापे पुनः प्रधाने दृष्टं कार्यं निर्वापप्रकाशनं, तत् सर्वैर्विशेषणैर्विशिष्टमुच्यते; तस्मात् अविरोधः। यथा च पदं पदेन विशेष्यते तथोक्तं तद्भूताना-मिति; तस्मादेकं वाक्यम्।

अथ किमर्थमुभयं सूत्रितम्, अर्थैकत्वात् इति च विभागे

---

एवं चेत् ऋचोऽपि विनियोगापेक्षत्वादर्थस्य अर्थपरत्वाच्च मन्त्राणा-मन्यत एव परिमाणावगतिः। सत्यमर्थपरिज्ञानमन्यतः। परिमाणं तु छन्दसः सकाशाद्विज्ञायत इत्युक्तम्। तस्मात्कियद्वाक्यं यजुरित्ये-(वम्)तावानस्य व्यापारः। सामानि तु गीतकान्यभियुक्तैः परिमाणतः स्मर्यन्ते तदिदं परिमाणलक्षणं यजुषामुच्यते। अर्थैकत्वात् साकाङ्क्षत्वाच्चेति। किमिदं अर्थैकत्वं? अनुष्ठेयस्य स्मरणम्। एवं तर्हि पदं पदमात्र-

---

ज्ञाते च तस्मिन् तावत एकार्थत्वमिति। अत्र चोदयति—एवं चेद्यदि विनियोगादर्थप्रकाशनं मन्त्राणां तदा ऋचोऽपि विनियोगापेक्षत्वात् अर्थस्य, अर्थपरत्वाच्च मन्त्राणां अन्यत एव परिमाणावगतिरिति इयतो विनियोग इति। ततश्च यजुर्मात्रविषयोऽयं विचारो न युक्तः। उत्तरं—सत्यं अर्थपरिज्ञानमन्यतः। ऋचामपि परिमाणं तु छन्दसः सकाशाद्विज्ञेयमि-त्युक्तम्। छन्दोवशेन हि ऋक्परिमाणनिश्चयः। तस्मात् कियद्वाक्यं यजुरित्येतावानस्य व्यापारः। अर्थवशेन हि यजुषः परिमाणं न ऋच इत्यर्थः। सामानि तु गीतकान्यभियुक्तैः परिमाणतः स्मर्यन्ते। तेन तेष्वपि परिमाणज्ञानोपायान्वेषणं नास्ति। तस्मादिदं परिमाणलक्षणं यजुषामुच्यते, अर्थैकत्वात्, साकाङ्क्षत्वाच्चेति। किमिदमर्थैकत्वं? उत्तरं-अनुष्ठेयस्य पदार्थस्य स्मरणमेकोऽर्थः। यद्यनुष्ठेयस्मरणमत्रैकोऽर्थस्तर्हि पदं पदमात्र-

साकाङ्क्षत्वात् इति च, ? उच्यते, भवति किञ्चिदेकार्थं, न तु विभागे साकाङ्क्षं, यथा 'भगो वां विभजतु, अर्यमा वां विभजतु' इति एकार्थाः सर्वे विभागमभिदधति। ननु भगविशिष्टाद्विभागादर्यमविशिष्टोऽन्यो विभागः। नेत्युच्यते, विभागसामान्येनास्य प्रयोजनं, न विशेषेण, सामान्ये हि दृष्टोऽर्थो भवति, न विशेषे, विभागे तु न साकाङ्क्षम्; तस्मा-

---

देकार्थमेकं वाक्यं; पदेन पदेन ह्यनुष्ठेयस्य स्मरणं न वाक्येन। ननु चानन्वितस्य पदाभिधेयता नास्तीत्युक्तं, एवं तर्हि द्वयोर्द्वयोरेकार्थत्वं पदार्थेन हि पदार्थोऽन्वीयते न पदार्थसमुदायेन। उपपद्यते चैतल्लक्षणम् अर्थैकत्वात् साकाङ्क्षत्वाच्चेति। एवं तर्हि प्रयोजनवाच्योऽयमर्थशब्दः परिगृह्यते न प्रतिपाद्यवाची। कथं तर्हि साकाङ्क्षत्वम् ?

---

मेकं वाक्यम्। एकमेव हि पदं स्वमर्थं स्मारयति। तदाह—पदेन पदेन ह्यनुष्ठेयस्मरणं न वाक्येन। समाधाता एकदेशी चोदयति—ननु चानन्वितस्य पदाभिधेयता नास्ति इत्युक्तम्। नचान्विताभिधानं द्वितीयार्थोपादानमन्तरेण। नच पदान्तरव्यतिरेकेण पदार्थान्तरोपस्थापनमिति वाक्येनैवार्थप्रकाशनम्। आक्षेप्ता आह—एवं तर्हि द्वयोर-र्थयोर(न)न्वितयोः एकार्थत्वम्। पदार्थेन हि पदार्थोऽन्वीयते न पदार्थसमुदायेन। उपपद्यते चैतत् सूत्रकारीयमपि मन्त्रलक्षणं अर्थैकत्वात् साकाङ्क्षत्वाच्चेति। तेन सूत्रकारस्यापि द्वयोर्द्वयोरेकवाक्यत्वं सम्मतम्। समाधाता आह—एवं तर्हि प्रयोजनवाच्योऽयमर्थशब्दः परिगृह्यते। प्रयोजनं वाच्यं यस्य सः प्रयोजनवाच्यः। न प्रतिपाद्योऽर्थशब्देनोच्यते। यावतामेकं प्रयोजनं तावदेकं वाक्यमित्यर्थः। यदि प्रतिपाद्योऽर्थो नाभिमतः कथं तर्हि साकाङ्क्षत्वं, न हि देवस्येति पूष्ण इत्याकाङ्क्षं भवति। भवति तु तेन शब्देनैकप्रयोजनत्वं

द्भिन्नमिदं वाक्यं विभागे विकल्प्यते। तथा 'स्योनं ते सदनं कृणोमि घृतस्य धारया सुसेवं कल्पयामि; तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः' इति विभागे साकाङ्क्षम् द्वे तु प्रयोजने क्रियेते, सदनकरणं पुरोडाशप्रतिष्ठापनञ्च। तस्मात् भिन्ने वाक्ये, पूर्वं सदनकरणे विनियुज्यते, उत्तरं पुरोडाशप्रतिष्ठापने; तस्मात्सम्यक् सूत्रितं, न सूत्रोपालम्भो भवति ॥

वाक्यभेदाधिकरणम् ॥

समेषु वाक्यभेदः स्यात् ॥ ४७ ॥

---

उच्यते। द्वयोर्द्वयोः संबन्धः। एवं चेदुपपन्नमेव साकाङ्क्षत्वम्। किन्तु प्रधानपदेन सकलं पदजातमभिसंबध्यते प्रयोजनं च प्रधानमित्युच्यते। तस्मात् प्रयोजनवाच्येऽपि सिद्धं साकाङ्क्षत्वम्। किमर्थमुभयं सूत्रितम्। उक्तं भाष्यकारेण।

समेषु वाक्यभेदः स्यात्। यत्रेदानीं विध्यन्तर-

---

मिलितं चैकवाक्यत्वे कारणम्। अतः कथमत्रैकवाक्यता। उच्यते—द्वयोर्द्वयोः संबन्धः तेन विभागेऽस्त्येव साकाङ्क्षत्वम्। एवं चेदमुपपन्नमेव साकाङ्क्षत्वम्। येन सह यस्य संबन्धः तस्य यदि विभागे साकाङ्क्षत्वं एवं चेदुपपन्नमेव साकाङ्क्षत्वं भवति तदा अर्थैकत्वेनैकवाक्यतेत्यर्थः। किन्तु प्रधानपदेन न गुणभूतं सकलं पदजातमभिसंबध्यते न गुणभूतेन भवत्येकार्थत्वम्। तस्मात् प्रयोजनवाच्येऽर्थशब्दे सिद्धं साकाङ्क्षत्वम्। किमर्थमुभयं सूत्रितमित्यत्रोक्तं भाष्य एव प्रयोजनम्।

समेषु। ननु कथमत्रैकाधिकरण्यं यतः इषेत्वेत्युदाहरणेऽध्याहारापेक्षत्वेन पूर्वपक्षकरणं वत्सीरित्युदाहरणे तु अदृष्टार्थतया इत्याशङ्क्यैकाधिकरणतां समर्थयते—यत्रेदानीं विध्यन्तर-

'ईषे त्वा, ऊर्जे त्वा' इति, तथा 'आयुर्यज्ञेन कल्पतां, प्राणो यज्ञेन कल्पताम्' इति; अत्र सन्देहः,—किमेवमादिषु भिन्नं वाक्यमुतैकमिति ? एकमिति ब्रूमः, इषे त्वेत्येवमुक्ते न किञ्चित् दृष्टं प्रयोजनं, तथा ऊर्जे त्वेत्यपि च, वचनसामर्थ्यादत्राहृष्टं, तदुभाभ्यामेकं कल्पयितुं न्याय्यम्, एवमल्पीयसी अदृष्टानुमानकल्पना भविष्यति ; तस्मादेकं वाक्यम् ।

एवं प्राप्ते ब्रूमः,—समेषु वाक्यभेदः स्यात्, समेषु परस्परानाकाङ्क्षेषु वाक्यं भिद्यते, ईषे त्वेत्यनेन एकोऽर्थः क्रियते, उर्जे त्वेत्यनेनापरः । ननु इदानीमेवोक्तं नात्र दृष्टोऽर्थः इति । यद्यपि प्रत्यक्षादिना प्रमाणेन नोपलभ्यते, श्रुत्या तु गम्यते,

---

विहितप्रयोजनसंबन्धो नास्ति यजुषश्चैकार्थत्वं विनियोगादित्युक्तम् ; तत्र किं तत एव विनियोगादेकार्थत्वं उतान्यतो मृग्यम् ।

---

विहितप्रयोजनसंबन्धो नस्ति यजुषश्चैकार्थत्वं विनियोगादित्युक्तम् । तत्र किं तत एव विनियोगादेकार्थत्वं, उतान्यतो मृग्यमिति । अयमभिप्रायः—उभयस्मिन्नुदाहरणे शास्त्रान्तरविहितप्रयोजनसंबन्धो नास्ति । (न तर्हि) [यदि] इषेत्वेत्याच्छिनत्ति, उर्जेत्वेत्यनुमार्ष्टि इनि श्रूयते तदा स्यादेव[1] यजुषां विभागः । तथा 'आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पताम् इत्यपि यदि शास्त्रान्तरविहितोऽनुष्ठेयविभागः श्रूयते तत एकेन पदार्थप्रकाशनं कृतमिति यजुर्भेदः स्यात् । अत्र त्वदृष्टार्थं क्लृप्त्यर्थप्रकाशनमित्येकेन कृतार्थता न शक्यत इति न भेदे प्रमाणमस्ति । तेन शास्त्रान्तरविहितप्रयोजनाभावतुल्यतया एकाधिकरणत्वमिति । अक्षरार्थस्तु यत्र शास्त्रान्तरविहितं यत्प्रयोजनं तन्न श्रूयते यजुषश्चैकार्थत्वं विनियोगात् । यावतां एकत्र विनियोगः तावतां एकार्थत्वमित्युक्तम् । तत्र किं तत एव विनियोगादेकार्थत्वं

---

(1) G. तस्यादेव

'ईषेत्वेति छिनत्ति, ऊर्जे त्वेत्यनुमार्ष्टि' इति। तथा 'आयुर्यज्ञेन कल्पतां, प्राणो यज्ञेन कल्पताम्' इत्यायुः क्लृप्तेरन्या प्राणक्लृप्तिः। ननु सामान्यमात्रमिष्टं तत् न विशेषणभेदात् भेदमर्हतीति, यथा 'अग्नये जुष्टं निर्वपामि' इति निर्वाप एकस्तस्य विशेषाः सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पुष्णो हस्ताभ्याम्' इति, न तेषां भेदान्निर्वापस्य भेद इष्यते, एवमिहापि क्लृप्तिर्नामैकोऽर्थः, नासावायुरादिभिर्विशेषैर्भिन्नो

---

पूर्वपक्षवादिनोऽभिप्रायः—यजुष एव एकार्थता युक्ता न विनियोगतः पारार्थ्यमात्रपर्यवसानाद्विनियोगस्य। य(द्य)दीषेत्वेत्यत्राध्याहारादेकार्थत्वं एवमूर्जेत्वेत्येवमादिसहितस्यापि। तस्मादेकं वाक्यम् प्रतिपत्तिप्रयोजनं गुणप्रधानभावो भविष्यति ऋचामिव कार्यान्तरे प्रयुज्यमानानामिति।

---

उतान्यतो मृग्यमिति। **पूर्वपक्षवादिनोऽभिप्रायः-यजुष एवैकार्थता युक्ताऽवगन्तुं न विनियोगतः** [1]**पारार्थ्यमात्रपर्यवसानाद्विनियोगस्य।** अस्यार्थः। यजूंषि तावत् प्रश्लेषपरिपठितानि। तत्र विनियोगेऽपि यावत् प्रश्लेषोऽनुगृह्यते तावदेकं वाक्यं युक्तम्। न च विनियोगस्य कस्यचिद्विरोधः। तादर्थ्यमात्रपर्यवसानात्। कल्प्यं च प्रयोजनपदं तत्र [2]**यदि इषेत्वेत्यध्याहारादेकार्थत्वम्। एवमूर्जेत्वेत्येवमादिसहितस्यापि। तस्मादेकं वाक्यम्।** नन्वेवमुभाभ्यामध्याहाराभ्यां परिपूरितं वाक्यमुभयत्र प्रयोज्यम्। तत्रैकस्मिन् वाक्ये युक्तः एकस्यैवाध्याहारस्य संबन्धः। अपरस्य का गतिरित्यत्राह—**प्रतिपत्तिप्रयोजनं च वाक्यार्थे गुणप्रधानभावो भविष्यति ऋचामिव कार्यान्तरे प्रयुज्यमानानामिति।** यद्यद्वा प्रकाश्यते तत्तदा प्रधानभूतं इतरच्च गुणभूतं यथा ऋचां कार्यान्तरे विनियुज्यमानानां योऽर्थोऽविनियोजकः स प्रधानभूतः अन्यद्गुणभूतम्।

---

(1) G. परार्थं (2) R. यथा

भविष्यतीति । उच्यते, इह 'कृत्स्नीर्वाचयति' इति बह्व्यः कृत्स्नयः श्रूयन्ते, ताश्च वक्तव्याः, तत्रैकामायुः कृत्स्निम् 'आयुर्यज्ञेन कल्पताम्' इत्येष मन्त्रः शक्नोति वदितुं, प्राणो यज्ञेन कल्पता-

---

अत्राभिधीयते—विनियोगादेवैकं प्रयोजनं युक्तम् । कस्मात् ? यत्र विनियोगः तत् प्रयोजनं यस्मात् । न तर्हि पूर्वः पक्षः, शाखा हि प्रयोजनम् । वचनान्तरविहितत्वान्निर्वापवत् । सत्यं प्रयोजनम् । न तु प्रतिपाद्यतया । प्रतिपाद्येन प्रयोजनेन प्रयोजनवन्तो मन्त्राः । तस्मादध्याहारापेक्षत्वात् प्रतिपाद्यस्य सर्वार्थमेकं भविष्यतीति प्रदर्शितम् ।

---

**अत्राभिधीयते—विनियोगादेवैकं प्रयोजनं युक्तम् । कस्मात् ?** उत्तरं—**यत्र विनियोगस्तत्प्रयोजनम् ।** तस्मादेकप्रयोजनतया चैकयजुष्ट्वम् । तत्र इषेत्वेति च्छिनत्ति इत्येतावन्मात्रस्यैव छेदने विनियोगः न पुनरुभयस्यानुप्रवेशे प्रमाणमस्ति [1]यथास्वं विनियोगेनैव कृतार्थत्वात् । यद्येकप्रयोजनतया यजुष एकत्वं **न तर्हि पूर्वः पक्षः । शाखा हि तत्प्रयोजनम् । वचनान्तरविहितत्वान्निर्वापवत् ।** 'शाखया वत्सानपाकरोति' इति वचनान्तरेण शाखा विहिता यथा, निर्वापः 'चतुरो मुष्टीन् निर्वपति' इति । तेन कार्यान्तर-भूतत्वाच्छाखायाः तां प्रति शेषभूतं छेदनं, छेदनस्य च शेषभूतत्वात्तन्मन्त्रोऽपि तां प्रति शेष-भूतः । ततश्च तस्याः प्रयोजनत्वात् इषेत्वेति च त्वाशब्देन शाखायाः प्रत्यवमर्शनात् भेदेन प्रयोजन[2] श्रवणात् विभागवाक्यवत् यजुषो भेदो न्याय्य इति कथं पूर्वपक्षः । प्रयोजनाश्रवण-निबन्धनो यः पूर्वः पक्षः स श्रूयमाणे प्रयोजने नोपपद्यते । समाधाता आह—**सत्यं प्रयोजनम् । न तु प्रतिपाद्यमानतया** [3]किन्तु छेद्यतया । तदवच्छेदकतया प्रयोजनम् । **प्रतिपाद्येन हि प्रयोजनेन प्रयोजनवन्तो मन्त्राः** तथापि किमित्याह—**तस्मादध्याहारापेक्षत्वात्प्रति-पाद्यस्य सर्वार्थमेकं प्रतिपाद्यं प्रयोजनं भविष्यतीति दर्शितम् ।** यद्यनेन प्रकारेण

---

(1) G. यथाशास्त्र (2) ग्रहणा (3) G. omits किंतु छेद्यतया

मित्ययमपि प्राणक्लृप्तिमपराम्, एवन्तु सर्वे क्लृप्तिविशेषवचनाः, तच्च दृष्टं प्रयोजनं; तस्मादनेकार्थत्वात्तत्रापि वाक्यभेदः इति। ननु सामान्यवचनादेकत्वं यथा विभागे। नैतदेवं, विभागे दृष्टार्थं सामान्यमिह न। अपि च क्लृप्तीर्वाचयतीति विहितम्, आयुर्यज्ञेन कल्पतामिति चायुः क्लृप्त्यभिधानम् अभि-

---

राद्धान्तवादिनस्त्वयमभिप्रायः—अध्याहृतस्यैकस्य अनेकार्थतया गुण-प्रधानार्थता दृष्टार्थता वा कल्पनीया। तच्चोभयमप्यन्याय्यम्। तस्मा-द्यथाविनियोगं वाक्यम्। इषेत्वेति पदार्थद्वयसंबन्धात् शक्यत इतिशब्देन संबन्धः प्रतिपत्तुमिति, नियोगो हि वाक्यार्थस्य करणतामापादयति पदार्थस्येव विभक्तियोगः। तस्माद्यथाविनियोगं वाक्यभेदः। एवं 'क्लृप्तीर्वाचयति' इति बहूनां विनियुक्तत्वात् तन्निष्पत्त्यर्थं क्लृप्तेः प्राधान्यं नाद्रियते विभागवत्।

---

पूर्वः पक्षः कथं तर्हि राद्धान्तवादिनस्त्वयमभिप्रायः अध्याहृतस्यैकस्यानेकार्थतया गुण-प्रधानार्थता दृष्टार्थता वा कल्पनीया तच्चोभयमन्याय्यम् तस्माद्यथाविनियोगं वाक्यं यावदेवोच्चार्यं (यावदेवार्थः) यत्र विनियोगस्तावत्येव विनियोगविषयीभूतार्थाध्याहारात् तावदेवैकं वाक्यं यथा इषे त्वेत्याच्छिनत्ति ऊर्जेत्वेत्यनुमार्ष्टि इति। ननु च इतिशब्देनैकस्यैव पदार्थस्योपकारकत्वं बोध्यते। तत्कथमिषेत्वेत्येतयोरिति-शब्देन विनियोगः इत्यत्राह—इषेत्वेति पदार्थद्वयसम्बन्धात् शक्यते इतिशब्देन संबन्धः प्रतिपत्तुमिति। नियोगो हि वाक्यार्थस्य करणतामापादयति। पदार्थस्येव विभक्तियोगः। एवं तावदिषेत्वेत्युदाहरणे राद्धान्तं कृत्वा क्लृप्त्युदाहरणेऽप्याह—एवं क्लृप्तीर्वाचयतीति बहूनां क्लृप्तीनां विनियुक्तत्वात् तन्निष्पत्त्यर्थं क्लृप्तिबहुत्वनिष्पत्त्यर्थं क्लृप्तिमात्रस्य प्राधान्यं प्रतिपाद्यत्वं नाद्रियते। विभागवत्। यथा विभागे विभाग-

निवर्त्त्यते प्रत्यक्षं, प्राणो यज्ञेन कल्पताम् इति च प्राणक्लृप्तेः ; तस्माद्वाक्यभेदः ॥

अनुषङ्गाधिकरणम् ॥

अनुषङ्गो वाक्यसमाप्तिः सर्वेषु तुल्ययोगित्वात् ॥ ४८ ॥

याते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठा, उग्रं वचो अपावधीं त्वेषं वचो अपावधींस्वाहा, याते अग्ने रजाशया, याते

---

अनुषङ्गो वाक्यसमाप्तिः । सैवेयं यजुर्गता कथा वर्तते । ननु चेयं वृत्ता । विनियोगतः सामर्थ्यतः परिमाणमुक्तं यजुषः । सत्यमुक्तम् । उक्तविषय एवायं पुनर्विचारः । कः पुनरसौ । अयमसौ, यत्र बहूनि वाक्यशेषापेक्षाणि वाक्यानि एकश्च वाक्यशेषः किं यस्यानन्तरं तेनैव संबध्यते उत यावद्भिराकाङ्क्ष्यत इति । किं पुनरत्र युक्तम् ? पूर्वपक्षवादी त्वेवं

---

मात्रस्य प्राधान्यं न तथेहापि क्लृप्तिमात्रस्य विवक्षया आयुरादिविशेषस्य प्रतिपाद्यत्वं नाद्रियते । किन्तु विवक्षितविशेषस्यैव । ततश्च क्लृप्तिभेदादर्थभेदे सति यजुर्भेदो न्याय्यः । एतच्च विनियोगानुसारेण क्लृप्तिबहुत्वमाश्रित्योच्यते इति यथाविनियोगं परिमाणज्ञानादेकाधिकरणत्वम् ।

अनुषङ्गः । सैवेयं यजुर्गता कथा वर्तते । अनेनावान्तरसङ्गतिरुक्ता । ननु च वृत्तेयं कथा यजुषः परिमाणविषया । विनियोगतः पूर्वाधिकरणे स्वसामर्थ्यतश्च । तत्पूर्वाधिकरणे यजुषः परिमाणमुक्तम् । परिहरति—सत्यमुक्तं उक्तविषय एवायं विचारः । कः पुनरसौ ? उत्तरं—यत्र बहूनि वाक्यानि शेषापेक्षीणि वाक्यानि याते अग्ने रजाशयेत्यादीति । एकश्च वाक्यशेषः तनूर्वर्षिष्ठेत्यादि । स किं यस्यानन्तरं तेनैव संबध्यते उत यावद्भिराकाङ्क्ष्यते तावद्भिरिति । किं पुनरत्र युक्तम ? पूर्वपक्षवादीत्वेवं

अग्ने हराशया' इति। अत्र सन्देहः, तनूर्वर्षिष्ठेति किं सर्वे-
ष्वनुषक्तव्यम् , आहोस्वित् लौकिको वाक्यशेषः कर्तव्यः ? इति।
किं प्राप्तं ? याते अग्ने रजाशयेत्येतस्य तनूर्वर्षिष्ठेति न वाक्य-
शेषः, न ह्ययमस्मात् परः प्रयुज्यते । एवं प्राप्ते ब्रूमः,—अनुषङ्गो
वाक्यसमाप्तिः स्यात्तनूर्वर्षिष्ठेति, यथैव ह्ययं याते अग्नेऽयाशये-
त्येतस्यानन्तरं, एवं याते अग्ने रजाशया, याते अग्ने हराशयेत्ये-
तयोरपि। हराशयेत्येतस्य व्यवहितः इति चेत्। तन्न,
समुदायस्याव्यवधानात्, अव्यवहितो रजाशयेति समुदायः

---

मन्यते। आकांक्षा सन्निधिः योग्यत्वं च संबन्धहेतुः सन्निधिश्चापेक्षिकः।
तस्मादनन्तरं सन्निहितमुच्यतेऽव्यवधानापेक्षम्। अतो[ना]नुषङ्गः।

अत्राभिधीयते—सत्यमाकाङ्क्षा सन्निधिः योग्यत्वं च संबन्धे हेतुः
सन्निधानं पुनर्नाव्यवधानापेक्षम्। किं तर्हि ? सजातीयाव्यवधानापेक्षम्।
न चात्र सजातीयो वाक्यशेषो व्यवधायको(दृश्यते)विद्यते। शेषिणस्त्वसजा-
तीयत्वान्न व्यवधायकाः। न हि यो यमपेक्षते स तस्य व्यवधायको भवति

---

मन्यते। आकाङ्क्षासन्निधिः योग्यता च संबन्धे हेतुः। एवं चेत् येनैव सह सन्निधानं
तेनैव संबन्धः। सन्निधिश्चापेक्षिकः तस्मादनन्तरं सन्निहितमुच्यते अव्यवधानमपेक्ष्य
अतो नानुषङ्गो वाक्यशेषस्य। अत्राभिधीयते— सत्यं, आकाङ्क्षा सन्निधिः योग्यत्वं च
संबन्धे हेतुः। सन्निधानं पुनः नाव्यवधानमात्रापेक्षम् किं तर्हि ? सजातीयाव्यवधा-
नापेक्षम। अस्यार्थः—बुद्धौ सन्निधानमुच्यते। सजातीयेन च बुद्धिविच्छेदः क्रियते।
न चात्र वाक्यशेषः सजातीयोऽर्थो व्यवधायको विद्यते। शेषिणस्त्वसजातीयत्वात् न
व्यवधानं कुर्वन्ति। कुतः ? उत्तरं—न हि यो यमपेक्षते स तस्य व्यवधायको भवति।

समुदायेन च वाक्यशेषस्य सम्बन्धाभावात्समुदायिभ्यां सम्बन्धः, समुदायिसम्बन्धे च न गम्यते विशेषः; तस्मात्सर्वत्रानुषङ्गः।

अपि च साकाङ्क्षस्य सन्निधौ परस्तात्पुरस्ताद्वा परिपूरणसमर्थः श्रूयमाणो वाक्यशेषो भवति। कियांस्तु कालः सन्निधिरिति? उच्यते,—यावति शक्नोत्युभावप्यपेक्षितुं। कश्चासौ?। आनन्तर्यं सम्बन्धिपदव्यवायो वा, तावति हि शक्नोत्युभावप्यपेक्षितुं, संबन्धिपदव्यवाये हि संबन्धादेव पूर्वसंस्कारो नापैति; यत्राप्यपरेण साकाङ्क्षेण व्यवायस्तत्राप्यस्ति संबन्धः, द्वयोरपि हि कार्यं वक्तव्यमिति, परः पूर्वमपेक्षते, अनपेक्षमाणेऽन्यतरः प्रमादपाठः स्यात, शक्यते चासावपेक्षितुं, तस्मात् यथैवायमेकस्य सन्निधावेवमपरस्य, द्वयोरप्यसम्बद्धैः पदैरव्यवहितत्वात्, द्वयोरप्याकाङ्क्षतोरेतावच्च वाक्यशेषसंबन्धे कारणं, नानन्तर्यं, अव्यवधाने विच्छेदेऽपि भवति संबन्धः; तस्मादनुषङ्गः।

---

यथा बहूनि आख्याताकाङ्क्षाणि नामानि। तत्र सम्बन्धे आनन्तर्यमात्रान्न व्यवधानं कुर्वन्ति। अथ मन्यसे पदधर्मोऽयमिति न पदत्वात्संबन्धः। किं तर्हि? आकाङ्क्षितत्वादेव।

---

तस्यापि तेन संबन्धात्। यथा बहूनि नामानि आख्याताकाङ्क्षाणि तत्संबन्धे चानन्तर्यमात्रात् न व्यवधानं कुर्वते। अन्यथा अरुणादीनां क्रयेण सह संबन्धो न स्यात् सोमपदव्यवधानात्। अथ मन्यसे पदधर्मोऽयं, पदेन पदान्तरव्यवधानं न क्रियते। पदसमुदायेन तु पदसमुदायस्य व्यवधानं क्रियत एव। दूषयति—न पदत्वात् संबन्धः। किं तर्हि आकाङ्क्षितत्वादेव। तेनाकाङ्क्षितत्वेन पदसमुदायेनापि संबन्धो भवत्येव। येन च

अथेह कथं भवितव्यं ? यत्र निराकाङ्क्षाणां सन्निधौ परिपूरणसमर्थः श्रूयते, यथा 'चित्पतिस्त्वा पुनातु, वाक्पतिस्त्वा पुनातु, देवस्य त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः' इति, अत्र हि पुनात्वन्तानि परिपूर्णानि न किञ्चिदाकाङ्क्षन्ति । ननु अच्छिद्रेणेत्येतदाकाङ्क्षति । सत्यमाकाङ्क्षति, आकाङ्क्षदप्येतदेकमाकाङ्क्षेत्, एकेनैव एतत् निराकाङ्क्षं संपद्यते इति, एकेन हि निराकाङ्क्षीकृतो नेतरावाकाङ्क्षिष्यति, अनर्थकत्वादाकाङ्क्षति, एकेन च संबद्धो नानर्थको भवति ; तस्मान्नेतरावाकाङ्क्षति—इति, इतरावपि परिपूर्णत्वात् न तमाकाङ्क्षतः । ननु एतस्य वाक्यशेषस्य एकमप्याकाङ्क्षतो न गम्यते विशेषः, केन निराकाङ्क्षीक्रियते, केन वा न ? इति, तेनानवगम्यमाने विशेषे सर्वैः सह संभन्त्स्यते ।

---

यत्पुनरिदं भाष्यकारेण समुदायापेक्षतयाऽऽनन्तर्यमुपन्यस्तम् समुदायिभिश्च सम्बन्धः कस्तस्यार्थः अयमेवार्थो योऽस्माभिर्व्याख्यातः । एतदुक्तं भवति—पदसमुदायस्यैव एकपदसंबन्धे नानन्तर्यं विशेष्यते ।

---

सहसंबन्धः तस्य संबन्धिना व्यवधानं न क्रियते । अत्र भाष्यकारेण समुदायापेक्षतया आनन्तर्यमुपन्यस्तम् । समुदायिभिश्च सह संबन्धो दर्शितः, तदनुपपन्नम् । येन हि यस्य संबन्धः तेनैव च तस्यानन्तर्यमुपेयम् । अत्र च समुदायिभिः सह संबन्धः आनन्तर्यं च समुदायस्येति मत्वा आह—यत्पुनरिदमुक्तं भाष्यकारेण समुदायापेक्षयाऽऽनन्तर्यमुक्तं, समुदायिभिश्च सह संबन्धः उपन्यस्तः । कस्तस्यार्थः ? उत्तरं—अयमेव योऽस्माभिर्व्याख्यातः । कथमयमर्थः इत्याह—एतदुक्तं भवति । पदसमुदायस्यैवैकपदसंबन्धे नानन्तर्यं विशेष्यते । यथा पदसमुदायस्यैकपदसंबन्धे आनन्तर्यं न विशेष्यते ।

आह, नैतदेवं, येनास्य प्रत्यक्षमानन्तर्यमुपलभामहे तेन सह संभन्त्स्यते इति गम्यते विशेषः, तस्मात्तेनानन्तरेण सह संभन्त्स्यते इति नास्ति सर्वत्रानुषङ्गः इति। आह, नैतदेवं, पुनातुशब्देनास्य प्रत्यक्षमानन्तर्यमुपलभामहे, पुनातुशब्दस्यापि चित्पतिस्त्वेत्येवमादिभिः, एकश्चासौ पुनातुशब्दः पुनः पुनरुच्चरितः, तेनावगच्छामः, यत्र पुनातुशब्दः प्रयुक्तः, तत्र तेनैकवाक्यत्वादच्छिद्रेणेत्ययमपि प्रयोक्तव्यः, तथा च सति चित्-

---

प्रतिपदं च सम्बन्धः। एवञ्च पौर्वापर्यमप्यतन्त्रम्। कियांस्तु सन्निधिरिति यदेवोक्तं यावदन्यत्सजातीयं नोपनिपततीति तदेवेदम्।

---

प्रतिपदं च संबन्धः। तथेहापि समुदायस्यापि शेषसंबन्धस्याव्यवधानात् प्रतिशेषि संबन्धः। एवं च पौर्वापर्यमप्यतन्त्रम्। तत्र पूर्वमपि वाक्यशेषभूतं भवति। तथा परमपि। तथा मध्यभूतमपि। तदाहुर्वार्तिककारपादमिश्राः—

अनुषङ्गि पदं यत्स्यात् आदिमध्यान्तवर्त्यपि।
अपेक्षाऽऽसत्तियोग्यत्वैः तस्य सर्वेण सङ्गतिः॥

इति। [1]यदेवोक्तमस्माभिर्यावदन्यत् सजातीयं नोपनिपततीति तदेवेदम्। यदेवास्माभिरुक्तं यावदन्यत्सजातीयं नोपनिपततीति तावत्कालः सन्निधिरिति तदेवेदम्। कियांस्तु कालस्सन्निधिः इत्यनेनापि भाष्येणोक्तम्। अत्रैवं पूर्वपक्षसिद्धान्तरचना—लोकव्यवहारानुसारेण शब्दानामन्विताभिधानं, तत्र चाकाङ्क्षा सन्निधिर्योग्यता च इति त्रितयमन्वयकारणं उपलक्षणम्। इह च यद्यपि वाक्यशेषं प्रति सर्वेषां आकांक्षायोग्यतास्ति तथापि वाक्यशेषस्य सर्वैः सह सन्निधानं नास्तीति न सर्वैः सह संबध्यते। साकाङ्क्षाणां तु पूरणमध्याहारात् भवतु। लोके दृष्टत्वात् इति। अत्राभिधीयते—सत्यं व्यवधानेन संबन्धो न

---

(1) G. क्रियासुकालः सन्निधिः योग्यत्वं चेति त्रितयमन्वयकारणं

पतिस्त्वा इत्येवमादयो विना पुनातुशब्देन, साकाङ्क्षाः, ते च पुनातुशब्दमाकाङ्क्षन्ति, स च पुनातुशब्दोऽच्छिद्रेणेत्यनेन

---

अनुषङ्गः। यत्रेदानीं शेषीणि निराकाङ्क्षाणि शेषश्च साकाङ्क्षः, तत्रापि सैव कथा असजातीयव्यवधानात् सर्वैः संबन्धः। किमर्थं तर्हि पुनर्लिखितम्? तदेव तु न ज्ञायते। किं शेषितामात्रमेव सजातीयत्वं उत प्रधानपदाभिप्रायमिति। तत्र पूर्वेण न्यायेन शेषितामात्रं सजातीयमिति प्राप्तं तद्व्युदासायेदं पुनर्लिखितम्। एकाख्यातसंबन्धे सतीति

---

व्यवधानं तु सजातीयकृतं द्रष्टव्यम्। भिन्नकारकस्य व्यवहितस्यापि क्रियापदस्य सर्वैः संबन्धदर्शनात् देवदत्त गां शुक्लां दण्डेनाभ्याज इतिवत्। न च शेषिणः शेषपदस्यासजातीया इति सर्वैः शेषिभिः शेषपदस्य संबन्ध इति।

**अनुषङ्गः॥ यत्रेदानीं शेषीणि निराकाङ्क्षाणि। शेषश्च साकाङ्क्षः तत्र कथम्?** अनेन पूर्वस्माद्विशेषमाह—पूर्वत्र शेषीण्येव साकाङ्क्षाणि। अत्र शेष एवेति विशेषः। **तत्रापि सैव कथा। असजातीयव्यवधानात् सर्वैः संबन्धः।** अनेन सिद्धान्तैकदेशिनो मतं तावदुपन्यस्यति। असजातीया हि शेषस्य शेषिणः तेन तैर्व्यवधानमव्यवधानमेवेति सर्वैः संबन्धः। दूषयति—**कथं तर्हि पुनर्लिखितम्।** पूर्वत्रापि शेषिभिरेवासजातीयत्वात् व्यवधानमव्यवधानमेवेति सर्वैः सम्बन्धः। इहापि तथैवेति पौनरुक्त्यमेवेति। परिहरति—**तदेव तु न ज्ञायते किं शेषितामात्रसजातीयत्वं उत प्रधानपदाभिप्रायमिति।** एतदुक्तं भवति—किं शेषी शेष्यन्तरस्य सजातीयः तेन व्यवधानं सजातीयव्यवधानं, तदा प्रधानान्तरस्याभावात् उभयत्र सम्बन्धः सिद्ध्यति। **तत्र पूर्वेण न्यायेन शेषितामात्रं सजातीयमिति प्राप्तं** पूर्वाधिकरणोक्तिमात्रेण शेषितामात्रमपि सजातीयत्वमाश्रीयते। ततश्च सर्वसम्बन्धो न स्यादिति। तद्व्युदासायेदं पुनर्लिखितम्। **एकाख्यातसंबन्धे सतीति।** यदि हि शेषितामात्रं सजातीयत्वं स्यात् एकाख्यातसंबन्धेऽपि अनुषङ्गो न स्यात्। यतस्त्वेकाख्यातसंबन्धे भवत्यनुषङ्गः

विशिष्टः, तेन पुनातुशब्देन सानुषङ्गेण नियोगतः सर्वे निराकाङ्क्षीकर्तव्याः। तस्मात्सर्वेषु तुल्यप्रयोगाः इति वाक्यपरिसमाप्तिरनुषज्यते ॥

---

पूर्वत्र वाऽभिन्नाख्यातसंबन्धे सति किं भवत्यनुषङ्गः ? किमिदमाख्यातग्रहणम् ? प्रधानपदप्रदर्शनार्थमेव । एवं तर्हि पूर्वत्रापि प्रधानपदाभेदादेवानुषङ्गः। तस्मादनर्थकं पुनर्लेख्यम् ।

अत्रोच्यते—प्रधानपदाभेदेऽपि निराकाङ्क्षेषु प्रधानेषु एकत्वाद्वाक्यशेषस्य एकेनैव संबन्धो युक्तः शक्यते च विशेषोऽवगन्तुं, आनन्तर्यात् । सत्यं यत्रार्थभेदः। यत्र त्वर्थ एव न भिद्यते तत्र पूर्ववदेवानुषङ्गः ।

---

ततो ज्ञापयति प्रधानपदाभिप्रायं सजातीयत्वमिति । दूषयति—**पूर्वत्र वाऽभिन्नाख्यातसंबन्धे सति किं भवत्यनुषङ्गः ?** पूर्वत्राप्येकमेवाख्यातम् । अतः एकाख्यातसंबन्धादेवोभयत्राप्यनुषङ्गः। नाधिकरणान्तरारंभो युक्तः। एकदेशी पृच्छति—**किमिदमाख्यातग्रहणमिति** । पूर्वोदाहरणेनाख्यातपदमित्यर्थः। उत्तरं—**प्रधानपदप्रदर्शनार्थमेवाख्यातग्रहणं** विवक्षितम् । प्रधानपदमात्राभिप्रायेणाख्यातग्रहणम् । एकं च तत्र तनूरिति प्रधानपदम्। दूषयिता एकग्रन्थेनाह—**एवं तर्हि पूर्वत्रापि** प्रधानपदभेदादेवानुषङ्गः । एकदेशिमतं दूषयित्वोपसंहरति —**तस्मादनर्थकं पुनर्लेख्यम्** । इदानीं स्वमतेन पूर्वपक्षसिद्धान्ताधिकरणं विरचयति **अत्रोच्यते—प्रधानपदाभेदेऽपि निराकाङ्क्षेषु** प्रधानपदेष्वेकत्वात् **वाक्यशेषस्य** ह्येकेनैव **संबन्धो युक्तः**। तावतैव शेषस्याकाङ्क्षानिवृत्तेः। ननु स एवैको न ज्ञायते केनैकेन संबन्ध इति । ततश्चागृह्यमाणविशेषत्वात् सर्वैरेव संबन्धो युक्त इत्यत्राह—**शक्यते च विशेषो वक्तुम्, आनन्तर्यात्** इति पूर्वः पक्षः। राद्धान्तमाह—**सत्यं यत्रार्थभेदः** तत्रैकेन संबन्धो ज्ञेयः। **यत्रत्वर्थ एव न भिद्यते तत्र** तत्संबन्धस्य वाक्यशेषस्य **पूर्ववदेवानुषङ्ग इति**।

---

(1) G. विद्यते

व्यवेताननुषङ्गाधिकरणम्।

व्यवायान्नानुषज्येत ॥ ४९ ॥

सं ते वायुर्वातेन गच्छतां, सं जयत्रैरङ्गानि, सं यज्ञपतिराशिषा' इति; वायुर्वातेन गच्छतामित्येष सं यजत्रैरङ्गानि इति बहुवचनान्तेन व्यवहितत्वात् सं यज्ञपतिराशिषेत्यत्र नानुषज्यते, एकेन साकाङ्क्षेणाव्यवेतो गच्छतामिति शेषः, ततो बहुवचनान्तेन सं यजत्रैरङ्गानीत्येतेन सम्बन्धमनुपेत्य व्यवेतत्वात् परेण न सम्बध्यते गम्यते हि तदा विशेषः एकेन व्यवेत इति, गम्यमाने विशेषे न तत्र भावो वाक्यशेषस्योपपद्यते; तस्माद्बहुवचनान्तस्य परस्य च तद्व्यवेतस्य लौकिको वाक्यशेषः कर्तव्यः—इति ॥

इति श्रीशबरस्वामि-कृतौ मीमांसाभाष्ये
द्वितीयस्याध्यायस्य
प्रथमः पादः

---

व्यवायान्नानुषज्येत। यत्र पुनः सजातीयेन व्यवधानं तत्र व्यवायान्नानुषङ्गः।

इति बृहत्यां द्वितीयाध्यायस्य
प्रथमः पादः।

---

व्यवायात्। यत्र पुनः सजातीयेन व्यवधानं तत्र व्यवधानान्नानुषज्येत इत्युक्तम्। अनेन प्रत्युदाहरणमात्रमेतदिति कथितम्।

इति महामहोपाध्याय श्रीशालिकनाथभट्टमिश्रकृतायां
ऋजुविमलायां पञ्चिकायां द्वितीयाध्यायस्य
प्रथमः पादः

# द्वितीयः पादः ॥

## शब्दान्तराधिकरणम्

शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात् ॥ १ ॥

अस्ति ज्योतिष्टोमः। तत्र श्रूयते,—सोमेन यजेत, दाक्षिणानि जुहोति, हिरण्यमात्रेयाय ददाति इति ; यजति ददाति-

---

## बृहती

### द्वितीयाध्यायस्य द्वितीयः पादः

शब्दान्तरे कर्मभेदः। शब्दान्तरे कर्मभेद इति श्रूयते। कः पुनरत्र शब्दोऽभिप्रेतः किं वा कर्म ? शास्त्रं शब्दोऽभिप्रेतः, नियोगार्थः कर्म। कथं तर्हि अनुबन्धभेदाद्भेद उच्यते कर्मणः ?

---

## ऋजुविमलापञ्चिका
### द्वितीयाध्यायस्य द्वितीयः पादः

शब्दान्तरे। अत्रेदं प्रतिभाति। यजते ददाति जुहोति इति शब्दान्तरनिबन्धनो यागादिकर्मभेदः सूत्रकारेणोक्त इति। तच्चानुपपन्नम्। यागादीनां भेदस्य स्वतः प्रसिद्धत्वात् न प्रसाध्यत्वं युक्तमिति। अनेनाभिप्रायेण पृच्छति—शब्दान्तरे कर्मभेद इति सूत्रे श्रूयते। कः पुनरत्र शब्दोऽभिप्रेतः ? किमिह कर्माभिप्रेतम् ? उत्तरं--शास्त्रं शब्दोऽभिप्रतः। नियोगार्थः कर्म। क्रियत इति व्युत्पत्त्या नियोगार्थस्य कर्मत्वात्। अत्र चोदयति—कथं तर्हि अनुबन्धभेदात् भेद उच्यते कर्मण इति ? अत्र हि कृतानु-

जुहोतयस्ते किं संहत्य कार्य्यं कुर्वन्ति, उत वियुत्य? इति संशयः, साधकाः संहत्यापि साधयन्तो दृश्यन्ते, वियुत्यापि; संहत्य तावत्, त्रयो ग्रावाण एकामुखां धारयन्तो दृश्यन्ते, नागदन्तकास्तु वियुत्यापि, एकैकस्मिन् हि शक्यते शिक्यमवलम्बयितुम्; अतो यजति ददाति जुहोतयः संहत्य साधयेयुर्वियुत्य वा? इति जायते संशयः।

किं तावत्प्राप्तं,? संहत्येति। कुतः?। अदृष्टार्थानामुपकारकल्पनाऽल्पीयसी न्याय्येति। कथं?

---

किमिति वा नोच्यते? शास्त्राद्धि कर्मणोऽनुबन्धः। एवञ्चेतरेतराश्रयः तस्माच्छास्त्रपरिमाणज्ञानोपायस्तावदन्यतो वक्तव्यः। तस्माच्छास्त्रान्तरत्वे यत्नः कर्तव्यः। अत्रोच्यते। द्वयमप्यत्रैव प्रतिपाद्यते। कथं? शास्त्रान्तरे सति कर्मभेद इति वदता शास्त्रात्कर्मभेद इत्युक्तम्। नानु-

---

बन्धत्वात् कर्मभेद इत्युक्ते कृतानुबन्धत्वेन नियोगभेद इति प्रतीयते। परिहरति—किमिति वा नोच्यते? चोदयिता आह—शास्त्राद्धि कर्मणोऽनुबन्धः प्रतीयते। शास्त्रेण हि नियोगस्यानुबन्धः प्रतीयते शास्त्रान्तरेण चानुबन्धान्तरं, अनुबन्धान्तरे च नियोगभेदः। न च कर्मानुबन्धनिरपेक्षं शास्त्रं शास्त्रतयाऽवगम्यते। कर्मानुबन्धापेक्षं शास्त्रत्वं, अनुबन्धान्तरापेक्षं शास्त्रान्तरत्वम्। एवं चेतरेतराश्रयं स्यात्। तस्माच्छास्त्रपरिमाणं तावदन्यतो वक्तव्यमिति। तदाह—तस्माच्छास्त्रपरिमाणज्ञानोपायस्तावदन्यतो वक्तव्यः। अन्यथा हि परिमाणज्ञानाच्छास्त्रान्तरे कर्मभेद इति न शक्यते वक्तुम्, तत्परिमाणज्ञानपूर्वकं हि शास्त्रान्तरत्वम्। तस्माच्छास्त्रान्तरत्वे यत्नः कर्तव्यः। उच्यते। द्वयमप्यत्रैव प्रतिपादितम्। कथं? शास्त्रान्तरे सति कर्मभेद इति वदता शास्त्राद्भेद इत्युक्तम्। नानु

अदृष्टो योऽश्रुतो वार्थः, स नास्तीत्यवगम्यते ।
तस्मिन्नसति दृष्टश्चेत् श्रुतो वा न विरुध्यते ॥

विरुध्यमाने कल्प्यः स्याज्जायते तेन सोऽर्थवान् ।
विशेषश्चेन्न गम्येत, ततो नैकोऽपि कल्प्यते ॥

---

बन्धात् । कथं पुनः शास्त्रान्तरपरिज्ञानम् ? अत्रापि कृतानुबन्धत्वादित्युक्तम् । ननु च कर्मानुबध्यते न शास्त्रम् । केन चोक्तं नेति ? परिमाणपरिज्ञाने हि शास्त्रस्यानुबन्ध उपकरोति । न तर्हि कृतानुबन्धं शास्त्रं भवति ।

---

बन्धात् । सूत्रकारेण हि शब्दान्तरे इति निमित्तसप्तमीयं प्रयुक्ता । तेन शब्दान्तरनिमित्तकः शास्त्रान्तरहेतुकः कर्मभेदो नियोगभेद इति गदितम् । न पुनरनुबन्धहेतुकः । तेन शब्दान्तरत्वं तावदेकं नियोगभेदकारणमुक्तम् । तथा कथं पुनः शास्त्रान्तरपरिज्ञानमिति ? अत्रापि कृतानुबन्धत्वादित्युक्तम् । कृतानुबन्धत्वं शब्दान्तरत्वे कारणमित्युक्तम् । तदेष संक्षेपार्थः शास्त्रान्तरात कर्मभेदोऽवगम्यते । शास्त्रान्तरं चानुबन्धभेदादवसीयते । अनुबन्धभेदस्तु अभिधानान्तरादिप्रमाणपञ्चकानुगृहीताच्छब्दादेवानिर्धारितभेदाभेदादवसितः शास्त्रं भिनत्ति । तेन नेतरेतराश्रयत्वम् ।

ननु कर्मानुबध्यते, न शास्त्रम् । [1]पक्षधर्म एव तु हेतुर्भवति । ततश्च कृतानुबन्धत्वात् शास्त्रभेद इति न युक्तं वक्तुम् । परिहरति—केन चोक्तं कर्मानुबध्यत इति कर्मैवानुबध्यत इति वयमपि ब्रूमः । परिमाणज्ञाने हि शास्त्रस्यानुबन्ध उपकरोति । परकीयोऽप्यनुबन्धः शास्त्रपरिमाणज्ञानहेतुर्भवति । आक्षेप्ता आह—यदि कर्मानुबध्यते, न शास्त्रं तर्हि न शास्त्रं कृतानुबन्धं भवति । परिहर्ता आह—भवति तु कृतानुबन्धं शास्त्रं

---

(1) पक्षधर्मो वा हेतुर्भवति ततश्च कृतानुबन्धभेदत्वात् शास्त्रभेद इति न युक्तं वक्तुम् ।

गम्यते च विशेषः, बहुभ्य एकमपूर्वम् इति; तस्मात् समुदायश्चिकीर्षितः, ततो ह्यदृष्टे कल्प्यमाने, अवयवानां समुदायं प्रति अर्थवत्त्वादेकमपूर्वं समुदायात् कल्पितं भविष्यति। न च अशाब्दः समुदायः, अवयवशब्दैरेव समुदायस्योक्तत्वात्। तस्मात् समुदायश्चिकीर्षितः। अथ वा यजेतेत्येतस्य पूर्वो भागो

---

प्रतिपादकतया कृतोऽनुबन्धः प्रतीतिर्येन तत् कृतानुबन्धम्। यद्वा कृतानुबन्धत्वात्कर्मणः। अनुबन्धान्तरेणान्वयस्यानभिधानात्। अनुबन्धान्तरत्वे शास्त्रान्तरत्वं शास्त्रान्तरत्वे शास्त्रार्थान्तरत्वम्। कथं तर्हि पूर्वः पक्षः? एवमत्र पूर्वपक्षयन्ति। अयुक्तमिदं अनुबन्धभेदात् शास्त्रं भिद्यत इति। कस्मात्? दृष्टं हि अनेकानुबन्धमेकं शास्त्रं दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति। एवं यागदानहोमानुबन्धेष्वपि माभूद्भेदः। ननु च करणेतिकर्तव्यताव्यवस्थानात्तत्राभेदः

---

प्रतिपादकतया कर्मण एवानुबन्धः प्रतीतिः कृता येन तत् कृतानुबन्धं शास्त्रम्। कृतोऽनुबन्धो येन तत् कृतानुबन्धनं शास्त्रेण चानुबन्धस्य इदमेव करणं यत् प्रतिपादनं नाम। [1]प्रकारान्तरं चाह—यद्वा कृतानुबन्धत्वात् कर्मणः अनुबन्धान्तरेणान्वयस्यानभिधानात् अनुबन्धान्तरे शास्त्रान्तरत्वं, शास्त्रान्तरत्वे च शास्त्रार्थान्तरत्वम्। यद्यनुबन्धान्तरत्वेन शास्त्रान्तरत्वं कथं तर्हि पूर्वः पक्षः? उत्तरं—एवमत्र पूर्वपक्षयन्ति अयुक्तमिदमनुबन्धभेदाच्छास्त्रभेद इति। कस्मात्? उत्तरं—दृष्टं हि अनेकानुबन्धमेकं शास्त्रम् दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति। एवं यागदानहोमानुबन्धेष्वपि माभूद्भेदः। ननु च करणेतिकर्तव्यताव्यवस्थानात् दर्शपूर्णमासाभ्यामित्यत्राभेदः। इह तु सर्वेषां यागदान-

---

(1) प्रमाणान्तरं

यजत्यर्थं ब्रवीति उत्तरो भावयेत् इति, तथा ददाति इति

---

अनुबन्धान्तरेऽपि तावदभेद इति प्रतिपन्नम् । अवस्थानं तु विनियोगतोऽवगम्यम् । न चायमेकान्तः करणेतिकर्तव्यताव्यवस्थानादेवेति केवलकरणावस्थितानामपि बहूनामेकशास्त्रावगम्यत्वं दृष्टं दर्शपूर्णमासयोः; राजसूये च उत्पत्तावपि प्राजापत्यानिति । ननु च प्राजापत्येषु सङ्ख्यया भेदः भवतु, अनुबन्धभेदस्तावन्न भेदकः । असति चानुबन्धभेदे सङ्ख्या भेत्त्रीति नमो भेदविद्भ्यः । तस्मात् प्रचयावगम्योऽयमनु-

---

होमानां स्वापूर्वेषु करणत्वेन संबन्धात् भेदो युक्तः । पूर्वपक्ष्याह—**अनुबन्धान्तरेऽपि तावदभेद इति प्रतिपन्नम् । अवस्थानं तु विनियोगभेदावगम्यम् ।** अनुबन्धभेदस्तावत् शास्त्रभेदकत्वेऽनैकान्तिकः । यद्यपि करणेतिकर्तव्यताऽवस्थानभेदेऽपि विनियोगवशेन द्वयोरपि नियोगानुबन्धत्वात् । **न चायमेकान्तः करणेतिकर्तव्यताव्यवस्थानादेवानुबन्धभेदः** शास्त्रस्याभेदः अन्यत्र तु भेद इति । यतः **केवलकरणतया व्यवस्थितानामपि [1]बहूनामेकशास्त्रावगम्यत्वं[2] दर्शपूर्णमासयोः राजसूये च ।** दर्शपूर्णमासयोर्हि यागषट्कप्रतिपादकम् । एकमधिकारशास्त्रं दृश्यते । राजसूये च पाशुकसौमिकैष्टिकदार्विहोमिकानेकानुबन्धावबोधकम् । **उत्पत्तावपि च प्राजापत्यानिति** प्राजापत्यप्रातिपदिकोपात्तद्रव्यदेवतासंबन्धसप्तदशकेऽनुबन्धेऽप्येकं शास्त्रम् । **ननु च प्राजापत्येषु संख्यया शास्त्रभदः ।** परिहरति—**भवतु सङ्ख्यया भेदः** शास्त्रस्य । **अनुबन्धभेदस्तावन्न भेदकः ।** एतावता च दृष्टान्तः । एतच्चाभ्युपगम्यवादमात्रम् । परमार्थमाह—**असति चानुबन्धभेदे सङ्ख्या भेत्त्रीति[1] नमोभेदविद्भ्यः ।** अस्यार्थः -येऽपि शास्त्रभेदवादिनः तेऽप्यनुबन्धभेदेनैव शास्त्रभेदमाहुः । न च सङ्ख्ययाऽनुबन्धभेदः । किं तर्हि ? भावार्थमात्रभेदः तेन प्राजापत्येषु सर्वसंमतः शास्त्रभेदः **तस्मात् प्रचयावगम्योऽयमनु-**

---

(1) G. बहूनामनुबन्धानामेक (2) G. गम्यानुबन्धत्वं

पूर्वो भागो ददात्यर्थं, उत्तरस्तमेव भावयेत्—इत्यनुवदति, एवं जुहोति इति पूर्वो भागो जुहोत्यर्थम्, उत्तरस्तमेवानुवदति ; तेनैकस्यां भावनायां त्रयो यजत्यादय उपाया विधीयन्ते श्रुत्या। तस्मादेतैर्यागदानहोमैर्विशिष्टाऽपूर्वस्य भावना प्रतीयते, अत उच्यते,—संहत्यैकमपूर्वं साधयन्ति इति। यद्वा यजतिशब्देन विहितं दानं दानहोमशब्देनानूद्यते गुणसम्बन्धार्थं, तस्मादेकपूर्वमिति प्राप्तम्।

---

बन्धसमुदाय एकशास्त्रावगम्यः। एकशास्त्रावगम्ये च एको नियोगार्थः तदेवापूर्वम्। यद्वा प्रत्ययावगम्यत्वात् नियोगार्थस्य सानुबन्धतैव न प्रतीयते। पदार्थस्येव पदार्थान्तरेण।

ननु च पदार्थोऽपि पदार्थान्तरेणानुबद्ध एव। परस्परान्वयिता ह्यनुबन्धः उच्यते। अनभिज्ञो भवाननुवन्धान्वययोः। कः पुनरनयोः विशेषः ? अयमनयोर्विशेषः। क्रियाकारकगुणिगुण्यैदमर्थ्यसंबन्धिताऽन्वय उच्यते। नियोगस्य विषयितापत्तिरनुबन्धः।

---

बन्धसमुदायः एकशास्त्रावगम्यः। एकशास्त्रावगम्ये चैको नियोगार्थः। तदेव अपूर्वम्। तस्मादेकमपूर्वम्। पूर्वपक्षे युक्त्यन्तरं चाह—[1]यद्वा प्रत्ययावगम्यत्वान्नियोगार्थस्य सानुबन्धतैव न प्रतीयते पदार्थस्येव पदार्थान्तरेण। ननु पदार्थोऽपि पदार्थान्तरानुबद्ध एव। एकग्रन्थेनाह—परस्परान्वयिता ह्यनुबन्धः उच्यते। अस्ति च पदानां परस्परान्वयिता। परिहरति—अनभिज्ञो भवान् अनुवन्धान्वययोः। पृच्छति—कः पुनरनयोर्विशेषः। उत्तरं—क्रियाकारक[2]गुणगुण्यैदमर्थ्यसंवन्धिता ह्यन्वय उच्यते। नियोगस्य विषयापत्तिरनुबन्धः। अनुवन्धनं अनुवन्धः विषयोऽवच्छेदकः। अनन्यभावो हि विषयार्थः तेन

---

(1) G. यथा (2) G. गुंणस्यैद

एवं प्राप्ते ब्रूमः,—प्रतिशब्दं अपूर्वभेदः इति, 'शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात्', यजेतेत्यनेन केवलस्य यागस्य कर्तव्यतोच्यते, न तु जुहोतिशब्दाभिहितस्य। ददातिशब्दाभिहितस्य

---

न च शब्दान्तराभिधेयो विषयतामापद्यते। अविनियुक्तविनियोगापेक्षित्वे चागृह्यमाणविशेषणत्वं प्रयाजादीनामिव। तस्मात्सिद्धमेकशास्त्राभिधेयत्वम्। यद्वा यागदानहोमेष्वयमपरो विशेषः। अनुबन्धानां नानात्वमपि(वै)न शक्यते वक्तुम्। परस्परानुवादसंभवात् यदाहवनीये जुहृतीतिवत्। एवं गुणकर्मसु गुणविधानेषु च द्रष्टव्यम्। प्रधानानुप्रवेशात्तद्विधानस्य।

---

[1]यत्संबन्धेन नियोगोऽभिव्यज्यते स विषयः अनुबन्धश्च स एवेति। न पदार्थस्य पदार्थान्तरेणानुबन्धोऽस्ति, केवलमन्वय एव। कस्मात्पुनः स्वानुबन्धतैव न स्यात् इत्यत्राह—न च शब्दान्तराभिधेयो यागादिर्विषयतामापद्यते। अविनियुक्त[2] विनियोगापेक्षित्वे चागृह्यमाणविशेषत्वं प्रयाजादीनामिव एकत्वात्प्रत्ययस्य तदर्थस्यैकत्वात् [3]तेन च सर्वेषां संबन्धात् सर्वानुबन्ध एको नियोगः। तस्मादनुबन्धरूपतया भेदाभावात् सिद्धमेकशास्त्राभिधेयत्वं सर्वेषां यागादीनाम्। एतदुक्तं भवति—यद्यप्यनुबन्धभेदेन भेदः तथाप्यत्र भेदो न युक्तः अनुबन्धभेदाभावादेव सर्वेषामेकानुबन्धावस्था यतः। युक्त्यन्तरं चाह—यद्वा यागदानहोमेष्वयमपरो विशेषः। अनुबन्धानां नानात्वमपि न शक्यते वक्तुम्, परस्परानुवादसंभवात् यदाहवनीये जुहोतीतिवत्। यथा यदाहवनीये जुहोतीति होमविषयनियोगानुवादः तथेहापि। दृष्टान्तद्वयं चाह—एवं गुणकर्मसु अवघातादिषु गुणविधानेषु च दध्ना जुहोति इत्यादिषु च नियोगानुवादित्वं द्रष्टव्यम्। कुत इत्यत्राह—प्रधानानुप्रवेशित्वात् तद्विधानस्य। गुणकर्मविधानस्य। प्रधानविध्यनुप्रवेशित्वात् प्रधानविध्यनुवाद एव

---

(1) G. तेन यत्संबन्धस्सन् नियोगो वेद्यते (2) R. विनिदुक्त (3) G. ेदिति। न च

वा, शब्दान्तरत्वात्; प्रयोगवाक्यशेषभावेन हि समुदायस्य सत्तासम्बन्धो गम्यते, श्रुत्या अवयवस्य, यजेत इति। सन्निहितयोरपि वाक्येन दानहोमयोः, श्रुत्या यागस्यैव सत्तासम्बन्धो गम्यते, न दानहोमयोः; श्रुतिश्च वाक्याद्बलीयसी। तस्मान्न समुदायः शाब्दः, कल्प्यमानो हि प्रयोगवचनेन एकवाक्यतां नीत्वा कल्प्येत, शब्दान्तरञ्च यजतेर्ददातिः; तत्र यद्यपि परो

---

एवञ्च सर्वफलानुबन्धं सर्वगुणानुबन्धं सर्वधात्वर्थानुबन्धमेकं कर्म। एको नियोग इत्यर्थः।

अत्राभिधीयते। न च सर्वविषय एको नियोगार्थः प्रतिपत्तुं शक्यते। भावार्थ एव हि कर्मशब्दो भावार्थान्तरनिरपेक्षो विषयमवच्छिनत्ति। करणापत्तौ हि भावार्थान्तरापेक्षा भावार्थस्य न विषयापत्तौ।

---

तद्वतैर्लिङादिभिः क्रियते। **एवं च सति सर्वफलानुबन्धं सर्वगुणानुबन्धं सर्वधात्वर्थानुबन्धमेकमपूर्वं एको नियोगार्थ इत्यर्थः।** शास्त्रभेदे शास्त्रार्थभेदादेकापूर्वसंबन्धमेव सर्वम्।

**अत्राभिधीयते—न सर्वविषय एको नियोगार्थः प्रतिपत्तुं शक्यते।** कस्मादित्याह—**भावार्थ एव हि कर्मशब्दो विषयमवच्छिनत्ति भावार्थान्तरनिरपेक्षः** भावार्थ एवेत्यस्यायमर्थः—यो यावान् भावार्थः तस्यापि कर्मशब्दो विषयसमर्पकः स भावार्थान्तरनिरपेक्ष एव विषयमवच्छिनत्ति स्वार्थमेव विषयत्वेन समर्थयति। यदि निरपेक्षस्य विषयत्वं तदा करणत्वमपि निरपेक्षस्यैव स्यादित्यत्राह—**करणापत्तौ हि भावार्थान्तरापेक्षा** भावार्थस्य **न विषयापत्तौ** अननुगृहीतस्य करणत्वानुपपत्तेः युक्तं करणत्वं भावार्थान्तरापेक्षित्वं विषयभावे त्वपेक्षायां हेतुर्नास्ति। ननु किं कारणत्वं विषयत्वं च

भागो भावनावचनः सर्वेषु समानः, तथाप्येकैकस्य पूर्वोऽवयवोऽन्यः, अन्यश्च तेन समुदायः शब्दान्तरमन्यस्मात् समुदायात्, तत्रार्थान्तरं व्यक्तम्, दद्यात् इति दानेन साधयेत् इति केवलमेव दानं करणं भावनायाः प्रतीयते, न यागहोमौ सहायौ अपेक्षते। तथा जुहोति इति होमसाधनां भावना-

---

विषयीभूतस्य हि नियोगार्थं प्रति साधनभावोऽवगम्यते न पुनः तत्साधनतयैव नियोगसंबन्धः। यथा चैतदेवं तथा षष्ठे वक्ष्यामः। तस्मात् धात्वर्थभेदान्नियोगभेदः नियोगभेदाच्च सिद्धं कर्मान्तरत्वम्, यदप्युक्तम नियोगार्थस्य प्रत्ययवाच्यत्वात्, अगृह्यमाणविशेषत्वात् सर्वभावार्थाभिसंबन्ध इति। तदयुक्तम्। अगृह्यमाणविशेषता हि नियोगे न विषये।

---

भिन्नं येन कारणत्वेऽपेक्षास्ति विषयत्वे नास्तीत्युच्यते। बाढं, भिन्नं, **विधेयभूतस्य हि नियोगार्थं प्रति** कारणभावः **साधनभावोऽवगम्यते न पुनः तत्साधनतयैव नियोगसंबन्धः।** कार्यरूपयो हि विध्यर्थः कार्यं च कृत्यवच्छिन्नम्। कृतिश्च पुरुषप्रयत्नरूपा। तदवच्छिन्नः स्वकार्यात्मा नियतमेवार्थाव्यभिचारित्वात्। तेन प्रथमं भावार्थोऽवच्छेदकतयैव संबध्यते। पश्चात्तस्य कार्यस्य किं करणमित्यपेक्षायामेवासौ कृतिव्याप्यत्वाद्विषयभूतः। स एतस्यां कृतौ करणं भवति। तद्व्याप्यत्वाद्विषयीभूतस्य साधनभावो न साधनत्वेनैव नियोगसंबन्धो भावार्थस्य। तच्च विषयकरणीये विविक्तम्। **यथा चैतदेवं** करणापत्तौ भावार्थान्तरापेक्षा भावार्थस्य न विषयापत्तौ **तथा षष्ठे** शास्त्रस्य व्यपवर्धित्वं वदन्तो **वक्ष्यामः। तस्माद्धात्वर्थभेदान्नियोगभेदः नियोगभेदाच्च सिद्धं कर्मान्तरम्।** कर्मान्तरनियोज्यस्य कर्मान्तरनियोज्यत्वाभावनिबन्धभेदो तद्भेदाच्च शास्त्रमपि भिद्यते। **यदप्युक्तं नियोगार्थस्य प्रत्ययवाच्यत्वादगृह्यमाणविशेषत्वात् सर्वभावार्थाभिसंबन्ध इति। तदयुक्तं, अगृह्यमाणविशेषता हि विनियोगे न विषये** विषयत्वे हि सति य एव संबन्धस्तेनैव भेद आपादित इति न

माह, न दानयागावपेक्षते। तत्रैतावच्छब्देनावगतं, दानेन केवलेन सिद्ध्यति इति। जुहोतीत्यपि होमेन केवलेन सिद्ध्यतीति, न तु दानेन केवलेन सिद्ध्यतीति विज्ञानं निवर्तते। ददातिर्हि स्वेन कारकग्रामेण कृतानुबन्धो न यागं होमं वा अनुबन्धमपेक्षते। तस्माद्भिन्नानि वाक्यानि, प्रतिशब्दमपूर्वभेदः इति। न च दानस्य यजतिर्जुहोतिर्वाऽनुवादो यागहोमयोरविवक्षाप्रसङ्गात्। न च दानमितरयोरनुवादः, परस्व-

---

तदुक्तं भाष्यकारेण—यजिरप्येवं स्वोच्चारणावगम्यविषये नोच्चारणान्तरमपेक्षते। या पुनरेकार्थता यागहोमानामुपवर्णिता सा नोपपद्यते भिन्नार्थावगतेः। न च विधेयार्थत्वे संभवति अनुवादता युक्ता। यत्पुनरिदमुक्तम् दर्शपूर्णमासयोरिवानेकानुबन्धविषयता एवावगम्यन्त इति। परिहृतमिदमस्माभिः। विनियोज्यतया तदवसीयते न विषयतया।

---

तत्रान्यस्य संबन्धः। विनियोगमात्रे तु युक्त एवान्यसंबन्धेऽप्यन्यसंबन्धः। तदुक्तं भाष्यकारेण यजिरप्येवं स्वोच्चारणावगम्यविषये नोच्चारणान्तरमपेक्षते यजेर्विषयो वाच्यो यागः स्वोच्चारणमात्रेणावगम्यते न ददाति जुहोतीत्युच्चारणान्तरापेक्षता। या पुनरेकार्थता यागदानहोमानामुपवर्णिता सा नोपपद्यते भिन्नार्थावगतेः। यथा च भिन्नार्थः तथा चतुर्थे वक्ष्यामः। न च विधेयार्थत्वे संभवति अनुवादकता युक्ता यतो लक्षणया समानार्थता भवेत्। यत्पुनरिदमुक्तं दर्शपूर्णमासयोरिवानेकानुबन्धविषयता एवास्य विधेरवगम्यन्त इति परिहृतमस्माभिः विनियोज्यतया तदवसीयते न विषयतया करणभावे हि दर्शपूर्णमासयोर्भेदेन(भेदोन)विषयभावे तन्त्राभिहितानां यथाभिधानमेव विषयभावः तेनानुबन्धभेदोऽत्रापि नास्ति केवलं करणत्वमात्रभेदः। कथं पुनर्विषयत्वेनाभेदेऽपि करणत्वे भेदः। उच्यते। साधकत्वेन करणत्वं साधनत्वं चावान्तरव्यापारनिबन्धनम्। तत्रावान्तरव्यापारीभूतोत्पत्ति-

त्वार्थत्वात् ददातेः, इतरयोश्च त्यागार्थत्वात् । प्रयोजनं पूर्वपक्षे समुदायादपूर्वं, सिद्धान्ते तु यागस्य फलवत्त्वादितरयोर्गुणभावः ॥

अभ्यासाधिकरणम् ॥

एकस्यैवं पुनः श्रुतिरविशेषादनर्थकं हि स्यात् ॥ २ ॥

'समिधो यजति', 'तनूनपातं यजति' इत्येवमादिः पञ्चकृत्वोऽभ्यस्तो यजतिशब्दः किमेकमपूर्वञ्चोदयति, किं प्रत्यभ्या-

---

अत एव चाग्नेयादयोऽभिन्नविषया एव न भिन्नविनियोज्याः । तस्मात्सिद्धं प्रतिविषयं शास्त्रभेदः तद्भेदाच्च कर्मभेद इति ।

एकस्यैवं पुनः श्रुतिः । उक्तं कृतानुबन्धत्वाच्छास्त्रभेदः शास्त्रभेदात्कर्मभेद इति । यत्र पुनरनुबन्धोऽप्येकः तत्र कथं ? भवतु तत्रैकं शास्त्रम्, एकं च कर्म । ननु चानर्थकं भवति ।

---

नियोगभेदेन करणता भिद्यते । विषयतया तु तन्निरपेक्षत्वान्न भिद्यते । यत एव च करणत्वे भेदो न विषयत्वे अत एवाग्नेयादयः उत्पत्तिनियोगा अधिकारनियोगेन सह एकविषया एव । तेषामेकैकविषयत्वादधिकारनियोगस्य मिलितविषयत्वान्नाभिन्ननियोज्यानां भिन्नकरणता । तेष्वपि प्रत्येकं करणभावादधिकारनियोगे च प्रत्येकमेव करणत्वम् । तस्मात्सिद्धं प्रतिविषयं शास्त्रभेदः तद्भेदाच्च कर्मभेद इति ।

एकस्यैवम् । उक्तं कृतानुबन्धत्वात् शास्त्रभेदः शास्त्रभेदात् कर्मभेद इति । यत्र पुनरनुबन्धोऽपि एकस्तत्र कथं शास्त्रभेदः । एकग्रन्थेनाह—भवतु तत्रैकं शास्त्रं एकं च कर्म अनुबन्धभेदस्य शास्त्रभेदकस्याभावात् । ननु चानर्थकं भवति पुनर्ग्रहणं

**समपूर्वभेदः ? इति। शब्दान्तरे कर्मभेद उक्तः, इह स एव शब्दः पुनः पुनरुच्चार्यते; तस्मादेकमेवात्रापूर्वम् । ननु**

---

किमिदमानर्थक्यं नाम ? यदि तावन्नार्थप्रतिपादकत्वं, तदयुक्तम्, प्रत्युतार्थान्तरत्वेऽप्रतिपादकं भवति। अथ निष्प्रयोजनत्वं, अवगम्यमानं हि यदि प्रयोजनं न भवति माभूत् को दोषः। तस्मादेकं कर्म। अत्राभिधीयते—विद्यत एवानुबन्धभेदोऽत्रापि। कुतः अविशेषात्। नैतच्छक्यते वक्तुम्। अस्यार्थस्येत्थं पुनः श्रुतिर्वर्तत इति। यागदानहोमादीनामपि ह्यर्थभेदादेवानुबन्धता भिद्यते तच्चात्रापि तुल्यम्। ननु चात्रैको यागार्थः प्रतीयते सत्यमेवैको यागः न तु विधेयतया।

---

परिहरति—**किमिदमानर्थक्यं नाम,** स एवाह—**यदि तावन्नार्थप्रतिपादकत्वं** अर्थशब्दस्याभिधेयवचनत्वात् **तदयुक्तं** प्रतिपादकत्वात प्रत्युतार्थान्तरत्वेऽभ्युपगम्यमानेऽप्रतिपादकं भवति। **अथ** प्रयोजनवचनत्वादर्थशब्दस्यानर्थकं **निष्प्रयोजनमवगम्यमानं हि यदि प्रयोजनं न भवति मा भूत्,** नावश्यं प्रयोजनवत्तयैव भवितव्यमिति नः प्रतिज्ञा। यस्य प्रयोजनमवगम्यते तस्य भवतु प्रयोजनं यस्य तु नावगम्यते तस्य माभूत् न काचित्क्षतिः। **तस्मादेकं कर्म। अत्राभिधीयते। विद्यत एवात्राप्यनुबन्धभेदः। कुतः ?** उत्तरं—**अविशेषात्।** तदेव विवृणोति—**नैतच्छक्यते वक्तुं अस्यार्थस्य इत्थं पुनः श्रुतिर्वर्तेत इति।** तेन भिन्ना एवैते यागाः यजिशब्दाभिधेयाः यथा दर्शपूर्णमासादयः। ननु भवतु यागभेदः तथाप्यनुबन्धता कथं भिद्यते तद्भेदे च शास्त्रभेदो न यागमात्रभेदे। दर्शपूर्णमासाधिकरणशास्त्रवदित्याह—**यागदानहोमादीनां अर्थभेदादेवानुबन्धतापि भिद्यते तच्चात्रापि तुल्यम्। ननु चात्रैको यागार्थः प्रतीयते।** परिहरति—**सत्यमेवैको यागः** स यजिशब्दवाच्यतया **न तु विधेयतया।** (सर्वं) सर्वत्र विधेयतयाऽवगम्यमानो यागो विहितस्य विधानानुपपत्तेः

अपूर्वान्तरमविदधदनर्थको भवति। सत्यमेवाप्रयोजनो भवति, बहुकृत्वोऽपि चोच्चार्यमाणो नान्यार्थो भवति, यत्प्रथमे उच्चारणे गम्यते, शततमेऽपि तदेव गम्यते। तस्मात् पञ्चकृत्वोऽभ्यस्तो यजतिशब्द एकमपूर्वं चोदयति। न चाभ्यासोऽनर्थको भविष्यति, तनूनपादादीर्देवता विधास्यति, तस्मादेकमपूर्वम्।

---

कथं पुनरेकः प्रतीयमानोऽपि विधेयतया नानात्वं भजते यथा ज्योतिष्टोम-दर्शपूर्णमासयोः। आधस्त्यमधिकरणमिदानीं क्वोपयुज्यते ? विशेषाद्धि तत्रानुबन्धभेदः। इह त्वविशेषादित्युपयोगः। अत एव भाष्यकारेण पूर्वपक्षे स एव शब्दः पुनः पुनरुच्चार्यत इति वदता न विशेषादृतेऽनुबन्ध-नानात्वं सिद्ध्यतीति प्रदर्शितम्। गुणविधानं पुनः किमर्थमाशङ्कितम् ?

---

भिन्नोऽवगम्यते। कथं पुनः एकः प्रतीयमानोऽपि विधेयतया नानात्वं भजते पृथग्यज्यभि-धेयो यागः कथं नानाभूतो भवतीत्यर्थः। उत्तरं—यथा ज्योतिष्टोमदर्शपूर्णमासयोश्च बहूना-मपि यागानां एकशब्दाभिधेयत्वं नानुपपन्नम्। एकोपाधिसंभवात् सर्वेषां हि देवतोद्देशेन द्रव्यत्यागरूपता न भिद्यते तेन तदुपाधिकयजिशब्दाभिधेयत्वं नानुपपन्नम्। यद्येकत्वेऽपि विधिश्रवणेन यजिशब्दस्य विधेयभूतभावार्थो भिन्नोऽवगम्यते तदा यागदानहोमादीनामपि तथैव भेदावगमसिद्धेः आधस्त्यमधिकरणमिदानीं क्वोपयुज्यते ? उत्तरं-विशेषाद्धि तत्रानु-बन्धभेदः। अस्यार्थः—अभिधानान्तरमनुबन्धभेदकं दर्शयितुमाधस्त्यमधिकरणम्। इह तु पुनः श्रुतिरपि अनुबन्धभेदिकेति वक्तुमित्युपयोगोऽधिकरणद्वयस्य। यत एवाभिधानान्तरा-भावेऽपि विधिपुनःश्रुतिमात्रेणाभेदः तत एव भाष्यकारेण पूर्वपक्षे स एव शब्दः पुनः पुनः उच्चार्यत इति वदता न विशेषादृतेऽनुबन्धनानात्वं सिद्ध्यतीति प्रदर्शितम्। गुण-विधानं पुनः किमर्थमाशङ्कितं ? अस्यार्थः—पुनः श्रुतेर्भेदकरणत्वे पुनःश्रुति समिधो

एवं प्राप्ते ब्रूमः,—एकस्यैवं पुनः श्रुतिः स्यात्, कर्मभेदं कुर्यादित्यर्थः। तावत्येव विधीयमानेऽसति कस्मिंश्चिद्विशेषे पुनः श्रुतिरनर्थिका भवेत्। ननूक्तं न [शक्नोत्यर्थान्तरम् विधातुम् —इति। उच्यते, समिधो यजति इत्यपि प्रथमोऽनुवाद एव, दर्शपूर्णमासाभ्यां यजेत इति यागः प्राप्त एव; तत्र देवता

---

पुनः श्रुतेरुदाहरणं दुर्लभमिति मन्वानेनेदमाशङ्कितम्। गुणनानात्वाद्धि श्रुत्यन्तरमेव भवति। नामानि वा भवन्तु। तथापि श्रुत्यन्तरमेव। परिहारस्तु न केवलधात्वर्थविधावसति गुणविधानं नाम वा न संभवति गुणो हि विधीयमानः समिधो यजतीति क्व विधीयताम्? यदि तावत्प्रधानयागे, गुणान्तरावरोधात् न संभवति। अथ समिद्यागएव, याग-

---

यजतीत्यादिषु गुणविधानाशक्यत्वान्निरर्थता। न ह्येव पुनः श्रुतेर्भेदहेतुता निरस्ता भवति। उत्तरं—पुनः श्रुतेरुदाहरणं दुर्लभमिति मन्वानेनेदमाशङ्कितम्। अस्यार्थः—पुनःश्रुतिर्भेदिका यदि क्वचित् संभवेत् सातु क्वचिदपि न संभवति। केवलस्याख्यातपदमात्रस्याप्रयोगात्। यदा गुणपदमुपपदं भवति तदा तत्र गुणविधानात् पुनः श्रुतिः न शक्यते वक्तुं तदाह— गुणनानात्वाद्धि श्रुत्यन्तरमेव भवति यदापि नाम तदापि भेदाच्छ्रुत्यन्तरमेव। तदाह —नामानि वा भवन्तु समिदादिपदानि। तथापि श्रुत्यन्तरमेव तेन पुनः श्रुतेरुदाहरणं दुर्लभम्। परिहारस्तु केवलधात्वर्थ[1] विधावसति गुणविधानं नाम वा न संभवति। यावद्धि केवलो धात्वर्थो न विधीयते तावद्गुणविधानं न संभवति निराश्रयस्य तस्यायोगात्। नामापि नामिनोऽसंभवेऽनुपपन्नमेव। कस्मादित्याह-गुणो हि विधीयमानः समिधो यजतीति क्व विधीयताम्?। एकग्रन्थेनाह—यदि तावत् प्रधानयागे तदा गुणान्तरेणा-ग्न्यादिना तस्य यागस्यावरोधान्न तत् संभवति। अथ समिद्याग एव गुणविधिः तदा याग—

---

(1) G. अस्ति

न शक्या विधातुम्, श्रुतिप्राप्ता हि तत्र देवता, इयं वाक्यात्प्रकरणाद्वा, तयोर्विकल्पो न न्याय्यः, स एष देवतायागसम्बन्धो विधीयमानः अक्रियमाणे यागे न शक्यः कर्तुमित्यनर्थकः स्यात् क्रियमाणे तु शक्यते। तस्मादभ्यसितव्यो यागः, प्रत्यभ्यासश्चादृष्टभेदः इति, न च यत् समित्सम्बन्धेन क्रियते तत् तनू-

---

विधानमपि प्राप्नोति यागविधाने च निवृत्तिः गुणविधानस्य श्रुतेः नाम—तावगमात्। एवं पञ्चस्वपि द्रष्टव्यम्। नाम्नोऽनुवादत्वात् यजिश्रुतिरेव केवलं विषयविशेषणं तस्मादेतान्येवोदाहरणानि पुनः श्रुतेः। न चात्र नाम भेदकं विधानोत्तरकालभावित्वान्नामभावस्य। अभेदकमेव तर्हि सर्वत्र नाम, विधानोत्तरकालभावित्वात्। उच्यते। समिदादिषु तु न भेदकम्।

---

विधानममपि प्राप्नोति। भवतु यागविधानं को दोष इत्याह—यागविधाने च निवृत्तिर्गुणविधानस्य श्रुतेर्नामतावगमात्। गुणविधाने हि मत्वर्थलक्षणा दोषः तेन गुणविधिर्नास्ति। किन्तु नामत्वमेव। एवं पञ्चस्वपि द्रष्टव्यम्। नन्वेवं नामधेयत्वेऽपि श्रुत्यन्तरमेवेत्यत्राह—नाम्नोऽनुवादकत्वात् यजिश्रुतिरेव केवलं विषयविशेषणं यजिरेव स्वार्थे विशिष्टविषयत्वेनोपनयति। नामधेयं तु यज्यर्थमेवानुवदति। तस्मात्तान्येव पुनः श्रुतेरुदाहरणानि। नन्वेवमपि नाम्नैवात्र भेदः न पुनः श्रुत्येत्याह—न चात्र नाम भेदकं विधानोत्तरकालभावित्वान्नामभावस्य। यत्र विधिर्वर्तते तत्रैव नाम्ना वर्तितव्यम्। तेन यदा विधिभिन्नो यागो यजिना विधेयत्वेनोपनीतः तदा भिन्नस्य नामधेयम्, यदाऽभिन्नस्तदा अभिन्नस्येति नाम्नो भेदकत्वं नास्ति। **अभेदकमेव तर्हि नाम? [1]सर्वत्रविधानोत्तरकालभावित्वात्।** ततश्च नामधेयं नाम प्रमाणान्तरं भेदकमुच्छिद्येत। **उच्यते। समिदादिषु तु न भेदकं[2]**

---

(1) सर्वत्राभिधा (2) G. तु कर्तुरभेदकं

नपात्सम्बन्धेन, भिन्नत्वात् तयोः, अतो न विकल्पः। प्रयोजनं पूर्वपक्षे सकृत्प्रयोगः इति, सिद्धान्ते पुनः पुनः प्रयोगः इति ॥

पौर्णमास्यधिकरणम् ॥

प्रकरणन्तु पौर्णमास्यां रूपावचनात् ॥ ३ ॥

एवं हि समामनन्ति,—'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यांश्चाच्युतो भवति, तावब्रूतामग्नीषोमावाज्यस्यैव नौ

---

ज्योतिष्टोमादिषु तु यथा भेदकं तथा तत्रैव विशेषं वर्णयिष्यामः। तस्मादविशेषादनुबन्धभेदः अनुबन्धभेदाच्छास्त्रभेदः शास्त्रभेदात्कार्यभेद इति सिद्धम्।

**प्रकरणं तु पौर्णमास्याम्।** उक्तं पुनः श्रुतेरप्यनुबन्धान्यत्वमविशेषादिति। अस्यामिदानीं पुनः श्रुतौ य एवं विद्वान् पौर्णमासीं यजते य एवं विद्वानमावास्यां यजत इति किमनुबन्धभेदो विद्यते नेतीति चिन्त्यते। पूर्वोक्तेन न्यायेना—

---

ज्योतिष्टोमादिषु यथा भेदकं तथा तत्रैव वर्णयिष्यामः। यत्र पुनः नामाख्यातशून्यं श्रूयते तत्र तत एव भेदेऽवसिते पश्चाद्यजिरपि श्रूयमाणो भिन्नयागपर एव भवति। केवलस्तु यजिः सहस्रदक्षिणादिगुणमात्रविधिपर एव भवतीति संज्ञाधिकरणे वक्ष्यते। [1]तस्मादविशेषादनुबन्धभेदः अनुबन्धभेदाच्छास्त्रभेदः शास्त्रभेदात् कार्यभेद इति सिद्धम्।

प्रकरणं तु। उक्तं पुनः श्रुतेरप्यनुबन्धान्यत्वमविशेषात् इति। अनेनावान्तरसंगतिः पूर्वपक्षबीजं चोपन्यस्यति। य एवं विद्वान् पौर्णमासीं यजते य एवं विद्वानमावास्यां यजते इत्यस्यामिदानीं पुनः श्रुतौ किमनुबन्धभेदो विद्यते नेति चिन्त्यते। पूर्वोक्तेन

---

(1) G. तस्मादनुबन्धविशेषाद्भेदः

उपांशु पौर्णमास्यां यजन्निति, ताभ्यामेतमग्नीषोमीयमेकादश-कपालं पौर्णमासे प्रायच्छत्, ऐन्द्रं दध्यमावास्यायाम् ऐन्द्रं पयोऽमावास्यायाम्' इति। तथा 'आघारमाघारयति, आज्यभागौ यजति, स्विष्टकृते समवद्यति, पत्नीसंयाजान् यजति; समिष्ट-

---

विशेषादनुबन्धभेदः। शब्दान्तरत्वं किमित्युपन्यस्तम्? अभ्यासादेवाविशेषादिति युक्तिर्गम्यते। अत्राभिधीयते। उभयप्रकारोऽत्र भेदः चिन्त्यते करणेतिकर्तव्यताकृतो विषयकृतश्च। तत्राभ्यासाद्विषयकृतभेद-सिद्धिः, शब्दान्तरात् करणेतिकर्तव्यताभेदः तस्माद्युक्तमुभयमुपन्यस्तम्। अत एव समप्रधानाङ्गाङ्गिभावानुवादविधानानि क्रमेणोपन्यस्तानि।

---

विशेषादनुबन्धभेदः। अत्र भाष्यकारेण शब्दान्तरत्वादभ्यासाच्चेति प्रमाणमुपन्यस्तम्, तत्राक्षेपमाह—**शब्दान्तरत्वं किमित्युपन्यस्तं अभ्यासादेवाविशेषादिति युक्तिर्गम्यते। अत्राभिधीयते। उभयप्रकारोऽत्र भेदश्चिन्त्यते। करणेतिकर्तव्यताकृतो विषयकृतश्च।** करणेतिकर्तव्यतात्मना साध्यभेदनिबन्धनोऽनुबन्धभेदनिबन्धनश्चात्र भेदः प्रतिपाद्यते। **तत्राभ्यासाद्विषयकृतभेदसिद्धिः।** अनुबन्धकृतः शास्त्रभेदो नाभ्यासादुच्यते। **शब्दान्तरात्करणेतिकर्तव्यताभेदः** करणेतिकर्तव्यताशास्त्रभेदनिबन्धनशास्त्रभेदः शब्दान्तरादुच्यते। करणस्य हि अवान्तरकार्यं साध्यं इतिकर्तव्यतायाश्च करणोपकार इति साध्यभेदः तद्भेदाच्च करणशास्त्रादितिकर्तव्यताशास्त्रं भिद्यते। करणेतिकर्तव्यतात्मना च भेदः शब्दान्तरत्वाद्भवति। येन शब्देनाग्नेयादित्येवोच्यते तेन कामशब्देनाधिकारसंबन्धात् आग्नेयादीनि करणानि भवन्तीत्यवघातादीन्यङ्गानि। **तस्माद्युक्तमुभयमुपन्यस्तम्।** यत एव हेतुना साध्ये अयं करणेतिकर्तव्यताकृतो[भेदः]नासाधि(तो)[ते] लक्ष्यते **अत एव समप्रधानाङ्गाङ्गिभावानुवादविधानानि क्रमेणोपन्यस्तानि।** अन्यथा प्रयोजनमात्रत्वे समप्रधानाङ्गाङ्गिभावयोरधिकरणान्तरे

यजुर्जुहोति'। तथा 'य एवं विद्वान् पौर्णमासीं यजते, य एवं विद्वानमावास्यां यजते' इति। तत्र सन्देहः, सर्वाण्येतानि

---

न विधानमात्रात् समप्रधानभावसिद्धिः। नाप्यनुवादमात्रात् गुणप्रधानभावः। किं र्हि ? शब्दान्तरत्वात् गुणप्रधानभावः, अभिधानान्तरत्वादित्यर्थः। अभिधानैक्याच्च समप्रधानभावः। किं पुनरङ्गप्रधानतया भेदकथने प्रयोजनम् ? (न)विषयतो वा भेदकथने किं प्रयोजनम् ? कथं नाम भेदेनानुष्ठानं स्यादिति। एवं चेत् अत्राप्यङ्गप्रधानतया कथं नामानुष्ठानं स्यादिति। ननु चाङ्गप्रधानता विनियोगादेवावगम्यते फलवदफलतया। किमभिन्नस्यैव विनियोगादवगतिः ? न ब्रूमोऽभिन्नस्येति। किन्तु विषयमात्र-

---

उपन्यासः स्यात्। कस्मात्पुनर्हेतोः साध्यतेत्यत्राह—**न विधानमात्रात् समप्रधानभावसिद्धिः। नाप्यनुवादमात्रात्** गुणप्रधानभावः। **किं** तर्हि शब्दान्तरत्वादङ्गाङ्गिभावः शब्दान्तरशब्देन शास्त्रान्तरं मा विज्ञायीत्येतदर्थमाह—**अभिधानान्तरत्वादित्यर्थः। अभिधानैक्याच्च समप्रधानभावः।** यदि विधेयावमावास्यापौर्णमासीसंयुक्तौ यागौ भवतः तथापि यावदभिधानैक्यं न भवति तावन्न समप्रधानभावसिद्धिः। तथा निपात(द)त्वेपि यावदभिधानान्तरता न स्यात् एवं नाङ्गाङ्गिभावसिद्धिः। **किं पुनरङ्गप्रधानतया भेदकथने प्रयोजनं ?** उत्तरं—**विषयतो वा भेदकथने किं प्रयोजनम् ?** एकग्रन्थेनाह—**कथं नाम भेदेनानुष्ठानं स्यात्। एवं चेदत्राप्यङ्गतया कथमनुष्ठानं स्यात्।** अत्र यदाऽभिन्नस्यैव विनियोगादङ्गाङ्गित्वं स्यात् तदा न भवेदभिधानान्तरत्वं हेतुः। तत्राभिधानान्तरवशेन त्वधिकारचोदनायामनुप्रवेशाननुप्रवेशाभ्यां अङ्गाङ्गित्वं यदधिकारचोदनानुप्रविष्टं तत्प्रधानं इतरत्तत्राप्रधानम्। चोदयिता आह—**न ब्रूमोऽभिन्नस्याङ्गाङ्गित्वमिति। किंतु विषयमात्र—**

समप्रधानानि, उत आग्नेयादीनि पयोन्तानि प्रधानानि, आघारादीनि आरादुपकारकाण्यङ्गानि? तथा, य एवं विद्वानित्येवं संयुक्तौ प्रकृतानां कर्मणामनुवदितारौ, अथ वा 'य एवं विद्वान् पौर्णमासीं यजते, य एवं विद्वानमावास्यां यजते' इत्यपूर्वयोः कर्मणोर्विधातारौ, तत्र इतरे गुणविधयः? इति।

किं प्राप्तम्? शब्दान्तरत्वादभ्यासाच्च समप्रधानानि इति

---

भेदाद्भिन्नस्येत्युच्यते। यदि विषयभेद एव अङ्गाङ्गित्वे हेतुः किमिति न प्रधानानि परस्पराङ्गम्? समिदादीनि वा। तस्मात् कार्यचोदनातो भेदोऽङ्गाङ्गित्वे हेतुः न विषयचोदनातः अतो विषयत्वेन भिन्नानां कार्ये शब्दान्तरतैवानुबन्धभेदे हेतुः भिन्नानां च विनियोगात्। फलवदफलतया चाङ्गाङ्गित्वमवगम्यते। तस्मात् प्रयोगचोदनातो भेदोऽप्यत्रैव प्रदर्शनीयः। तदुक्तम्। शब्दान्तरत्वादभ्यासाच्च समप्रधानानीति भाष्ये बहुवचनाद्विषयभेदः प्रातिपदिकात्कार्यान्यत्वम्।

---

भेदाद्भिन्नस्येत्युच्यते अङ्गाङ्गित्वम्। दूषयति—विषयमात्रभेद एव यद्यङ्गाङ्गित्वे हेतुः किमिति प्रधानान्याग्नेयादीनि परस्परमङ्गं न भवन्ति समिदादीनि वा परस्परं कस्मान्नाङ्गं? तेष्वपि विषयभेदस्य विस्पष्टता। उपसंहरति—तस्मात् कार्यचोदनातोऽधिकारचोदनातो भेदो वाऽङ्गाङ्गित्वे हेतुः न विषयचोदनातो भेदः। अतो विषयत्वेन भिन्नानामपि कार्ये शब्दान्तरतैवानुबन्धहेतुः। कश्चित्करणानुबन्धः कश्चिच्चेतिकर्तव्यतानुबन्ध इति। अस्मिन्नर्थे भाष्यं योजयति—भाष्ये बहुवचनाद्विषयभेदः प्रातिपदिकात्कार्यान्यत्वम्। अस्यार्थः—समप्रधानानीति बहुवचनप्रयोगात् कर्मबहुत्वमवगम्यते। तत्र यद्यपि सिद्धान्तेऽपि बहुत्वमस्ति तथाप्युभयसमतापेक्षया बहुत्वं गृह्यते। तेन विषयभेदो बहुवचनेन प्रतिज्ञातः

**प्राप्ते ब्रूमः, प्रकरणन्तु पौर्णमास्यां, प्रकृतानामाग्नेयादीनामनुवदितारौ पौर्णमास्यमावास्यासंयुक्तौ । कुतः ? रूपावचनात्,**

---

तदिदं लक्षणादावुक्तं प्रधानाप्रधानानि परीक्ष्यन्ते भिन्नान्यभिन्नानि चेति । प्रधानानीत्यङ्गाङ्गिभावः अप्रधानानीति विषयः ।

अत्राभिधीयते—**प्रकृतानामनुवदितारौ पौर्णमास्यमावास्यासंयुक्तौ,** कुतः ? विशेषावगमात् । पूर्वस्याः श्रुतेरियं पुनः श्रुतिर्गम्यते । कस्मात् ? कालसंबद्धा हीयं चोदना । यद्यत्र कालसंस्पर्शोऽर्थो न गृह्यते तदा तदर्थस्याग्रहणमेव । अन्यथानवगमात् । यदि पुनः कालसंस्पर्शो न गृह्यते तदा पूर्वस्याः श्रुतेरियं पुनः श्रुतिः स्पष्टा ।

---

तत्र चाभ्यासादिति हेतुः । तथा समप्रधानप्रातिपदिकेनापि सिद्धान्ते यत्कार्यं करणोपलक्षणमभिमतं ततोऽन्यत्वं प्रतिज्ञातं तत्र शब्दान्तरत्वं हेतुः यादृशेनाभिधानेनाङ्गाङ्गित्वं प्रतिपाद्यते कालसंबन्धयागविषयेणाधिकारगतेन अस्तिना ततः शब्दान्तरत्वाद्यजेः सर्वयागविषयत्वात् सर्वाणि समप्रधानानि । तदेवं सप्रयोजनपूर्वपक्षो भाष्यकारेण दर्शित. । **तदिदं लक्षणादावुक्तं प्रधानाप्रधानानि परीक्ष्यन्ते भिन्नान्यभिन्नानि; प्रधानानीत्यनेन** भाष्येणाङ्गाङ्गिभावः संगृहीतः **अप्रधानानीति विषयः** संगृहीतः । एतच्च तत्रैव व्याख्यातम् । अत्राभिधीयते—**प्रकृतानां कर्मणामनुवदितारौ पौर्णमास्यमावास्यासंयुक्तौ । कुतः ? विशेषावगमात्** अयं विशेषोऽवगम्यते पूर्वस्याः श्रुतेरियं पुनः श्रुतिर्गम्यते आग्नेयाग्नीषोमीयोपांशुयाजानां य एवं विद्वान् पौर्णमासीं यजते इति पुनः श्रुतिः । तथा आग्नेय—ऐन्द्राग्नसान्नाय्ययागानां य एवं विद्वानमावास्यां यजते इति । **कस्मात् ? उत्तरं-कालसंबद्धा हीयं चोदना । तत्रापि** किमित्याह—**यद्यत्र कालसंस्पर्शोऽर्थो न गृह्यते** केवलयागमात्रविधानमाश्रीयते **तदा तदर्थस्य** तस्यां चोदनायां अर्थस्य **ग्रहणमेव नास्ति अन्यथा** कालासंस्पर्शिनोऽर्थस्या**नवगमात् यदि कालसंस्पर्शो न गृह्यते तदा पूर्वस्याः श्रुतेः इयं पुनः श्रुतिः स्पष्टा ।**

**य एवं विद्वान् पौर्णमासीसंज्ञकं यागं यजते इति न सर्वे यागा उच्यन्ते, यः पौर्णमासीसंज्ञकः स विधीयते, नचैतदेवमवगच्छामः, कीदृशमेवंसंज्ञकस्य यागस्य रूपम् इति, ते न किञ्चित्**

---

कालयोगिनी हि सा श्रुतिः। अथ कस्मान्न विपरीतं ? अग्न्यादेरभ्यधिकस्यावगमात्। तस्मादियमेव पुनः श्रुतिः ततोऽनुवादः अनुवादत्वाच्च कार्ये शब्दान्तरत्वाद्भेदः। अत्राग्नेयादीनि पयोऽन्तानि प्रधानानि प्रयाजादीन्यङ्गानि। किं पुनः कारणं ? अनुवाद एव प्रयाजादीन्यङ्गानि न पुनर्विधावपि। कथं वा विधिपक्षेऽङ्गाङ्गिता शङ्क्यते ?। एवमा-

---

कुत इत्याह—कालयोगिनी हि सा श्रुतिः। न तदाग्नेयाष्टाकपाल इत्यादिरुत्पत्तौ कालश्रवणात्। यदि तेषामिवानुवदितारौ तदा तत्कालयोगेन नामधेयतया पौर्णमास्यमावास्याशब्दौ प्रयुज्येते। कर्मान्तरत्वे तु प्रतिप(वृ)त्ति निमित्ताभावेन नामधेयत्वानुपपत्तिः। न च कालविशिष्टकर्मविधिः द्वितीयान्तस्य कालविधानाननुरूपत्वात्। सप्तमीश्रुतिर्हि कालविधानादावुचिता। तेनाग्नेयादिषु कालविधिः स्पष्टः। न च वाच्यं कर्मान्तरविधिपक्षे पौर्णमास्यां पौर्णमास्यया यजेत अमावास्यायाममावास्यया यजेत इति कालविधिमाश्रित्य नामधेयं भविष्यतीति इतरेतराश्रयप्रसङ्गात्। सति कालविधौ पौर्णमासीत्वं पौर्णमासीत्वे कालविधिरित्युत्पत्तिकालयोगिनामेवंभूतकालविधिः। ततश्च प्रवृत्तिनिमित्तशून्यता। **अथ कस्मान्न विपरीतं ?** पौर्णमास्या संयुक्तौ कर्मविधिः तत्राग्नेयादिभिः कालविधिः ततश्च तत्प्रख्यतया नामत्वमिति। उत्तरं—न भवति विपरीतं **अग्न्यादेः** कालतो **ह्यधिकस्य** विद्यमानत्वात्। **तस्मादाग्नेयादीनामेव पुनः श्रुतिः अतोऽनुवादः अनुवादत्वाच्च कार्ये शब्दान्तरत्वादङ्गाङ्गिभावेन भेदः। अत्र आग्नेयादीनि पयोऽन्तानि प्रधानानि प्रयाजादीन्यङ्गानि** इति। **किं पुनः कारणम् ? अनुवाद एव प्रयाजादीन्यङ्गानि न पुनर्विधावपि।** विधिपक्षेऽपि कस्मात् अङ्गाङ्गिता न भवति ? समाधाता पृच्छति—**कथं वा विधिपक्षेऽङ्गाङ्गिता शङ्क्यते।** आक्षेप्तोत्तरमाह—**एवमा-**

प्रतिपद्येमहि; अतो ब्रूमः, यद्यपूर्वस्य विधातारौ अनर्थकौ-इति; अथ नु प्रकृतानामनुवदितारौ, ततः सन्निहिताः पौर्णमास्यमावास्यासंयुक्ता यागाः इति गम्यते रूपम्, तत्रार्थवत्ता वचनस्य। कथं पुनरेकवचनान्तौ बहूनां वाचको भविष्यति इति यद्युच्यते। समुदायशब्दतयाऽवकल्पिष्यते, रूपवन्तो हि पूर्वप्रकृता यागाः, तेषां च प्रचयशिष्टः समुदायोऽप्यस्ति तदपेक्षोऽयमरूपशब्दः, तस्मादेकवचनान्तता न दोषः, भवति हि बहूनामेकवचनान्तः शब्दः समुदायापेक्षः, यथा, यूथं वनं कुलं परिषत् इति। यदा आग्नेयादीनां समुदायवचनावेतौ, तदा दर्शपूर्णमासशब्देन एत एव अभि-

---

शङ्क्यते। तयोर्हि कर्मणोर्वचनान्तरेण कालविधानं "पौर्णमास्यां पौर्णमास्या यजेत," "अमावास्यायाममावास्यया यजेत" इति। ततः किं? इदं ततो भवति, अष्टानां यागानां दर्शपूर्णमासशब्दवाच्यता भवति आग्नेयादिगुण–विधिपक्षे वा द्वयोरेव। अतश्च तयोः फलसंबन्धः। तेषां वा। प्रयाजादीनामङ्गतैव। तस्मादनुपपन्नमिदं विधौ समप्राधान्यम् अनुवादेऽङ्गाङ्गितेति।

---

शङ्क्यते–तयोर्हि पौर्णमास्याममावास्यायां वा विहितयोः कर्मणोर्वचनान्तरेण कालविधानं पौर्णमास्यां पौर्णमास्या यजेत अमावास्यायाममावास्यया यजेत इति। ततः किं? भवत्वनयोरपि कर्मणोर्वचनान्तरेण कालविधानं तथापि किमित्याह। उत्तरं–इदं ततो भवति। अष्टानामपि यागानां दर्शपूर्णमासशब्दवाच्यता भवति कालयोगस्य विद्यमानत्वात्, आग्नेयादिगुणविधिपक्षे वा द्वयोर्यस्मिन् पक्षे आग्नेयादयो गुणविधयस्तस्मिन् पक्षे द्वयोरेव यागयोः दर्शपूर्णमासशब्दवाच्यता अतश्च तयोरेव द्वयोर्यागयोः तेषां वा अष्टानां फलसंबन्धः तान् प्रति प्रयाजादीनामङ्गतैव। तस्मादनुपपन्नमिदं विधौ समप्राधान्यं अनुवादेऽङ्गाङ्गितेति।

**धीयन्ते ; तत एषां फलसम्बन्धः, फलवत्सन्निधेस्तु आघारादीनि आरादुपकारकाणि इति ॥**

विशेषदर्शनाच्च सर्वेषां समेषु ह्यप्रवृत्तिः स्यात् ॥ ४ ॥

**यदि च सर्वाणि समप्रधानानि अभविष्यन्, न विकृतौ प्रयाजा दृश्यन्ताम् ! दृश्यन्ते तु,—'प्रयाजे प्रयाजे कृष्णलं**

---

उच्यते । न कालविधिर्द्वयोः संभवति । प्रयोगशेषता हि पौर्णमास्यां पौर्णमास्या यजेत इति प्रतीयते न विषयशेषता । यद्यप्यनयोरुत्पत्तिकालयोगाभावेन दर्शपूर्णमासपदवाच्यता नास्ति तथापि दर्शपूर्णमासाभ्यामिति षण्णां दर्शपूर्णमासशब्दता केन वार्यते । अनभिज्ञो भवान् विध्यनुवादशब्दसामर्थ्यस्य देवानां प्रियः । यथाऽनुवादं हि शक्यते सङ्ख्याऽवगन्तुम् । तात्पर्ये च विशेषतः ।

---

उपपदवशेन यजेर्विशेषप्रवर्तिता विधिपक्षेऽप्यविशिष्टेति भावः । **उच्यते । न कालविधिर्द्वयोः संभवति ।** कुत इत्याह—**प्रयोगशेषता हि पौर्णमास्यां पौर्णमास्यया यजेतेति प्रतीयते न विषयविशेषता** साङ्गप्रधानशेषता कालयोर्न केवलप्रधानशेषतेति एकादशे वक्ष्यामः । उत्पत्तिकालयोगनिमित्तं च दर्शपूर्णमासाभ्यामित्युपपन्नम् । ततश्चानयोर्दर्शपूर्णमासशब्दनामाभिधेयत्वात् न प्राधान्यम् । अत्र चोदयति—**यद्यप्यनयोरुत्पत्तिकालयोगाभावेन दर्शपूर्णमासपदवाच्यता नास्ति तथापि दर्शपूर्णमासाभ्यामिति षण्णां दर्शपूर्णमासशब्दवाच्यता केन वार्यते** तेषामुत्पत्तिकालयोगित्वात् । ततश्च षण्णामेव फलसंबन्धात् भवतु प्राधान्यम् । परिहरति—**अनभिज्ञो भवान् विध्यनुवादयोः शब्दसामर्थ्यस्य देवानां प्रियः** । यादृशमनुवादे शब्दसामर्थ्यं तादृशं दर्शयति—**यथाऽनुवादं हि शक्यते सङ्ख्याऽवगन्तुम् । तात्पर्ये च विशेषतः ।** अस्यार्थः । य एवं विद्वान् पौर्णमासीं यजते इति त्रयाणामनुवादः । तथा य एवं

**जुहोति' इति, असत्याग्नेयगुणत्वे प्रयाजस्य तन्नोपपद्यते। अतो न सर्वाणि समप्रधानानि ॥**

---

**अतात्पर्ये अयथानुवादे च न सङ्ख्यायोगिनः उपपदवशान्नियमः**

---

विद्वानमावास्यां यजते इति च त्रयाणाम्। कस्मात्पुनः त्रयाणामेवानुवादः यावता रूपवतां सर्वयागानामेव अनुवादः उभयत्र किमिति न भवति? उपपदवशेनेति चेत् तदयुक्तम् यजिपरतन्त्रत्वान्नामभावस्य पौर्णमास्यमावास्याशब्दाभ्यामेकवचनाभ्यां यजौ वर्तितव्यं तद्यजि-सामानाधिकरण्यबलेन। यजिश्च प्रकृतेषु सर्वयागेषु वर्तत इति तत्सामानाधिकरण्येन पौर्णमास्यमावास्याशब्दाभ्यामपि तेष्वेव वर्तितव्यम्। दण्डिन्यायश्चानुसरणीयो वैश्वदेव-शब्दवत्। न चानुवादे भेदेन वृत्तिः प्रमाणाभावात्। यद्यपि भिन्नानुवादौ तथापि उभयत्र कृत्स्नानुवाद एव युक्तः, विधिर्हि भिद्यमानो विधेयमपि भिन्द्यात्, विहितस्य विधानानुपपत्तेः अनु-वादश्चानूदितस्याप्युपपद्यते एव।

**अत्र च प्रभाकरवयसः प्रचक्षते।** नारूपतयाऽस्माभिरनुवादोऽभिधीयते ध्रौवाज्यस्य द्रव्यस्य संभवात्। 'वार्त्रघ्नी पौर्णमास्यामनूच्येते' 'वृधन्वती अमावास्यायां' इति विहित-मन्त्रलब्धयोश्च देवतयोरुपपत्तेः रूपलाभात्। यथोक्तं तन्त्रवार्तिके—

'ध्रौवं साधारणं द्रव्यं देवता मान्त्रवर्णिकी'

इति। किन्तु कालसंबन्धे या चोदना तत्र यदि यागविधिः स्यात तदा विधीयमानयोर्यागयेः कालस्पर्शाभावात्तु(न)हानमेव स्यादित्यनुवादत्वे हेतुः। कालसंबन्धश्चेदनुवादे हेतुः येषामेव कालसंबन्धस्तेषामेवानुवादः तेन सिद्धं त्रयाणां त्रयाणां चानुवाद इति। तच्चैकेन यच्छब्देनानुवादात्समुदायापत्तेः। अनुवादद्वयेन समुदायद्वयं संभवति। अनुवादे द्वयोश्च पौर्णमास्यमावास्याशब्दयोः प्रसिद्धकर्मनामधेयतयोरधिकारवाक्येऽन्वयभानात् यथानुवादं अधि-कारसंबन्धः। तत्र च दर्शपूर्णमासाभ्यामिति द्वित्वसंख्या समुदायद्वयविषया शक्यतेऽवगन्तुम्। विशेषेण वाऽनुवादस्य तत्परत्वे यथानुवादमेवाधिकारसंबन्धः। यस्यार्थादित्येवंपरत्वे तेन संख्यायोगिम उपपदवशादुत्पत्ति उपयोगिनामेवाधिकारसंबन्ध इतीदृशमनुवादे शब्दसामर्थ्यम्। विधिपक्षे शब्दसामर्थ्यमाह—**अतात्पर्ये अयथानुवादे च न संख्यायोगिन उपपदवशान्नियमः**

गुणस्तु श्रुतिसंयोगात् ॥ ५ ॥

नैतदस्ति, पौर्णमास्यमावास्यासंयुक्तौ समुदायशब्दौ इति, किन्तु अपूर्वयोः कर्मणोर्विधातारौ, तथा न लक्षणशब्दो भविष्यति। ननु रूपं नास्ति। वाक्यान्तरेण रूपमवगमिष्यामः, पौर्णमास्यामाग्नेयोऽष्टाकपालो भवति इति। यदेतत् पौर्णमासी

---

शक्यतेऽवगन्तुं राजसूयवत्। तस्मान्न सङ्ख्या नाप्युपपदं विशेषावगतौ हेतुः अतो द्वयं धात्वर्थानुसारि तत्र भवतीति युक्तमुक्तम्। तत्रेतरे गुणविधय इति यदुक्तमुपन्यासे तदिदमुच्यते। अथ कस्मान्नाग्नेयादीनि गुणविधानानि। एतौ च कर्मविधी। शक्यते सङ्ख्यानुसारितया द्वयोः प्राधान्यं वक्तुं दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति।

---

शक्यतेऽवगन्तुम् राजसूयवत्। विधिपक्षे हि न यथानुवादमधिकारसंबन्धः अनुवादाभावात्। नापि विधेरिदं तात्पर्यं यथानुदितानामधिकारसंबन्ध इति। (सत्य)[द्वित्व]निष्ठत्वादनुवादाभावाच्च। ततश्चाधिकारवाक्यगतेन यजिना सर्वयागानामेवाधिकारसंबन्धात् यजिसामानाधिकरण्येन च दर्शपूर्णमासशब्दस्य कर्मनामधेयत्वस्य अमुनैव कल्प्यमानत्वात् प्रकृतानां यागानां बहुत्वादङ्गस्य (न)[च] द्विवचनानुपपत्तेः मिलितमेव दर्शपूर्णमासपदं द्विवचनप्रतिरूपकं बहुवचनान्तं यजिनामधेयं स्यात्, न यजिविशेषेऽवस्थापयितुमलम्। (प्रवर्ग्य)[स्ववर्ग] नामत्वाद्वैश्वदेवशब्दवत्। किन्तु यावद्वर्गे वर्तते राजसूयशब्दवत्। उपसंहरति—तस्मान्न संख्या नाप्युपपदं विशेषावगतौ हेतुः। अतो द्वयं (ना)धात्वर्थानुसारि तत्र विधिपक्षे भवतीति युक्तम्। तत्रेतरे गुणविधय इति यदुक्तं पक्षोपन्यासे तदिदमुच्यते। अथ कस्मादाग्नेयादीति गुणविधानानि न भवन्ति एतौ कर्मविधी कस्मान्न भवतः। शक्यते चास्मिन् पक्षे संख्यानुसारितया द्वयोः प्राधान्यं दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति।

नाम कर्म, तस्य एतद्रूपम्, अग्निर्देवता, पुरोडाशो द्रव्यमिति अत आग्नेयादिभिर्गुणो विधीयते इति ॥

चोदना वा गुणानां युगपच्छास्राच्चोदिते हि तदर्थत्वात्तस्य तस्योपदिश्येत ॥ ६ ॥

**कर्मचोदना वा आग्नेयादयः स्युः । कुतः ? । गुणानां युगपच्छासनात्, एकेनैव वाक्येनात्रानेको गुणो विधातुमिष्यते भवता, न च, शब्दान्तरेण चोदिते कर्मणि अनेको गुणः परस्परसम्बन्धे**

---

**चोदना वा गुणानाम्** । नैतत्संभवति । यदि तावत्पौर्णमास्यामष्टाकपालो भवतीति संबन्धो विवक्षितः, न तावदयमर्थः अष्टाकपालः सत्तया संबध्यत इति भवत्यर्थेन न संबध्यत इत्यर्थः । अथाग्नेयः पौर्णमास्यां भवतीति विवक्ष्यते तदाप्याग्नेयपुरोडाशयोरसंबन्ध एव । पूर्वेण सहास्य पक्षस्य को विशेषः ? अयमस्ति विशेषः गुण—

---

**चोदना वा** ॥ अत्रोच्यते । न गुणविधिः संभवति । **यदि तावत्पौर्णमास्यां अष्टाकपालो भवतीति संबन्धो विवक्षितः** पौर्णमासीयागोऽयमष्टाकपालो भवतीति तदा **नायमर्थः सत्तयाऽभिसंवध्यते इति** । तदेव विवृणोति—**भवत्यर्थेन न संबध्यत इत्यर्थः** । अष्टाकपाल आग्नेयो भवतीत्ययं तदा सम्बन्धो न भवेत् अष्टाकपालपौर्णमासीसम्बन्धस्य विवक्षितत्वात् उभयपरत्वे च वाक्यभेदापत्तेः । तथा च वचनव्यक्त्यन्तरं दूषयति—**अथाऽऽग्नेयः पौर्णमास्यां भवतीति विवक्ष्यते तदाप्याग्नेयपुरोडाशयोरसंबन्ध एव** । अत्र चोदयति **पूर्वेण सहास्य पक्षस्य को विशेषः** । येन भेदेन निराक्रियते यावता पूर्वमेवेति युक्तं एकस्मिन् सम्बन्धे विधीयमाने सम्बन्धान्तरं विधातुं न शक्यते । उत्तरं—**अयमस्मिन् विशेषः गुण-**

च असति शक्यते विधातुम्। कथं? यदि तावत् पौर्णमास्यां अष्टाकपालो भवति इति सम्बन्धो विवक्षितः, न तदाऽयमर्थोऽष्टाकपालः सत्तया अभिसम्बध्यते इति। कस्तर्हि? अष्टाकपालः पौर्णमास्याऽभिसम्बध्यते इति। तत्र तदा भवतिर्वर्तते, तदानीमाग्नेयः इत्ययमस्यान्तिकादप्युपनिपतितो भवतिसम्बन्धाभावात् नानेन सम्बन्धुमर्हति, अष्टाकपाल आग्नेयो भवति इति। अथाग्नेयः पौर्णमास्यां भवति इति विवक्ष्यते तदाऽऽग्नेय-पुरोडाशयोरसम्बन्ध एव स्यात्। अथ पौर्णमास्यामष्टाकपाल-स्याग्नेयता विधीयते। वक्तव्यं, केन तस्यामष्टाकपालो विहितः इति। अथ तस्यामाग्नेयस्याष्टाकपालता तथापि एष दोषः।

---

प्रधानविवक्षाऽत्र। भवतु यथेष्टम् तथापि परस्परसंबन्धो नैव शक्यते विधातुम्। अथ पौर्णमास्यामष्टाकपालस्याग्नेयता विधीयते अथ तस्यामाग्नेयस्याष्टाकपालतेति। इदमपि पक्षद्वयं अविवक्षोत्सङ्कलनायै-

---

प्रधानभावविवक्षा भवति। भवतु यथेष्टमत्र तथापि परस्परसंबन्धो नैव शक्यते विधातुं गुणभूता वा प्रधानभूता वा द्रव्यं प्रति पौर्णमासी। भवतु तथापि द्रव्यदेवतयोः परस्परसम्बन्धो नास्तीति तत्र पौर्णमास्यामष्टाकपालो भवतीति पौर्णमासीप्राधान्यपक्षः आग्नेयः पौर्णमास्यामिति गुणत्वपक्षः। अथ पौर्णमास्यामष्टाकपालस्याग्नेयता विधीयत इत्येकः पक्षः। अथ तस्यां पौर्णमास्यामिति गुणत्वपक्षः। अथ तस्यां पौर्णमास्यामाग्नेयस्याष्टाकपालता विधीयत इत्यपरः पक्षः इदमपि पक्षद्वयं अविवक्षोत्संकलनाय पौर्णमास्याग्नेयतया भवतीति वा पौर्ण-मास्यामाग्नेयस्याष्टाकपालता भवतीति। एवं चाविवक्षाश्रितमिति अविवक्षां परिगणयितुमिदं पक्षद्वयमुपन्यस्तम् न पुनर्निराकरणहेतुभेदो विद्यते एकस्मिन्नपि पक्षे निराकृते अपरोऽपि पक्षो

अथ पौर्णमासीति उभाभ्यां सम्बध्येत। परस्परेण द्रव्य-देवतयोरसम्बन्ध एव स्यात्। अथ द्रव्यदेवते परस्परेण विशिष्टे सत्यौ पौर्णमास्या सम्बध्येयाताम् इत्युच्यते आग्नेयोऽष्टाकपालो यः, स पौर्णमास्यां भवति इति,

---

वोभयत्र पौर्णमासीपदसंबन्धो दुश्शकः। यदपि पदद्वयं अग्निप्रजापतिवत् पौर्णमासीसंबन्धितया विधीयत इत्युपन्यस्तम् तत्रापि संभवति पदद्वयविधानम्। अरूपता तु पूर्ववदेवाग्नेयाष्टाक-पालयोः संबन्धाभावात्।

---

निराकृतो भवति। तस्मादुभयत्र **पौर्णमासीपदसम्बन्धो दुश्शकः**। पौर्णमास्यामष्टाकपालस्याग्नेयस्य केनचिदप्राप्तत्वात् न तत्संबन्धोऽनुवदितुं शक्यते। अत्र भाष्यं "अथ पौणमासीत्यु-भाभ्यां" इति, तदयुक्तमिव प्रतिभाति वाक्यान्तरविहितपौर्णमासीसंज्ञककर्मानुवादेन अनेक-गुणविधानासंभवात वाक्यभेदापत्तेरित्याशङ्क्य संभावनायुक्तं[क्ति] वलाद(न)नुभाषते--**यदपि पदद्वयमग्निप्रजापतिवत् पौर्णमासीसंवन्धितया विधीयत(तमानत्वमि)इत्युपन्यस्तमिति**। अस्यार्थः—यथा वाक्यान्तरविहितेऽपि होमे एकवाक्यताबलेन समासद्वन्द्वार्थमाश्रित्य एक-कारकभावेनाग्निप्रजापत्योर्विधानम् तथा पौर्णमास्यां आग्नेयोऽष्टाकपालो भवतीति यदुपन्यस्तं **तत्रापि संभवति पदद्वयस्य** कालोपलक्षिते कर्मणि **विधानम्**। **अरूपता तु पूर्ववदेव आग्नेयाष्टाकपालयोरन्योन्यसंबन्धाभावात्**। तदाग्नेयाष्टाकपालस्याहा[धा]रद्रव्यमेवो-दितम्। न देवता अभिधानाभावात्। **पूर्ववदरूपता** इत्यनेन "परस्परेण द्रव्यदेव-तयोः संबन्धः स्यादि"ति भाष्यं व्याख्यातम्। अपरमपि भाष्यं "अथ द्रव्यदेवते परस्परेण विशिष्टे सत्यौ पौर्णमास्या संबद्ध्येयातामित्युच्यते, य आग्नेयोऽष्टाकपालः स पौर्णमास्यां भवति" इति। तदयुक्तम्। संबन्धद्वयविधाने वाक्यभेदप्रसङ्गात्। तथा हि—आग्नेयाष्टाकपाल-

तस्य अप्रसिद्धत्वादेतदप्ययुक्तम्। अथ केनचिदग्नये सङ्कल्पितः पौर्णमास्यां विधीयते। तथापि देवताया अविधानाद्रूपाभाव एव। अथाग्निर्देवता भविष्यति इति कश्चित् ब्रूयात्। स वक्तव्यः, मिथश्चानर्थसम्बन्धः इति न हि आग्नेयशब्दोऽनुवादो विधिश्च भवति इति।

---

अथाग्नीषोमीयवत् संबद्धयोर्विधानमित्युच्यते, कार्यत्वात्संबन्धस्य न विधानादृते सिद्धिः अग्नीषोमौ तु प्रसिद्धौ द्वन्द्वतया मित्रावरुणवत्। अथात्रापि पूर्वकृतः संबन्धः केनचित् परिगृह्यते तथापि सैवारूपता इहाविधानात्। अथाग्नेय इति सिद्धवद्विधाय पुनराग्नेयतोच्यते। न च सकृदुच्चरितस्य अर्थद्वयं(विधानं)संभवति।

---

संबन्धो विधेयस्तथाभूतेन च सह पौर्णमासीसंबन्ध इति। तत्र दृष्टान्तबलेनैकवाक्यतां दर्शयन् भाष्यार्थमाह—**अथाग्नीषोमवत्संबन्धयोः विधानमित्युच्यते**। निराकरणमाह—**कार्यत्वात्संबन्धस्य न विधानादृते सिद्धिः अग्नीषोमौ तु प्रसिद्धौ द्वन्द्वतया मित्रावरुणवल्लो**कत एव प्रसिद्धद्वन्द्वरूपत्वादग्नीषोमयोः द्वन्द्वार्थौ विधेयः आग्नेयाष्टाकपालयोस्तु संबन्धः कार्य इति स्पष्टो वाक्यभेदः। अनेन 'तस्याप्यप्रसिद्धत्वादेतदप्ययुक्तं' इति भाष्यं व्याख्यातम्। **अथात्रापि पूर्वकृतः संबन्धः केनचित्परिगृह्यते**। अस्यार्थः—केनचिदग्नये यः संकल्पितः अष्टाकपालः सः पौर्णमास्यां विधीयत इति। **तथापि सैवारूपता, इह** देवतात्वेनाग्नेर**विधानात्**। हविर्विशेष एव विहितो भवति। अनेन "अथ केनचित् अग्नये सङ्कल्पितः पौर्णमास्यां विधीयते तथापि देवताया अविधानाद्रूपाभाव एव" इति भाष्यं व्याख्यातम्। **अथाग्नेय इति सिद्धवद्विधाय पुनराग्नेयत्वमुच्यते**। अस्यार्थः—आग्नेयोऽष्टाकपालः स पौर्णमास्यां भवतीति सिद्धवदाग्नेयं विधाय पुनस्तस्यैवाप्याग्नेयता विधीयत इत्युच्यते। निराकरोति—**न सकृदुच्चरितस्यार्थद्वयं संभवति** सकृदुच्चरितस्याग्नेयशब्दस्य सिद्धरूपविधेयार्थः यागार्थः भवति। अनेन "अथाग्निर्देवता भविष्यति इति कश्चिद्ब्रूयात् स वक्तव्यः मिथश्चानर्थसंबन्ध इति। नह्याग्नेयशब्दोऽनुवादो विधिश्च भविष्यति" इति भाष्यं व्याख्यातम्,

कल्पयिष्यामो देवताम् इति चेत्। न, असति विधाने देवताया अभावात्; सम्बन्धिशब्दोऽयं देवता इति, स एवाग्निरष्टाकपालस्य देवता, नान्यस्य। तस्मादवश्यमाग्नेयाष्टाकपालसम्बन्धो विधातव्यः स एव यागो भवति इति, तेन पौर्णमासीयागस्यापरो यागः सम्बन्धी विधीयते, न द्रव्यं देवता वा; न च यागस्य यागान्तरं रूपं

---

अथ रात्रिसत्रवदग्निरेव देवता कल्प्यते, न; प्रमाणाभावात्। रात्रिसत्रे तर्हि कथं ? तत्रार्थवादानुपपत्तेः; इह च द्रव्यमात्रतयोपपत्तिः। न द्रव्यं देवतामपेक्षते। देवता हि द्रव्यापेक्षिणी द्रव्यसंबन्धितयैव देवतेत्युच्यते। तस्माद्देवताविधानार्थं द्रव्यदेवतासंबन्धो विधातव्यः स चेद्विधीयते सिद्धं कर्मान्तरत्वम्। न च कर्म कर्मान्तरस्य रूपं भवतीति

---

"कल्पयिष्यामो देवतां" इति भाष्यं व्याचष्टे—**अथ रात्रिसत्रवदग्निरेव देवता कल्प्येत।** निराकरोति—**न कल्प्यते अग्निर्देवता प्रमाणाभावात्।** अथ रात्रिसत्रे तर्हि कथं आर्थवादिकप्रतिष्ठाकामिविशेषणं कल्प्यत इत्यत्राह—**तत्रार्थवादानुपपत्तेः** प्रतिष्ठैवाधिकारिविशेषणं कल्प्यते। स्वर्गे हि कल्प्यमानेऽर्थवादस्य प्रतिष्ठाफलानुवादिनोऽनुपपत्तिः। तेन तदानुगुण्येन प्रतिष्ठैव कल्प्यते **इह तु द्रव्यमात्रतयैवाग्नेयशब्दस्योपपत्तेः** नाग्नेर्देवतात्वं कल्प्यते। कथं पुनर्द्रव्यतयैवोपपत्तिरित्यत्राह—**न द्रव्यं देवतामपेक्षते। देवता हि द्रव्यापेक्षिणी भवति द्रव्यसंबन्धितयैव देवतेत्युच्यते।** अस्यार्थः--अन्यत्राग्नये सङ्कल्पिते द्रव्ये विहितपौर्णमास्यामपि तस्याग्नेर्देवातात्वविध्यनुपपत्तिः। अग्नौ तु देवतायां विहितायां आग्नेयमेव द्रव्यं विहितं भवति अनाग्नेये द्रव्ये अग्नेर्देवताभावानुपपत्तेः। अनेन च "न असति विधाने देवताभावात् संबन्धिशब्दोऽयं देवतेति स एवाग्निरष्टाकपालस्य देवता नान्यस्य" इति भाष्यार्थो निबद्धः। **तस्मात् देवताविधानार्थं द्रव्यदेवतासंबन्धो विधातव्यः स चेद्विधीयते सिद्धं कर्मान्तरत्वम्।** कर्मान्तरमेव कर्मणोऽस्त्विति यो वदेत् तं प्रत्याह-**न चैकं कर्म कर्मान्तरस्य रूपं भवति**

भवति ; अतो रूपावचनात् पौर्णमास्यमावास्यासंयुक्तौ नापूर्वयोः कर्मणोर्विधातारौ। यत्तु उक्तम्, पौर्णमास्यमावास्याशब्दौ लक्षणया प्रकृतान् यागाननुवदितुं शक्नुतो नाञ्जस्येन इति। नैष दोषः, यदा आञ्जस्येन शब्दार्थो नावकल्पते, तदा लक्षणयाऽपि कल्प्यमानः साधुर्भवति, यथा, अग्नौ तिष्ठति, अवटे तिष्ठति, अग्निसमीपे अवटसमीपे तिष्ठति इति भवति संव्यवहारः ; लक्षणापि हि लौकिक्येव इति ॥

व्यपदेशश्च तद्वत् ॥ ७ ॥

'उग्राणि ह वा एतानि हवींषि अमावास्यायां सम्भ्रियन्ते, आग्नेयं प्रथममैन्द्रे उत्तरे' इति समुच्चयं दर्शयति, आग्नेयादीनां गुणत्वे विकल्पः स्यात् ! तत्राग्नेयं प्रथमम्, ऐन्द्रे उत्तरे द्वे इति

---

अरूपत्वादिति सिद्धो हेतुः। अथ यदुक्तं लक्षणेति प्रमाणान्तरावगमान्न दोषः। "व्यपदेशश्च तद्वत" इति प्रयाजादिभ्यः आग्नेयादीनां शब्दान्तराभिधेयतां कथयति शब्दान्तरत्वाच्च सिद्धो गुणप्रधानभावः। तद्वच्च

---

इति भाष्यं व्याख्यातमिति जुहोतेः अरूपत्वादिति [सिद्धो]हेतुः। अथ यदुक्तं लक्षणेति अनेन "यदुक्तं पौर्णमास्यमावास्याशब्दौ लक्षणया प्रकृतान् यागानभिवदितुं शक्नुवन्तौ नाञ्जस्येन" इति भाष्यार्थो दर्शितः। "नैष दोष" इत्यादेः परिहारभाष्यस्यार्थमाह—प्रमाणान्तरावगमान्नदोषः। प्रमाणान्तरेण लक्षणावगमान्न दोषः। 'व्यपदेशश्च तद्वत्' इत्यनेन सूत्रेण प्रयाजादिभ्य आग्नेयादीनां शब्दान्तरतां कथयति उग्राणि हेत्युग्रशब्दप्रयोगादाग्नेयादीनां प्राधान्यमवगम्यते। तच्च प्रयाजादिभ्यः शब्दान्तरत्वे सति। ततः उग्र(गृह्य)पदेन व्यपदेशप्रदर्शनेनाग्नेयादीनां शब्दान्तरत्वं कथितं शब्दान्तरत्वाच्च सिद्धो गुणप्रधानभावः तद्वच्च

व्यवदेशो नावकल्पेत, विकल्पे सम्भारपौर्वापर्यानुपपत्तिः इति ॥

लिङ्गदर्शनाच्च ॥ ८ ॥

लिङ्गं च दृश्यते,—'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायाम्' इति ॥

---

लिङ्गदर्शनमिति । कथं पुनः बहुष्वभिधेयेषु एकवचनं पौर्णमासीमिति ? किं कुर्मः ? कमुपालभेमहि ? नित्योऽयं वैदिकप्रयोगः । तत्र तत्र बहुष्वेकवचनमिति ज्ञातमस्माभिः । ज्ञानमेवेदमसिद्धम् । एकवचनश्रवणाद्यजिरुपपदं चैकस्यैव प्रतिपादकमिति युक्तमभ्युपगन्तुम् । सत्यं युक्तं, न तु तदिह शक्यते यज्यर्थतुल्यत्वात् पौर्णमास्यर्थतुल्यत्वाच्च । अगृह्यमाणविशेषत्वे चाप्रतिपत्तिर्वा स्यात् । सर्वावगतिर्वा । तत्र किं युक्तम् ? नाप्रतिपत्तिर्युक्ता, अवगमविरोधात् सर्वावगतेः स्ववगमानुग्रहः ।

---

लिङ्गदर्शनं यथा समाहित्या(य) उपदिष्टः तथैव । लिङ्गदर्शनं 'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते इति । अनेन लिङ्गदर्शनाच्चेति सूत्रस्यार्थो दर्शितः इति । इतिशब्दः परिसमाप्तौ । परिसमाप्तेऽधिकरणे चोदयति—कथं पुनः बहुष्वभिधेयेषु एकवचनं पौर्णमासीमिति । अनुवादत्वे बहूनामनुवादो युक्त इत्यर्थः । परिहरति—किं कुर्मः कमुपालभेमहि । नित्योऽयं वैदिकप्रयोगः । तत्र तत्र बहुष्वेकवचनमिति ज्ञातमस्माभिः । पुनश्चोदयति—ज्ञानमेवेदमसिद्धम् । एकवचनश्रवणात् (युक्ति)यजिरुपपदं(वत्) च एकस्यैव प्रतिपादकमिति युक्तमभ्युपगन्तुम् । परिहरति—सत्यं युक्तं न तु तदिह शक्यते यज्यर्थतुल्यत्वात् पौर्णमास्यर्थतुल्यार्थत्वाच्च । अर्थसंबन्धस्य च सर्वेषामाग्नेयादीनां तुल्यत्वात् अगृह्यमाणविषयत्वे चाप्रतिपत्तिर्वा स्यात् सर्वावगतिर्वा । एवं संशयं कृत्वा निरसितुमाह—तत्र किं युक्तं नाप्रतिपत्तिर्युक्ता अवगमविरोधात् सर्वावगतेस्तु (अनुमान)स्ववगमानुग्रहः

ननु चात्राप्येकावगमविरोधः। परिहार्यविरोधस्त्वसौ। प्रचयावगमात्। अप्रतिपत्तौ तु अपरिहार्योऽवगमविरोधः। तस्मात्सूक्तं समुदायाभिप्राय-मेकवचनमिति। यद् द्विवचनविरोधाद्विधानपक्षे दर्शपूर्णमासाभ्यामिति समप्राधान्यमिति तदयुक्तमिवेदानीं प्रतिभाति। अत्रापि कालद्वया-वच्छिन्नप्रचयावगमात् शक्यपरिहारमेतद् द्वित्वम्। तस्माद्विधान-पक्षेऽप्यङ्गाङ्गितैव न्याय्या। अत्राभिधीयते। सैवात्रानभिज्ञताऽपराध्यते। कथं? बहुषु धातोः प्रातिपदिकस्य वा प्रयोगः तन्त्रमेकशेषो वा। उभयत्र दर्शपूर्णमासाभ्यामिति विधिपक्षे द्वित्वविरोधः। कथं? यदि तावत् तन्त्रत्वं षण्णामेव हि तत्प्रतीयते। न पुनस्त्रयाणां, तन्त्रद्वये हि द्विरुच्चारणं स्यात्।

---

तेन सैव युक्ता। ननु चात्र सर्वावगमपक्षेपि एकावगमविरोधः। परिहरति—परिहार्यविरोधस्त्वसौ प्रचयावगमात्। परिहार्योऽसौ एकावगमविरोधः। एकस्य प्रचयस्यावगमात् तदपेक्षया एकत्वेनोपपत्तेः। अप्रतिपत्तौ तु अवगमविरोधोऽपरिहार्यः। तस्मात्सूक्तं समुदायाभिप्रायमेकवचनमिति। अत्रापि कालद्वयावच्छिन्नप्रचयावगमात् शक्यपरिहारमेवेदं द्वित्वम्। तस्मात् विधानपक्षेऽप्यङ्गाङ्गितैव न्याय्या। अत्राभिधीयते—सैवात्रानभिज्ञताऽपराध्यते योऽसौ पूर्वोक्तः "अनभिज्ञो भवान् विध्यनुवादयोः शब्द-सामर्थ्यस्य" इति। कथं? उत्तरं—बहुषु धातोः प्रातिपदिकस्य वा प्रयोगः, तन्त्रं एक-शेषो वा। अत्र च तन्त्रैकशेषयोः पृथगुपादानं वादिप्रसिद्धिमात्रेण। परमार्थतः तन्त्रादेक-शेषस्य न कश्चिद्विशेषः। उभयत्र तन्त्रत्वे एकशेषत्वे वा विधिपक्षे दर्शपूर्णमासाभ्यामिति द्वित्वविरोधः। कथं? यदि तावत् तन्त्रत्वं षण्णामेव हि प्रतीयते, न पुनः त्रयाणां षडप्याग्नेयादयो यागाः तन्त्रोच्चारितेन यजिना प्रतिपाद्याः न पुनस्तन्त्रेणेमे त्रय उच्यन्ते। तन्त्रद्वये हि एतत्स्यात्। न च तन्त्रद्वयमस्ति तन्त्रद्वये हि द्विरुच्चारणं यजेः स्यात्।

न च तदप्यस्ति। षण्णां च तन्त्रत्वे प्रचयद्वयावगतौ प्रमाणान्तरं मृग्यम्। एकाभिधानाद्ध्येकप्रचयावगतिः। आख्यातानुसारि च नामधेयमित्युक्तं भावार्थाधिकरणे 'स्थित एतस्मिन्नधिकरण' इति वदता। तस्मात् कालद्वयमप्यस्मिन् पक्षे प्रवृत्तिमात्रौपयिकं नाम्नः न पुनरवच्छेदायालम्। अग्निहोत्रवत्। तदन्वयिस्वार्थाभिधानं दर्शपूर्णमासाभ्यामिति यागमात्रनामतया प्रतिपत्तव्यम्। एवमेकशेषोऽप्ययं षण्णां न त्रयाणां त्रयाणामिति। तस्मात् प्रचयद्वयावगति-

---

**न च तदप्यस्ति।** तथापि किमित्याह—**षण्णां च तन्त्रत्वे प्रचयद्वयावगतौ प्रमाणान्तरं मृग्यम्** ननु कालद्वययोगेनात्र[1]द्वयावगतिर्भविष्यतीति तत्राह—**एकाभिधानाद्धि एकप्रचयावगतिः।** एकावगत्यनुप्रवेशेन हि एकप्रचयापत्तिः एकाभिधानेन चैकावगतिः। न च त्रयाणां त्रयाणां एकाभिधानं किन्तु षण्णामेवैकप्रचयः। अतोऽपि द्विवचनविरोधः। अनुवादपक्षे तु तद्गत-यज्यभिधानात् तेनैव समुदायोपपत्तेः समुदायद्वितयोपपत्तिरित्युक्तम्। द्विवचनेन तु त्रयाणां दर्शशब्दवाच्यत्वात् त्रयाणां च पौर्णमासीशब्दवाच्यत्वात् भविष्यति समुदायद्वितयोपपत्ति-रित्यत्राह—**आख्यातानुसारि च नामधेयमित्युक्तम्।** भावार्थे नियोग इति वदता विषयभूत-भावार्थसामानाधिकरण्येन नामतेति। येषु षट्सु आख्या वर्तते स तेषु दर्शपूर्णमास-शब्दोऽपि समुदायतः षट्सु वर्तते भेदेन। **तस्मात् कालद्वयमप्यस्मिन् पक्षे प्रवृत्ति-**नि(वृत्ति)**मित्तमात्रौपयिकम् नाम्नः** न पुनः कालयोगनिमित्तेनोपपदेन यजेर्विशेषेऽवस्थानम्। यथा **अग्निहोत्रशब्दे** जुहोतेर्विशेषेऽवस्थानम् **तदन्वयि**(समा)**स्वार्थाभिधानं दर्शपूर्णमा-साभ्यामिति यागमात्रनामतया प्रतिपत्तव्यम्।** तुल्यार्थत्वात् प्रवृत्तिनिमित्तस्य। ततश्च समप्राधान्यं सर्वयागानामधिकारसंबन्धात्। एवं तावत् तन्त्रपक्ष उक्तः। एक-शेषेऽप्याह—**एवमेकशेषोऽप्ययं षण्णां न त्रयाणां त्रयाणाम्। तस्मात् प्रचयद्वयावगति-**

---

(1) G. योगेन नात्र

उपांशुयाजाधिकरणम् ॥

पौर्णमासीवदुपांशुयाजः स्यात् ॥ ९ ॥

'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ उपांशुयाजमन्तरा यजति' इति, 'विष्णुरुपांशु यष्टव्योऽजामित्वाय, प्रजापतिरुपांशु यष्टव्योऽजामित्वाय, अग्नीषोमावुपांशु यष्टव्याव-

---

दुर्लभा विधिपक्षे। अनुवादपक्षे पुनः त्रयाणां त्रयाणां तन्त्रैकशेषयोः सिद्धयोः प्रचयद्वयावगतौ सत्यां दर्शपूर्णमासाभ्यामिति प्रचयद्वयस्यैवायमेकशेषः तन्त्रत्वं चेति सिद्धो गुणप्रधानभावभेदः।

**पौर्णमासीवदुपांशुयाजः स्यात्।** उक्तं चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायामिति। तत्र यद्येक उपांशुयाजः तदैतदुपपद्यते। अथ त्रयाणामनुवादकमुपांशुयाजमन्तरा यजतीति, चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायामिति न घटते तत्प्रसङ्गादिदमधिकरणमारब्धम्।

---

दुर्लभा विधिपक्षे। अनुवादपक्षे पुनः त्रयाणां त्रयाणां तन्त्रैकशेषयोः प्रचयद्वयावगतौ सत्यां दर्शपूर्णमासाभ्यामिति वाक्ये यजिशब्दः प्रचयद्वयस्यैवायमेकशेषः तन्त्रत्वं वा। प्रवृत्तनामधेयवशवर्तित्वाद्यजेरिति सिद्धो गुणप्रधानभावः।

पौर्णमासीवदुपांशुयाजः। ननु यद्यप्यनुवादापवादतया त्रीण्यप्येतान्यधिकरणानि सङ्गतानि तथापि अस्याधिकरणस्य कथमवान्तरसङ्गतिः। न हि नानाधिकरणारम्भो घटते तत्राह—उक्तं चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायामिति। तत्र यद्येक उपांशुयाजः तदैतदुपपद्यते। अथ तु त्रयाणामनुवादः उपांशुयाजमन्तरा यजतीति तदा चतुर्दश पौर्णमास्यामिति न घटते षोडशत्वापत्तेः तदिदं

जामित्वाय' इति; तत्र सन्देहः, उपांशुयाजमन्तरा यजति इति किं विष्णवादिगुणकानां प्रकृतानां यागानां समुदायस्य वाचकः, अथ वा अपूर्वस्य यागस्य? इति। तत उच्यते, पौर्णमासीवदुपांशुयाजो भवितुमर्हति। कुतः? नामसंबन्धात्, नामसम्बद्धो हि विशिष्टो यागः श्रूयते, उपांशुयाजसंज्ञकः, न च द्रव्यदेवते रूपं, प्रकृताश्चोपांशुगुणका यागा विद्यन्ते; तस्मात् समुदायशब्दः इति।

---

कथं पुनरत्र संशयः? तत्राप्याग्नेयादय इव विष्णुरुपांशु यष्टव्य इत्येवमादयः श्रूयन्ते। किमेषामुपांशुयाजमन्तरा यजतीति समुदायानुवादः उत विधिरिति। ननु चैकमिदं वाक्यं, कथमत्र संशयः। नह्येकस्मिन् वाक्ये बहवो विधयः संभवन्ति। तदेव त्वेकवाक्यत्वमाक्षिप्यते। कथं? जामि वा एतद्यज्ञस्य क्रियत इत्युपक्रमोऽयं विष्णुरुपांशु यष्टव्य इत्येवमादीनां साधारण इति पूर्वपक्षवादी मन्यते।

---

पूर्वोक्तलिङ्गप्रसङ्गात पूर्वाधिकरणानन्तरमिदमधिकरणमायातम्। कथं पुनरत्र संशयः? उत्तरं —अत्रापि ह्याग्नेयादयः इव विष्णुरुपांशुयष्टव्य इत्येवमादयः त्रयः श्रूयन्ते। किं तेषामुपांशुयाजमन्तरा यजति इति समुदायानुवाद उत विधिरिति। ननु चैकमिदं वाक्यं जामितादोषोपक्रमतः तन्निर्हरणपर्यन्तम्। कथमत्र संशयः?। न ह्येकस्मिन् वाक्ये बहवो विधयः संभवन्ति बहुत्वे वाक्यभेदप्रसङ्गात्। उत्तरं—तदेव त्वेकवाक्यत्वमाक्षिप्यते। कथमाक्षिप्यते? उत्तरं—जामि वा एतद्यज्ञस्य क्रियते इत्युपक्रमोऽयं विष्णुरुपांशु यष्टव्य इत्येवमादीनां साधारणोऽयमिति पूर्वपक्षवादी मन्यते। अस्यार्थः—यदा तु रूपलाभात् विष्णवादिवाक्येषु तावद्यागो विधीयते। न पुनरुपांशुयाजवाक्ये। तदा तावत त्रय एवैते इति युक्तं संशयाभि(धयः)धानम्। तेषां साधारणोऽयमुपक्रमो यज्जामि वा एतद्यज्ञस्य क्रियत इति।

ननु उपांशुगुणकं यागान्तरम् उपांशुत्वेन रूपेण रूपवत् विधीयते। न एवंजातीयकः शब्द उपांशुविशिष्टं यागं शक्नोति वक्तुम्, उपांशुयागः इति हि तस्य वक्ता, "चजोः

---

भवति च साधारणो वाक्यशेषः। वर्षिष्ठादिषु दर्शनात्। यद्ब्राह्मणानीति चातिदेशदर्शनात्। तस्मादुपपन्नः संशयः। तत्र तावत्पूर्वपक्षवादी मन्यते साधारणोऽयं वाक्यशेषो न्याय्यः इति। कुतः ? रूपावचनात् ननूपांशुयाजमन्तरा यजतीति रूपमस्ति। नेदं रूपं कर्मणः। प्रयुक्ते स्यादपि। एवं तर्ह्युपांशुगुणः श्रूयते। नात्र गुणविधिः शक्यतेऽध्यवसातुं याजयोगात् अवयवार्थवत्वे हि अस्योपांशुयाग इति रूपं रूपविदो मन्यध्ते।

---

**भवति च साधारणो वाक्यशेषः** विष्ण्वादिषु। तनूर्वर्षिष्ठेति वाक्यशेषो यथा साधारणः तथाऽयमपीत्यर्थः। तथा एतद्ब्राह्मणान्येतानि हवींषि इति चातिदेशके वाक्ये साधारणवाक्यशेषदर्शनात्। **तस्मात्** साधारण्येनापि वाक्यशेषोपपत्तेः **उपपन्नस्संशयः। तत्र तावत् पूर्वपक्षवादी मन्यते साधारणोऽयं वाक्यशेषो न्याय्यः। कुतः? रूपावचनात्** उपांशुयाजमन्तरा यजतीति। विष्णादिवाक्येषु यागानां विधिस्तत्रैव रूपलाभात्। उपांशुयाजमन्तरा यजतीति समुदायानुवादः पूर्वपक्षेऽरूपत्वात्। सिद्धे च न्यायतो विधिभेदे साधारण्यमुपक्रमस्येति पूर्वपक्षवादी मन्यते। ननु **चान्तरा यजतीति** अन्तरालक्षणः कालो **रूपमस्ति।** परिहरति—**नेदं रूपं कर्मणः प्रयुक्ते स्यादपि** कालस्य प्रयोगाङ्गत्वात् प्रयोगं प्रति रूपता न कर्मरूपं प्रति। **एवं तर्हि उपांशुगुणः श्रूयते** स रूपं भवतु। **नात्र गुणविधिः शक्यतेऽध्यवसातुं याजयोगात्।** उपांशु यजनमिति कृत्वा यद्युपांशुयाजशब्देन यजिसामानाधिकरण्येन गुणो विधीयते तदा याजशब्दयोगो न स्यात् कुत इत्याह—**अवयवार्थवत्त्वे ह्यस्य उपांशुयाग इति रूपं रूपविविदो मन्यन्ते** यजनं याग इति घञि चजोः कुघिण्यतोरिति कुत्वेन भवितव्यम्। तस्माद्याजशब्दयोगात् अवयवार्थशून्यमेवेदम्

कुघिण्यतोः," इति कुत्वेन भवितव्यम्, अव्युत्पन्नः पुनरुपांशुयाजशब्दः; तस्मान्न रूपवत् यागान्तरम्। अथापि तु नामसंयुक्तं यजतिसामान्यमेव, तथाप्यनुपदिष्टदेवताद्रव्यरूपं न यागान्तरं प्रतिपद्येमहि। नन्वेवं सति प्रकृतानामप्यवाचकः प्राप्नोति। मा

---

तस्मादरूपत्वात् अयमनुवादः। एवं च पौर्णमास्यां यजन्नित्यनेन त्रयाणामेवैतत्कालविधानम्। ततश्चतुर्दश पौर्णमास्यामिति दुःस्थम्। किं पुनः कारणं गुणविधिपक्ष एवैतद्रूपम् न पुनर्नामधेयपक्षे; शब्दान्तरमपि ह्युपपन्नं नामधेयपक्षे शक्यते वक्तुम्। गुणविधिपक्षे पुनः यज्यर्थ एव यजिः। ननु च नामधेयपक्षेऽपि यज्यर्थ एवायम्। सत्यं यज्यर्थो न यजिः। किं तर्हि उपांशुयाजः शब्दः। यज्यर्थस्य हि यजेः कुत्वं स्मरन्ति न पुनर्यज्यर्थावयवस्य। तस्मादुपपद्यत एवोपांशुयाज इति नामधेयम्। यत्र पुनरवयवयोगापरित्यागेन यजिर्नामतां प्रतिपद्यते तत्र भवत्येव कुत्वम्।

---

तस्मादरूपत्वात् अयमप्यनुवादः। एवं च पौर्णमास्यां यजन्नित्यनेन वाक्येन त्रयाणामेवैतत् विष्ण्वादिवाक्ययागानां कालविधानम्। ततश्च चतुर्दश पौर्णमास्यां इति लिङ्गं दुः स्थम्। किं पुनः कारणं गुणविधिपक्षे एवैतद्रूपं न पुनः नामधेयपक्षे, उत्तरं -शब्दान्तरमपि ह्युपपन्नं नामधेयपक्षे शक्यते वक्तुं गुणविधिपक्षे पुनः यज्यर्थ एव यजिः। ततश्च कुत्वप्रसङ्गः। ननु च नामधेयपक्षेऽपि यज्यर्थ एवायं शब्दः यजिनामधेयत्वात्। यदि न यज्यर्थः शब्दः कस्तर्हि यज्यर्थः ? उत्तरं— उपांशुयाजशब्दः। तथापि कुतत्वं न भवतीत्याह—यज्यर्थस्य च यजेः कुत्वं स्मरति। न यज्यर्थावयवस्य अनङ्गस्य परतः कुत्वं; यस्माच्च प्रत्ययो विधीयते तदङ्गम् धातोश्च परं प्रत्यय इति। यज्यर्थस्य च यजेः कुत्वं यज्यर्थसमुदायावयवस्य अधातुत्वादुपपद्यते उपांशुयाज इति नामधेयम्। ननु गुणविधिः यत्र पुनरवयवयोगापरित्यागेनैव यजिर्नामत्वं प्रतिपद्यते तत्र भवत्येव कुत्वम्। तत्र

भूदुपांशुयाजशब्दः, यजतिशब्दो भविष्यति, तथा सति उपांशुयाजशब्देऽप्यनुवादत्वादनाञ्जस्येऽपि न दोषः ॥

चोदना वाऽप्रकृतत्वात् ॥ १० ॥

**कर्मान्तरस्य वाचकः स्यात्, 'उपांशुयाजं यजति' इति।**

---

तथा चापवादं स्मरति भगवान् पाणिनिः 'प्रयाजानूयाजौ यज्ञाङ्गे' इति नोपसर्गा अवयवापह्नवं कर्तुं समर्थाः। आनर्थक्ये(ना)प्युपसर्गत्वस्य संभवात्। ननु च क्रियायोगे सत्यानर्थक्ये(ना)प्युपसर्गत्वम्। अस्त्येव अयं क्रियायोगो याज इति कर्मण एवैते नामनी प्रयाजानूयाजाविति। अत एव चोपांशुयाज इति नापवादं स्मृतवान् शब्दरूपवित्।

**चोदना वा प्रकृतत्वात्।** अत्राभिधीयते। नात्रानुवादः संभवति। कुतः? अनूद्यमानस्यासंभवात्।

---

यजिः यज्यर्थ एव वर्तमानो नामधेयं तत्कुत्वं प्राप्नोत्येव। **तथा च कुत्वापवादं स्मरति** भगवान् पाणिनिः। प्रयाजानूयाजौ यज्ञाङ्गे इति। कथं पुनरत्रापि यजिर्यज्यर्थः यावता प्रयाजशब्द एव यज्यर्थ(एव) इत्यत्राह—**नोपसर्गा अवयवापह्नवं कर्तुं समर्थाः** आनर्थक्येप्युपसर्गत्वस्य संभवात्। यदि प्रशब्दसहित एव यजिः यागं ब्रूयात तदा ह्यवयवापह्नवः। यदा पुनः यजिः नैव यागार्थः प्रशब्दोऽनर्थक एव प्रलंबत इति तत्तदा नावयवार्थावगमः शक्यते वक्तुम्। ननु च क्रियायोगे सति आनर्थक्येप्युपसर्गयोग्या; तत्र का क्रिया? उत्तरं—**अस्त्येवायं क्रियायोगः याज इति कर्मण एव ते नामनी प्रयाजानूयाजाविति।** तेन शब्दोऽयं क्रियावाचीत्यस्त्येव क्रियायोगः। यत एवाव्युत्पन्नोऽयमुपांशुयानशब्दो ज्यर्थो ऽयं यजिर्न भवति **अत एवोपांशुयाज इति नापवादं स्मृतवान् शब्दवित्।** चोदना वा। **अत्राभिधीयते नात्रानुवादः संभवति।** कुतः? उत्तरं—**अनूद्यमानस्यासंभवात्।**

कुतः ?। प्रकृतानां यागानामभावात्, न चेत्प्रकृता विद्यन्ते, कस्य समुदायं वक्ष्यति ? ननु इदानीमेवोक्तं विष्ण्वादिगुणकाः प्रकृता यागा विद्यन्ते, इति। न विद्यन्ते, न हि ते विधयो 'विष्णुरुपांशु यष्टव्यः इत्येवमादयः। अर्थवादा हि ते।

---

ननु विष्णुरुपांशु यष्टव्य इति यागचोदनाः सन्तीत्युपन्यस्तम्, अयुक्तं तदुपन्यस्तम्। कुतः? नहि विध्यन्तरं अस्मिन् वाक्ये संभवति। स्पष्टे हि विधिभेदे वाक्यशेषस्य साधारणतोपपद्यते न पुनः साध्ये। वाक्यशेषस्य साधारण्याद्विधित्वं विधित्वे साधारण्यमिति इतरेतराश्रयम्। संभवति च वाक्यशेषतया विष्ण्वादीनामर्थवत्ता उपांशुयाजमन्तरा यजतीत्यनेन संबन्धाविशेषात्। संभवति चैकवाक्यत्वे वाक्यभेदो विकल्पार्थ एव भवति।

---

ननु च विष्णुरुपांशु यष्टव्य इति यागचोदनाः सन्तीत्युपन्यस्तम्। परिहरति—अयुक्तं तदुपन्यस्तम्। कुतः? उत्तरं—न हि विध्यन्तरमस्मिन् वाक्ये संभवति वाक्यशेषस्य श्रवणात्। स्पष्टे हि विधिभेदे वाक्यशेषस्य साधारणता उपपद्यते न पुनः साध्ये; वाक्यशेषस्य साधारण्याद्विधयः विधित्वेन वाक्यशेषस्य साधारण्यमिति इतरेतराश्रयं भवति। ननु च स्पष्ट एवायमत्रापि विधिभेदः विष्ण्वादिश्रवणस्यार्थवत्तान्यथानुपपत्तेरित्यत्राह—संभवति च वाक्यशेषतया विष्ण्वादीनामर्थवत्ता। स्तुत्यर्थेनार्थवत्तेत्यर्थः। ननु एकेनैव स्तुतेः सिद्धत्वात् इतरयोः न क्रतूपयोग इत्यत्राह—उपांशुयाजमन्तरा यजतीत्यनेन संबन्धाविशेषात्। सर्वेषामपि संबन्धाविशेषात् स्तुत्यैवार्थवत्ता। ननु साक्षाद्वचनलाभात् द्वित्वादिवाक्येषु स्पष्ट एव विधिभेदः इत्यत्राह—संभवति चैकवाक्यत्वे वाक्यभेदो विकल्पार्थ एव भवति। एकवाक्यत्वबलेन विनिश्चितं रूपग्रहणं

कथम् ? अस्मिन् वाक्ये विध्यन्तरस्य भावात् , उपांशुयाजमन्तरा यजति इत्येतदेतस्मिन् वाक्ये विधीयते ; यदि इमेऽपि विधीयेरन् , भिद्येत तर्हि वाक्यम् । अपि च, यागस्य विष्णवादी-

---

ननु च रूपं नास्तीत्युक्तम् । वाक्यान्तरेणाग्निहोत्र इव भविष्यति । दृश्यन्ते च वाक्यान्तराणि 'पौर्णमास्यां यजन्' , 'सर्वस्मै वा एतदाज्यं' इति च । किञ्च न विष्णुरुपांशु यष्टव्य इति यागविधिर्गम्यते उपपदश्रवणात् रक्तपटवत् । ननु चोपांशुयाजमन्तरा यजतीत्यत्राप्युपपदश्रवणम् । सत्यम् । भावार्थता त्वत्र विधिविषयतयाऽवगम्यमाना न विनियोगेनाक्षेप्तुं शक्यते ।

---

न न्याय्यमिति भावः । ननु च रूपं नास्ति उपांशुयाजमन्तरा यजतीत्युक्तम् । परिहरति—वाक्यान्तरेणाग्निहोत्र इव भविष्यति । दृश्यन्ते च वाक्यान्तराणि पौर्णमास्यां यजन् । सर्वस्मै वा एतदाज्यं इति । तत्र पौर्णमास्यां यजन्नित्यत्र कालविधिपरेऽपि अग्नीषोमौ प्रतीयमानौ रात्रिसत्रन्यायेन देवतात्वेन दृश्येते । सर्वस्मै वा एतदाज्यमित्याज्यं द्रव्यं विधीयते । किञ्च न विष्णुरुपांशु यष्टव्य इति यागविधिर्गम्यते उपपदश्रवणात् रक्तपटवत् । यथा रक्तः पटो भवतीति पटभवनं न प्रतिपाद्यते किन्तु रक्ततासंबन्धः तथाऽत्रापि यागो न विधीयते किन्तु (विस्पष्टा)विष्ण्वादिसंबन्धः । ननु चोपांशुयाजमन्तरा यजतीति उपपदश्रवणमस्ति तेन तत्रापि तत्संबन्धविधिरेव दृश्यते । परिहरति —सत्यं भावार्थता विधिविषयतयाऽवगम्यमाना न विनियोगेनाक्षेप्तुं शक्यते । विनियोगेन पदान्तरसंबन्धेन भावार्थता पूर्वापरीभूतसाध्यार्थताऽपनेतुं शक्यते । यागः विधिविषयतयाऽवगम्यते भवत्येवातो विधिविषय इत्यर्थः । यत्र हि अन्यस्य साध्यत्वेनावगतिस्तत्र भावार्थो न साध्यत्वेनावगम्यते । किं तर्हि ? साधनत्वेन, यथा व्रीहीन् प्रोक्षतीति । यत्र पुनः साध्यान्तरं नास्ति तत्र भावार्थ एव साध्यतयाऽवगम्यते यथा सोमेन यजेत इति । तदिह विष्ण्वादि—

नाश्च संबन्धोऽत्र गम्यते वाक्ये, न च यागस्य विधानम्। ननु च, उपांशुयाजमन्तरा यजतीत्यत्रापि अन्तरालसम्बन्धोऽवगम्यते। बाढं, स तु विधीयते उपांशुत्वादिसंबन्धः; एकं हि इदं वाक्यं न अनेकं विधातुमर्हति। कथं? 'जामि वा एतत् यज्ञस्य क्रियते' इत्येवमुपक्रममेतद्वाक्यम् 'अजामित्वाय' इत्येवमन्तम्, तस्य मध्ये समाम्नातं विष्णवादिवाक्यं तेन संबध्यमानं न वाक्यान्तरं भवितुमर्हति; तस्मात् 'विष्णुरुपांशु यष्टव्यः' इत्येवमादयो न विधयः, किं तर्हि? अर्थवादाः।

---

प्रदर्शितं भावार्थाः कर्मशब्दा इति। तच्छून्ये पुनर्विनियोगानुसारी विधिर्भवतीति विशेषः। तदुक्तं भाष्यकारेण—स तु विधीयत उपांशुत्वादिसम्बन्ध इति। ननु चात्र गुणविधानं प्रतीयते। नेत्युच्यते। अर्थवादतो गुणप्राप्तेरगुणविधिस्वरूपत्वाच्चेति प्रत्युक्तम्।

---

वाक्येषु कर्मत्वेन तव्यप्रत्ययप्रयोगात् विष्णवादयः साध्यत्वेनावसीयन्ते इति तत्र भावार्थस्य भावार्थता(न साध्यता)। अन्तरा यजतीति तु साध्यान्तराभावात् भावार्थ एवायं साध्यः। यत्र च साध्यावगतिस्तत्र च विधिविषयत्वं **प्रदर्शितम्—"भावार्थाः कर्मशब्दा इति। तच्छून्ये पुनः** साध्यभूतभावार्थे पुनः **विनियोगानुसारी विधिर्भवतीति विशेषः।** विष्णवादिवाक्यानां अन्तरा यजतीत्यत्र। **तदुक्तं भाष्यकारेण** "स तु विधीयते उपांशुत्वादिसंबन्धः" इति। अत्र कश्चिदाह—**ननु चात्र भाष्ये** उपांशुयाजशब्देनैव उपांशुत्वगुणो विधीयते उपांशुत्वादिसंबन्धो यागे विधीयत इत्यभिधानात्। परिहरति—**न** प्रतीयते इत्युच्यते **अर्थवादतो गुणप्राप्तेः।** यदिदमुपांशुसंबन्धित्वमुच्यते तदर्थवादबलेन अर्थवादे उपांशुत्वकीर्तनात् उपांशुत्वगुणोऽवगम्यते, न पुनरुपांशुयाजशब्देनैवोपांशुत्वगुणो विधीयते। अन्यतः प्राप्तेः **अगुणविधिस्वरूपत्वाच्चेति** प्रत्युक्तं गुणविधानम्। तेनार्थवादाभिप्रायेणैव भाष्यं

**कः पुनरर्थवादः ?। आग्नेयाग्नीषोमीययोर्निरन्तरं क्रियमाणयोर्जामितादोष उक्तः, तं भिषजितुं, उपांशुयाजमन्तरा यजति इति विहितम्। कथं तेन भिषजिष्यते ?। तस्मिन् क्रियमाणे ज्ञायत एव, यथा विष्णुर्यष्टव्यः प्रजापतिरग्नीषोमौ**

---

कथमेकवाक्यत्वमिति ? कोऽभिप्रायः पृच्छतः ? अयमभिप्रायः परस्परासंबन्धाद्विष्ण्वादीनां असंबद्धानां च पदान्तरसंबन्धस्तन्त्रेणैव भवति। यथाह भगवान्। अस्त्यत्रोपाध्यन्तरम्। किं तत् ? प्राधान्ये सतीति वक्तव्यम्। इह पुनरुपांशुयाजमन्तरा यजतीति प्रधानं तत्प्राधान्ये च विष्णुरित्येवमादीनां अरुणादीनामिवैकवाक्यता न्याय्येत्युक्तम्। **कः पुनरत्रार्थवाद इति ?** केनाभिप्रायेणायं प्रश्नः ? श्रूयताम्। येनाभिप्रायेण, अन्तरा यजतीत्यन्तरालकालसम्बन्धस्तावत्प्राप्त एव।

---

योजनीयम्। 'कथं' इति भाष्यं एकभावः इति पूरयित्वा आक्षिपति—**कोऽभिप्रायः ?** उत्तरं—**अयमभिप्रायः।** परस्परासंबन्धाद्विष्ण्वादीनां **असंबद्धानां च परस्परं पदान्तरसंबन्धस्तन्त्रेणैव न्याय्यो भवति** इत्यत्रोपाध्यन्तरमस्ति विशेषणान्तरमस्ति। **किं तत् ?** उत्तरं—**प्राधान्ये सतीति वक्तव्यम्।** तथा प्राधान्ये सति परस्परसंबद्धानां पदान्तरसंबन्धः तन्त्रेणैव भवति न पुनर्गुणभूतानां, यथाऽरुणादीनां प्रतिप्रधानं पदान्तरान्वय इष्यते न पुनः प्रतिगुणम्। **इह पुनः उपांशुयाजमन्तरा यजतीति प्रधानं तत्प्राधान्ये च विष्णुरित्येवमादीनां अरुणादीनामिवैकवाक्यता न्याय्येत्युक्तं** कथमेकवाक्यत्वमित्यत्राक्षेपे जामिवा एतदित्युपक्रमं इत्यादिना भाष्येण। "कः पुनरत्रार्थवाद" इति भाष्यमाक्षिपति—**केनाभिप्रायेणायं प्रश्नः ? श्रूयताम्, येनाभिप्रायेण, अन्तरा यजतीत्यन्तरालसंबन्धः तावत् प्राप्त एव।**

चेति, ततश्च व्यवधानादजामिताऽवगम्यत एव, तेनाजामितार्थवादं वक्ष्यामि इति विष्णवादिसम्बन्धोऽनूद्यते, न त्वन्तरालसंबन्धस्यान्यत्प्रयोजनमस्ति अतो विधानात्। कथं विष्णवादयो यष्टव्याः इत्येतदवगम्यते ? यष्टव्यान् अयष्टव्यान् वा विष्णवादीनुपांशुयाजाभिष्टवाय सङ्कीर्तयति इति गम्यते।

---

किं पुनरर्थवादेन क्रियते। यदि ह्यर्थवादादेवायमर्थो लभ्यते रात्रिसत्रप्रतिष्ठावत् तदा युक्तोऽर्थवादः। इह पुनः अन्तरा यजतीत्यन्तरालसम्बन्धभावात् किमर्थवादेनेति मन्वानस्य प्रश्नः। उत्तरवादी तु जामितादोषसङ्कीर्तनात् तन्निर्हरणप्रयोजनादपि भवत्येवार्थवत्त्वेति प्रदर्शितवान्। औचित्येन स्तुतिरुक्ता। न चाप्राप्तानामौचित्यमस्तीति मन्वानः कथं पुनः विष्णवादय इति पृष्टवान्। अयष्टव्यान्वेति न स्तुतौ प्रमाणान्तरापेक्षेत्युत्तरवादिनोऽभिप्रायः। ननु च निरालम्बनतैवं प्राप्नोति

---

किं पुनरर्थवादेन क्रियते ? यदि ह्यर्थवादादेवायमर्थो लभ्यते रात्रिसत्रप्रतिष्ठावत् तदा युक्तोऽर्थवादः। इह पुनः अन्तरा यजतीत्येवान्तरालसंबन्धात् किमर्थवादेनेति मत्वा तस्य प्रश्नः मन्दं प्रयोजनमर्थवादेनेत्यर्थः। उत्तरवादी तु जामितादोषसंकीर्तनात् तन्निर्हरणप्रयोजनादपि भवत्येवार्थवत्त्वेति प्रदर्शितवान्। अनन्तरयोः पुरोडाशयोः करणे जामितादोषो भवति सोऽन्तराक्रियमाणेनोपांशुयाजेन निर्हण्यते इत्यर्थवादेन प्रदर्श्यत इति प्रयोजनमर्थवादस्य। तस्मान्नानन्वयाशङ्का विद्यते। "कथं पुनः विष्णवादयो यष्टव्या इत्येतदवगम्यत" इति भाष्यं व्याचष्टे—औचित्येन स्तुतिरुक्ता। न चाप्राप्तानां विष्णवादीनां औचित्यमस्तीति मन्वानः कथं पुनर्विष्णवादयो यष्टव्या इति पृष्टवान्। अयष्टव्यान्वेत्युत्तरवादी वदति। तस्यार्थवादमाह—न स्तुतौ प्रमाणान्तरापेक्षेत्यभिप्रायः उत्तरवादिनः स्तुतौ कीर्त्यमानस्यार्थस्य न प्रमाणान्तरापेक्षेत्यर्थः। ननु च निरालम्बनतैवं प्राप्नोति यदि

तत्र केचित्तावदाहुः,-प्राप्ता एव—इति। कुतः ? शाखान्तरे विधानात् इति। यद्यप्यप्राप्तिः, तथाप्युपांशुत्वसामान्यात् प्रजापतिर्देवता विष्णुश्चेत्यनुवादावेव, उपांशुधर्माणौ हि विष्णु-

---

मृग्यतां स्तुत्युत्तरकालं अवलम्बनं मुख्यया गौण्या वा वृत्त्या न पुनर्निमित्तापेक्षं कार्यं कार्यतावगतिर्भवत्येव। (यदि भवति) भवतु कार्यान्निमित्तावगतिः, तथापि निमित्तभावो वक्तव्यः। सोऽभिधीयते। अत्र केचिदाहुः विष्ण्वादयः प्राप्ता एवेति। कुतः ? शाखान्तरविधानादिति। सर्वशाखाप्रत्ययमेकं कर्मेति चोक्तम्। अथापि शाखान्तरे प्राप्तिर्नोपलभ्यते। तथापि यागस्य चोदितत्वात् देवताकाङ्क्षत्वाच्च तस्य देवताविशेषापेक्षायां वाक्यशेषतोऽप्यवगतिर्भवत्येव। कथं पुनर्वा—

---

विष्ण्वादयो न यष्टव्याः। परिहरति—**मृग्यतां स्तुत्यनन्तरकालमवलम्बनं मुख्यया गौण्या वा वृत्त्या न पुनर्निमित्तापेक्षं कार्यं** निमित्तानि पदान्यपेक्षमाणस्यैव कार्यं न कल्पनीयम्। कार्ये हि निमित्तावगतिरित्युक्तम्। स्तुतिकार्यमवगम्य निमित्तवर्णना कार्ये मुख्यया गौण्या वा वृत्त्या अभिधानवृत्तेरपि तात्पर्यवृत्तेर्बलीयस्त्वात् इति।

अत्र चोदयति—**भवतु कार्यात्** स्तुतिरूपा**न्निमित्तावगतिः तथापि निमित्तभावो वक्तव्यः।** उत्तरं—**सोऽभिधीयते। अत्र केचिदाहुः विष्ण्वादयः प्राप्ता एवेति। कुतः ? शाखान्तरविधानादिति। सर्वशाखाप्रत्ययमेकं कर्मेति चोक्तम्। तथापि शाखान्तरे प्राप्तिः नोपलभ्यते। तथापि यागस्य चोदितत्वात् देवताकाङ्क्षत्वाच्च तस्य देवताविशेषापेक्षायां वाक्यशेषादप्यवगतिः भवत्येव।** अस्यार्थः—यागे चोदिते देवतायां चाश्रुतायां तत्साध्यत्वाद्यागस्येत्येतस्याश्चालौकिकत्वात् विशेषापेक्षायां वाक्यशेषबलेनोपस्थापिता देवता देवतात्वं प्रतिपद्यते। यजिरेव तदन्वितस्वार्थयुक्तेत्यर्थः (युक्त्यर्थम्)। **कथं पुनर्वा-**

प्रजापती, तस्मात् यत्किञ्चित् प्राजापत्यं यज्ञे क्रियते, तत् उपांश्वेव क्रियते इत्येवमादिसङ्कीर्तनात् मन्त्रसमाम्नानाच्च विष्णुं अप्राप्तमपि प्राप्तमिव वदेत्। अग्नीषोमयोस्तु विधायकमुदाहियत,

---

क्यशेषबलेन देवतोपतिष्ठते ? उच्यते। उपांशुयाजवाक्ये उपांशुत्वं कीर्त्यमानं तावत् तद्धर्मत्वेन स्वीक्रियते। अन्यथा हि तत्पाक्षिकं स्यात् नित्यवच्च तदनूद्यते। तत्र यौ प्रमाणान्तरेणोपांशुयाजधर्माणौ विष्णुप्रजापती प्रतीतौ तावेव बुद्धिस्थौ स्वधर्मदर्शनाद्भवतः इति तयोरेवान्विताभिधानानुप्रवेश इति। ननु यत्किञ्चित्प्राजापत्यमिति वाक्यशेषोपन्यासो न युक्तः, उपांशुत्वसामान्यं चोपन्यस्य विष्णोर्मन्त्राभिधानमप्यतिरिच्यते। उच्यते। नैवेदं पूर्वोक्तस्य प्रमाणान्तरतयोपन्यस्यते द्वयमपि, किन्तु तस्यैव दार्ढ्यार्थं

---

क्यशेषबलेन देवतोपतिष्ठते ? उत्तरं—उपांशुयाजवाक्ये उपांशुत्वं कीर्त्यमानं तावत् तद्धर्मत्वेन स्वीक्रियते। अन्यथा हि तत् पाक्षिकं स्यात्। नित्यवच्च तदनूद्यते। तत्र यौ प्रमाणान्तरेणोपांशुयाज(न)धर्माणौ विष्णुप्रजापती तावेव बुद्धिस्थौ स्वधर्मनिर्देशाद्भवत इति तयोरेवान्विताभिधानानुप्रवेश इति। ननु च वाक्यशेषोपन्यासो यत्किञ्चित्प्राजापत्यमित्ययं न युक्तः। अस्मिन् हि वाक्यशेषे यत्प्राजापत्यं तदुपांश्वेव कर्तव्यं इत्यवगम्यते तेन प्राजापत्यत्वे सिद्धे उपांशुत्वप्राप्तिरिति। अत्रोच्यते। सा चायुक्ता। पूर्वोक्तेन न्यायेनोपांशुत्वप्राप्तेर्दर्शितत्वात्। आक्षेपान्तरं चाह—उपांशुत्वसामान्यं च विष्णुप्राप्तिहेतुमुपन्यस्य विष्णोर्मन्त्रोपन्यासोप्यतिरिच्यते। यन्मन्त्रबलेन विष्णोः प्राप्तत्वमुच्यते तदप्यतिरिक्तमेवोच्यते उपांशुधर्मतयैव प्राप्तिसिद्धेः। उच्यते—नैवेदं पूर्वोक्तस्योपांशुत्वस्य प्रमाणान्तरतयोपन्यस्यते। उपांशुत्वप्रापकतया नेदमुपन्यस्यते यत्किञ्चित्प्राजापत्यमिति। किन्तु (यद्ययं) तस्यैव दार्ढ्यार्थं यत्तदुपांशुत्वं अर्थवादप्राप्तं विष्णुप्राजापतावेतन्नियामकमुपन्यस्तम्। तस्यैव तत्प्रापकत्वे दार्ढ्यार्थं बलवत्त्वसिद्ध्यर्थं यत्किञ्चित्प्राजापत्यमिति वाक्यशेषोपन्यासो वैष्णव-

एव 'तावब्रूतामग्नीषोमौ आज्यस्यैव नावुपांशु पौर्णमास्यां यजन्' इति, तस्मात् यागान्तरम् ॥

गुणोपबन्धात् ॥ ११ ॥

यदुच्यते, न ज्ञायते, कतमोऽसौ उपांशुयाजसंज्ञको

---

विष्णोर्मन्त्रविशेषाम्नानमेवमुपपद्यते । प्रजापतेश्च वाक्यान्तरे वीप्सा । अग्नीषोमीययोस्तु विधायकं उदाह्रियत एव । 'तावब्रतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्' इति । किमिदमग्नीषोमयोर्विधायकं इति ? किं जातम् ? इदमेव जातम् विष्ण्वादेरप्राप्तिः । अप्राप्तविशेषं हि वाक्यमर्थवादाद्विशेषं लभते विहितविशेषं पुनर्निराकाङ्क्षत्वात् न सम्बध्यते । एवं तर्हि अग्नीषोमीययोस्तु कथं ? यस्माद्विधायके वाक्ये उदाह्रियेते तावब्रतामिति । कस्य विधायके ? पौर्णमास्यां यजन्निति कालस्य ।

---

मन्त्रोपन्यासश्चेति द्वयम् । एतदेव दर्शयति—विष्णोर्मन्त्रविशेषाम्नानं प्रजापतेश्च वाक्यान्तरे उपांशुयाजे विष्णुप्रजापती देवते इतीत्येवमुपपद्यते । नान्यथा । तेन तयोरत्र देवतात्वम् । अग्नीषोमयोस्तु विधायकं उदाह्रियत एव 'तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्' इति भाष्यमाक्षिपति—किमिदमग्नीषोमयोर्विधायकं इति । अयुक्तमेतदित्यर्थः । समाधातैकदेश्याह—किं जातं ? यदि विधायकमिति । आक्षेप्ताऽऽह—इदमेव जातं विष्ण्वादेरप्राप्तिः । उत्तरं—अप्राप्तविशेषं हि वाक्यमर्थवादाद्विशेषं लभते रात्रिसत्रवत् । विहितविशेषं पुनः निराकांक्षत्वान्न संबध्यते अर्थवादाभिहितेन दर्शपूर्णमासयोरिवार्थवादार्थेन बलेन । परमसमाधाता आह—एवं तर्हि अग्नीषोमयोस्तु कथं प्राप्तिरिति शङ्कायामुत्तरं—यस्माद्विधायके वाक्ये उदाह्रियेते एवाग्नीषोमौ इति प्राप्तिः । कस्य विधायके ? उत्तरं—पौर्णमास्यां यजन्निति कालस्य विधायके । भाष्ये च

यागः इति, यस्यायं गुण उपबद्धः, उपांशु पौर्णमास्यां यजन् इति; तस्मात् न दोषः ॥

प्राये वचनाच्च ॥ १२ ॥

प्रधानकर्मप्राये वचनं, प्रधानकर्मतामुपोद्बलयति, यथा, अग्रन्थप्राये लिखितं दृष्ट्वा भवेदयमग्रन्थः इति मतिः। तस्मात् न समुदायशब्दः इति ॥

---

यदुक्तमरूपत्वादिति परिहृतं तत वचनान्तरविहितत्वाद्रूपस्येति। तदिदं प्रदर्श्यते भाष्यकारेण पौर्णमास्यां यजन्नित्येवमादिना। किमिदं अग्रन्थप्राये लिखितमिति? इदमिदं प्रधानप्राये दर्शनमुपांशुयाजस्येत्यर्थः। ननु चानुवादपक्षेऽपि प्राधान्यं केन वार्यते पौर्णमास्यां यजन्निति कालयोगात।

---

विधायकशब्दो न प्रथमान्तः। किन्तु स सप्तम्यन्त इति। अत्र भाष्यं "यस्यायं गुण उपबद्धः उपांशुपौर्णमास्यां यजन्" इति तदप्ययुक्तं कालो ह्यनेन गुण उपबध्यते। न च तर्हि अकर्म–रूपत्वमस्तीत्याशङ्क्याह—**यदुक्तं अरूपत्वादिति परिहृतं वचनान्तरविहितत्वात् रूपस्येति। तदिदं** वचनान्तरं **भाष्यकारेण प्रदर्श्यते उपांशु पौर्णमास्यां यजन्नित्येवमादिना।** तेनायं भाष्यार्थः यस्यायं गुण उपबध्यते पौर्णमास्यादिः उपांशु पौर्णमास्यां यजन्नित्येवमादि-भिर्वाक्यैः यथा चार्थदेवतासमर्पकत्वं तथोक्तम्। अत्र भाष्यं "यथाऽग्रन्थप्राये लिखितं" इत्येव मादि तदाक्षिपति—**किमिदमग्रन्थप्राय इति।** उत्तरं—**इदमिदं प्रधानप्राये दर्शनं उपांशुयाजस्येत्यर्थः।** पुनराक्षिपति—**ननु चानुवादपक्षेऽपि प्राधान्यं केन वार्यते "पौर्णमास्यां यजन्" इति कालयोगात्।** यद्यपि विष्ण्वादिगुणकानां यागानामुपांशुयाजमन्तरा यजतीत्यनु-वादः तथापि कालयोगार्थः, एवं विद्वानित्यनुवादात। अनुदितानां चाधिकारयोगात्

अथायमभिप्रायः अग्नीषोमावित्यर्थवाददर्शनात् तस्यैव कालयोग इति। तदयुक्तम्। अगृह्यमाणविशेषत्वात्कालस्य उपांशुयाज-मित्यर्थवादस्य च दण्डिन्यायादेरप्युपपत्तेः अग्रयशब्दस्य चैकेना-प्युपपन्नत्वात्। वर्ण्यते तर्ह्ययमभिप्रायः विष्णुरुपांशु यष्टव्य इत्येतस्मिन् विधाने गुणभूतस्य च यजेः विधिः; ततश्च नाधिकारयोग्यता कर्मणः। उक्तं न संस्कारा अधिकारमर्हन्तीति। अतश्चाग्रयप्राये दर्शनं नोपपद्यत इति। अन्तरा यजतीति पुनर्भावार्थस्य प्राधान्यावगतेः अधिकारयोग्यप्राय-(अग्रय)दर्शनमुपपन्नं भवति। तस्मान्नानुवादोऽयम्। किन्तर्हि ? विधिः एवं चतुर्दशपौर्णमास्यामाहुतयो हूयन्त इति इति सुस्थम्।

---

प्राधान्यं केन वार्यते। परतरं वाऽग्रयप्राये दर्शनम्। **अथायमभिप्रायः** तावद्भूतामग्नी-षोमावित्यर्थवाददर्शनात् (एक)[त]स्यैव कालयोग इति। तेनाग्नीषोमीयस्यैव प्राधान्यम् नेतरेषाम्। एतदप्ययुक्तम्। **अगृह्यमाणविषयविशेषत्वात् कालयोगस्य उपांशुयाज-**मन्तरा यजन्निति सर्वथा अनुवादार्थवादस्य च दण्डिन्यायेनाप्युपपत्तेः। तेनाग्नीषो-मादयो रूपं आज्यस्यैव न इत्यर्थवादस्यार्थः। युक्त्यन्तरं चाह—**अग्रयशब्दस्य चैकेनाप्युपप-न्नत्वात्**। प्रधानभूतेनाग्नीषोमीयरूपेणोपांशुयाजेनापि अग्रयप्रायदर्शनमुपपद्यत एवेति न सिद्धान्तसिद्धौ लिङ्गम्। समाधत्ते—यस्मात् अयं त्वया दोष उक्तः **तस्मादयमभिप्रायो** भाष्यकारस्य **विष्णुरुपांशु यष्टव्य इत्येतस्मिन् विधाने** ह्यभ्युपगम्यमाने **गुणविधिभूतस्य यजेर्विधिः**। तस्य प्रत्यययोगेन गुणकर्मावगतेः। **ततश्च नाधिकारयोग्यता कर्मणः** यस्मादुक्तं **न संस्काराः अधिकारमर्हन्ति इति। अतश्चाग्रयप्राये दर्शनं नोपपद्यते इति। अन्तरा यजतीति पुनर्भावार्थस्य प्राधान्यावगतेरधिकारयोग्यप्रायदर्शनमुपपन्नं भवति। तस्मान्नानुवादोऽयं** "उपांशुयाजमन्तरायजन्" इति। **किं तर्हि ? विधिरिति। एवं** चैकत्वा-दुपांशुयाजस्य **चतुर्दशपौर्णमास्यामाहुतयो हूयन्त इति सुस्थम्।**

आघाराद्यपूर्वताधिकरणम् ॥

आघाराग्निहोत्रमरूपत्वात् ॥ १३ ॥

'आघारमाघारयति'—इति श्रूयते, तथा इमान्यपराणि, 'ऊर्ध्वमाघारयति, सन्ततमाघारयति, ऋजुमाघारयति' इत्येवमादि; इदञ्च 'अग्निहोत्रं जुहोति', तथा, 'दध्ना जुहोति, पयसा जुहोति' इत्येवमादि। तत्र सन्देहः,—किम् ऊर्ध्वमाघारयति, दध्ना जुहोति इत्येवमादिभिराघाराः होमाश्च विहिताः, तेषाम् 'आघारमाघारयति', 'अग्निहोत्रं जुहोति' इत्येतौ समुदायानुवादौ, उतैतावेवापूर्वयोराघारहोमयोर्विधातारौ? इति। किं तावत् प्राप्तम्? न अपूर्वयोर्विधी इति। कुतः?। अरूपत्वात्', न हि, एतयोः पूर्वेभ्यो होमाघारेभ्यो विशिष्टं रूपमस्ति।

---

आघाराग्निहोत्रमरूपत्वात्। उक्तं भावार्थाः कर्मशब्दाः नियोगस्य विषयतां प्रतिपद्यन्त इति। यत्रेदानीं गुणविधयः तत्र कथं भावार्थत्वं? तस्मात् सर्वत्राख्यातार्थविधानं प्राप्तं दध्ना जुहोतीत्येवमादिषु। यद्येवं कथं तदा अग्निहोत्रं जुहोतीति समुदायानुवादाशङ्का। सर्वत्र हि धात्वर्थविधानम्। अविशेषाच्च कर्मभेद इति। अत्रोच्यते।

---

आघाराग्निहोत्रम्। पूर्वपक्षमाह—उक्तं भावार्थाः कर्मशब्दा नियोगस्य विषयतां प्रतिपद्यन्त इति। यत्रेदानीं गुणविधयः तत्र कथं भावार्थत्वं विधित्सितयोर्द्रव्यगुणशब्दयोः अभावार्थत्वात्। एकग्रन्थेनाह—तस्मात्सर्वत्राख्यातार्थविधानं प्राप्तं दध्ना जुहोतीत्येवमादिषु। यद्येवं सर्वत्राख्यातार्थविधानं कथं तर्हि अग्निहोत्रं जुहोतीति समुदायानुवादशङ्का। यावता सर्वत्रैव धात्वर्थविधानं अविशेषाच्च कर्मभेदः। अत्रोच्यते।

यतः कर्मान्तरम् अध्यवसेयम्; अतः प्रकृतानां रूपवत्त्वात् प्रकृतानुवादौ ॥

---

दध्ना जुहोतीति गुणवति (गुण)शब्दो वर्तते। ततः किम्? इदं ततो भवति। गुणवद्विधानं प्राप्तं दध्ना जुहोतीत्येवमादिषु। गुणवद्विधाने हि अपरित्यक्तभावार्थ एव विधिः। एवं च सति शक्यतेऽग्निहोत्रं जुहोति इति पुनः श्रुतिर्वक्तुं दध्ना जुहोतीत्येवमादीनां निर्गुणत्वादग्निहोत्रपदार्थस्य। ननु च गुणवचनता विद्यतेऽग्निहोत्रपदस्य। सत्यं विद्यते। न जुहोतीत्यस्य सकलेनाग्निहोत्रपदेनायं तद्वान् प्रतीयते। मत्वर्थश्चायमग्निहोत्रपदार्थः। अतो न मत्वर्थेन तद्वान् प्रतिपत्तुं शक्यते। अत एव शब्दविद्भिरुदितं न मतुबन्तान्मतुबुत्पद्यत इति। तस्मान्नष्टावयवं

---

दध्ना जुहोतीति गुणवति शब्दो वर्तते क्रियाकारकसंबन्धात दध्ना जुहोतीत्यत्र गुणवान् भावार्थः प्रतीयते। ततः किं? उत्तरम्—इदं ततो भवति गुणवद्विधानं दध्ना जुहोतीत्येवमादिषु। ननु गुणद्विधाने कथं भावार्थविषयत्वं विधेः इत्यत्राह—गुणवद्विधानेऽपरित्यक्तभावार्थ एव विधिः। एवं च सति शक्यतेऽग्निहोत्रं जुहोति इति पुनः श्रुतिः वक्तुं दध्ना जुहोतीत्येवमादीनां, निर्गुणत्वादग्निहोत्रपदार्थस्य निर्गुणात्तु गुणवतः पुनः श्रुतिः शक्यते वक्तुम्। ननु सगुणान्निर्गुणस्य पुनः श्रुतिरुपपद्यते गुणसंबन्धस्यान्यथानवकल्पनात्।

ननु च गुणवचनता विद्यतेऽग्निहोत्रपदस्य। सत्यं विद्यते। न जुहोतीत्यस्य सकलेनाग्निहोत्र(स्य) पदेनायं तद्वान् प्रतीयते। तथापि किमित्याह—मत्वर्थश्चाग्निहोत्रपदार्थः। अतो न मत्वर्थेन तद्वान् प्रतिपत्तुं शक्यते केवलेन गुणेन तद्वत्ता भवति। न पुनः गुणवत्ता(यत्त एव च न)[पन्नेन]मत्वर्थेन तद्वत्ता भवति। अत एव च शब्दविद्भिरुदितं न मतुबन्तान्मतुबुत्पद्यत इति। तस्मान्नष्टावयवमप्यवच्छेदकावयववत्

नामैवैतत् वैश्वदेवशब्दवत् । अतः समुदायानुवादः अग्निहोत्रं जुहोतीति । ननु च गुणवान् विहितो न गुणः अभावार्थत्वात् गुणस्य । माभूद्गुणविधानम् तद्विशिष्टता नापन्होतुं शक्यते विशिष्टसंपत्त्यर्थमभावार्थस्याप्युपादानं न विरुद्ध्यते । यस्य पुनः अग्निहोत्रं जुहोतीति विधिः तस्य दध्ना जुहोतीति विहितस्यैव गुणवत्ता प्रतीयते । ततश्च गुणमात्रावशेषादविधायकान्येतानि वाक्यानि भवन्ति गुणवतश्च केवलस्य विहितत्वात् । उपादानमपि गुणानां न सिद्ध्यति गुणवत्प्रतीतिर्हि विधिशून्यैव तदा । अथ गुणविधानमप्याश्रीयते भावार्थेभ्यः क्रिया प्रतीयत इति विरुद्धं नामनामिव्यवहारोच्छेदश्च । भवत्विति चेत् ।

---

दण्डिन्यायेन सर्वजुहोतीनां नामैवैतत् वैश्वदेवशब्दवत् । अतः समुदायानुवादोऽयं **अग्निहोत्रं जुहोतीति । ननु गुणवान् विहितः न गुणः अभावार्थत्वाद्गुणस्य ।** ततश्च गुणोपादानासंभवात् अनर्थको गुणशब्दः । परिहरति—**माभूद्गुणविधानं, तद्विशिष्टता तु नापह्नोतुं शक्यते विशिष्टसंपत्त्यर्थमभावार्थानामप्युपादानं न विरुद्ध्यते ।** नन्वेवं तर्हि अग्निहोत्रं जुहोतीति कर्मविधिरस्तु । दध्ना जुहोतीत्येवमादिभिश्चास्यैव कर्मणो गुणसंबन्धः प्रत्याख्यनामित्याह—**यस्य पुनरग्निहोत्रं जुहोतीति** कर्मविधिः **तस्य** वादिनो मते **दध्ना जुहोतीति विहितस्यैव गुणवत्ता प्रतीयते । ततश्च** विहितस्य कर्मणो विधानानुपपत्तेः **गुणमात्रावशेषात्** गुणमात्रस्यापि विहितस्य श्रवणात् । तस्य च विहितत्वस्य च श्रवणात् तस्य च विधिविषयत्वानुपपत्तेः **अविधायकान्येतानि भवन्ति । गुणवतश्च केवलस्य विहितत्वात् उपादानमपि गुणानां न सिद्ध्यति । गुणवत्त्वप्रतीतिर्हि विधिशून्यैव तदा**ऽप्यस्तु । **अथ गुणविधानमप्याश्रीयते** विहिते कर्मणि तद्विधानासंभवात् गुण एव केवलो विधीयते । दूषयति—**भावार्थेभ्यः क्रिया प्रतीयत इति विरुद्धं** भावार्थादपि गुणात् केवलात् क्रिया प्रतीयत इत्यभ्युपगमात् । यदा द्रव्यगुणेभ्योपि क्रिया प्रतीयते तदा **नामनामिव्यवहारोच्छेदश्च भवति । भवत्विति चेत् ।** भवतु अभावार्थादपि विधिः भवतु च नाम-

नाकर्मणि नियोगः शक्यतेऽवगन्तुम् । तस्मान्न्याय्यं वचनं भावार्थेभ्यः क्रिया प्रतीयत इति । न्याय्यं चाभ्युपगमेन न शक्यते बाधितुम् । अतो दध्ना जुहोतीत्येव विधानमभ्युपगन्तुं युक्तम् । उपादानेनापि तावत् गुणश्रुतेरर्थवत्ता भवत्विति । विहितेषु गुणवत्सु निर्गुणा पुनः श्रुतिः । कथं पुनर्गुणवत्सु निर्गुणा पुनः श्रुतिः ? भावार्थमात्रपर्यवसायी विधिरित्युक्तम् । तस्माद्विधेयत्वेन पुनः श्रुतिः विध्यपेक्षश्चायमनुवादो नाभिधानापेक्षः । ननु च नाविनियुक्तमुपादीयते । केन चोक्तं न विनियुक्तो गुण इति ।

---

नामिव्यवहारोच्छेद इति चेत् । दूषयति—**नाकर्मणि गुणे नियोगः शक्यते** साध्यविषयाभिप्रायस्वरूपा कृतिः तदायत्तः कार्यात्मा नियोग इति **विषयकरणीये** दर्शितम् । **तस्मान्न्याय्यं वचनं भावार्थेभ्यः क्रिया प्रतीयत इति । न्याय्यं चाभ्युपगमेन न शक्यते बाधितुम् । अतो दध्ना जुहोतीत्येव विधानमभ्युपगन्तुं युक्तम् । उपादानेनापि तावद्गुणश्रुतेरर्थवत्ता भवत्वित्येवमर्थंविहितेषु च गुणवत्सु निर्गुणा पुनः श्रुतिः ।** सा निर्गुणा तेषामेव पुनः श्रुतिः । **कथं पुनर्गुणवत्सु निर्गुणा पुनः श्रुतिः** यदि हि सा विगुणा स्यात् तदा भवेद्गुणवतः पुनः श्रुतिः अगुणा च न तु गुणवतः पुनः श्रुतिः संभवति । उत्तरं—**भावार्थमात्रपर्यवसायी विधिरित्युक्तम् ।** यत्रापि गुणवद्विधानं तत्रापि भावार्थमात्रपर्यवसाय्येव विधिः निर्गुणं स्पृशत्यपि । **तस्माद्विधेयत्वेन पुनः श्रुतिः** ननु यद्यपि भावार्थमात्र एव विधिः अभिधानं तु गुण एव कथमनुवाद इत्यत्राह—**विध्यपेक्षश्चायमनुवादः नाभिधानापेक्षः । ननु च नाविनियुक्तं पुनरुपादीयते ।** अस्यार्थः—तार्तीयविनियोगपूर्वको हि चातुर्थः उद्गात्रादीनां व्यापारः विनियोगश्च विधिव्यापारः । अविधेयश्चेद्गुणः नूनमविनियुक्तः अविनियुक्तश्चेत् कथमुपादीयत इति । परिहरति—**केन चोक्तं अविनियुक्त इति ।** विनियोगः परस्परं संबन्धः स गुणस्यापि विद्यत इति विनियुक्त एव गुणः ।

अनभिज्ञो भवान्। एतदुक्तं भवति—नाविनियुक्तं विधीयते नाविहितमुपादीयत इति। विध्यर्थ एव हि विनियोगो न विशेषणार्थः तद्वत्ता च विशेषणविशेष्यतामादायेति नैदमर्थ्यम्। ननु गोमानिति गवां गोमदर्थता प्रतीयते। नैवम्। शरावत्यादिष्व-दर्शनात्। तस्माद्गोमति प्रमाणान्तरतस्तादर्थ्यं मृग्यम्। षष्ठ्या तादर्थ्यमिति चेन्न मातृमान् पितृमानित्यनैकान्त्यात्। उच्यते। अविनियुक्तेपि शेषता नास्ति। असति च शेषत्वे ऐदमर्थ्यं माभूत्।

---

पुनश्चोदयति—**अनभिप्रायज्ञो भवान्। एतदुक्तं भवति-नाविनियुक्तं विधीयते नाविहित-मुपादीयते।** अस्यार्थः-यत्संबद्धमवगम्यते तद्विधीयते यच्च विधीयते तन्नाग्रिमविनियोगेन विनियुज्यते। तदेव चोपादीयते। कस्मात्पुनः विहितमेव विनियुज्यते इत्यत्राह—**विध्यर्थ एव हि विनियोगो न विशेषणार्थः** विधिरूपोऽर्थो विनियोग इत्यर्थः। विशेषणरूपस्त्वर्थो विनियोगो न भवति। ननु विनापि विधित्वं तद्वत्तैव विनियोगमापादयतां इत्यत्राह—**तद्वत्ता च विशेषणविशेष्यतामापादयति नैदमर्थ्यम्।** ऐदमर्थ्यलक्षणश्च संबन्धो विनियोगः स विधिव्यापारमन्तरेण न भवति तद्वत्तामात्रेण।

**ननु गोमानिति गवां गोमदर्थता प्रतीयते** तेन तद्वत्ताप्यैदमर्थ्यमापादयत्येव। परिहरति—**शरावत्यादिषु** सत्यपि तद्वत्त्वे ऐदमर्थ्यस्या**दर्शनात्।** यतस्तद्वत्ता ऐदमर्थ्यं नावगमयति **तस्माद्गोमति प्रमाणान्तरतस्तावदैदमर्थ्यं मृग्यम्। षष्ठ्या तादर्थ्यमिति चेत्** शरावत्यां सप्तम्यर्थे मतुप् तेन माभूत् तत्र तादर्थ्यं षष्ठ्या तु मतुपि तादर्थ्यं भविष्यतीति चेत् दूषयति—**मातृमान् पितृमान् इत्यनैकान्त्यात्।** षष्ठ्यर्थोत्पन्नो मतुम् पितृमानित्यत्र। ता-दर्थ्यादर्शनात् एकान्तः षष्ठ्यापि तादर्थ्यावगमेऽपि नास्ति। **उच्यते—अविनियुक्तस्यापि शेषता नास्ति असति शेषत्वे ऐदमर्थ्यं माभूत्।** तद्विनापि विधिव्यापारः शेषतायामसत्वात्.

उपादानं पुनः वि(शिष्टा)शेषणत्वावगमपूर्वकमेव यथा पश्वेकत्वस्य पशुना यजेतेति।

ननु च तदेकत्वं विनियुक्तपशुविशेषणम्। अत उपादीयते विनियुक्तस्योपादेयत्वात्। दध्यादेस्तु कथमुपादानम्? दध्याद्यपि विनियुक्तविशेषणमेव। कर्मणो विनियुक्तत्वात् फले। एवं तर्हि उपादानशेषं दध्यादि। भवतु न कश्चिद्दोषः। यथैव हि द्रव्य-सङ्ख्यालिङ्गशून्यं विनियुक्तमपि नोपादातुं शक्यत इत्येकत्वादयः उपादीयन्ते। एवं कर्मापि न कारकविशेषशून्यमस्तीति दध्याद्युपादानसिद्धिः। यद्येवं किमिति तर्ह्यन्योपादाने वैगुण्याशङ्का? उपादाने शेषमपि शेषमेवेत्यदोषः।

ननु चास्मिन् पक्षे पश्वादीनामपि नैव विधानम्। ओमित्युच्यते

---

ऐदमर्थ्यं दध्यादेर्माभूत् उपादानं पुनः विशेषणत्वावगमपूर्वकमेव यथा पश्वेकत्वस्य पशुना यजेतेति अविनियुक्तस्यापि विशेषणत्वावगममात्रेणोपादानम् तथाऽत्रापि। ननु पश्वेकत्वं विनियुक्तपशुविशेषणं अत उपादीयते विनियुक्तस्योपादेयत्वात् दध्यादेस्तु कथमुपादानं? परिहरति—दध्याद्यपि विनियुक्तविशेषणमेव। कर्मणो विनियुक्तत्वात् फले न स्वविषयत्वात्। यदि पश्वेकत्वतुल्यं दध्यादि एवं तर्ह्युपादानशेषं दध्यादि। परिहरति—भवतु न कश्चिद्दोषः। यथैव हि द्रव्यलिङ्गसङ्ख्याशून्यं विनियुक्तमपि नोपादातुं शक्यते इत्येकत्वादय उपादीयन्ते एवं कर्मापि न कारकविशेषशून्यमस्तीति दध्याद्युपादानसिद्धिः। यदि विशेषणमात्रमेव दध्यादि किमिति तर्हि अन्योपादाने वैगुण्यशङ्का। उत्तरं—उपादानशेषमपि शेषमेवेत्यदोषः। ननु चास्मिन्नपि पक्षे पश्वादीनामपि नैव विधानं तत् कथमेकत्वस्य विनियुक्तविशेषणत्वम्? परिहरति—ओमित्युच्यते

कथं तर्हि पश्वेकत्वमिवेति प्रदर्शितम्। अभ्युपगम्यैतत्प्रदर्शितम्। यथा सत्यपि गुणविधावविनियुक्तस्यैव पश्वेकत्वस्योपादानं तद्वद्दध्यादेरिति। तदेवेदमापतितं घोटारूढस्य विस्मृतो घोट इति। विधेश्चाविषया गुणाः विधिना चोपादीयन्त इति।

अत्राभिधीयते। मुग्धः खल्वसि कार्योपादानविशेषज्ञाने। यत्र नियुङ्क्ते तत्कार्यम्। तत्सिद्ध्ये यदुपादीयते तदुपादानम्। विनियोगे चाविषयता नामार्थस्योक्ता। न पुनरकारकतापि। ननु चोपादानमपि विधेर्व्यापार इति एव व्यापारत्वाच्च किमिति नियोगविषयतां न प्रतिपद्यते।

---

नास्त्येव पश्वादीनामपि विधानम्। यदि नास्ति कथं तर्हि पश्वेकत्वमिवेति प्रदर्शितम्? परिहरति—अभ्युपगम्य गुणविधिमेतत्प्रदर्शितम्। यथा सत्यपि गुणविधौ (हेत्व) सिद्धान्तितं भवन्मते अविनियुक्तस्यैव पश्वेकत्वस्योपादानम् तद्वद्दध्यादेरिति। एवं पश्वेकत्वमिवेति प्रदर्शितम्। अत्र चोदयति—तदेवेदमापतितम् यत्तुल्यमतकथासु श्रूयते घोटारूढस्य विस्मृतो घोट इति कर्मकर्तरि रूपं विस्मृतश्चित्तादपक्रान्तः। एतदेव दर्शयति—विधेश्चाविषया गुणा गुणविधिनोपादीयन्त इति विधिनोपादीयमानत्वात् विधिविषयत्वमेव युक्तमिति भावः। परिहरति—अत्राभिधीयते मुग्धः खल्वसि कार्योपादानविशेषज्ञाने। नियोगः कार्यशब्देनोच्यते। उपादानशब्देन चोपादीयत इत्युपादानमिति कृत्यल्युटो बहुलमिति लिट् विधेयमुपादेयं च विविनक्ति। यत्र नियुङ्क्ते तत्कार्यवत्तया विधिः बोधयति तद्विधेयम्। तत्सिद्ध्ये यदुपादीयते तदुपादानं तदुपादेयमित्यर्थः। विनियोगे चाविषयता नामार्थस्योक्ता। न पुनर्विषयं प्रत्यकारकतापि तेन तत्सिध्यर्थं युक्तं तस्यैवोपादानं व्यक्तम्। ननु चोपादानमपि विधेर्व्यापार एव विधेर्व्यापारत्वाच्चोपादानस्य तत्संबन्धात् किमिति नियोगविषयतां दध्यादि न प्रतिपद्यते एव। अर्थानुबन्धाव-

अनुबन्धावस्कन्दात् । अन्यथा हि भेदाभेदौ शास्त्रस्य दुर्भणौ स्याताम् । तस्माद्विशेषावगतिरेव विशेषस्योपादानमाक्षिपति न पुनर्नियोगस्तमास्कन्दति द्रव्योपादानमिव । तस्मादिदमेव न्याय्यं दध्ना जुहोतीति विधिः अग्निहोत्रं जुहोतीति समुदायानुवादः । संज्ञोपबन्धादिति किमभ्यधिकमुच्यते । इदमभ्यधिकम् । प्रकृतेभ्यः संज्ञातोऽन्यत्वं प्रतीयत इत्यभिप्रायः । संज्ञाहि श्रूयमाणैव प्रकृतेभ्योऽन्यत्वमापादयति अथैष ज्योतिरित्येवमादिषु दर्शनात् । सत्यमेवं विशेषावगतौ सत्याम् । ज्योतिरादिषु तु सहस्रदक्षिणादिविशिष्टाः कर्मविशेषा अवगम्यन्ते तथेह विशेषावगतिः । ननु विज्ञायत एवात्राज्याघारहोमौ क्रियान्तरेभ्यो विशिष्टौ ।

---

च्छिन्नो विधिः नामार्थविषयो भवति अन्यथा हि यदि विषयान्तरावच्छिन्नो नियोगो विषयान्तरविषयः स्यात् तदा शास्त्रभेदाभेदौ दुर्भणौ स्याताम् । विषयभेदेन शास्त्रभेद इति प्रतिज्ञा । अन्यत्र भावेन च विषयस्यानवच्छेदकत्वे भावार्थस्य विधिविषयत्वायोगात् । तस्माद्विशेषावगतिरेव विशेषस्योपादानमाक्षिपति । न पुनः (वि) नियोगस्तमास्कन्दति द्रव्योपादानमिव । न विनियुज्यन्ते द्रव्यादयः किन्तूपादीयन्ते केवलं यथा एकत्वादयो(व्रतयतयो) न क्रतौ विनियुज्यन्ते किन्तु क्रतुसिध्यर्थमुपादीयन्ते । तदिदमेव न्याय्यं दध्ना जुहोतीति विषयः । अग्निहोत्रं जुहोतीति समुदायानुवाद इति । संज्ञोपबन्धादिति किमभ्यधिकमुच्यते । समाधत्ते-उत्तरं-इदमभ्यधिकम् । आक्षेपमाशङ्क्य परिहरति—परिभाषा चोदीयत इत्यर्थः । कः पुनः आक्षेप इत्यत्राह-प्रकृतेभ्यः संज्ञातोऽन्यत्वं प्रतीयत इत्यभिप्रायः । संज्ञाहि श्रूयमाणैव प्रकृतेभ्योऽन्यत्वमापादयत्येव—अथैष ज्योतिरित्येवमादिषु संज्ञातोऽन्यत्वदर्शनात् । तेनाग्निहोत्राघारसंज्ञाश्रवणात् प्रकृतेभ्यो दधिहोमादिभ्योऽन्यत्वमवगम्यते कथं समुदायानुवाद इति । परिहारमाह—सत्यमेवं संज्ञातोऽन्यत्वमिति किन्तु विशेषावगतौ सत्यां ज्योतिरादिषु तु सहस्रदक्षिणादिविशिष्टा विशेषा अवगम्यन्ते । न तथेह विशेषावगतिः तेन संज्ञातोऽन्यत्वं नास्ति । ननु विज्ञायत एवात्राज्याघारहोमौ क्रियान्तरेभ्यो विशिष्टौ । तेन

यद्येवं लोकत एव तर्हि विज्ञातौ किमत्र विधिः करिष्यतीति गुणफलोपबन्धेषु संज्ञा निष्प्रयोजनैव। अथ विशिष्टस्य संज्ञा वाचिकेत्युच्यते। उक्तं तर्हि प्रकृतेभ्यो न विशेषान्तरमवगम्यत इति। अपि च क्रियाविधानपक्षे गुणकर्मविधानं प्राप्नोति द्वितीयान्तत्वान्नाम्नः। अतश्च नामधेयानुपपत्तिः। अनुवादपक्षे पुनः विहितप्रचयावगम्यत्वात् समुदायस्य भवत्यवगतौ समुदायः साध्यः। अतश्च नामधेयेऽप्यविरोधः। अग्निहोत्रपदमपि समुदायस्य वाचकं प्राप्नोति। नेति ब्रूमः। धातुवदेव तन्त्रेण समुदायिनामेव वाचकम् द्वितीयैकत्वयोस्तु गम्यमानप्रचयविषयतया परिहारोऽयमप्रकृतत्वाच्चेति कोऽयं कूष्माण्डः। प्रत्युताप्रकृतत्वात् द्रव्यदेवतस्य विधानं प्राप्नोति अविशेषादित्युच्यते। न सन्ततादिभ्यः कश्चिदन्यो विशेषोऽवगम्यते आघारे येन विशेषान्तरनिष्ठाघारसंज्ञा स्यात् तस्याः सन्ततादिनिष्ठैवेयं संज्ञा। ततश्चानुवादः।

---

विशेषनिष्ठा संज्ञा घटतेऽन्यत्वेऽपि। परिहरति—यद्येवं लोकत एव तर्हि विज्ञातौ होमाघारौ किमत्र विधिः करिष्यति होममात्रस्य चाघारमात्रस्य च प्राप्तत्वान्न विधेयत्वम्। यदि होममात्रस्य चाघारमात्रस्य च संज्ञा स्यात् तदा सा गुणफलोपबन्धेषु संज्ञा निष्प्रयोजनैव जुहोत्याघारयति द्वाभ्यामपि गुणफलोपबन्धसिद्धेः। अथ विशिष्टस्य होमस्याघारस्य चाग्निहोत्राघारसंज्ञा वाचिका तेन गुणफलोपबन्धनेनार्थवत्त्वेनेत्युच्यते दूषयति—उक्तं तर्ह्येव समुदायानुवादकत्वं प्रकृतेभ्यो न विशेषान्तरमवगम्यत इति हेतोः। अपि चाग्निहोत्रं जुहोति आघारमाघारयतीति क्रियाविधानपक्षे गुणकर्मविधानं प्राप्नोति द्वितीयान्तत्वान्नाम्नः। अग्निहोत्रादिप्रातिपदिकस्य प्रधानसमर्पकत्वावगतेः। ततश्च नामधेयानुपपत्तिः॥ (अत्र पात):

संज्ञोपबन्धात् ॥ १४ ॥

संज्ञोपबन्धश्च भवति, अग्निहोत्रं नाम होमं जुहोति इति, आघारसंज्ञकं कर्म करोति इति, संज्ञाविशिष्टावाघारहोमौ विधीयेते; न च विज्ञायते, कोऽसावाघारो नाम कर्मविशेषः, कश्चाग्निहोत्रसंज्ञकः इति। ननु विज्ञायते, आघारणमाघारः, हवनं होमः। यद्याघारणसामान्यं होमसामान्यञ्च विधीयेते, विज्ञातपूर्वौ तर्ह्याघारहोमौ, तेनानुवादौ। अथाव्युत्पन्ना उभयोरपि संज्ञा, तथापि न आघाराग्निहोत्रसामान्यमुच्येत, विशेषाश्रयत्वात् संज्ञायाः; न च, स विशेषो गम्यत इत्यपूर्वावाघारहोमविधी नावकल्पेते। अपि च कथं क्रिया साधनशब्देनोच्यते? ईप्सिततमं हि यत् साधनं, तद् द्वितीयान्तेनोच्यते, क्रिया तिङन्तेन। अनुवादपक्षे क्रियाणां समुदायोऽर्थान्तरम्, तत् ईप्सिततमं साधनं भविष्यति ॥

अप्रकृतत्वाच्च ॥ १५ ॥

न च, प्रकृतमपि द्रव्यदेवतमाघारे विद्यते येन रूपवान् स्यात्। तस्मादेतावपि समुदायशब्दौ इति ॥

चोदना वा शब्दार्थस्य प्रयोगभूतत्वात्, तत्सन्निधेर्गुणार्थेन पुनः श्रुतिः ॥ १६ ॥

न चैतदस्ति, समुदायशब्दौ इति, कर्मान्तरचोदने स्याताम्। कुतः?। शब्दार्थस्य प्रयोगभूतत्वात, आघारयति,

---

संज्ञोपबन्धादिति। पौर्णमास्यधिकरणेऽप्याक्षेपपरिहारौ द्रष्टव्यौ। चोदना वा शब्दार्थस्य। न समुदायानुवादौ अग्निहोत्रं जुहोति

जुहोति इति, होमाघारौ प्रयोक्तव्याविति शब्दार्थः, तेन कर्मान्तरे विधीयेते इत्यवगच्छामः। आघाराग्निहोत्रशब्दौ च हवनाघारणसामान्यवाचिनौ प्रज्ञातौ, अतो नाविज्ञातार्थौ ; तेन रूपवन्तौ सन्तौ विधीयेते।

यदुक्तम्, ऊर्ध्वमाघारयति, दध्ना जुहोति इत्येवमादिभि-र्विहितत्वादनुवादौ इति। नैतदेवम्, न ह्येते होमाघारौ विधातुं शक्नुवन्ति; उर्ध्वमाघारयति, दध्ना जुहोति इति च नै-तदुक्तं भवति, आघारः कर्तव्यः, होमः कर्तव्यः इति, किं तर्हि, ऊर्ध्वताघारसंबन्धः कर्तव्यः, दधिहोमसम्बन्धः कर्तव्यः इति; तस्मात् अप्राप्तत्वान्नानुवादौ। ननु सम्बन्धे विहिते

---

आघारमाघारयतीति। कुतः? प्रकृतानां कर्मणामभावात्। कथमभावः गुणविधानावगतेः दध्ना जुहोतीत्येवमादिषु। ननु च नाकर्मणि गुणो विधातुं शक्यते। सत्यम्। इदमेव कर्म भविष्यति अग्निहोत्रं जुहोतीति सामान्यावगतेः। विशेषनिष्ठत्वात् संज्ञाया न विधानं सम्भवति। विधेयत्वादेव विशेषो लक्ष्यत इत्यभिप्रायः। लब्धे च विशेषे गुणयोग-प्रवृत्त्या नामधेयत्वसिद्धिः। कथं पुनरभावार्थत्वात् गुणविधिः। भावार्थ एव हि तर्हि शब्दो विधीयते। ननु च दृष्टं कथं भावस्य विशेषणम्? किमिति वा न विशेषणम्। अक्रियारूपत्वात् द्रव्यस्य नैवात्र रूपरूपितया विशेषणम्। कथं तर्हि? अनुबन्धतयैव। एवमप्यनुबन्धो विधिविषयो ना[न]नुबन्धः। ततः किम्? इदं ततो भवति यत्पूर्वोक्तं विशिष्टस्याविहितत्वात् विशेषणं उपादानशेषं भवति न

अर्थाद्धोमाघारौ भविष्यतः। नैतदेवम्, अस्मिन् हि सति विधानेन सम्बन्धः; तस्मान्नार्थादापद्येते होमाघारौ, अतोऽपूर्वौ विधीयेते इति ब्रूमः।

ननु आघारयति, जुहोति इति होमाघारगतो व्यापारः श्रूयते, न दध्यूर्ध्वतादिसम्बन्धः। सत्यं न श्रूयते; तत्सन्निधेर्गुणार्थेन व्यापारश्रवणमवकल्पिष्यते। ननु पदार्थान्तरगतं

---

विधेयमित्युच्यते। यथैव हि विनियोज्य(तया)स्थत्वात् अविनियोज्यमुपादेयं, एवमेव हि विधेयमपि भवतीति। इदमयुक्तम्। युक्तो हि विनियोगः। ऐदमर्थ्यावगतिर्हि सिद्धसाध्यतां नापेक्षते। नियोगस्तु कार्यावगतिपूर्वक एव। तस्मादुपादानमात्रमेव दध्यादेः शक्यते वक्तुम्। न पुनर्विधेयता। ननु चाविधेयत्वे साधनान्तरनिराकरणं न प्राप्नोति। अनिवारिते च तस्मिन् दध्यादिपदमनर्थकं स्यात्।

---

यथैव हि विनियोज्यस्थत्वादविनियोज्यमुपादेयं भवति एवमेव विधेयमपि भवति यथा दध्ना जुहोतीत्येवमादिषु कर्मविधिपक्षे विनियोज्यस्थतयापि दध्यादेः शेषत्वमुपादेयत्वं च। तथा वाक्यान्तरविहितहोमस्य। तथापि शेषत्वमपि भवत्विति पूर्वपक्ष्याह—इदमयुक्तं विधेयत्वं विनियुक्तो विनियोगशेषत्वं युक्तम्। कथमेतदित्याह—ऐदमर्थ्यावगतिर्हि न सिद्धसाध्यतामपेक्षते सिद्धतां साध्यतां वा नापेक्षते तेन सिद्धस्यापि युक्तो विनियोगः नियोगस्तु कार्यावगतिपूर्वक एव य एव कार्यतयाऽवगम्यते तद्विषय एव नियोगः। तेन सिद्धस्याविधेयत्वम्। यस्मात् सिद्धस्य[न]विधेयत्वमस्ति तस्मादुपादानमात्रमेव दध्यादेः शक्यते वक्तुं न पुनर्विधेयतापि· राद्धान्तैकदेश्याह—ननु चाविधेयत्वे दध्यादेः साधनान्तरनिराकरणं न प्राप्नोतीति अनिराकृते च तस्मिन् दध्यादिपदमनर्थकं तेन वाक्यान्तरविहितहोमे-

व्यापारं श्रुतिर्न शक्नोति वदितुम्। सत्यमेवमेतत्। स्वपदार्थगतं वक्ष्यति, तं तु स्वपदार्थं गुणशब्दो विशेक्ष्यति, स एव विशिष्टः प्रत्येष्यते, इति। भवेदेतत्, विशिंष्यात् स्वपदार्थं गुणशब्दः, न त्वेवं गुणगतो व्यापारः प्रतीयेत। तत्र किं भविष्यति? अव्याप्रियमाणेऽपि गुणे शब्दार्थोऽवक्लृप्तो भविष्यति। गुणवचन-सन्निधिः इदानीं किमर्थः? अनर्थकस्तु। कथं पुनरनर्थको

---

किंक्रियताम? यस्यार्थो नास्ति किमन्यत आनर्थक्यादित्युक्तम्। कस्तर्हि परिहारः? सूत्रकारं पृच्छ। येन भावार्थेभ्यः क्रिया प्रतीयत इत्युक्तम्। अत्राभिधीयते। भावार्थ एवात्रापि विधीयते दध्ना जुहोतीति। इयांस्तु विशेषः। धात्वर्थानुबन्धावच्छिन्नः। कारकमपि हि क्रियावच्छे(दकमेव)देनैव।

---

दध्यादि विधेयमस्तु। पूर्वपक्ष्याह—किं क्रियतां यस्यार्थो न विद्यते तस्य किमन्यदत आनर्थक्यात् इत्युक्तम्। ततश्चायं पक्षस्त्यज्यताम्। आश्रीयतामस्मन्मतं दध्यादिवाक्येष्वेव कर्मविधिः अग्निहोत्रं जुहोतीति समुदायानुवाद इति। निराकर्ता राद्धान्तैकदेश्याह—कस्तर्हि गुणविधिदूषणे परिहारः? पूर्वपक्ष्याह-किमस्मान पृच्छसि। सूत्रकारं पृच्छेति येन भावार्थेभ्यः क्रियावगतिरुक्ता। सूत्रकारमतानुसारिणो वयमित्यर्थः। परमराद्धान्ती वदति—अत्राभि-धीयते—भावार्थ एवात्रापि विधीयते दध्ना जुहोतीति कस्तस्याग्निहोत्रं इत्यनेन विशेषः? इयांस्तु विशेषः इत्याह—धात्वर्थस्य योऽनुबन्धः कारकं तदवच्छिन्नः तत्संबन्धी न विशि-ष्टरूपः प्रतीयमानो विधीयत इत्यर्थः। कथं कारकसंबन्धेन स्वरूपविशेषो भावार्थस्यावगम्यत इत्यत्राह—कारकमपि क्रियावच्छेदेन देवतासंबन्धान्यथानुपपत्तेः यागचोदना। तथा गृह्णातीत्यपि। कथमवच्छेत्तव्यमित्यत्राह—कारकव्यापारावच्छेदेनैव। कथमवच्छेदकमित्यत्राह

नाम वेदे भवितुमर्हति? सत्यर्थे नानर्थकः, असति त्वर्थे किमन्यदुच्येत। एवं तर्हि वाक्याद्भविष्यति, श्रुत्यर्थे सति न वाक्यर्थोऽवकल्प्यते। सत्यमेवमेतत्, अविवक्षिते त्ववकल्पिष्यते। कथं अविवक्षा? गुणवचनस्याप्रमादपाठात्, स्वपदार्थस्य च शब्दान्तरेण विहितत्वात्। तस्मात् सिद्धं, गुणार्थेन 'दध्ना जुहोति' इत्येवमादीनां पुनः श्रुतिः। जुहोतेरुच्चारणं च

---

कारकव्यापारावच्छे(दका)द एव धातवः प्रवर्तन्ते। तदपि अविभागतः कारकविशेषश्रवणे स एव विभागेनावगम्यते। ततः किं? विभागश्रवणे हि विभक्तस्यैव विधेयता अवगम्यते। न पुनरविभक्तस्य धात्वर्थस्य। तस्माद्यत्र धात्वर्थावगति(तिः)स्तत्र धात्वर्थविधानम्। तत्सन्निधौ विभागावगतेः विभागमात्रविधानम्। अतः सिद्धं तत्सन्निधेः गुणार्थेन पुनः श्रुतिरिति। जुहोतेरुच्चारणमनुवादः गुणसम्बन्धार्थः।

---

—कारकव्यापारावच्छेदे कारकव्यापारविशेषे धातवः प्रवर्तन्ते। अविभागतः शुद्धेन धातुना अविभागतः। सामान्यपरेण कारकव्यापारः प्रतिपाद्यते। कारकविशेषश्रवणे पुनः स एव कारकव्यापारविशेषो विभागेनावगम्यते विशिष्टेन रूपेणावगम्यते न च तादृशं रूपं कारकसंबन्धेनैव वक्तुं शक्यने न चान्यथा भवत्येवम्। ततः किं—उत्तरं—विभागश्रवणेऽपि हि विभक्तस्यैव विधेयताऽवगम्यते न विहितत्वात् नाविभक्तस्य धर्मिणो धात्वर्थस्य विहितत्वात् यत्र धात्वर्थावगतिः तत्र धात्वर्थे विधानं तत्सन्निधौ तु विभागेऽवगते विभागमात्रविधानम्। तस्मासिद्धं तत्सन्निधेर्गुणार्थेन पुनः श्रुतिरिति। दध्ना जुहोतीतिवाक्यस्य विधिमा[त्रा]त् दध्यादीनामपि विधेस्संबन्धोऽस्यैदमर्थ्यलक्षणः। होममपि प्रति वैनियोगिकं दध्यादेः शेषत्वमस्ति। जुहोतेरुच्चारणं चानुवादोगुणसंबन्धार्थः। यदि जुहोतीत्यनुवादः।

अनुवादो गुणसम्बन्धार्थः । यदि जुहोति इत्यनुवादः, केनेदानीं गुणो विधीयते ? दधिशब्देनेति मा वोचत । ननु इदानीमेव वाक्यात् गुणगतो व्यापारो गम्यते इत्युक्तम् ।

---

यदि जुहोतीत्यनुवादः केनेदानीं गुणो विधीयत इति ? कोऽयं प्रश्नः । ननु च विधिद्वयमप्यभ्युपगतमेव अग्निहोत्रं जुहोतीति दध्ना जुहोतीति च । तदेवेदं नोपपद्यत इत्यभिप्रायः । कथमनुपपत्तिः ? एकैवेयं कर्तव्यताऽविभक्ता । विभक्तौ त्वनुबन्धौ । न चानुबन्धो दध्यादिः विधेयः । किं तर्हि अनुबन्धः । एकत्वाच्च विधिद्वयस्याविषयः । तस्मादेकं वाक्यं विधिशून्यम् । तच्च आश्रितत्वात् गुणसंबन्ध्येवेति । पुनरप्यविवक्षैव गुणानुबन्धस्य वाक्यार्थो यः तं विधातुमित्यनुबन्धविस्तारात् भावविस्तार इत्युक्तम् । तस्माद्विनियोग एव

---

केन वार्थेन गुणो विधीयत इति भाष्यमनुभाष्याक्षिपति-कोऽयं प्रश्नः ? एकग्रन्थेनाह-ननु विधिद्वयमभ्युपगतमेव अग्निहोत्रं जुहोतीत्येको विधिः दध्ना जुहोतीति परस्तेन गुणविधानार्थो विधिरस्त्येव । समाधातुस्तदेवेदं विधिद्वयं नोपपद्यत इति अभिप्रायः । कथमनुपपत्तिः ? उत्तरग्रन्थः—एकैवेयं कर्तव्यता सा च कर्तव्यताऽविभक्ता(व)नुबन्धादेक एव विधिर्न-विधिद्वयं केवलं (विभक्ता) विभक्तावनुबन्धौ । नन्वेवं तर्हि अनुबन्धभेदात भिन्नो विधीयत इत्यत्राह—न चानुबन्धो दध्यादिः विधिविषयः किं तर्हि अनुबन्ध एव । भावार्थ एव विधेर्विषयः स चैकस्य परमवस्थाविशेष एव । सोऽपि कारकसंबन्धेन एकत्वाच्च भावार्थस्य विधिद्वयस्याविषय एव । तस्मादेकमत्र वाक्यं विधिशून्यम् । तच्च गुणानुबन्धेनाश्रितत्वात् भावार्थमात्रविधेः । अतः पुनरपि अविवक्षैव गुणानुबन्धस्य । परिहारभाष्यं व्याचष्टे—वाक्यार्थो यः तं विधातुमित्यनुबन्धविस्ताराद्भावविस्तार इत्यु[क्तम्] तस्मात् विनियोग एव

सत्यमेवमेतत्, अविधीयमानस्तु कुतो गम्यते ? इति, प्रमाण-मस्य नावगम्येत। असति प्रमाणे व्यामोहः स्यात। एवं तर्हि विधायकौ जुहोत्याघारयतिशब्दौ। कस्य तर्ह्यनुवादः ? धात्वर्थस्य इति ब्रूमः।

यदि विधायकौ, पूर्वमेव विहिते स्वार्थे, किमर्थं पुनरुच्चार्येत ? वाक्यार्थो यस्तं विधातुमित्यदोषः ; तस्मात् कर्मान्तरचोदने। यदुक्तं, नास्त्याघारे प्रकृतं द्रव्यदेवतमिति। किमेवं सति द्रव्य-देवतेन, यदा प्रसिद्धार्थाभिधानान्निर्ज्ञातमेवास्य रूपम्। अपि च, चतुर्गृहीतं वा एतदभूत्तस्याघारमाघार्येति आज्यमस्य द्रव्यं, मान्त्रवर्णिको देवताविधिः, 'इन्द्र ऊर्ध्वोऽध्वरो दिवि स्पृशतु महतो यज्ञो यज्ञपते इन्द्रवान् स्वाहेत्याघारमाघारयति ' इति, एवमसाविन्द्रवान् यद्यस्य इन्द्रो देवता। तत् यदि देवता-भिधानमेतदाघारस्य, ततोऽनेनाघारः कुतो भवति। तस्मात् कर्मान्तरे, न समुदायशब्दौ इति सिद्धम् ॥

---

विधेरपि विषयोपपत्तिः। यदुक्तं नास्त्याघारस्य प्रकृतद्रव्यदेवतमिति किमेवं सति द्रव्यदेवतेनेति। विधायकादेव (वि)शेषावगतिरित्यु-क्तम्। न च नास्ति वचनान्तरविहितं अस्त्येवेति सिद्धं नानुवादा-विति।

---

विधेरपि विषयोपपत्तिः। तथा पदार्थसंबन्धावगतिः सर्वविषया। "यदुक्तं नास्त्या-घारस्य प्रकृतं द्रव्यदेवतमिति किमेवं सति द्रव्यदेवतेन" इति भाष्यमनुभाष्य व्याचष्टे— विधेयत्वादेव शेषावगतिरित्युक्तम्। न च नास्ति वचनान्तरविहितं रूपं अपि तु अस्त्येवेति सिद्धं नानुवादाविति।

द्रव्यसंयोगाच्चोदना पशुसोमयोः, प्रकरणे ह्यनर्थको द्रव्यसंयोगो न हि तस्य गुणार्थेन ॥ १७ ॥

ज्योतिष्टोमे श्रूयते,—'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति, तत्रेदमामनन्ति, 'हृदयस्याग्रेऽवद्यत्यथ जिह्वायाः, अथ वक्षसः' इति; तथा 'सोमेन यजेत' इति,

---

द्रव्यसंयोगाचोदना पशुसोमयोः। किं पुनः पूर्वाधिकरणेनास्य वैषम्यम्। इदमस्ति वैषम्यम्—रसहृदयादिभ्यो द्रव्यान्तरं पशुसोमौ। एवं तर्हि पूर्वपक्ष एव नास्ति। न च नास्ति, क्रमसमुच्चयौ हि पूर्वपक्षहेतुभूतौ

---

द्रव्यसंयोगात्। किं पुनः पूर्वाधिकरणेनास्य वैषम्यं? यदेवमाशङ्कते ननु सोमेन यजेतेति यागविधिः तथाऽग्नीषोमीयं पशुमालभेतेति च अनयोस्तु यागयोर्गृह्णात्यवद्यतिचोदनाभिः ग्रहणावदानमात्रगुणविधिरस्तु पूर्वाधिकरणसिद्धान्तवदिति किमधिकरणान्तरेणेति। उत्तरं—अस्तिवैषम्यं रसहृदयादिभ्यो द्रव्यान्तरं पशुसोमौ। अस्यार्थः-रससंबन्धिनीभिः ग्रहणचोदनाभिः न लतासाधनके(न) यागे गुणविधिः संभवति। भिन्नत्वाद्रसलतयोः। तथा हृदयादिसंबन्धाभिश्चावदानचोदनाभिः न पशुद्रव्ययागे गुणविधिसंभवः पशोर्हृदयादिभ्यो भिन्नत्वात। यदि भिन्नत्वान्न गुणविधिः संभवति एवं तर्हि पूर्वपक्ष एव नास्ति सोमेन यजेतेत्यैन्द्रवायवादियागसमुदायानुवादः तथाऽग्नीषोमीयं पशुमालभेतेत्ययमपि हृदयस्याग्रेऽवद्यति इत्येवमादीनामपि पूर्वपक्षो नोपपद्यते द्रव्यभेदेनानुवा(दिना)दानुपपत्तेः। परिहरति-न च नास्ति पूर्वः पक्षः। अपि त्वस्त्येव क्रमसमुच्चयौ हि पूर्वपक्षहेतुभूतौ। यदा हि क्रमसमुच्चयदर्शनेन सोमेन यजेतेत्यैन्द्रवायवादिवाक्येन वा देवता न संभवतीति निश्चितं तथा अग्नीषोमीयमित्यत्र च हृदयादिवाक्येनावदानविधायकमिति तदा बलाद्यागविधाने निरस्तेऽनुवादपक्षे च व्यवस्थिते लक्षणयाप्यनुवादो घटत एव। कथं पुनर्यागविधिपक्षे पशुसोमवाक्ययोः क्रमसमुच्चयदर्शनादुपपत्तिरि-

तथा, 'ऐन्द्रवायवं गृह्णाति, मैत्रावरुणं गृह्णाति, आश्विनं गृह्णाति,' इत्येवमादि। तत्र संशयः, किमवद्यतिगृह्णाति—

---

एकार्थत्वादवदानदेवता विकल्प्यन्त इति पूर्वपक्षवादी मन्यते। न चात्यन्तासंबद्धमेवेदं हृदयादिभ्यः पशुत्वम्। न च सोमाद्रसः तस्मादनुवादो न्याय्य इति मन्यते। कथं पुनः ऐन्द्रवायवं गृह्णातीति हृदयस्याग्रेऽवद्यतीति यागचोदना। ग्रहणे तावत् द्रव्यदेवतासंयोगात् निर्वपतिवत् गृह्णातिर्भविष्यतीत्यभिप्रायः।

---

त्यत्राह—एकार्थत्वादवदानदेवता विकल्प्यन्ते इति पूर्वपक्षवादी मन्यते। एकेनैवावदानेन एकया च देवतया यागोपपत्तेः देवतानामवदानानां च विकल्पः प्राप्नोति बन्धने खदिरादीनामिव। तदाहुर्वार्तिककारमिश्राः—

'यथैकबन्धनार्थत्वात् पलाशखदिरादयः।
तद्बन्धने विकल्प्यन्ते यागेऽस्मिन् देवतास्तथा॥

इति। भिन्नयागविषयत्वे तु देवतानां यागानां चादृष्टार्थानां युगपदेकशब्देन [1]फलविधानादुपपद्यते क्रमसमुच्चयदर्शनम्। अवदानसमुच्चयस्तु दशमे वक्ष्यते। ननु द्रव्यभेदे कथमनुवादः इत्यत्राह—न चात्यन्तासंबन्धमेवेदं हृदयादिभ्यः पशुत्वम्। न च सोमाद्रसः तेन सति संबन्धे लक्षणयाऽनुवादः। सोमशब्देन रसो लक्ष्यते पशुशब्देन हृदयादिः। तस्मादनुवादो न्याय्यौ मन्यते। कथं पुनरैन्द्रवायवं गृह्णाणि हृदयस्याग्रेऽवद्यति इति यागचोदना। उत्तरं—ग्रहणे तावत् द्रव्यदेवतासंयोगान्निर्वपतिवत् गृह्णाति[2]र्भविष्यतीत्यभिप्रायः। यथा वक्ष्यमाणन्यायेन सौर्यं चरुं निर्वपेत् इत्यत्र यागमन्तरेण द्रव्यदेवतासंबन्धानुपपत्त्या यागचोदना तथा गृह्णातीत्यपि।

---

(1) G. फलेन विधिनियुक्तत्वात् (2) G. भवतीत्य

चोदितानां कर्मणामेवालभतियजती समुदायस्यानुवदितारौ, अथ अपूर्वयोः कर्मणोर्विधातारौ ? इति ।

किं तावत् प्राप्तम् ? समुदायस्य इति । कुतः ? । ये इमे आलभतियजतिभ्यां कर्मणी विधीयेयातामिति चिन्त्येते, पूर्वमेव ते अवद्यतिगृह्णातिभ्यामवगमिते ; नचावगमितोऽर्थो विधीयते । हृदयादींस्तु पशुशब्देनानुवदति, सोमशब्देन च रसम् । तस्मात् 'सोमेन यजेत' इत्यनुवादो यजतिः 'यजेत स्वर्गकामः' 'वसन्ते वसन्ते' इति फलगुणसम्बन्धार्थः; 'पशुमालभेत' इति चाल-

---

अवद्यतौ तु कथं ? अत्रापि यागगतसंस्कारदर्शनात् फलचमसवत् कर्मचोदना भविष्यतीत्यभिप्रायः । युक्तं फलचमसे निर्ज्ञातयागशे-

---

अवद्यतौ तु कथं ? यागचोदना द्रव्यदेवतासंबन्धाश्रवणात् । [1]एकदेश्युत्तरं लिखति—अवद्यति इत्यत्रापि "[2]यागगत(पद) संस्कारदर्शनात् फलचमसवत् कर्मचोदना भविष्यतीत्यभिप्रायः। अन्यार्थमवदानलक्षणः संस्कारोऽयम् । प्रकृतौ सान्नाय्ये यागसाधनस्य द्रव्यस्य संस्कारः प्रतिपन्नः तत्संबन्धात् हृदयादीनामपि यागसंबन्धोऽवगम्यते फलचमसवत् । यथा भक्षणसंबन्धात् यागशेषता फलचमसस्यावगम्यते तथा हृदयादीनामपि ।

तदाहुर्वार्तिककारपादाः-सान्नाय्यं वा तत्प्रभवत्वात् इति। अनेन न्यायेनायमप्यवद्यतिः सारूप्यात् सान्नाय्यावद्यतिप्रकृतिः । स च दर्शपूर्णमासयोः यागद्रव्यसंस्कारार्थः प्रसिद्धः । तत्र यदि हृदयादीनि यागद्रव्याणि तैः[3] तत्संयोगभाञ्जि भवन्ति । नान्यथा । यथैव पूतीकानामभिषवसंबन्धे फलचमसस्य भक्षणसबन्धे च श्रूयमाणे तदर्हत्वान्यथानुपपत्त्या यागसङ्गतिरश्रूयमाणापि गम्यते । तथेहापि । आक्षेप्ता दूषयति[4]— युक्तं फलचमसे निर्ज्ञातयागशे-

---

(1) G. 'एकदेशिन उत्तरं' (2) G. यागवचन (3) G. ततः (4) G. आहः

भतिः अग्नीषोमसम्बन्धार्थः। अपि च, 'दशैतानध्वर्युः प्रातःसवने ग्रहान् गृह्णाति' इति समुच्चयो दृश्यते। तथा 'आश्विनो दशमो गृह्यते', 'तृतीयो हूयते' इति च क्रमः। यदि च अपूर्वौ यागौ विधीयेते, तत्र ऐन्द्रवायवादिभिर्देवता विधीयेरन्, ता एकार्थाः सत्यो विकल्प्येरन्। यथा, 'खादिरे बध्नाति,

---

षस्य, अवद्यतौ पुनर्मृग्योऽसौ। संस्कारादिति चेन्न; वत्समाल-भेतेत्यनैकान्त्यात्। ननु चाप्रयोजनवतः संस्कारो न भविष्यतीति युक्तैव कर्मकल्पना। वरं तृतीयार्थे षष्ठी न पुनः कर्मकल्पना।

---

षस्यासौ संस्कारः। अवद्यतौ पुनः मृग्योऽसौ। अस्यार्थः—निर्ज्ञातयागशेषो यः सोमः तस्यासौ भक्षाख्यः संस्कारः न्यग्रोधस्तिभिनीभिः संबन्धित्वेन प्रतीयते। तस्यैव भक्षस्य प्रकृतस्य प्रतीतेः तेन युक्तो यागसंबन्धावगमः। तत्रावदानं पुनः इदं न प्राकृतम् किं तर्हि [1]अन्यदेवेदं विधीयते। कामं दर्शपूर्णमासाधिकारावदानप्रकृतिकमस्तु। तेन तत्संबन्धान्न यागसंबन्धो हृदयादीनामवगम्यते। संस्कारादिति चेत्। अथ मन्यसे अवदानलक्षणोऽयं हृदयादीनां संस्कारः प्रतीयते। संस्कारश्च यागशेषस्य दृश्यते, पुरोडाशं पर्यग्निकरोतीतिवत्। अवद्यतेर्यागसंबन्धित्वमवगम्यत इति चेत्। दूषयति—न वत्समाल-भेतेत्यनैकान्त्यात्। अयागशेषस्यापि वत्सस्य संस्कारदर्शनात्।

ननु चाप्रयोजनवतः संस्कारो न भवतीति युक्तैव कर्मकल्पना। दूषयति—वरं तृतीयार्थे षष्ठी न पुनः पुनः कर्मकल्पना। सर्वस्य भावार्थस्यापूर्वविषयत्वे प्रसक्तेऽपवादोऽयं संस्कारकर्मता नाम। तच्च द्रव्यचिकीर्षाहेतुकम्। तच्च द्रव्यं चिकीर्षितं भवति यस्य प्रमाणान्तरेणोपयोगो भूतो भावी वा प्रतीयते। यस्य पुनरसौ नावगम्यते न च तच्चिकीर्षितम्। तत्र भावार्थो नियोगविषय एवेतीतरत् तदर्थमिति न्यायात् तत्रैव पदान्तरसंबन्धः। अतोऽवद्यतिरेव

---

(1) G. अन्यदेयतत्

पालाशे बध्नाति रोहितके बध्नाति' इति। तत्र क्रमसमुच्चयदर्शने नोपपद्येयाताम्, अथ पुनरस्मिन् समुदायवचने, यजतौ सम्यगेतदवक्लृप्तं भवति ; तस्मात् समुदायानुवादौ।

एवं प्राप्ते ब्रूमः,—अपूर्वयोः कर्मणोर्विधानचोदने पशुसोमयोः। कुतः ?। सोमशब्दः क्षीरिण्यां लतायां प्रसिद्धो न रसे, आकृतिवचनो हि सोमशब्दो न व्यक्तिवचनः। तथा, शङ्गिणि

---

केयमनुपासितगुरोः स्वप्रतिभावतः षष्ठीकल्पना। भवन्तु संस्कारा अवद्यतिचोदनाः अग्नीषोमसंबन्धात्तु यावत्संस्कारं यागचोदनाः संपद्यन्ते। ततश्च प्रचयानुवादः आलभतिरिति सिद्धम्। ततश्च क्रमसमुच्चयदर्शनमुपपन्नार्थं भवति। नचानुवादे लक्षणादोषः।

---

नियोगविषयः। हृदयादयस्तु तन्निर्वर्तका इति न यागसंबन्धो हृदयादीनाम्। परमपूर्वपक्षवादी वदति—**केऽयमनुपासितगुरोः स्वप्रतिभातः तृतीयार्थे षष्ठीकल्पना। भवन्तु संस्कारा अवद्यतिचोदनाः। अग्नीषोमसंबन्धात्तु यावत्संस्कारं यागचोदनाः संपद्यन्ते।** अस्यार्थः—हृदयस्याग्रेऽवद्यतीति न यागचोदना। किन्तु अवदानलक्षणसंस्कारचोदनैषा। तेषां तु हृदयादीनां पशुशब्देन लक्षणया अनुवादं कृत्वा अग्नीषोमसंबन्धो विधीयते। [1]यावदुद्देशं च यावत्वाक्यसमाप्तिरिति। संस्कारं यागचोदना. संपद्यन्ते। तैश्चार्थप्राप्तहृदयाद्यालम्भः। **प्रचयानुवादोऽयमालभतिरिति सिद्धम्।** अवदीयमानानां हृदयादीनामर्थादेव स्पर्शलक्षणः आलंभः प्राप्तः। तत्समुदायानुवादोऽयमालभतिरग्नीषोमसंबन्धार्थः। कस्मात्पुनरेवं वर्ण्यते यावता द्रव्यदेवतासंयोगेन यागचोदनैवेयमस्तु न देवतामात्रचोदनेत्यत्राह—**तथा च क्रमसमुच्चयदर्शनमुपपन्नार्थं भवति।** ननु हृदयादीनां पशुशब्देनानुवादे लक्षणैव दोष इत्यत्राह—**न चाऽनुवादे लक्षणादोषः।** विज्ञाततात्पर्यं ह्यनुवादे वाक्यं भवतीति।

---

(1) G. यावदुद्देशश्च

पुच्छवति लोमशे चतुष्पदि द्रव्यविशेषे पशुशब्दमाकृतिवचन-मुपचरन्ति, न च, एवमाकृतिकद्रव्याः प्रकृता यागा विद्यन्ते। येषामिमौ समुदायस्यानुवदितारौ भवेयाताम्। ननु पशु-विकारो हृदयादिः पशुशब्देनाग्नीषोमसंबन्धार्थमनूद्यते। नैत-

---

अत्राभिधीयते। नैतच्छब्दादवगन्तुं शक्यते। सोमेन यजेतेति सोमलताविशिष्टो यजिर्गम्यते। रसद्रव्यकाश्च गृह्णातयः। (अर्थात्) अतो रूपान्तरावगमान्नानुवादः शक्यतेऽवगन्तुम्। अनुवादे सति लक्षणा ततश्चानुवाद इतीतरेतराश्रयः। कर्मान्तरे पुनः स्वतोऽर्थान्तरावगमा-न्न्याय्यम्। एवं(वै)पशावपि। पशुशब्दो हि पुच्छवति वर्तते। हृदयादयस्तु मांससंस्थानवचनाः। तस्मान्नानुवादः संभवति। क्रमसमुच्चयदर्शनं च ग्रहणादीनां कर्मान्तरत्वेऽपि नैव विरुद्धम्।

---

तत्र लक्षणाप्युपपन्ना। अत्राभिधीयते—नैतच्छब्दादवगन्तुं शक्यते अनुवादोऽयमिति। कुत इत्यत्राह—सोमेन यजेनेति सोमलताविशिष्टो यजिर्गम्यते। रसद्रव्य(देवता)काश्च गृह्णातयः। अतो रूपान्तरावगमान्नानुवादः शक्यतेऽवगन्तुम्। किन्तु यागविधिरेवाव-सीयते। अनुवादे हि लक्षणा, लक्षणातश्चानुवाद इतीतरेतराश्रयम्। कर्मान्तरत्वे पुनः स्वतोऽर्थान्तरावगमान्न्याय्यम्। गुणश्चापूर्वसंयोगेवाक्ययोः समत्वात् इति न्यायात्। एवं पशावपि नानुवादः। पशुशब्दो हि पुच्छवति वर्तते। पुच्छवत्त्वोपाधिकः पशुशब्दः। पुच्छश्च वालधिरभिमतः। हृदयादयस्तु मांससंस्थानवचनाः। तन्मात्रद्रव्यभेदान्नानुवादः संभवति। क्रमसमुच्चयदर्शनं च ग्रहणादीनां कर्मान्तरत्वेऽभ्युपगम्यमाने नैव विरुद्धम्। यदा हि ऐन्द्रवायवादिवाक्यैः देवताविधानं हृदयादिवाक्यैश्चावदानविधानं तदा विकल्प-प्रसङ्गः। कर्मान्तरत्वे तु न कश्चिद्दोषः। एतच्च गृह्णात्यवद्यत्योर्यागचोदनात्वमभ्युपगम्यो-

देवम्। पशुरग्नीषोमीयो भवति इत्येतावत् उच्यते, नायं प्रकृतो हृदयादिः पशुरिति। तत्र यदि, लौकिकस्य पशो-र्ग्रहणं ततो मुख्यः पशुशब्दः, यदि हृदयादेः, ततो जघन्यो

---

किन्तु सोमेन यजेत पशुमालभेत इति यदैते कर्मचोदने तदाऽवद्यति-गृह्णात्योः संस्कारकर्मतैवावसीयते। कस्मात्? तदा हि गृह्यमाण-प्रधानो गृह्णातिः[न] गृह्यमाणगुणा शक्यते कल्पयितुम्। नापि निर्वपतिवत् यागविधानार्थं प्राप्तानुवादः शक्यते वक्तुम्। ननु च द्रव्यदेवतासंबन्धात् न गृह्णातिमात्रपर्यवसायिनी चोदना शक्यते वक्तुम् सौर्यं चरुं निर्वपेदितिवत्। न च सोमेन यजेतेति देवता प्राप्ता याऽनूद्येत संस्कारं विधातुम्।

---

क्तम्। किन्तु सोमेन यजेत पशुमालभेत इति यदैते कर्मचोदने तदा अवद्यतिगृह्णात्योः संस्कारकर्मतैवावसीयते। कस्मात्? उत्तरं—तदा हि—गृह्यमाणप्रधानो गृह्णातिः [1]न गृह्यमाण[गुणा] शक्यते कल्पयितुम्। अस्यार्थः—सोममभिषुणोति सोमं प्लावयति सोममुत्पुनाति इति संस्कारानुसाराल्लता तावन्न साक्षाद्यागसाधनम्। किन्तु रसद्वारेणेति निर्णीयते। तत्र[2] च रसस्य ग्रहणं चोद्यमानं(भ)संस्कार[3]तयैवावतिष्ठते। रसस्य यागार्थ-त्वात्। न पुनः प्रधानकर्मतां प्रतिपद्यते। नापि निर्वपतिवत् यागविधानार्थं प्राप्तानु-वादः शक्यते वक्तुम्। ग्रहणस्यैव विधेयत्वसंभवात्। ननु च द्रव्यदेवतासंबन्धान्न गृह्णातिमात्रपर्यवसायिनी चोदना शक्यते वक्तुं सौर्यं चरुं निर्वपेदितिवत्। न च सोमेन यजेतेत्यत्र देवता प्राप्ता याऽनूद्येत संस्कारं विधातुम्। न च यागे या इन्द्रवा-य्वाद्या देवताः प्राप्तास्ता यथाप्राप्ता एवानूद्यन्ते [4]ग्रहणानि विधातुं यदैन्द्रवायवादिकं तद्गृह्णाति

---

(1) G. omits न (2) G. ननु च (3) G. संस्काराक्षमतयैव (4) G. ग्रहणादि

विकारसम्बन्धेन ; तथा, सोमशब्दोऽपि विकारसम्बन्धेनानुवादः स्यात्। तस्मात् अपूर्वे कर्मणी विधीयेयाताम् नानुवादौ। अथ ऐन्द्रवायवादिषु प्रकृतेषु यागेषु लता विधीयेत इति। उच्यते, न सा शक्या वाक्येन ऐन्द्रवायवी ज्ञातुम्, श्रुत्या हि रस ऐन्द्रवायवः। तस्मात् द्रव्यसंयोगवचनः प्रकृतेषु यागेष्वपि सत्सु विधातुमनुवदितुम् वा न शक्नुवन्ननर्थकः स्यात्। तस्मात् अपूर्वकर्मणी विधीयेयातां, न प्रकृतानामनुवादौ इति ॥

अचोदकाश्च संस्काराः ॥ १८ ॥

एवं तावत्, प्रकृतेषु सत्स्वपि नानुवादौ इत्युक्तम्, अथेदानीं, प्रकृता एव यागा न सन्ति इत्युच्यते। कुतः? अचोदकाः संस्काराः। न च ऐन्द्रवायवादिभिर्यागा विधीयन्ते, तेन ग्रहणमुपकल्पनमात्रम् दृष्टार्थम्, उपकल्प्यमाने तु देवता-

---

न च संस्कारे देवता कारकभावं प्रतिपद्यते यागस्यैव हि कारकं देवता न ग्रहणादेः। अतोऽप्राप्तद्रव्यदेवतासंयोगात् कर्मान्तराण्येवैतानि। न सोमेन यजेतेत्यत्र संस्कार इति शक्यते वक्तुं सौर्यं चरुं निर्वपेदितिवत्।

---

इति देवताया एवाप्राप्तत्वात्। न च संस्कारे देवता कारकभावं प्रतिपद्यते येन ग्रहणे एव देवता स्वयं यायात्। यागस्यैव हि कारकं न गृह्णातेः अतः अप्राप्तद्रव्यदेवतासंयोगात् कर्मान्तराण्येवैतानि न सोमेन यजेतेत्यत्र संस्कार इति शक्यते वक्तुम्। यदा च कर्मान्तराण्येवैतानि तदा सोमेन यजेनेति देवताविरहात् बलात् समुदायानुवाद इति मन्यते

सङ्कीर्तनमदृष्टाय ; अतः, 'ऐन्द्रवायवं गृह्णाति' इति इन्द्र-वायुभ्यां सङ्कल्पयति इत्येतावदुक्तं भवति, तत्र यागमन्तरेण सङ्कल्पयतीत्येतन्न युज्यते इति यागः कल्प्येत, स एवाम्नातो यागः, यस्मिन् सति सङ्कल्पोऽवकल्प्येत। तस्मान्न 'ऐन्द्रवायवं गृह्णाति' इत्येवमादिभिर्यागा विधीयेरन्, प्रकृतानां यागा-नामभावान्न समुदायशब्दो यजतिः, तथाऽऽलभतिशब्दः इति ॥

---

अत्राभिधीयते–कुतश्चिदुपादानं ग्रहणमित्युच्यते। उपादानञ्चात्मार्थं वा स्यात् परार्थं वा। तत्र देवताश्रवणात देवतार्थमिति गम्यते। ननु न जातितः काचित् देवता नाम विद्यते। या हि यस्य हविषः संब-न्धित्वेन चोद्यते सा तस्य देवतेति। न च सोमरसस्येन्द्रवाय्वादयः प्राप्ताः येन तदर्थमुपादानमित्यवधार्यते। अथात्रैव रसस्य देवता चोद्यते न तर्हि ग्रहणचोदना किन्तु देवताविधिपरमेवैतद्वाक्यं स्यात्। तदा च क्रमसमुच्चयदर्शनं नोपपद्यते। गृह्णातिश्च प्रमादपाठः क्रियानुवादो वा स्यात्।

---

अत्राभिधीयते—कुतश्चिदुपादानं ग्रहणमित्युच्यते। उपादानं च आत्मार्थं परार्थं वा स्यात्। तत्र देवताश्रवणात् देवतार्थमिति गम्यते तेनेन्द्रवाय्वाद्यर्थं ग्रहणमिति ग्रहणेपि इन्द्रवाय्वादीनां संबन्धो न विरुध्यते। ननु न जातितः काचित् देवता नाम विद्यते। याहि यस्य हविषः संबन्धित्वेन चोद्यते सा तस्य देवता, न च सोमरसस्य इन्द्रवाय्वाद्या देवताः प्राप्ता येन तदर्थमिदमुपादानमित्यवधार्यते। अथात्रैव रसस्य देवता चोद्यते न तर्हि ग्रहण चोदना, किन्तु देवताविधिपरमेवैतद्वाक्यं स्यात् तदा च क्रमसमुच्चयदर्शनं नोपपद्यते गृह्णातीति च प्रमादपाठः क्रियानुवादो वा स्यात्। सर्वथा न विधेयार्थः।

तस्मात् देवताविशिष्टं ग्रहणं चोद्यत इति दुर्भणमिदम्। न ब्रूमो देवताविशिष्टं ग्रहणं चोद्यत इति। किं तर्हि? इन्द्रवायूद्देशविशिष्टं ग्रहणं रसस्य। ततः किम्? इदं ततो भवति। यागशेषत्वाद्द्रव्यस्य इन्द्रवाय्वर्थत्वाच्च ग्रहणस्य गृह्यमाणमुखं च तादर्थ्यं ग्रहणस्य। अत इन्द्रवाय्वर्थो रस इति गम्यते। नेन्द्रवायू रसार्थौ यावद्ग्रहणं च तादर्थ्यं न यावद्याग—भावि। अत एव च न यागे चोदना ग्रहणेषु देवतात्वं च यागार्थरसतादर्थ्यात्। न पुनः चोदनातः नात्रेन्द्रवाय्वादयो

---

तस्मात् देवताविशिष्टग्रहणं चोद्यत इति दुर्भणमिदम्। अत्रोच्यते--न ब्रूमो देवता विशिष्टं ग्रहणं चोद्यत इति। किं तर्हि? [1]इन्द्रवायूद्देशविशिष्टग्रहणं रसस्य। न देवताभावेन ग्रहणे इन्द्रवाय्वादीनां संबन्धः किन्तु तानुद्दिश्य रसस्य ग्रहणं कर्तव्यमित्येतावन्मात्रं विधीयते। ततः किं? उत्तरं— इदं ततो भवति यागशेषत्वाद्रसस्य इन्द्रवाय्वर्थत्वात् ग्रहणस्य गृह्यमाणमुखं च ग्रहणस्य तादर्थ्यम्। अतः इन्द्रवाय्वर्थो रस इति गम्यते, नेन्द्रवायू रसार्थौ। अस्यार्थः—सोमरसस्तावद्यागार्थः तस्य च ग्रहणं तदिन्द्रवाय्वर्थम् ग्रहणं च गृह्यमाणप्रधानम्। तस्य च यदैदमर्थ्यं तदपि गृह्यमाणद्वारेण उपनयनवत्। तेनेन्द्रवाय्वर्थता रसस्य गम्यते। यावद्ग्रहणं च तादर्थ्यं न यावद्यागभावि ग्रहमात्रपर्यन्तमेव रसस्य तादर्थ्येन यावद्यागकल्पनापर्यन्तं साक्षाच्छ्रुतयागानुप्रवेशेनैव इन्द्रवाय्वादीनां ग्रहणस्य गृह्यमाणस्य च तादर्थ्यसंपत्तेः। इन्द्रवाय्वादीनां हि सोमयागं प्रति देवतात्वे रसस्य यागार्थता इन्द्रवाय्वर्थता च ग्रहणस्य निर्वहति यस्मान्न यागपर्यन्तमिदमैदमर्थ्यमस्मिन् वाक्ये। अत एव न यागे चोदना ग्रहणेषु देवतात्वं च यागार्थ—रसतादर्थ्यात्। इन्द्रवाय्वर्थत्वात्। न पुनश्चोदनातो देवतात्वं यस्मान्नात्रेन्द्रवाय्वादयो

---

(1) G. इन्द्रवायुदेवता

तद्भेदात्कर्मणोऽभ्यासो द्रव्यपृथक्त्वादनर्थकं हि स्याद्भेदो द्रव्यगुणीभावात् ॥ १९ ॥

**पशौ वृत्ता कथा दशमे पुनरुद्भविष्यति, सोम इदानीं वर्तते। कथं क्रमसमुच्चयौ ? इति। इन्द्रवाय्वाद्या देवता नैवं श्रूयन्ते, इन्द्रवायुभ्यां यागो निर्वर्तयितव्यः, मित्रावरुणाभ्यां यागो निर्वर्तयितव्यः इति, यद्येवमश्रोष्यन्त, यागं प्रति देवता व्यकल्पिष्यन्त, केवलया हि देवतया तदा यागो निर्वर्त्यते— इति विहितमभविष्यत्। अथ पुनरिमाः अदृष्टार्थं गृह्णाति-**

---

देवतात्वेन चोद्यन्ते। अतः कार्यतस्तत्र देवतात्वं नोपदेशतः। उपदेशो हि ग्रहणस्येन्द्रवाय्वर्थतापर्यवसाय्येव। तस्मादुपपन्नाः संस्कारचोदनाग्रहणादयः।

तद्भेदात् कर्मणोऽभ्यासः। एवं च कृत्वा क्रमसमुच्चयोपपत्तिः। उक्तं च यावद्ग्रहणभावीन्द्रवाय्वादीनां संबन्धो न यावद्यागभावीति।

---

देवतात्वेन चोद्यन्ते। अतः कार्यतः तत्र देवतात्वं नोपदेशतः रसस्य यागसिद्धिः कार्यं, ग्रहणस्य च ग्राह्योपकल्पनं कार्यं, तदेतत् कथं घटते यदीन्द्रवाय्वादयो देवता भवन्तीति कार्यतो देवतात्वं नोपदेशतः। (उपदेशतः) उपदेशो हि ग्रहणस्येन्द्रवाय्वर्थतापर्यवसाय्येव। तस्मादुपपन्ना रससंस्कारचोदनाग्रहणादयः।

तद्भेदात् कर्मणोऽभ्यासः। एवं च कृत्वा क्रमसमुच्चयोपपत्तिः। यदीन्द्रवाय्वादयो यागा एवोपदिश्येरन ततो विकल्प्येरन्। न चैषामुपदेश इत्युक्तं, तथापि किमित्याह —उक्तं हि यावद्ग्रहणभावी इन्द्रवायुसंबन्धः न यावद्यागभावीति। तेन कार्यतो देवता-

संस्कारं प्रति देवता विधीयन्ते, तत्र इन्द्रवायुसङ्कल्पादन्यो मित्रावरुणसङ्कल्पः, तेन गृह्यतौ तत्कृतादहष्टादहष्टान्तरमुत्पादयति, एवमपरेष्वपि ग्रहणेषु, तस्मात् समुच्चयः। ग्रहणन्तु नियतपरिमाणेषूर्ध्वपात्रेषु प्रादेशमात्रेषु नियतपरिमाणेषूदककलशेषु संस्कृतस्य दशमुष्टिपरिमितस्य कृत्स्नस्य सोमस्य नावकल्पते; यद्यपि च अवकल्पेत, तथापि नित्यवद्विहितानां देवतानां विकल्पपक्षे तावत्प्रयोगवचनो मा बाधि इति अव-

---

यागशेषश्चासौ सकलो दशमुष्टिप्रभवो रसः। अतोऽयागार्थत्वादिन्द्रवाय्वोः सकलस्य च सोमरसस्य यागार्थत्वात यावद्ग्रहणभावित्वाच्च संबन्धस्य इन्द्रवाय्वादेरवश्यमावृत्त्या भवितव्यम्। सत्यां चावृत्तौ सिद्धः समुच्चयः। न च सर्वस्यैव सोमरसस्य अन्यस्यान्यस्य चोद्देशेन ग्रहणं भवति। तस्मादवयवशो ग्रहणम्। तथा च पात्रपरिमाणदर्शनम्।

---

त्वम्। ननु यदि कार्यतो देवतात्वं तथापि किमिति विकल्पो न स्यात इत्यत्राह—यागशेषश्चासौ सकलो दशमुष्टिप्रभवो रसः। अतः उपदेशेनेन्द्रवाय्वोरयागार्थत्वात् सकलस्य सोमरसस्य यागार्थत्वात् यावद्ग्रहणभावित्वाच्च संबन्धस्येन्द्रवाय्वोरवश्यमावृत्त्या भवितव्यम्। अन्यार्थं सकलस्य सोमरसस्य यागशेषत्वेन संस्कारार्हत्वात् तस्य च प्रचुरत्वात देवतोद्देशविशिष्टानि ग्रहणानि तावत् समुच्चेतव्यानि तेषां च समुच्चये सति यद्यदुद्देशेन गृहीतं तत्तस्या एव देवतायै उत्स्रष्टव्यमित्यर्थात यागस्यावृत्त्या भवितव्यम्। सत्यां चावृत्तौ सिद्धः समुच्चयः। न च सर्वस्यैव सोमरसस्य अन्यस्यान्यस्य चोद्देशेन [1]ग्रहणं भवति सङ्कल्पभेदात्। तस्मादवयवशो ग्रहणम्। तथा च पात्रपरिमाणदर्शनम्। अन्यथा कृत्स्नरसग्रहणयोग्य

---

(1) G. adds ततस्यैदेवतायै

यवग्रहणमेव न्याय्यम्, कृत्स्नग्रहणे हि तदेव इन्द्रवायुभ्यां सङ्कल्पितं, तदेव मित्रावरुणाभ्यमिति नावकल्पेत। तस्मात कल्पनभेदात् पृथगवस्थितः सोमो नानादेवतत्वादेव नैक्येन शक्यः कर्तुम्। न चासति देवतायागे देवताभ्यः शक्यते सङ्कल्पयितुम्; तस्मादवश्यम् यथासङ्कल्पिता देवता यष्टव्याः, तासु चेज्यमानासु 'ज्योतिष्टोमेन यजेत' इति श्रुतो यागो निर्वृत्त एव भवति, न देवतान्तरमाकाङ्क्षति, कृत्स्नेन च दशमुष्टिना सोमेन यागः श्रुतः, सोऽसति अभ्यासे नावकल्पते—इति अर्थात्

---

न च विभागेन ग्रहणं पुनरेकी करणम्। न च दृष्टे संभवति अदृष्टार्थता उद्देशस्य संभवति। अदृष्टार्थस्य वा ग्रहणादेः(गृह्णातेः)दृष्टार्थता तस्मादवयवानामेव देवतोद्देशेन त्यागः। न चैतावता कर्मभेदो भवति। सोमेन यजेतेत्यभिन्नावगतेः। तस्मात् स एव पुनः पुनरावर्तेत इति सिद्धम्।

---

महत्पात्रं स्यात्। न च विभागेन गृहीतस्य रसस्य पुनरेकीकरणम्। कुतः इत्याह—न च दृष्टे संभवति अदृष्टार्थता उद्देश्यस्य संभवति। यदि हि यत् यदुद्देशेन गृह्यते तत् तदुद्देशेनैव त्यज्यते तदा ग्रहणस्य पृथक्कल्पनस्य दृष्टार्थता भवति। अन्यथा त्वेकीकरणे अदृष्टार्थता। सा तु न संभवति। अदृष्टार्थस्य वा गृह्णातेः दृष्टार्थता देवतोद्देशेन विशिष्टस्य गृह्णातेः दृष्टं प्रयोजनं नास्ति। तस्माददृष्टार्थदेवतोद्देशं परित्यज्य केवलेन दृष्टार्थता न युक्ता श्रुतहानिप्रसङ्गात्। तस्मादवयवानामेव देवतोद्देशविशेषेण गृहीतानां यथा देवतोद्देशेन;त्यागः। न चैतावता पुनः पुनः करणेन कर्मभेदः भवति भेदकप्रमाणाभावात्। कथं भेदे प्रमाणं नास्तीत्यत्राह—सोमेन यजेतेत्यभिन्नावगतेः। तस्मात् स एवायं पुनः पुनरावर्तेत इति सिद्धम्।

स गुणो भविष्यति इति अभ्यसितव्यो यागः, न हि अनभ्यस्तः सर्वाभिर्देवताभिः सर्वेण च सोमेण सम्पन्नो भविष्यति। तस्मिंश्चाभ्यस्यमाने क्रमसमुच्चयौ युक्तावेव भवतः, तस्मात्तयोर्दर्शनं युज्यते एव इति ॥

संस्कारस्तु न भिद्येत, परार्थत्वात् द्रव्यस्य गुणभूतत्वात् ॥ २० ॥

यदप्युच्यते,—यथा यथा 'खादिरे बध्नाति, पालाशे बध्नाति' इति खादिरादयः संस्कारे विकल्पन्ते, तद्वद्देवता विकल्पयिष्यन्ते इति, तच्च नैवं युक्तं, तत्र संस्कारमभिनिर्वर्तयितुम् खादिरादयः श्रूयन्ते; यदि च इन्द्रवाय्वाद्या अपि ग्रहदेवता यागमभिनिर्वर्तयितुम् श्रूयेरन्, ततोऽत्रापि विकल्पः स्यात्, न त्वेता यागे श्रुताः; तस्मात् समुच्चीयेरन् ॥

---

संस्कारस्तु न भिद्येत। खदिरादिषु पुनः संस्कारशेषभावावगमात् युक्तो विकल्पः।

[1]अथैन्द्रवायवादिषु प्रकृतेषु यागेषु लता विधीयत इत्युच्यते, न सा शक्या वाक्येनैन्द्रवायवी विज्ञातुम् श्रुत्या हि रसः ऐन्द्रवायव इति।

---

संस्कारस्तु न भिद्येत ॥ खदिरादिषु पुनः संस्कारं बन्धनं प्रति शेषभावावगमात् युक्तो विकल्पः। इह पुनः यागं प्रति शेषभावो देवतानामुपदेशतो नावगम्यत इति दर्शितो विशेषः।

भाष्यमनुभाषते—अथैन्द्रवायवादिषु प्रकृतेषु लता विधीयते इत्युच्येत न सा शक्या वाक्येन ऐन्द्रवायवी विज्ञातुं श्रुत्या हि रस ऐन्द्रवायव इति। आक्षिपति

(1) Page 473.

ननु चेदमयुक्तम्। प्रकृतिद्रव्यतया हि लताविधानमनिरस्तं स्यात्। रसकार्यविधानं चासंभवदेवाशङ्कितम्। तस्मात् व्रीहिभिर्यजेतेतिवत् द्रव्यप्रकृतिद्रव्यतया लताविधानमुपपद्यत एव सोमेन यजेतेति।

किं नाम नाशङ्क्यते मूढमतिभिः पुरोडाशो ह्यनिरूपितप्रकृतिद्रव्यक आग्नेयादिषु प्रतीयते।

---

—ननु चेदमयुक्तं प्रकृतिद्रव्यतया हि लताविधानमनिरस्तं स्यात्। रसकार्यविधानं चासंभवदेव शङ्कितम्। अस्यार्थः—'न सा शक्या वाक्येनैन्द्रवायवी विज्ञातुं श्रुत्या हि रस ऐन्द्रवायव' इति परिहारदर्शनात् रसकार्य एव लताविधानं 'अथैन्द्रवायवादिषु' इत्यनेनाशङ्कितमिव प्रतिभाति। अन्यथा प्रकृतिद्रव्यतया लताविधाने चोदिते श्रुतिवाक्यविशेषेण परिहारो नोपपद्यते। श्रुतिसंबन्धेऽपि (न) पुरोडाशे वाक्योपनेयप्रकृतिद्रव्यभूतव्रीह्यादि(विधान) वाक्यश्रवणात्। तच्चेदमयुक्तम्। प्रकृतिद्रव्यविधानाशङ्काया अनिराकृतत्वात्। असंभविनश्च रसकार्यविधानस्य आशङ्कितत्वात्। न हि श्रुतिसमर्पिते रसे हविषि संभवति वाक्येन लतायाः हविष्ट्वेन विधानं युक्तं शङ्कितुम्। तस्मात् व्रीहिभिर्यजेतेतिवत् रसप्रकृतिद्रव्यतया लताविधानमुपपद्यत एव सोमेन यजेतेति। तदाहुर्वार्तिककारपादाः—

> यथैवाष्टाकपालादौ श्रौते हि सति वाक्यतः।
> व्रीह्यादयो विधीयन्ते तथा सोमो विधास्यते॥

विरुध्यमानं हि दुर्बलं बाध्यते। नानुगुणम्। अनुगुणश्च सोमः रसस्य प्रकृत्यपेक्षिणः तादर्थ्येन संबन्धात्। तद्यथा 'आग्नेयोऽष्टाकपाल' इति श्रुतिविहितेप्यष्टाकपाले सति वाक्येन व्रीहियवौ विधीयमानौ न विरुध्येते। पुरोडाशापेक्षितप्रकृतिरूपत्वान्न व्रीहीन् गृह्णन् अष्टाकपालं न करोति तेन नात्र कर्मान्तरता। तथाऽत्र सोमे गृह्यमाणे न रसं परित्यक्ष्यत इत्यविरोधात् पूर्वत्रैव संभवान्न गुणो भेदकः स्यादिति। समाधत्ते—उच्यते। **किन्नाम नाशङ्क्यते मूढमतिभिः, पुरोडाशो ह्यनिरूपितप्रकृतिद्रव्यतया आग्नेयादिषु प्रतीयते**

तेन युक्तं तत्र प्रकृतिविशेषविधानम् । इह पुनरैन्द्रवायवादिषु सोमरस एवावसीयते । किमत्र प्रकृतिद्रव्यविधानं करिष्यति । तस्मादनाशङ्कनीय एवायं पक्षः । हविर्विशेषशङ्का नोपपद्यत एवेति निरस्ता भाष्यकारेण ।

---

तेनयुक्तं तत्र प्रकृतिविशेषविधानम् । इह पुनरैन्द्रवायवादिषु सोमरस एवावसीयते । किमत्र प्रकृतिद्रव्यविधानं करिष्यति । तस्मादनाशङ्कनीय एवायं पक्षः । अस्यार्थः—नात्र व्रीहिमुद्रामुद्रितत्वं संभवति । तत्राग्नेयोऽष्टाकपाल इत्येतस्मिन् वाक्ये अष्टाकपालद्रव्यं अनिरूपितप्रकृतिद्रव्यकं प्रतीयत इति युक्तं तत्र प्रकृतिद्रव्यविधानम् । इह पुनरैन्द्रवायवं गृह्णातीति निरूपितप्रकृतिद्रव्यं श्रुत्या समर्पितम् । तथा हि—यदि तावत् यावच्छ्रुतिमात्रमेव गृहीत्वा प्रकृतिद्रव्यविधानमाशङ्क्येत तदनुपपन्नम् । विकारद्रव्यस्याश्रुतत्वात् कस्य प्रकृतिद्रव्यमाकाङ्क्ष्यते । अथ किं तदैन्द्रवायवं ? इत्यपेक्षायां अपर्यवसिते वाक्ये प्रकृतद्रव्यसंबन्धे सति प्रकृतिविधानं, तदप्ययुक्तम् सोमं क्रीणाति सोममभिषुणोति सोममभिप्लावयति सोममुत्पुनाति इति प्रकृतपर्यालोचनया सोमरसस्य संबन्धावगमात् रसमात्रस्य प्रकृत्यपेक्षा नास्ति । न हि सोमरसः किंप्रकृतिक इत्यपेक्षाऽवकल्पते । अथोच्येत अण्व्या धारया गृह्णाति' इति ग्रहणगुणसमर्पणपरे वाक्ये धारायोग्यद्रव्यमात्रावगमात् प्रकृतिद्रव्यतया सोमविधानमवकल्पत इति । तदनुपपन्नम् । अस्यापि वाक्यस्य ग्राह्यापेक्षित्वात् यावच्च धारायोग्यं द्रव्यं गृह्णीयादिति कल्प्यते तावत प्रकृतः सोमरस एवास्ति इति स एवात्र ग्राह्यतया संबध्यते । तेन प्रकरणापेक्षित्वे च द्रव्यविधानाशङ्का नोपपद्यते । तन्निरपेक्षहविर्मात्रपरिग्रहेण हविर्विशेषविधानाशङ्का नोपपद्यत इति निरस्तं भाष्यकारेण । ननु चैन्द्रवायवादिवाक्यभेदेन हविर्द्रव्यविशेषसमर्पणात यावच्च प्रकरणमपेक्षते तावद्वाक्ये सति किमिति हविष्ट्वेन सोमविधानं नावकल्पते । उच्यते । नेदमुपपद्यते सोमेन यजेतेति विहितयागानुवादेन द्रव्यविधानम् । न हि साक्षाच्छ्रुतो यागोऽस्ति किन्तु ऐन्द्रवायवादिवाक्यगतद्रव्यदेवतासंबन्धानुपपत्त्या यागः कल्पनीयः । न च तत्र प्रकरणमनपेक्ष्य द्रव्यदेवतासंबन्धावगतिः[1] ।

---

(1) G. संबन्धोभवति

सङ्ख्याकृतकर्मभेदाधिकरणम् ॥

## पृथक्त्वनिवेशात् सङ्ख्यया कर्मभेदः स्यात् ॥ २१ ॥

**अस्ति वाजपेयः, 'वाजपेयेन स्वाराज्यकामो यजेत' इति, तत्र प्राजापत्याः पशवः, 'सप्तदश प्राजापत्यान् पशूनालभते, सप्तदशो वै प्रजापतिः, प्रजापतेराप्त्यै श्यामास्तूपरा एकरूपा**

---

**पृथक्त्वनिवेशित्वात् सङ्ख्यया कर्मभेदः स्यात् ।** प्राजापत्यानिति प्राजापत्यप्रातिपदिकात् विभक्तय उत्पद्यन्ते । यतश्चोत्पद्यन्ते तद्युक्तं स्वार्थमभिवदन्ति । तद्धितान्तं चैतत् प्रातिपदिकम् । ततः तद्धितान्तस्यैव इदं बहुत्वं न केवलस्य तद्धितार्थस्य । अतः संशय

---

तेन यागाभिव्यक्त्यर्थं प्रकरणं चापेक्षणीयं वाक्येनेति प्रकरणाद्दुर्बलमत्र वाक्यम् । न च [1]सोमाख्यद्रव्यसंबन्धेनैवेन्द्रवाय्वादियागाभिव्यक्तिः इतरेतराश्रयत्वप्रसङ्गात् । तस्मात् प्राकरणिकं सोममेवाश्रित्य तद्धितश्रुतिः ऐन्द्रवायवादिषु वर्णनीया । ततश्च श्रौतः सोमरसः न तत्र वाक्येन लताविधानमवकल्पते ।

**पृथक्त्वनिवेशित्वात् । प्राजापत्यान् इति प्राजापत्यप्रातिपदिकाद्विभक्तय उत्पद्यन्ते ।** अत्र च "प्राजापत्या भवन्ति" "प्राजापत्यानालभन्ते" "प्राजापत्यैः कुर्यात्" इत्येवमादय उदाहरणमिति मत्वा **उक्तं विभक्तय इति ।** प्राजापत्यान् इति इतिशब्दः प्रदर्शनार्थः प्राजापत्यानित्येवमादिष्वित्यर्थः । **यतश्च विभक्तय उत्पद्यन्ते तद्युक्तं** तदीयार्थेन युक्तं **स्वार्थमभिवदन्ति । तद्धितान्तं चैतत्प्रातिपदिकम् । ततः तद्धितान्तस्यैवेदं बहुत्वं,** तद्धितान्तस्यैव योऽर्थः प्रजापतिदेवत्यो नाम तस्यैवेदं बहुत्वम् **केवलस्य** देवतासंबन्धविरहिणो द्रव्यमात्रस्य बहुत्वं न भवति तस्मात्पूर्वपक्षवचनव्यक्त्यसंभवात् **संशय**

---

(1) G. सोमवाक्येनैन्द्रवायवादिषु

भवन्ति, एवमेव हि प्रजापतिः समृद्ध्यै'। तत्र सन्दिह्यते, किं सप्तदशैतानि कर्माणि, अथ सप्तदशपशुगुणकमेकं कर्म? इति।

---

एवात्र नोपपद्यते। प्राजापत्याः सप्तदशेत्येवावगम्यते न पुनः सप्तदशप्राजापत्या इति। अतो विकल्पविलसित एवात्र पूर्वः पक्षः।

उच्यते। प्रत्ययार्थगतमेवात्र विभक्तयः स्वार्थं प्रतिपादयितुं क्षमाः न प्रकृत्यर्थगतं, कुतः? प्रकृत्यर्थस्य प्रत्ययार्थोपसर्जनत्वात्। प्रधानं हि अर्थान्तरेण संबध्यते, नोपसर्जनम्। ननु चैवमपि सन्देहो नोपपद्यते। उपसर्जनार्थस्य भेदानवगमात्।

---

**एवात्र नोपपद्यते** यस्मात् **प्राजापत्याः सप्तदशेत्येवावगम्यते** प्राजापत्यानां सतां सप्तदशसङ्ख्येत्यवगम्यते **न पुनः सप्तदशप्राजापत्या** इत्यवगम्यते। ये सप्तदश पशवः तेषां प्रजापतिसंबन्धो नावगम्यते इत्यर्थः। यदि तथावगम्यते तदा सप्तदशानां पशूनां प्रजापतिसंबन्धात् सप्तदश पशुद्रव्यक एको यागः स्यात्। प्राजापत्यानां तु सतां सप्तदशत्वे बहवो द्रव्यदेवतासंबन्धाः इति यागा अपि तदुपपादका बहव एवावगम्यन्ते। **अतो विकल्पविलसित एवात्र पूर्वः पक्षः।**

समाधत्ते—**उच्यते। प्रत्ययार्थगतमेवात्र विभक्तयः स्वार्थं प्रतिपादयितुं क्षमाः न प्रकृत्यर्थगतम्।** कुतः? उत्तरं—**प्रकृत्यर्थस्य प्रत्ययार्थोपसर्जनत्वात्।** प्रत्ययार्थं प्रति प्रकृत्यर्थः उपसर्जनम् प्रत्ययार्थः प्रधानम्। तथापि किमित्याह—**प्रधानं ह्यर्थान्तरेण संबध्यते। नोपसर्जनम्।** तेन प्रत्ययार्थभूतप्रधानद्रव्यमात्रेणैव बहुत्वस्य संबन्धः अतः सप्तदशप्राजापत्यान् इति संबन्धः। तेनास्ति पूर्वपक्षवचनव्यक्तिः। **ननु चैवमपि** सिद्धान्तवचनव्यक्त्यसंभवात् **सन्देहो नोपपद्यते। उपसर्जनार्थस्य भेदानवगमात्।** यदि हि तद्गतं बहुत्वं स्यात् तदा बहुत्वस्य भेदमन्तरेणासंभवात् उपसर्जनार्थो भिद्यते, न चैतदस्ति।

किं तावत् प्राप्तम्? एकं कर्मेति। कुतः? प्रजापतये सप्तदश पशवः सङ्कल्प्यन्ते किमेकं यागमभिनिर्वर्तयितुम् उत बहून्? इति संशये एकमिति न्याय्यम्, यो हि बहून् यागान् कल्पयति, कल्पयत्यसावेकं, तत्रैकस्मिन्नेव परिक्लृप्ते सप्तदशानामेव पशूनां परिकल्पनमुपपन्नं भवति, केन च

---

सत्यमेवमेतत्। प्रधानार्थ एवात्र किं भिन्नः सन् उपसर्जनेन युक्तः उत सोपसर्जनो भिन्न इति। एवं संशये सति पूर्वपक्षवादी मन्यते भिन्नस्योपसर्जनयोगो युक्तः प्रकृत्यर्थस्य भेदावगमे प्रमाणाभावात्। बहुत्वावगमपूर्विका ह्येकशेषकल्पना। अतः प्रत्ययार्थस्यैवैकशेषो भवतु। तद्भेदावगमात्। न पुनरभिन्नस्यापि प्रकृत्यर्थस्य। तस्मादुभयसिद्धमेकयागावधारणमेव युक्तम्। तदिदमुक्तम्—यो हि बहून् यागान् कल्पयति कल्पयत्यसावेकमिति। कथं पुनरस्मिन् पक्षे अनेकस्मादेकादशावदानसिद्धिः?

---

समाधत्ते—सत्यमेवमेतत् प्रधानार्थ एवात्र किं भिन्नः सन् उपसर्जनेन युक्तः उत सोपसर्जनो भिन्न इति। एवं संशये सति पूर्वपक्षवादी मन्यते। भिन्नस्योपसर्जनेन योगो युक्तः प्रकृत्यर्थस्य भेदावगमे प्रमाणाभावात्। कुत इत्याह—बहुत्वावगमपूर्विका हि एकशेषकल्पना। बहुत्वं च प्रधानस्य प्रत्ययार्थस्यैव युक्तम्। अतः प्रत्ययार्थस्यैवैकशेषो भवतु। तद्भेदावगमात्। न पुनरभिन्नस्यापि प्रकृत्यर्थस्य। साभ्युच्चयमुपसंहारमाह—तस्मादुभयसिद्धमेकयागावधारणमेव युक्तम्। तदिदं उभयसिद्धत्वमुक्तं यो हि बहून् कल्पयति कल्पयत्यसावेकमिति। कथं पुनरस्मिन् पक्षेऽनेकस्मादेकादशावदानसिद्धिः? अस्यार्थः—यदैको यागः तदैकं करणम् एकस्मिंश्च करणे एक एव करणोपकारः तत्सिद्ध्यर्थं चैकैव पदार्थप्राप्तिः। अतः एक एवावदानगणः। स चैकस्मादेव पशोरेवोच्यते

द्वितीयादीन् यागान् अवकल्पयेम। एवं सति अल्पीयसी अदृष्टानुमानप्रसङ्गकल्पना भवति; तस्मादेको यागः सप्तदशभिः पशुभिर्निर्वर्तयितव्य इति।

एवं प्राप्ते ब्रूमः, सङ्ख्यया कर्मभेदो भवेत्, पृथक्त्वे पशूनां सति सप्तदशसङ्ख्या निविशेत, तच्च पशूनां पृथक्त्वं बहुषु यागेष्ववकल्पते, नैकस्मिन्। कथम्? एकादशभिरवदानैरसौ यागो निर्वर्तयितव्यः इत्येवं चोदकः प्रतिदिशति, तानि चैकस्मादेव पशोरवाप्यन्ते, तत्र द्वितीयादेरालम्भो नावदानसम्पादनाय

---

अर्थादावृत्तिर्भविष्यति। ग्रहणभेदाज्ज्योतिष्टोमस्येव। अत्रोच्यते। न सप्तदशभिरेकं कर्मोपपद्यते। कुतः? एकादशभिरवदानैः पशुयागः सिद्ध्यति। स चैकादशावदानगणः एकस्मादेव पशोः सिद्ध्यतीति न पश्वन्तरं देवतया संबन्धयितुं शक्यते। ततश्च प्राजापत्यानिति बहुत्वानुपपत्तिः।

---

इतीतरेषामवदानाभावः अवदानद्वारेण[हि] यागसाधनत्वम्। तेन यागसाधनता न स्यात् उत्तरं—अर्थादावृत्तिर्भविष्यति ग्रहणभेदात् ज्योतिष्टोमस्येव। इतरेषामपि पशूनां यागसाधनतासिद्ध्यर्थं यागस्यावृत्तिर्भविष्यति ग्रहणभेदाज्ज्योतिष्टोमस्येव। एकदेशी वदति —अत्रोच्यते न सप्तदशपशुभिरेकं कर्मोपपद्यते। कुतः? उत्तरं—एकादशभिरवदानैः पशुयागः सिद्ध्यति। स चैकादशावदानगणः एकस्मादेव पशोस्सिद्ध्यतीति न पश्वन्तरं देवतया संबन्धयितुं शक्यते तदीयस्यावदानस्य देवतोद्देशेन त्यागाभावात्। अतश्च प्राजापत्या[1]निति बहुत्वानुपपत्तिः। एकस्यैव प्राजापत्यत्वात् यागभेदे त्वेकैकयागस्य एकैकपशुत्वात् प्रतियागं च करणभावात् प्रतिकरणमितिकर्तव्यताप्राप्तेः प्रतिपशु अवदानयो-

(1) G. पत्यैरिति

भवितुमर्हति, एकमालभ्यमानमन्वालभ्येरन्नदृष्टार्थायापरे, तथा-सत्यतदर्थत्वान्न ते प्राजापत्या भवेयुः, तत्र प्राजापत्यान् इति श्रवणमुपरुध्येत। तेनैकस्मिन् पशौ पृथक्त्वनिवेशिनी सप्तदश-

---

ननु चोक्तं प्रतिपश्ववदानगणस्य आवृत्तिः सप्तदशानां याग-संबन्धार्थं गृह्णातीनामिव ज्योतिष्टोमस्य। युक्तम् ज्योतिष्टोमे गृह्णातीना-मुपदेशात्। अत्र पुनः कार्यतोऽवदानगणः प्राप्नोति। स च यागस्य सप्तदशपशुद्रव्यकोऽयमेको यागः। यागसंबन्धाच्च हविष्यव-दानम्। अतः केनात्र प्रतिपश्ववदानगणप्राप्तिः हविष्ट्वैनैकत्वात् पशूनाम्। हविर्भेदे हि सति हविस्संस्कारभेदे वा प्रधानस्या-वृत्तिर्भवति इह तद्द्वयं नास्ति। नात्र संस्कारनिबन्धनं पृथक्त्वम्।

---

गात् प्राजापत्यानिति युक्तं बहुत्वम्। ननु चोक्तं प्रतिपश्ववदानगणस्यावृत्तिः सप्त-दशानां यागसंबन्धार्थं भविष्यति गृह्णातीनामिव यागसंबन्धसिद्ध्यर्थं ज्योतिष्टोमस्य आवृत्तिरिति। परिहरति—युक्तम्। ज्योतिष्टोमे गृह्णातीनामुपदेशात्। अत्र पुनः कार्यतः अवदानगणः प्राप्नोति। स च यागस्यैकत्वात् सकृदेव पशूनां यागार्थेन हि अवदानगणः प्राप्नुयात्। स च सकृदेव प्राप्नोति एकत्वाद्यागस्य। सप्तदशपशुकश्चाय-मेको यागः याग[1]संबन्धाच्च [2]हविष्यवदानम्। अतः केनात्र प्रतिपश्ववदानगणप्राप्तिः [3]हविष्ट्वैनैकत्वात् पशूनाम्। हविर्भेदं हि प्रतिहविरवदानप्राप्तेः तदुपसंहारार्थं युक्तैव प्रधानस्यावृत्तिः। यदि वाचनिक एवावदानभेदो भवेत् तदा ह्यावृत्तिरुचिता। तदाह—हविर्भेदे सति हविस्संस्कारभेदे वा प्रधानस्यावृत्तिर्भवति। इह तु द्वयं नास्ति नात्र संस्कार-निबन्धनं पृथक्त्वं पशूनां येन पृथक्त्वं पशूनामवगम्य अवदानसंस्कारभेदोऽवगम्यते।

---

(1) R. & G. संबन्धार्थं (2) G. भविष्यत्यवदानम् (3) भविष्यति अनेकत्वात्पशूनाम्

**सङ्ख्या नावकल्प्येत, बहुषु यागेषु बहुभिरेवावदानगणैः प्रयोजनं, तेन सप्तदशभ्यो यागेभ्यः सप्तदश पशूनुपाददीरंस्तत्र सङ्ख्या-सामञ्जस्यं भविष्यति, तस्मात् सप्तदश यागाः ।**

---

हविर्निबन्धनो हविः संस्कारभेदः । तस्माद्यागैकत्वपक्षे सप्तदशसङ्ख्या-न्वयो न घटते । किमिदमन्याय्यमुक्तम् । यागनिरूपणोत्तरकालं हि संस्कारप्राप्तिः न संस्कारापेक्षं यागनिरूपणम् । सप्तदशपशुद्रव्यश्चाय-मेको यागो निरूपितः एवंभूतस्य संस्कारो यदि आवृत्त्या अनावृत्त्या वा न संभवति बाध्यतां नाम कृष्णलचरावि(दम् )वावघातः । न पुनस्तद्वशा-

---

**हविर्निबन्धनो हविस्संस्कारभेदः ।** इह पुनः हविरेव न भिन्नमिति संस्कारस्याप्यभेदेन भवितव्यम् । **तस्माद्यागैकत्वपक्षे सप्तदशसंख्यान्वयो न घटते** इति यागभेद एव युक्तः । तथा चाहुर्वार्तिककाराः—

एकयागत्वपक्षे स्यादेक एवात्र चोदकः ।
ततश्चैकगणप्राप्त्या न सर्वपशुसंग्रहः ॥

तदिदमेकदेशिमतं दूषयति—**किमिदमन्याय्यमुक्तं यागनिरूपणोत्तरकालं हि संस्कार-प्राप्तिः** वर्णनीया । **न संस्कारापेक्षं यागनिरूपणम् ।** अस्यार्थः —करणोपकाराकाङ्क्षा-द्वारिका हि आतिदेशिकसंस्कारप्राप्तिः । न चाज्ञाते करणे तदुपकारकाकाङ्क्षाऽस्ति । तेन यागनिरूप्यैव संस्कारप्राप्तिर्वर्णनीया न पुनः संस्कारप्राप्त्यनुसारेण यागवर्णना । **सप्तदश-पशुद्रव्यकश्चायमेको यागः** पूर्वपक्षोक्तन्यायेन वर्णनीयः । **एवंभूतस्य यागस्य संस्का-**रोऽवदानलक्षणः **यद्यावृत्या अनावृत्या वा न संभवति बाध्यतां नाम कृष्णलचराविवा-**वघातः । पूर्वोक्तनीत्या आवृत्तेरन्याय्यत्वात् यद्यावृत्त्या अवदानगणोऽनुग्रहीतुं न शक्यते । अनावृत्तिपक्षे च सर्वपशुसंग्रहाभावात्[1] तदा बाध्यतां कृष्णलचराविवावघातः **न पुनस्तद्वशा-**

---

(1) G. सबन्धाभावात्

नन्वेकस्मिन्नपि यागे सप्तदशभिरवदानगणैर्यक्ष्यते, वचनात् । नैतदेवं, पशुषु हि सा सङ्ख्या श्रूयते, नावदानगणेषु ; अवदानानि हवींषि यागसाधनानि, न पश्वाकृतिः, सा हि अवदानप्रकृतिद्रव्यं विशिंषन्ती प्रकृतौ प्रधानस्योपकृतवतीति विकृतावप्यवदानप्रकृतिद्रव्यं विशिंषन्ती प्रधानस्योपकरिष्यति, तत्र च पशोः सप्तदशसङ्ख्या विकारिका, नावदानगणस्य, तस्मादेकस्मै अवदानगणाय एकः पशुरालब्धव्यः प्राप्नोति, तत्र सप्तदशसङ्ख्या नोपपद्यते । एवमेवावक्लिप्स्यते यदि शृङ्गाभिप्रायाः वर्णाभिप्राया रूपाभिप्राया वा अभविष्यन् सप्तदशपशवः

---

दुत्पत्तौ वाक्यार्थः शक्यते निरूपयितुम् । अथायमभिप्रायः । किं सोपसर्जनस्य भेदः उताभिन्नस्योपसर्जनयोगः इत्यस्मिन् संशये वाक्यशेषाद्युक्तो निर्णय इति । कस्माद्वाक्यशेषात् ? प्रकृतिवदिति । नायं वाक्यशेषः । कार्यतः प्राप्तिमङ्गानां दर्शयितुं वाक्यशेषोऽयं व्याख्यातृणाम् । न पुनरुपदेशोऽङ्गानां

६

---

दुत्पत्तौ[1] वाक्यार्थः शक्यते निरूपयितुम् । अथायमभिप्रायः किं सोपसर्जनस्य भेदः उताभिन्नस्योपसर्जनयोग इति अस्मिन् संशये वाक्यशेषाद्युक्तो निर्णय इति । कस्माद्वाक्यशेषात् ? उत्तरं—प्रकृतिवदिति । तदाह वार्तिककारः—

सन्दिग्धे वाक्यशेषेभ्यो निर्णयः प्राक्समर्थितः ।
सामर्थ्याच्च तदत्रास्ति द्वयं निर्णयकारणम् ॥

दूषयति—नायं वाक्यशेषः । किन्तु कार्यतः प्राप्तिमङ्गानां दर्शयितुं वाक्यशेषोऽयं व्याख्यातृणाम्, न पुनरुपदेशोऽङ्गानाम्[2] । भवतु कार्यतः प्राप्तिदर्शनार्थं तथापि कार्य-

---

(1) G. तद्वशादनुपपत्तौ (2) G. यागानां

श्वेतः कृष्णो रोहितः इत्येवमादयः, तेषामन्यतमो गृह्यते

---

न च कार्यत उपदेशनिरूपणम्। उपदेशाद्धि कार्यं निरूप्यते। न चात्र संशयो विद्यते। उक्तं भेदावगमपूर्वकं एकशेषवचनम्। प्रधानस्य च विभक्तियोगात् भेदोऽवगम्यते नोपसर्जनस्येति। तस्मात् पूर्वपक्ष एवात्र ज्यायानिति एकशेषविदो मन्यन्ते।

अत्रोच्यते। सत्यं प्रत्ययार्थस्य भेदोऽवगम्यते न पुनरुपसर्जनरहितस्य। कुतः? प्रकृतिप्रत्ययसमुदायाद्विभक्त्युत्पत्तेः। न विभक्तितः प्रत्ययोत्पादः। ततः किम्? इदं ततः। प्रकृति–युक्तं हि विभक्त्यर्थेन युज्यते न विभक्त्यर्थयुक्तं प्रकृत्या।

---

वशेनैव निर्णयोऽस्तु। अन्यथा कार्यतः प्राप्तावदानगणबाधप्रसङ्गादिति तत्राह—न कार्यतः उपदेशनिरूपणम् उपदेशाधीनत्वात् कार्यस्य[1]। दूषणान्तरमाह—न चात्र संशयो विद्यते यस्मात् उक्तं भेदावगमपूर्वकमेकशेषवचनम्। प्रधानस्य च विभक्तियोगात् भेदोऽवगम्यते नोपसर्जनस्येति। तस्मात् पूर्वपक्ष एवात्र ज्यायानित्येकशेषविदो मन्यन्ते। अत्रोच्यते—सत्यं प्रत्ययार्थस्य भेदोऽवगम्यते न पुनरुपसर्जनरहितस्य उपसर्जनीभूतप्रजापतिसंबन्धरहितस्य द्रव्यमात्रस्य भेदो नावगम्यते किन्तु तत्सहितस्यैव। कुतः? उत्तरम्—प्रकृतिप्रत्ययसमुदायाद्विभक्त्युत्पत्तेः। समुदायार्थमेव सोपसर्जनं विभक्तिर्भिनत्ति। न विभक्तितः प्रत्ययोत्पादः। यदि विभक्तितः प्रत्ययोत्पादो भवेत् तदा पूर्वं विभक्त्यर्थेन युक्तस्य पश्चात्प्रकृत्यर्थेन योग इति द्रव्यमात्रमेव भिद्येत। न चैतदस्ति। ततः किम्? यदि प्रकृतिप्रत्ययसमुदायाद्विभक्त्युत्पत्तिः न विभक्तौ प्रत्ययोत्पाद इति। उत्तरं—इदं ततः भवति। प्रकृतियुक्तं हि विभक्त्यर्थेन युज्यते। न विभक्त्यर्थेन युक्तं प्रकृत्या।

---

(1) G. कार्यान्तरस्य

इति, अथवा तूपराः शृङ्गिण एकशृङ्गाः इत्येवमादयः, तेषा-
मन्यतमः इति, ते हि श्यामास्तूपरा एकरूपाः श्रूयन्ते, तदेषु

---

तस्मात् सप्तदश यागाः प्रतीयन्ते, न सप्तदशद्रव्यको यागः। अतः कर्मगतैषा सङ्ख्या, न द्रव्यगता। एवं च सति नैवेयं कर्मणि विधीयते येनारुणवत् द्रव्यमुखेनोपकारिता स्यात्। अतः सिद्धं पृथक्त्वनिवेशित्वात् सङ्ख्यया कर्मभेद इति। तच्चैकपशूनां पृथक्त्वं बहुषु यागेषु अवकल्पते नैकस्मिन्निति।

---

तस्मात् सप्तदशयागाः प्रतीयन्ते। न सप्तदशद्रव्यगुणक एको यागः ततः कर्मगतैषा सङ्ख्या, न द्रव्यगता। एवं च सति नैवेयं सङ्ख्या कर्मणि विधीयते येनारुणादिवत् द्रव्य[परिच्छेद]मुखेनोपकारिता स्यात्। यदीयं कर्मणि विधीयते तदा कर्मसाधनं न स्यात्। कर्मणः साधनत्वं न साक्षात् संख्यायाः संभवतीति द्रव्यपरिच्छेदद्वारेण आरुण्यादिवत् उपकारकता स्यात्। न च कर्मणि सा विधीयते [येन] द्रव्यपरिच्छेद-द्वारेण नोपकारिका। किन्तु कर्मस्वरूपनिवेशिन्येव। अतः सिद्धं पृथक्त्वनिवेशात् सङ्ख्यया कर्मभेद इति। अत्र चाधिकरणसङ्ख्यायाः भावार्थमात्रभेदकत्वं प्रतिपाद्यते ; न पुनरनु-बन्धभेदेन शास्त्रभेदोऽनुबन्धभेदश्च सङ्ख्ययेति अनुबन्धत्वे भेदाभावात्। अत्र हि प्राजापत्य-प्रतिपादिताः प्राजापत्या एव नियोगविषयभूताः न पुनः त्वत्कल्पिता यागादिविभक्त्यर्थेन युक्ताश्च प्रकृत्या। तस्मात् सप्तदशयागाः प्रतीयन्त इति। द्रव्यदेवतासंबन्धस्यापि विधि-विषयतावगमात् दर्शितमाद्ये। ये च ते प्राजापत्याः ते समुदिताः सकृदेव नियोगविषयता-मापद्यन्ते दर्शपूर्णमासवत्। तेषां तु स्वरूपमात्रेणैव भेदः तदुपपत्तये यागा अपि बहवः कल्प्यते। ये च ते यागास्त एव करणभूताः तेषां पुरुषप्रयत्नव्याप्यत्वात् द्रव्यदेवता-सम्बन्धो हि फलभूतो यागेऽनुष्ठिते सति सिद्ध्यति। न तत्र पुरुषस्य साक्षात् प्रवृत्तिः। एवं 'तिस्र आहुतीर्जुहोति' इति जुहोतिशब्दसमर्पितो होमो विधिविषयः तत्रापि न शास्त्रभेदः।

बहुषु यागेषु उपपद्यते, नैकस्मिन्; तस्मात सप्तदश यागाः

---

कः पुनरत्र हेतुरभिप्रेतो भाष्यकारस्य ? ननु चैकादशावदानानुपपत्तिः। अहेतुरयं न कार्यतः शास्त्रावधारणमिति। उच्यते। नैव कार्येण शास्त्रमवधार्यते। शास्त्रेणैवेदं कार्यमवधृतम्। उक्तं हि सोपसर्जनस्य भेदोऽवगम्यत इति। एवं सति एकादशावदानबोधो न शक्यते वक्तुम्। एकस्माच्चासौ निष्पन्नः। कुतः ? सोपसर्जनः प्रत्ययार्थः द्वितीयादेरुपसर्जनसंबन्धानुपपत्तिः। अतश्च सप्तदशसङ्ख्या पशुषु न स्यात। उपसर्जनार्थावच्छेदो हि सङ्ख्यानिवेशे हेतुः।

---

भावार्थभेदचिन्ताप्रसङ्गेनैवेदमधिकरणमिहायातम्। अत एवोपसंहृतं सङ्ख्यया कर्मभेद इति। तच्च पशूनां पृथक्त्वं बहुषु यागेष्ववकल्पते नैकस्मिन्निति भाष्यकारेणोक्तम्। **कः पुनरत्र हेतुरभिप्रेतो भाष्यकारस्य कर्मभेदं वदतः?** एकदेश्युत्तरमाह—**ननु चैकादशावदानानुपपत्तिः**[1]। दूषयति—**अहेतुरयं न कार्यतः** तच्छास्त्रावधारणं इत्युक्तम्। एतच्च प्रागेव व्याख्यातम्। परमसमाधाता आह—**उच्यते—नैव कार्येण शास्त्रमवधार्यते। शास्त्रेणैवेदं कार्यमवधृतम् उक्तं हि सोपसर्जनस्य** प्रत्ययार्थस्य **भेदोऽवगम्यत इति।** तेन शास्त्रानुसारेणैव बहवो यागाः। **एवं च सति एकादशावदानबोधो**[2]**न शक्यते वक्तुम्।** एतदुक्तं भवति। भाष्यकारेणैकादशावदानसिद्धिरभ्युच्चयमात्रतयोपन्यस्ता। "तानि चैकस्मादेव पशोरवाप्यन्त" इति भाष्यमर्थतो व्याचष्टे—**एकस्मात्पशोरसौ** एकादशकोऽवदानगणः **निष्पन्नः। कुतः? सोपसर्जनः प्रत्ययार्थः द्वितीयादेः पशोः** प्रजापत्याख्योपसर्जनसंबन्धानुपपत्तिः। [3]**अतः सप्तदशसङ्ख्या पशुषु न स्यात्।** कस्मादित्याह—**उपसर्जनार्थावच्छेदो हि** प्रजापत्यवच्छेदो हि **सङ्ख्यानिवेशे हेतुः।** एकोपाभि-

---

(1) G. वदानासिद्धिः (2) G. बाधो (3) G. अतश्च

**इति । प्रयोजनमेकस्मिन्नष्टे दुष्टे कृत्स्नः पशुगण आवर्तेत, एकमालभ्यमानमन्वालभेरन्, पूर्वपक्षे अदृष्टार्थ; सिद्धान्ते एक एव पशुरावर्तते, न हि कर्मभेदे पशुः पश्वन्तरमाकाङ्क्षति इति ॥**

---

तदनुपपत्तौ सङ्ख्यानिवेशानुपपत्तिः । न चान्यः कश्चित् अवच्छेदको विद्यते एकरूपश्रवणात् । नानारूपश्रवणे हि तेषामन्यतम इति स्यादपि सङ्ख्यानिवेशः । न तदस्ति । तस्मात् पशुषूपपद्यते नान्यथेति युक्तमुक्तम् ।

[1]**नन्वेकस्मिन्नपि यागे सप्तदशभिरवदानगणैः यक्ष्यते वचनादिति ।** किमिदमुक्तम् ? इदमुक्तम् । यद्यपि सोपसर्जनस्य भेदोऽवगम्यते, तथापि प्रधानभेदादेवोपसर्जनस्य भेदो न भवतु । माभूत्

---

वशीकरणेन हि सर्वत्र सङ्ख्याव्यवहारो भवति इह प्रजापतिसम्बन्धे एकः उपाधिर्भवेत् । **तदनुपपत्तौ सङ्ख्यानिवेशानुपपत्तिः ।** [1]"एवमेवावकल्पिष्यते" इत्यादिभाष्यमर्थसङ्गत्याऽपकृष्य[2]व्याचष्टे—**नचान्यः कश्चिदवच्छेदकोविद्यते एकरूपश्रवणात् ।** "श्यामास्तूपरा एकरूपा भवन्ति" इति एकरूपश्रवणात् । **नानारूपश्रवणे** पाठाभिप्रायेण सङ्ख्योपपत्तिः । य एते पठिताः सप्तदश ते प्राजापत्यास्तेषां **अन्यतमः** पशुरालभ्य **इति स्यादेवापि सङ्ख्यानिवेशः । न च तदस्ति ।** नानारूप[3]श्रवणात् । **तस्मात्** कर्मभेद एवैषां सङ्ख्या **पशुषूपपद्यते नान्यथेति युक्तमुक्तं** सङ्ख्यया कर्मभेद इति । **"नन्वेकस्मिन्नपि यागे सप्तदशभिरवदानगणैर्यक्ष्यते वचनात्" इति भाष्ये किमिदमुक्तं ?** पृच्छतश्चायमाशयः सोपसर्जनप्रत्ययार्थभेदात् कथमिदमुच्यते एकस्मिन् याग इति । उत्तरं—**इदमुक्तं यद्यपि सोपसर्जनस्य भेदोऽवगम्यते तथापि प्रधानभेदादेवोपसर्जनस्य भेदोऽपि न भवतु माभूत्**

---

(1) p. 488. (2) adds प्रथमं (3) G. रूपा

संज्ञाकृतकर्मभेदाधिकरणम् ॥

संज्ञा चोत्पत्तिसंयोगात् ॥ २२ ॥

'अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिः एतेन सहस्र-दक्षिणेन यजेत' इति श्रूयते। अत्र सन्देहः, किमेभिर्नामधेयैः प्रकृतं

---

प्रधानस्यैव स्वतः। किमेवं भविष्यति ? इदमेव भविष्यति। सप्त-दशसङ्ख्या हविषो विकारिका भविष्यति, न पुनर्यागस्य। भवत्येवमिदं यदि हविषः सङ्ख्या श्रूयते इयं पुनः पशुषु श्रूयते। को विशेषः ? अयमस्ति विशेषः। पशूनामुपसर्जनयोगात्। तत्संबन्धावगतिरेव भिन्नाऽवगम्यते न हविर्मात्रम्। अतो यागभेदः प्रयोजनमुक्तम्।

संज्ञा चोत्पत्तिसंयोगात्। "अथैष ज्योतिरथैष विश्वज्योतिः अथैष सर्वज्योतिः" कथं पुनरेवमादीनां

---

प्रधानस्यैव स्वतः। अस्यार्थः—प्रजापतिर्देवता येषामिति प्राजापत्याः इत्येवमाश्रीयते। तेन पशुभेदादेव प्राजापत्यानिति उपसर्जनस्यापि भेदावगतिः न तु स्वतः पशूनामिव। किमेवं भविष्यति ? इदमेव भविष्यति सप्तदशसङ्ख्या हविषोऽवदानगणस्य विकारिका भविष्यति न पुनर्यागस्य। परिहारभाष्यस्यार्थमाह—भवत्येवमिदं यदि हविषि सङ्ख्या श्रूयते इयं पुनः पशुषु श्रूयते। को विशेषः ? अयमस्ति विशेषः पशूनामुपसर्जनयोगात् संबन्धावगतिरेव भिन्नाऽवगम्यते न हविर्मात्रमिति। अस्यार्थः—पशवस्तावत् प्रजा-पतिसम्बन्धाः तेषां यदि सङ्ख्या तदा तेषां सोपसर्जनानामेव भेदो न केवलानाम्। यदि पुनरियं हविषः सङ्ख्या श्रूयते तदा प्रजापतिसम्बन्धानां भेदावगतेरेक एव यागो भवेत् न चेयं हविषः सङ्ख्या पशुवर्तित्वेन श्रवणात्। अधिकरणार्थमुपसंहरति-अतो यागभेदः प्रयोजनमुक्तम्। संज्ञा च। 'अथैष ज्योतिः अथैष विश्वज्योतिः अथैष सर्वज्योतिः' इति। कथं पुनरेषां

ज्योतिष्टोमं सङ्कीर्त्य तत्र सहस्रदक्षिणादिर्गुणो विधीयते, अथ वा वक्ष्यमाणविशेषाणि कर्मान्तराण्युपदिश्यन्त इति। किं प्राप्तम्? प्रकरणानुग्रहात् प्रकृतस्य गुणविधानमिति। ननु वाक्यसामर्थ्यात् ज्योतिरादीनामेते गुणा विधायिष्यन्ते। नैष दोषः, ज्योतिष्टोमस्यैवैतानि वाचकानि, ज्योतिः इति ज्योतिष्टोमस्य प्रतीकमुपादीयते, विश्वज्योतिः इति त्रिवृदादीन्यस्य ज्योतींषि वाक्यशेषसङ्कीर्तितानि, तानि सर्वाण्यस्य, तेनासौ विश्वज्योतिः सर्वज्योतिश्च ज्योतिष्टोमः इत्येवं प्राप्तम्।

एवं प्राप्ते ब्रूमः,—संज्ञा हि तिस्रो भेदिकाः तेषां ज्योति-

---

कर्मवचनताऽवसीयते। भावार्थसामानाधिकरण्याद्धि नामधेयत्वमुक्तम्। न च तदिहास्ति। केवलनामश्रवणात्। तस्मात् कथमत्र संशयः? किं प्रकृतस्य कर्मणो वाचका उत वक्ष्यमाणस्येति। उच्यते। अस्त्यत्रापि सामानाधिकरण्यं भावशब्देन। एतच्छब्दावमर्शः 'स य एवं विद्वानेतेन यजेत' इत्येवमादिषु।

---

कर्मवचनताऽवसीयते। भावार्थसामानाधिकरण्याद्धि नामधेयत्वमुक्तम्। न च तदिहास्ति केवलनामश्रवणात्। तस्मात्कथमत्र संशयः? किं प्रकृतस्य कर्मणो वाचकाः उत वक्ष्यमाणस्येति। सिद्धे हि सामान्यतः कर्मवचनत्वे सन्देहः कस्य कर्मणः इयं संज्ञा, प्रकृतस्योत्पत्स्यमानस्य वेति। एषां तु कर्मासामानाधिकरण्येन कर्मनामतैव नास्तीति 'कर्मण' इति कथमत्र संशयः।

उच्यते। अस्त्यत्रापि भावशब्देन सह सामानाधिकरण्यं एतच्छब्दावमर्शः "य एवं विद्वानेतेन यजेत" इत्येवमादिषु। एतच्छब्देन ज्योतिरादयः परामृश्यन्ते। तेनायमर्थः—एतेन ज्योतिषा यजेत इति। ततश्च यजिसामानाधिकरण्यात्सिद्धं ज्योतिरादीनां

शब्दाः, उत्पत्तिवाक्ये ह्येताः श्रूयन्ते, नासामिमाः पुनः श्रुतयः; तस्मादथैष ज्योतिः इति अपूर्वस्य कर्मणो विधायकं वाक्यम् अनुवादे हि सति अप्रवृत्तिविशेषकरमनर्थकं स्यात्ः प्रकृतस्य च गुणविधाने विकल्पो भवेत्, तत्र पक्षे बाधः, न च ज्योतिरादयो ज्योतिष्टोमस्य वदितारः, समुदायान्तराणि ह्येतानि, न चावयवेन समानेन समुदायान्तरं तदर्थमेत भवति, यथा शालाशब्दो गृहवचनः, तत्र न शालाशब्दसामान्यान्मालाशब्दादयोऽपि गृहवचना भवन्ति। यत्तु ज्योतिष्टोमस्य ज्योतिरिति प्रतीकमुपादीयते इति। प्रकरणसामर्थ्याद्धि तत्र ज्योतिष्टोमशब्देन परोक्षेणैकवाक्यता भवेत्, सा प्रत्यक्षं ज्योतिः शब्देन सहैकवाक्यतां बाधेत, नचैतन्न्याय्यं, वाक्यं हि प्रकरणाद्बलीयः। अथ पुनरयं द्योतनार्थत्वाद्वा ज्योतिष्मत्वाद्वा कर्मान्तरे वर्त्स्यति, यच त्रिवृदादीनि ज्योतींषि तेषां साकल्यवचनो विश्वज्योतिः सर्वज्योतिः इति चेत्। नेति ब्रूमः, —न हि त्रिवृदादिषु ज्योतिःशब्दः प्रसिद्धः, एवं ब्रुवन् प्रसिद्धिं

---

तस्मादुपपन्नः संशयः। अत्र पूर्वपक्षवादी मन्यते—दर्शपूर्णमासवत् प्रकृतानां कर्मणां साकं प्रस्थाय्यवद्वा प्रकृतस्य कर्मणो वाचका इति। तस्मात्तस्यैवेदं पुनर्वचनं गुणान्तरसंबन्धार्थमित्येवं प्राप्तम्।

---

नामत्वम्। तस्मादुपपन्नः संशयः। तत्र पूर्वपक्षवादी मन्यते। दर्शपूर्णमासवत् प्रकृतानां कर्मणां साकंप्रस्थाय्यवद्वा ज्योतिरादय प्रकृतस्य कर्मणो वाचका इति। तस्माद्यजिसामानाधिकरण्यान्नामत्वम्। अतो यजेः प्रकृतनामपरत्वात् नामापि तस्यैव। न पुनर्नामबलेन यागभेद इति। तस्मात् प्रकृतस्येदं पुनर्वचनं गुणान्तरसंबन्धार्थमित्येवं प्राप्तम्।

बाधेत। यत्तु वाक्यशेषात् ज्योतिःशब्दः त्रिवृदादिवचनः इति, तस्मिन्नेव वाक्ये स तत्र प्रयुक्तः इति गम्यते प्रमाणान्तरेण, न शब्देन, यत्र तु तत्प्रमाणान्तरं नास्ति, न तत्र वर्तितुमर्हति, यथा सिंहो देवदत्तः इति सिंहशब्दो देवदत्तवचनः प्रमाणा-

---

अत्रोच्यते—संज्ञाप्युत्पत्त्यैव अर्थान्तरावबोधमुत्पादयति। किमिद-मुत्पत्त्यैवेति ? उच्चार्यमाणैवेत्यर्थः। अन्यत्वं चावगतं विशेषान्तरा-भावात्। पुनरन्यार्थतया न गृह्येत साकंप्रस्थाय्यवत्। यत्र पुनर्विशे-षोऽवगम्यते प्रकृतादन्यत्र किमिति तत्रौत्पत्तिकं भेदविज्ञानं कथ्यते। अस्ति चायं सहस्रदक्षिणादिभिः विशेषैः विशिष्टः प्रकृतादन्यः। तस्मात् कर्मान्तरं संज्ञात इति सिद्धम्।

---

अत्रोच्यते संज्ञाप्युत्पत्त्यैवार्थान्तरावबोधमुत्पादयति। किमिदमुत्पत्त्यैवेति। उच्चार्य-माणैवेत्यर्थः। यजिसामानाधिकरण्यशून्यं संज्ञान्तरं श्रूयमाणं प्रकृतादर्थादर्थान्तरमेवावगमयति वाचकभेदादेव वाच्यभेदस्योचितत्वात्। उत्सर्गो[1]ह्ययं "अन्याय्यं अनेकशब्दत्वं" इति (अभिवदेत)भेदे तु लिखितं तच्छब्दावमर्शेन यजिशब्दसामानाधिकरण्येऽपि यागभेद एव प्रतीयते। फलं पुनः यजिसामानाधिकरण्यमेव प्रथमे नामधेयं श्रूयते। तत्र किं परतन्त्रत्वात यत्र प्रकृते यजिर्वर्तते तत्र चोपपदमपि इह तु संज्ञामात्रं श्रूयत इत्युक्तम्। अतोऽत्र कर्मभेदः अन्यत्वं चावगतं विशेषान्तराभावात्। पुनरन्यार्थतया [2]फल-संबन्धार्थतया गृह्यमाणोऽभेदः साकंप्रस्थाय्यवत् यत्र पुनर्विशेष एवावगम्यते प्रकृतादन्यत्र किमिति तत्रौत्पत्तिकं भेदविज्ञानं कथ्यते। इह अस्ति चायं सहस्रदक्षिणादिभिः विशेषैः विशिष्टः प्रकृतादन्यः भेदनिर्वाहकः। तदभावे पुनरभेद एवाश्रीयते। इह च भेदनिर्वाहकमस्ति। तस्मात् कर्मान्तरं संज्ञातः इति सिद्धम्।

---

(1) G. तदुत्सर्गो (2) R. गुणान्तरसंबन्धार्थतया

न्तरेण, न तु सिंहमालभेत इति यत्र, तत्र तु तत्प्रमाणान्तरं नास्ति। तस्मान्न विश्वज्योतिः सर्वज्योतिः इति च ज्योतिष्टोमस्य वदितारौ, न चेज्ज्योतिष्टोम उच्यते, सर्वाणि कर्मान्तराणि॥

गुणाधिकरणम्॥

गुणश्चापूर्वसंयोगे वाक्ययोः समत्वात्॥ २३॥

चातुर्मास्येषु वैश्वदेवे समामनन्ति, 'तप्ते पयसि दध्यानयति

---

गुणश्चापूर्वसंयोगे। कथं पुनरत्र संशयः? यदा वैश्वदेवशब्देनामिक्षासंबन्धो वाजिशब्देन वाजिनसंबन्धः। शब्देन च देवतोपकरोति इति 'विधिशब्दस्य मन्त्रत्वे भावः स्यात्' इत्यत्रोक्तम्। अतोऽर्थैक्येऽपि देवतान्तरमेवैतत्। यथा सौर्यचरावादित्ये च। उच्यते। यत्र हि शब्दादेव देवताऽवगम्यते तत्रैवम्, यत्र पुनः प्रकृतोपलक्षणपरः शब्दादिः तत्र

---

गुणश्चापूर्वसंयोगे। कथं पुनरत्र संशयः? यदा वैश्वदेवशब्देनामिक्षासंबन्धो वाजिशब्देन वाजिनसंबन्धः। शब्देन च देवतोपकरोति इति विधिशब्दस्य मन्त्रत्वे भावः स्यादित्यत्रोक्तम्। अस्यार्थः—यद्येकदेवतासंबन्धो वाजिनामिक्षयोः स्यात तदा एकं कर्म भवेत्। न चैकदेवतासंबन्धोऽनयोः। ननु चात्र वाजिशब्देन विश्वेदेवा अत्रोच्यन्ते। तेषामेवामिक्षया वाजेन अन्नेन वाजिशब्दवाच्यत्वात्। उच्यते। यद्यप्यर्थैक्यं तथापि देवताभावभेदो विद्यत एव शब्दभेदात्। येन हि शब्देन चोदना तेनैव चोद्देशे देवतात्वं न शब्दान्तरेण इत्युक्तं दशमे। विश्वेदेवशब्दादेवामिक्षासंबन्धस्य चोदना, वाजिशब्देन वाजिनसंबन्धस्य। अतोऽर्थैक्येऽपि देवतान्तरमेवैतत् यथा सौर्ये चरौ आदित्ये च। तस्मात् कथमत्र संशयः? कर्मभेदस्य स्पष्टत्वादिति। उच्यते। यत्र हि शब्दादेव देवताऽवगम्यते तत्रैवम्। यत्र पुनः प्रकृतोपलक्षणपरः शब्दादिः तत्र

सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इति। तत्र सन्दिह्यते, —किमामिक्षागुणके कर्मणि वाजिनं गुणविधिः, उत तस्मात् वाजिनगुणकं कर्मान्तरम्? किं प्राप्तं? गुणविधिः इति। कुतः?। वाजेनान्नेनामिक्षया वाजिनो विश्वेदेवास्ताननूद्य वाजिनं विधीयते, तेनोभयं वैश्वदेवं आमिक्षा वाजिनं च।

---

पूर्वशब्दाभिधेयैव देवता। अन्याभिधेयतयैव लक्षणा लक्षयति। न स्वाभिधेयतामापादयितुं क्षमा। तस्मादुपपद्यते संशयः किमयं लक्षणया वाजिभ्य इत्ययं शब्दोऽन्वेति उताभिधानेनेति। ननु च यौगिकत्वात् वाजिभ्य इति नैव लक्षणा शक्यते वक्तुम्। सामीप्ये तद्वति वा लक्षणा, न पुनः यागावगतौ। निमित्तान्तर—बलेन हि लक्षणाऽवगम्यते। न पदादेव। योगस्तु पदावगम्य

---

**पूर्वशब्दाभिधेयैव देवता।** कुतः इत्याह—**अन्याभिधेयतयैव लक्षणा लक्षयति। न स्वाभिधेयतामापादयितुं क्षमा।** अयमभिप्रायः—वाजिशब्दोऽयमामिक्षासंबन्धिदेवतोपलक्षणार्थः। आमिक्षासंबन्धश्च विश्वेदेवशब्दाभिधेयतया नान्यथा। अतस्तच्छब्दाभिधेयतयैव वाजिनसंबन्धः न वाजिशब्दाभिधेयतया। तस्मादुपपन्नः संशयः किं **लक्षणया वाजिभ्य इत्ययं शब्दोऽन्वेति उताभिधानेनेति।** यदि लक्षणयाऽन्वयस्तदा देवतैक्यं; अथाभिधानेन तदा देवताभेदः। **ननु च यौगिकत्वात्** वाजिशब्दस्य **वाजिभ्य इति नैव लक्षणा शक्यते वक्तुम्। सामीप्ये तद्वति वा लक्षणा।** यथा 'गङ्गायां घोषः' 'यष्टीः प्रवेशय' इति वा। अन्यस्मिन्नेवंजातीयके(तत्स्थिताः) यथा अटव्यो व्यर्थिताः इत्यादौ। अटवी हि अटवीशब्देन लक्ष्यते न पुनः लता, लतायां त्वसौ लक्षणा। यथा पाचको देवदत्त इति। तस्माद्योगावगतौ न लक्षणेत्याह—**निमित्तान्तरबलेन हि लक्षणाऽवगम्यते न पदादेव। योगस्तु पदावगम्य**

तस्मिन्नेव च कर्मणि वाजिनगुणविधिः । यथा अग्निहोत्रं जुहोति इत्युक्ते दध्ना जुहोति, पयसा जुहोति इति ।

एवं प्राप्ते ब्रूमः, गुणश्चाप्रकृतेन देवताभिधानेन सम्बध्यमानः कर्मान्तरं विदध्यात्, समे हि तदैते वाक्ये भवतः, उभे अपि

---

एव । तस्माल्लक्षणानुपपत्तिः । अत्राभिधीयते—किमत्र रूढिर्योगो वा करिष्यति ? पराभिधेयता लक्षणाहेतुः । तच्चात्र विद्यत इति पूर्वपक्षवादिनोऽभिप्रायः । व्यक्तिनिष्ठत्वाद्यौगिकानां वैश्वदेवशब्दाच्च व्यक्तिविशेषावगमात् । तस्माद्गुणद्वयविशिष्टमेकं कर्मेति पूर्वपक्षितम् । सिद्धान्तवादी तु मन्यते—यद्यपि प्रकृतव्यक्त्यवगमो भवति तथापि कर्मान्तरमेवैतत् । आमिक्षोपसर्जनतया प्रतीयमानत्वात् विश्वेषां देवानाम् ।

---

एव तस्माल्लक्षणानुपपत्तिः । अत्राभिधीयते–किमत्र रूढिर्योगो वा [1]करिष्यति ? पराभिधेयता हि [2]लक्षणाहेतुः तच्चात्र विद्यत इति पूर्वपक्षवादिनोऽभिप्रायः । अस्यार्थः —यद्यप्ययं यौगिकः शब्दः तथापि परशब्दाभिधेयतयैव विश्वान् देवान् प्रतिपादयति तेन लक्षणेत्युच्यते । परमार्थतस्तु अभिधानमेवेदम् । कस्मात्पुनः परशब्दाभिधेयतयैव प्रतिपादनमित्याह—व्यक्तिनिष्ठत्वाद्यौगिकानां वाजिशब्दोऽयं व्यक्तिनिष्ठः । तथापि किमित्याह—वैश्वदेवशब्दाच्च व्यक्तिविशेषावगमात् । वैश्वदेवशब्देनामिक्षायोगिनो विश्वे देवा एव विश्वेदेवशब्दाभिधेयतया बुद्धौ सन्निधापिताः । तेषु सन्निहितेषु वाजिशब्दोऽयं व्यक्तिनिष्ठः तानेव प्रतिपादयतीति । तस्मात् एकदेवतासंबन्धाद्धविर्द्वयस्य गुणद्वयविशिष्टमेकं कर्मेति पूर्वपक्षितम् । सिद्धान्तवादी तु मन्यते । यद्यपि प्रकृतव्यक्त्यवगमो भवति तथापि कर्मान्तरमेवैतत् आमिक्षोपसर्जनतया प्रतीयमानत्वाद्विश्वेषां देवानाम्

---

(1) G. योगमुपाकरि (2) G. परवल्लक्षणत्वे हेतुः

अपूर्वयोर्यागयोः विधातृणी। कथं पुनरपूर्वदेवताभिधानम्? यदा इदानीमेव उक्तं, विश्वेषां देवानामनुवादो वाजिभ्य इति। तदुच्यते, इह विश्वेषां देवानां देवतात्वं क्वचित्

---

नह्यन्योपसर्जनं अन्यसंबन्धितया शक्यतेऽवगन्तुम्; राजपुरुषं पश्येतिवत्। तस्मादनयोरेकेनासंबन्धः। अतः संबन्धद्वया- वगमादेकत्वेऽपि संबन्धिनः कर्मभेदः। अथ कस्माद्युगपत् अरुणा- वत्संबन्धो न भवति। किमेवं? एकत्वेनावगतिर्भविष्यति। सत्यमेवं

---

'वैश्वदेव्यामिक्षा' इत्यत्र विश्वेदेवाः आमिक्षां प्रत्युपसर्जनतया प्रतीताः। अतस्तेषां न वाजिनेन संबन्ध उपपद्यते। कस्मादित्याह—**नह्यन्योपसर्जनमन्यसंबन्धितया शक्यतेऽवगन्तुं राजपुरुषं पश्येतिवत्**। न राजा पुरुषं प्रत्युपसर्जनीभूतो दण्डिना संबध्यते। **तस्मा- दनयोरा**मिक्षावाजिनयोः **एकेनासम्बन्धः** एकेन रूपेण विश्वेदेवा नामिक्षावाजिनाभ्यां सम्बध्यन्ते। यदि ह्येकेन रूपेण सम्बन्धः स्यात् ततः एकदेवतासम्बन्धात् मिलितमेकहविः स्यात्। एकश्च यागो भवेत्। वारुण्या निष्कासेन तुषैश्चावभृथं यन्तीतिवत् यतः आमिक्षासम्बन्धितया न वाजिनसम्बन्धः अतः सम्बन्धद्वयावगमात् एकत्वेपि विश्वेषां देवानां कर्मभेदः तत्र वाजिशब्देनैव देवतात्वे आमिक्षासम्बन्धितया न वाजिनसम्बन्धः। **अतः सम्बन्धद्वयावगमादेकत्वेपि** विश्वेषां देवानां **कर्मभेदः**। अत्र च वाजिशब्देनैव देवतात्वं नामिक्षासंबन्धिना रूपेण विश्वेदेवशब्दाभिधेयेन। तेन वाजिनसंबन्धाभावात् अतो वाजिशब्देनैव देवतात्वमिति देवताभावभेदात् भेदः। **अथ कस्माद्युगपदरुणा- वत्संबन्धो न भवति**। यथा क्रयस्यात्रारुणैकहायनीभ्यां युगपत् संबन्धः तथा विश्वेषा- मपि देवानामामिक्षावाजिनाभ्यां भवतीति। **किमेवं** भविष्यति? उत्तरं—**एकत्वेना- वगतिर्भविष्यति**। एकत्वावगतेश्च न भेदावगतिः सिध्यति। परिहरति—**सत्यमेवम्**

---

(1) G. प्रमाणाभेदेपि

श्रुत्या, क्वचित् वाक्येन; तद्धितनिर्देशे श्रुत्या, चतुर्थीनिर्देशे वाक्येन; यत्र श्रुत्या देवतात्वं, तत्रामिक्षया सहैकवाक्यत्वम्; यत्र चतुर्थी, तत्र वाजिनेन; तत्रैषामेकत्र श्रुत्या देवतात्वं,

---

यत्रैकप्रमाणावगम्यः संबन्धः। नानाप्रमाणगम्ये पुनः अनिवार्यैव भेदावगतिः। तस्मात् कर्मान्तरम्। नानाप्रमाणगम्यता श्रुत्या वाक्येन चेति वदता दर्शिता। इह तर्हि कथं प्रमाणभेदेऽपि दध्ना जुहोति पयसा जुहोति इत्येकत्वं कर्मणः? अनुपसर्जनत्वावगतेः। नात्र अन्योपसर्जनो होमोऽन्येन संबध्यत इति अविरुद्धा प्रकृतावगतिः। अतो भिन्नानामपि शास्त्राणां अभिन्नात्मककार्यमिति वैषम्यम्। अप्रकृत-

---

यत्रैकप्रमाणावगम्यः सम्बन्धः। यथाऽरुणैकहायन्योरिव द्वयोरपि वाक्येन सम्बन्धात्; न तत्राप्य[न्य]संबन्धस्यान्येन सम्बन्धो युक्त इति शक्यते वक्तुम्। नानाप्रमाणगम्ये तु पुनः [1]भवत्येव भेदावगतिः। तस्मात् कर्मान्तरत्वम्। नानाप्रमाणावगम्यता च संबन्धस्य दर्शिता भाष्यकारेण श्रुत्या वाक्येन चेति[2] वदता। विश्वेषां देवानां श्रुत्या आमिक्षा-सम्बन्धः वाक्येन च वाजिनसम्बन्धः। तेन श्रुत्या शीघ्रं सम्बन्धः वाक्येन विलम्बेन। तेनामिक्षा-संबन्धानां सतां न वाजिनसंबन्धो युक्तः। इह तर्हि कथं प्रमाणभेदेपि दध्ना जुहोति पयसा जुहोतीत्येकत्वं कर्मणः। भिन्नवाक्यसमर्पितत्वात् दध्नः पयसश्च निरपेक्षसम्बन्धात् एकत्वं कर्मणो न युक्तम्। उत्तरं—अनुपसर्जनावगतेः अग्निहोत्रं जुहोति इति द्रव्यान्तरसम्बन्धो होमे नावगम्यते। तेन सर्वेषां गुणविधीनां सम्बन्धो युक्तः। अनुपसर्जनावगतेः। एतदेव दर्शयति —नात्र अन्योपसर्जनो होमोऽन्येन [2]सम्बध्यते। दधिविशिष्टहोमः पयसा न सम्बध्यते किन्तु द्रव्यान्तरविशिष्ट एवेति अविरुद्धा प्रकृतावगतिः। अतोऽन्योन्यभिन्नानामपि दध्यादिशास्त्राणां अभिन्नमेकं कार्यं अग्निहोत्रहोमनिष्पत्तिलक्षणमिति वैषम्यम्। अत्र भाष्यकारेणोक्तम्-"अप्रकृते

---

(1) वाक्येन भेद इति (2) G. अनिवार्यैव

वाक्येन द्रव्यविशेषसम्बन्धः; एकत्रोभयमपि वाक्येन; तदिह देवतात्वं प्रति श्रुतिवाक्ययोर्विरोधः, विरोधे च श्रुतिर्बलीयसी इत्यामिक्षावाक्ये देवतात्वं विश्वेषां देवानां, न वाजिन-वाक्ये इत्यध्यवसीयते, तेनावगम्यते, अप्रकृतेन देवतापदेनास्य संबन्धः इति; तस्मात् कर्मान्तरमिति ।

अथ यदुपवर्णितम्, 'यथा अग्निहोत्रं जुहोति' इत्युक्ते दध्ना जुहोति इत्येवमादयो गुणविधयः इति । तत्रोच्यते,—

अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेत ॥ २४ ॥

युक्तं यत् तत्र गुणविधानं, न तत्राप्रकृतेन केनचिद्गुणेन सम्बन्धः, प्रकृतेन त्वस्ति यागेन; तस्मादनुपवर्णनमेतत् ।

---

ग्रहणं देवतान्तरग्रहणं च देवतान्तरसंबन्धाभिप्रायम्; न पदार्थाभिप्रायं पदार्थाभेदेऽपि भेदावगमादित्युक्तम् । नात्र पदार्थभेदः शक्यते वक्तुम् अन्वयोगाद्विश्वेषां देवानाम् । तस्मात् संबन्धितैवात्र भिन्नत्वे हेतुरिति सिद्धम् ।

---

न देवतान्तरेण वाजिनस्य सम्बन्ध इति । तदयुक्तम्—प्रकृतविश्वेदेवपदसम्बन्धात् वाजिनस्यापि इत्याशङ्क्याह—अप्रकृतग्रहणं देवतान्तरग्रहणं च देवतान्तरसम्बन्धाभि-प्रायम् । न पदार्थाभिप्रायम् । कस्मादित्याह—पदार्थाभेदेपि सम्बन्धितया भेदावग-मादित्युक्तम् । ननु पदार्थभेदोऽपि किमिति न भवतीत्यत्राह—न पदार्थभेदः शक्यतेऽव-गन्तुम् । अन्वयोगाद्विश्वेषां देवानाम् । वाजिशब्देन तेषामेवाभिधानात् । तस्मात् पदार्थस्य[1] भेदसम्बन्धितैव तु भेदहेतुरिति सिद्धम् ।

(1) G. अभेद

**अथ वा अधिकरणान्तरं, 'दध्ना जुहोति' इत्येवमादीनि**

---

अधिकरणान्तरं वेति वदतः कोऽभिप्रायो भाष्यकारस्य ? ननु च गुणार्थेन पुनः श्रुतिरित्यत्र नैवैतानि कर्मान्तराणीत्युक्तम् । अत्र वदामः, अयमभिप्रायो भाष्यकारस्य । अत्रापि दध्युपसर्जन-तयाऽवगम्यते । अतोऽनुबन्धान्तरसंबन्धात् नैकावगम्यमनुबन्धं भवति । तस्मात् प्रधानस्याप्युपसर्जनस्येवान्यसंबन्धस्य नान्येन संबन्ध उपपद्यते । राद्धान्तस्तु—सत्यमेवं यद्यसंबद्धस्य समर्पकं नास्ति वैश्वदेववत्, इह चाग्निहोत्रं जुहोतीति सर्वानुबन्धसंबन्धितया

---

**अधिकरणान्तरं वा । अधिकरणान्तरं वेति वदेतः कोऽभिप्रायो भाष्यकारस्य ? ननु च गुणार्थेन पुनः श्रुतिरित्यत्र न चैतानि कर्मान्तराणीत्युक्तम् ।** तेन पूर्वपक्षा-भावात् नेदमधिकरणान्तरं शक्यते वक्तुं इति भावः । **अत्र वदामः—अयमभिप्रायो भाष्य-कारस्य । अत्रापि** हि यस्मात् **दध्युपसर्जनं** दधिविशिष्टं प्रधानं ; पयस उपसर्जनतया पयोविशिष्टतया नावगम्यते । **अतोऽनुबन्धान्तरसंबन्धात् ।** कारकान्तरसंबन्धात् **एकावगम्यमनुबन्धं न भवति । तस्मात् प्रधानस्यापि** होमस्यान्यसंबन्धस्यान्येन **संबन्धो नोपपद्यते** उपसर्जनस्येव । एतदुक्तं भवति—यद्यपि वाक्यान्तरेण दध्यादि-सम्बन्धः [1]तथाप्येककर्मनिवेशित्वं तावत्तेषामभिमतम् । तेन यस्यैव दधिविशिष्टत्वं तस्यैव पयोविशिष्टत्वमपीष्यते । न च तच्छक्यते वक्तुं, अन्यसम्बद्धस्यान्यसम्बन्धानुपपत्तेः । यथा हि उपसर्जनीभूतमन्यसम्बद्धमन्येन न सम्बध्यते तथा प्रधानभूतमपि; को विशेषोऽन्य-सान्निध्ये उपसर्जनस्य प्रधानस्य वेति । **राद्धान्तस्तु सत्यमेवं यद्यसंबद्धस्य समर्पकं नास्ति वैश्वदेववत्** यथा विश्वेषां देवानां द्रव्यान्तरासम्बद्धानामवगतिर्नास्ति । यदि तथेहापि होम-स्य स्यात् तदा भवेदेव द्रव्यान्तरासम्बन्धः, **इहत्वग्निहोत्रं जुहोतीति सर्वानुबन्धसंबन्धितया**

---

(1) R. इतरथाप्यकर्म

कर्मान्तराणि, विकल्पपरिजिहीर्षयाऽवकल्प्यन्ते। तदेव तु कर्म जुहोति इति शब्दादवगम्यते, न कर्मान्तरम्; तस्मात्तत्रैव गुणविधिः, वचनाद्विकल्पश्च इति सिद्धम्।

---

असंबन्धमेवानुबन्धान्तरमवगम्यत इति वैषम्यम्। विकल्पोपन्यासस्तु फलप्रदर्शनं भेदावगमसिद्ध्यर्थम्। उक्तेन न्यायेन न भेदः सिद्ध्यतीति विकल्पसिद्धिः।

---

**असंब(न्ध)द्धमेवानुबन्धान्तरमवगम्यत इति वैषम्यम्।** अस्यार्थः—अग्निहोत्रं जुहोति इति होमस्तावत् द्रव्यान्तरावरुद्धो न प्रतीयते। तत्र च गुणविधानं शक्यत एव। उक्तं च तन्त्रवार्तिके—

अन्येनानवरुद्धेन गुणो यत्र विधीयते।
तस्मिन् गुणविधिः शक्य इति कर्म न भिद्यते ॥ इति

यथा तस्मिन् दध्नो विधिः शक्यः तथा पयसोऽपि। यदि दधिसम्बद्ध एव पयो विधीयते तदा भवेदशक्यत्वम्। तुल्यप्रमाणशिष्टास्तु गुणाः परस्परानपेक्षयैव विधीयन्त इति नात्र कर्मभेदः।

नन्वेवमपि एककल्पत्वेऽपि विकल्पः प्राप्नोतीति दूषणमनिरस्तमित्याह—**विकल्पोपन्यासस्तु फलप्रदर्शनं भेदावगमसिद्ध्यर्थम्। उक्तेन न्यायेन न भेदावगतिः सिद्ध्यतीति विकल्पसिद्धिः।** अस्यार्थः—भाष्यकारेण यत्सिध्यर्थं राद्धान्ते विकल्पः स्यादिति गदितं नासौ मूलयुक्तिः कर्मभेदे सति इदं फलभूतमित्यभ्युच्चयः। उक्तेन न्यायेन कर्मैक्ये स्थिते यदि विकल्पो भवति किं क्रियतां प्रमाणायत्तत्वादनुष्ठानस्य।

फलश्रुतेः। अत्र भाष्यकारेण [1]''यत्कर्मतत् फलवद् दृष्टं होमोऽपि कर्म तेनापि फलवता भवितव्यं' इति वदता होम एव फलवान् कर्मत्वात् कृषिवदिति सामान्यतोदृष्टानुमानमुपन्यस्तं, तथा विकल्पसमाद्या जातय उपन्यस्ताः होमोऽप्यसदृश इति विकल्पसमा जातिः। होमादपि नादृष्टमित्यपकर्षसमा। व्रीहिरेव भवेदित्युत्कर्षसमा। तत्र विकल्पसमालक्षणं—साधनधर्मयुक्तधर्मान्तरविकल्पात् साध्ये धर्मान्तरं प्रसजतः विकल्पसमा। उदाहरणं-क्रियाहेतुगुणयुक्तं किञ्चिद्गुरु यथालोष्टं किञ्चिल्लघु यथा वायुः एवं क्रियाहेतुगुणयुक्तं किञ्चित्क्रियावत् स्यात् यथा लोष्टं, किञ्चिदक्रियं यथा आत्मा, विशेषो वा वाच्य इति। अत्र हि साधनधर्मभूतक्रियाहेतुगुणयुक्ते दृष्टान्ते लोष्टवाय्वात्मके धर्मान्तरस्य गुरुलघुत्वादेः विकल्पात् साध्येपि सिषाधयिषितधर्मविकल्पं प्रसजतो दूषणवादिनो विकल्पसमा। एवमत्रापि कर्मत्वे सत्यपि किञ्चिल्लाङ्गलादिसाध्यं किञ्चिन्न एवं किञ्चित्फलवत् किञ्चिचाफलं स्यात्। दृष्टान्तधर्मं साध्ये समासजतः उत्कर्षसमा। उदाहरणं—यदि क्रियाहेतुगुणयोगादात्मा क्रियावान् वायुलोष्टवत्, एवं स्पर्शवानपि स्यात्। एवमत्रापि यदि क्रियात्वात् कृषिवत् फलवान होमः तर्हि दृष्टफलः तद्वत्स्यादिति। साध्ये धर्माभावं दृष्टान्तात्प्रसजतः अपकर्षसमा। लोष्टं खलु क्रियावत् न विभु(त्वात्) दृष्टं काममात्मापि क्रियावान्न विभुरस्त्विति। अत्रापि कृषिवदेव होमादपि नादृष्टं फलं स्यादिति। अपरा अपि चात्रजातयः शक्यन्ते योजयितुं किन्तु अशिक्षिताक्षपादमतानामायासो भवतीत्युपरम्यते। तथा असिद्धविरुद्धानैकान्तिकाभिधानं च भाष्यकारेण कृतम्। तत्र लाङ्गलादिसाध्यत्वादित्यसिद्धतोक्ता। द्रव्यगुणावपि फलवन्तौ दृष्टौ द्रव्यगुणत्वात् अवयवद्रव्यवत् अवयवसंयोगवच्चेति सप्रतिसाधनतया अनैकान्तिकत्वमुक्तम्। सप्रतिसाधनौ चानैकान्तिकावेक संशयहेतुत्वात्। एकान्तो हि निश्चय उच्यते स प्रयोजनं यस्य सः ऐकान्तिकः ऐकान्तिको न भवतीत्यनैकान्तिकः निश्चयविपरीतसंशयकारित्वादनैकान्तिकः धर्मविरुद्ध इवाधर्मः। अयं चोपरते कर्मणीत्यादेर्भाष्यस्यार्थः अस्य चेत्थमुपपादना। अवयवद्रव्यैरवयव्यारभ्यते। तेषां चारभमाणानां परस्परसंयोगा असमवायिकारणभूताः, असम्युक्तानामनारम्भकत्वात्। अतो द्रव्यगुणावपि फलवन्तौ। ननु चात्रापि कर्मव्यतिरेकेण संयोगानामनुत्पत्तेः अवश्यमवयवानां आश्रयणीयं कर्म। ततश्च तत एवावयव्युत्पत्तिरस्त्विति नास्ति सप्रतिसाधनता। अत्रोच्यते—उपरते कर्मणि अवयवैस्तत्संयोगैश्चावयव्यारभ्यते। सर्वत्रैव हि संयोगादुपरतिः

(1) p. 510

गणकामाधिकरणम् ॥

फलश्रुतेस्तु कर्म स्यात्, फलस्य कर्मयोगित्वात् ॥ २५ ॥

अग्निहोत्रं प्रकृत्य समामनन्ति, 'दध्नेन्द्रियकामस्य जुहुयात्' इत्येवमादि। तत्र संशयः, किमग्निहोत्रहोमाद्धोमान्तरं दध्यादिहोमः उत दध्यादेर्गुणात् फलम् इति। किं प्राप्तं ?

---

फलश्रुतेस्तु कर्म स्यात्। अथ किमर्थमिदमनुमानमुपन्यस्तम् ? पुनश्च विकल्पसमाद्या जातयः। असिद्धानैकान्तिकविरुद्धाभिधानस्यानवसर एव। भेदाभेदपरीक्षणं ह्यत्र प्रकृतम्। तच्च शब्दान्तरादिसमधिगम्यम्। किमत्रानुमानेन क्रियते तद्दूषणेन वा।

---

कर्मणोऽपि नाशहेतोः भावात्। तदुक्तं **काश्यपेन** 'कार्यविरोधि कर्म' इति। कर्मणो हि संयोगविभागौ वेगाख्यश्च संस्कारः कार्येण। तत्र संयोगाख्येन कार्येणं कर्मणो विरोधः। तेन संयोगादुपरते कर्मणि संयोगोत्तरकालं द्रव्यमुत्पद्यमानं न कर्मकारणकम्। एतच्च प्रपञ्चितमेव **पदार्थविद्भिः** "विरुद्धता चेष्टविघातकारित्वलक्षणा सा चोक्ता व्रीहिरेव भवेत" इति। व्रीहिभवने हि गुणकर्मता स्यात्। गुणः कर्म च न नियोगस्य विषयः। अविषयाच्च न फलमित्युक्तम्। यस्य च शब्दस्यार्थेन फलं साध्यते तेनापूर्वं कृत्वा नेतरस्याक्षेप इति[1]। तस्मादिष्टां फलसाधनतामेव विहन्तीति इष्टविघातकारित्वलक्षणा विरुद्धता च। तदिदं सर्वमाक्षिपति—**अथ किमर्थमिदं**[2] सामान्यतो दृष्टमनुमानमुपन्यस्तमिति। **पुनश्च विकल्पसमाद्या जातयः** किमर्थमुपन्यस्ताः। **असिद्धानैकान्तिकविरुद्धाभिधानस्य चानवसर एव**। शास्त्रभेदाभेदसिद्ध्यर्थमनुबन्धभेदाभेदपरीक्षणं **ह्यत्र** पादे **प्रकृतम्**। **तच्च** अनुबन्धस्य भिन्नत्वं **शब्दान्तरादिसमधिगम्यम्**। **किमत्रानुमानेन** पूर्वपक्षवादिनोऽनुबन्धस्य भिन्नत्वं साधयतः उपन्यस्तेन **क्रियते**। **तद्दूषणेन** किं राद्धान्तवादिनः। तस्य ह्येतदेव

---

(1) R. नान्यथेति (2) R. किमिदं

होमान्तरमिति। कुतः?। 'फलश्रुतेः', फलमिह श्रूयते, तच्च कर्मणो न्याय्यम्।

किं? दृष्टं हि कर्मणः फलम् कृष्यादितो व्रीह्यादि। नेति ब्रूमः, न ह्येतत् दृष्टेनानेन सिध्यति, यदि दर्शनं हेतुः फलज्ञाने, कृष्यादौ पदार्थे तद्दर्शनं, न होमे। अथ कृषौ दृष्टमन्यत्रापि भवति। द्रव्यादपि प्रसज्यते। अथ कृषिसदृशात भवति इत्युच्यते, कृषिसदृशो होमः क्रियात्वात्, न द्रव्यं,

---

तस्मादसंबद्धमेवेदं ग्रन्थखण्डलकं कर्मभेदाभेदविदो मन्यन्ते। अतो यदेव वाक्यभेदभयात् कर्मान्तरत्वमुक्तं तदेव वक्तव्यं पूर्वपक्षे। न पुनः प्रमाणान्तरमुपन्यसनीयम्। अत्रोच्यते—ननु न श्रुतं भवता शास्त्रभेदप्रतिपत्तिरनेन लक्षणेन क्रियत इति। न च शास्त्राच्छास्त्रभेदोऽवगम्यते। किं तर्हि? अनुबन्धान्यत्वावगम्य एव। तस्य चान्यत्वं प्रमाणान्तरावगम्यमेव। तच्चेदं दध्नाऽनुबन्धं कर्म न कर्मशास्त्रं भिनत्तीत्युक्तम्। कर्मवत्तया चाकर्मणि विधानमुक्तम्।

---

वक्तुं युक्तम् नायमनुमानस्य विषय इति। तस्मादसंबद्धमेवेदं ग्रन्थखण्डलकं [1]भेदाभेदविदो मन्यन्ते। अतो यदेव वाक्यभेदभयात् कर्मान्तरत्वमुक्तं तदेव वक्तव्यं पूर्वपक्षे गुणाद्धि कर्मभेदः तस्मिन् पक्षे भवति [2]प्रकरणान्तराद्वा भवति न पुनः प्रमाणान्तरमुपन्यसनीयम। अत्रोच्यते—ननु न श्रुतं भवता शास्त्रभेदप्रतिपत्तिरनेन लक्षणेन क्रियत इति। तथापि किमित्याह—न हि शास्त्राच्छास्त्रभेदोऽवगम्यते। किं तर्हि? अनुबन्धान्यत्वावगम्य एव। तस्य चान्यत्वं प्रमाणान्तरावगम्यमेव। तच्चेदं दध्नाऽनुबद्धं कर्म न शास्त्रं भिनत्तीत्युक्तम आघाराग्निहोत्राधिकरणे। कर्मवत्तया चाकर्मणि गुणे विधानमित्युक्तं

---

(1) G. भेदविदो (2) G. प्रकरणाद्वा

असदृशं हि तत् इति। होमोऽप्यसदृशः, मन्त्रदेवतादि-साधनत्वाद्धोमस्य, लाङ्गलादिसाधनत्वाच्च कृषेः ; त्यागात्मकत्वाद्धोमस्य, पाटनात्मकत्वाच्च कृषेः। अथ किञ्चित् सादृश्यं गृह्यते। द्रव्यस्यापि सदनित्यमित्येवमादि किञ्चित् सादृश्यमस्ति। अथ द्रव्यादन्यत् सदृशतरमस्ति इति कृत्वा न द्रव्यं सदृशम् इत्युच्यते। होमादप्यन्यत् कृषेः सदृशतरमस्ति दृष्टार्थम् इति कृत्वा होमोऽप्यसदृशः स्यात्। नचैतत्सिद्धं, यत् क्वचित् दृश्यते, तदन्यस्मिन् सदृशमात्रे अदृष्टमपि भवितु-

---

एवं चेत फलानुबन्धेऽपि कर्मापन्नमेव गुणरूपं न स्वतः फलेन संबन्धयितुं शक्यते। अतः कर्मणा फलसंबन्धात् कर्मान्तरमिदं फलान्तरानुबन्धादिति पूर्वपक्षी मन्यते।

---

तत्रैव। एकग्रन्थेनाह—एवं चेत्फलानुबन्धेऽपि कर्मापन्नमेव गुणरूपं विधेयं न स्वतः फलेन संबन्धयितुं शक्यते। [1]गुणस्वरूपफलेपि कर्मैव गुणानुबद्धं विधेयं, न पुनः केवलं गुणरूपम्। अतः कर्मणा फलसंबन्धात् कर्मान्तरमिदं फलान्तरानुबन्धादिति पूर्वपक्षी मन्यते।

अत्र हि दधिसाध्यो होम एव फलं प्रति विधीयते। एवं चेद्विशिष्टस्यैव कर्मणो विधीयमानत्वात् कर्मान्तरत्वम्। ननु वाजपेयवद्वाक्यभेदः प्राप्नोति। न प्राप्नोति। विशिष्टविधौ परं मत्वर्थलक्षणा न पुनरप्रसिद्धलक्षणा[2]। दधिपदस्य हि वाजपेयवत् कर्मनामतया अन्यतोऽप्रसिद्धकल्पना सा चायुक्ता। लौकिकी हि लक्षणा। हठोऽप्रसिद्धकल्पना। वाजपेये तु सुराग्रहविधानात् पेयभूतवाजसंबन्धात् प्रवृत्तिनिमित्तसंबन्धेन युक्तं नामधेयत्वम्। यदि पुनरत्र प्रकृतमेव कर्म फलं प्रति विधीयते गुणसंबन्धोऽविवक्षितः स्यात्। अथ गुणफल-

---

(1) R. गुणरूपं फलेपि (2) G. कल्पना

मर्हतीति, यद्धि यस्य कारणभूतं दृष्टं सिद्धे, तच्चेत्साध्येऽपि कारणभूतमित्यवगम्यते, भवति तत्तस्य साधकं, यन्न ज्ञायते कारणभूतमिति, न तत् सदृशमपि साधकं; तस्मात् सदृश-

---

एवमप्यनुमानभाष्यं कथं? इत्थमिदं इदमनुमानभाष्यम्। किं कार्यतः कर्मापत्तिं द्रव्याणां मन्यते भवान्? यदि हि कार्यतः कर्मापत्तिः स्यात् अकर्मभूतस्य कार्ययोगो न विद्यत इति भवति फलान्तरानुबन्धात् कर्मान्तरम्। अथ तु नियोगवशात् कर्मापत्तिरवसीयते यावन्नियोगविषयैव सा भवति। न हि कार्यतः सा शक्याऽवगन्तुम्।

---

संबन्धोऽपि विवक्ष्यते तदा फलसंबन्धात् कर्मान्तरत्वमेव, अन्यथा हि फलपदमनर्थकं स्यात्। अथ दधिसाध्यतया प्रकृतमेव कर्म फलं प्रति विधीयते तदा फलार्थतया दध्नो विधानं न स्यात्। अविहिते च तस्मिन् फलार्थितया दध्ना होमं न कुर्यात्; तत्र पुनरपि दधिपदानर्थक्यमेव। तस्मात् तद्विशिष्टं कर्मान्तरं विधीयत इति सिद्धम्।

एवमप्यनुमानभाष्यं कथम्? उत्तरं--इत्थमिदं इदमनुमानभाष्यम्। किं कार्यतः कर्मापत्तिं द्रव्याणां मन्यते भवान्। राद्धान्त्येव पूर्वपक्षिणं पृच्छति यदि कार्यत इति। इन्द्रियादेः फलाय कर्मापत्तिं कर्मरूपानुप्रवेशितां भवान् मन्यते। एकग्रन्थेनाह—यदि कार्यतः कर्मापत्तिः स्यात् तदा भवति फलान्तरानुबन्धात् कर्मान्तरम् अकर्मभूतस्य कर्माननुप्रविष्टस्य द्रव्यस्य कार्ययोगो न विद्यत इति हेतोः। अथ तु नियोगवशात् तदापत्तिरवसीयते तदा यावन्नियोगविषयैव सा भवितुमर्हति। गुणानुरक्तकर्मविषयत्वेनापि नियोगस्याविरोधात्। गुणानुरागादेव फलं स्यात् न कर्मणः। ततश्च[न]कर्मान्तरत्वसिद्धिः। तेन त्वया कार्यत एव कर्मापत्तिराश्रयणीया। सा चायुक्तेति गूढोऽभिप्रायः। पूर्वपक्षी तु विदिताभिप्राय आह—न हि कार्यतः सा कर्मापत्तिः शक्याऽवगन्तुम्। कस्मादि-

मपि साधकमसाधकं वेति परीक्षितव्यमिति। अथ यत्कर्म तत् फलवत् दृष्टं, होमोऽपि कर्म, तेनापि फलवता भवितव्यम् इति। उपरते कर्मणि द्रव्याणां तत्संयोगानाञ्च द्रव्यान्तरं फलं दृष्टमिति द्रव्यमपि फलवत् स्यात्। अपि च कृषे-र्नादृष्टमिति तत्सादृश्याद्धोमादपि नादृष्टं भवेत्, कृषिसा-

---

शेषवदनुमानगम्यो हि कार्यकारणभावः। तेन च कारणमात्रावगतिरेव न पुनर्विशेषस्यैव कारणतावगतिः। ननु च सामान्यतो दृष्टं कर्मण एव फलं प्रति कारणतामवगमयतीत्यभिप्रायः कृष्यादिषु दर्शनात्। तदि-दानीं सामान्यं किमिति न विद्मः सादृश्यं तावत् सुसदृशेन व्यवधीयते

---

त्याह—शेषवदनुमानगम्यो हि कार्यकारणभावः। शेषः कार्यं तद्वति कारणे यदनुमानं तच्छेषवदनुमानं तेन कार्यकारणभावोऽवगम्यते। कार्याद्धि यदनुमानं कारणविषयं प्रवर्तते तेन यदवगम्यते तदेव तस्य कारणमिति कल्प्यते। यदि हि तत् तस्य कारणं न स्यात् तदा कथं तदनुमीयते। तथापि किमित्याह—तेन च कारणमात्रावगतिरेव न पुनर्विशेषस्यैव कर्मण एव कारणतावगतिः द्रव्यगुणयोरपि कारणत्वाविरोधात्। ननु च सामान्यतो दृष्टं कर्मण एव फलं प्रति कारणतामवगमयति कृष्यादिषु दर्शनात् होमाख्यं कर्मैव फलवत् कर्मत्वात् कृषिवदिति। एतदपि सामान्यतो दृष्टं दूषयति—तदिदानीं सामान्यं किमिति न विद्मः होमस्य च कृषेश्च किं सामान्यमिति न विद्मः यद्दर्शनात् कृषौ दृष्टं फलसाधनत्वं होमेऽप्यनुमीयेत। ननु माभूत् सामान्यं सादृश्यं तु भविष्यतीत्यत्राह—सादृश्यं तु सुसदृशेन व्यवधीयते। अस्यार्थः— न होमः कृषेः सदृशः शक्यते वक्तुम् अन्यस्य सुसदृशस्य दृष्टार्थस्य[दर्शनात्]। [फल]कारणहोमस्य च कृषेश्च किं तत् सामान्यमिति न विद्मः भिद्यमानत्वात्। सुसदृशे हि प्रतीते मन्दसादृश्ययुक्तस्य सादृश्यमपैति। एतच्च सादृश्यस्य गमकत्वमङ्गीकृत्योक्तम्। परमार्थतस्तु न सादृश्यं

दृश्याद्वा व्रीहिरेव भवेत्, नेन्द्रियम्; तस्मान्नैवंजातीयकेष्वेतत् भवति दृष्टाददृष्टसिद्धिः इति। कथं तर्हि होमान्न्याय्यं फलमिति। उच्यते, शब्देनावगम्यते तत्फलं, यतः फलमिति शब्द आह, ततो न्याय्यं, होमाच्च फलमिति श्रुत्या शब्देन गम्यते, दध्नः फलम् इति वाक्येन, श्रुतिश्च वाक्याद्-

---

अथ विशेषमात्रं, कृष्यन्तरमेव प्राप्नोतीति। अथ साधनाद्यनुबन्धकृतं तत्रापि द्वयमापतति साधनविशेषो वाऽनुबन्धतया गृह्यते? साधनमात्रं वा? विशेषग्रहणे फलदेवतयोरन्यत्वान्न सामान्यावगतिः। अथ सामान्यं, न, क्रियात्वमात्रमेव तत्र अवशिष्यते। तस्मिंश्च सामान्येऽनैकान्तिकत्वं

---

गमकं; अथ विशेषमात्रं, कृषिहोमयोर्नास्त्येव सामान्यमिति। दूषयति—होमोऽपि कृष्यन्तरमेव प्राप्नोति। न च होमः कृषिविशेषतया लोके प्रतीयते। अथ साधनाद्यनुबन्धकृतं सामान्यं, साधनं साध्यं च तेन सामान्यमस्तीति। दूषयति—तत्रापि द्वयमापतति साधनविशेषो वा अनुबन्धतया वाऽत्र परिगृह्यते, साधनमात्रं वा वाक्यस्य विशेषग्रहणे न सामान्यावगतिः फलदेवतयोः कृषिसाधनाल्लाङ्गलादेः तत्साध्यव्रीह्यादेरन्यत्वात्। अथ सामान्यं साधनं, एतदुक्तं भवति—कारकसाध्यत्वमिति। दूषयति—न क्रियात्वमात्रमेव तत्रावशिष्यते। कारकसाध्यत्वं हि क्रियात्वमेव। तस्मिंश्च सामान्येऽनैकान्तिकत्वं विरुद्धता च। द्रव्यगुणयोरपि द्रव्यगुणौ कार्यौ दृश्येते। द्रव्यं हि द्रव्यस्य गुणस्य च समवायिकारणम्। तथा गुणोऽपि द्रव्यस्य गुणस्य चासमवायिकारणम्। गुणानां तु गुणवत्ताऽसमवायिकारणत्वं प्रचुरमेव। संयोगाख्यो हि गुणः द्रव्यस्यासमवायिकारणं रूपादयः कार्यद्रव्ये रूपादिकमारभन्ते। अग्निसंयोगाच्च[पाकजरूपादयः] इत्यादि वस्तुमतिबहुत्वादशक्यम्। तेन सप्रतिसाधनतालक्षणानैकान्तिकता। सा चादावुक्ता।

बलीयसी। तस्मात् होमात्फलम् इति न्याय्यं, दध्नः फलमिति चान्याय्यम्।

अपि च दधि उभयमसमर्थं कर्तुम्, फलं साधयितुम् होमञ्च। ननु कम्बलनिर्णेजनवत् एतद्भविष्यति, निर्णेजनं हि उभयं

---

विरुद्धता च सर्वत्र गुणकर्मावगतेः। तस्मान्न कार्यतः कर्मापत्तिर्द्रव्याणां शक्यतेऽवगन्तुम्। किं तर्हि? नियोगत एव भावापत्तिरनुगमनीया, स चायं नियोगो दधिसाधनं होममेव फलसम्बन्धितयाऽवगमयतीति कर्मभेदः। अन्यथा हि होमासंबन्धान्न दध्नः प्राप्नोति। एवं चात्र दध्नः कर्मापत्तिः प्राप्नोति। न च सा तस्माद्वाक्यादवसीयते। अनवगम्यमाना फले न संबध्यत इत्युक्तम्।

---

**विरुद्धता च सर्वत्र गुणकर्मावगतेः।** एतच्च प्रागेव कृतविवरणम्। **तस्मान्न कार्यतः कर्मापत्तिर्द्रव्याणां शक्यतेऽवगन्तुमिति** पूर्वपक्षवाद्युपसंहारः। वादिनोपसंहृते राद्धान्ती पृच्छति—**किं तर्हि?** कर्मापत्तिः। उत्तरं—**नियोगत एव भावापत्तिरनुगमनीया** नियोगस्वभाव एवायं येन भावार्थ एव तस्य विषयो भवति नान्य इति नियोगस्वभावपर्यालोचनयैव भावानुप्रवेशिता द्रव्याणामभिधातव्या। नान्यथा। कथं तर्हि कर्मान्यत्वमित्याह—**स चायं नियोगः होममेव दधिसाधनं फलसंबन्धितयाऽवगमयतीति** तस्यैव विषयत्वमिति **कर्मभेदः। अन्यथा हि** यदि कर्मभेदो न स्यात् **होमासंबन्धान्न दध्नः** कर्मापत्तिः **प्राप्नोति।** अस्यार्थः—यदि प्रकृतमिदं कर्म भवेत् तदा तस्य फलसंबन्धपरमिदं वाक्यं भवेत्। ततश्च दध्नेति पदं होमेनासंबध्यमानं पृथग्वाक्यं स्यात्। ततस्तत्रापि न केवलस्य फलसंबन्ध इति कर्मापत्तिरनुसरणीया। न चासाववगम्यते। **अनवगम्यमाना च फले, न संबध्यत इत्युक्तम्।** अथ प्रकृतमेव कर्म लौकिकक्रियाकारकसंबन्धाश्रयणेन दध्ना कारकभूतेन

करोति, कम्बलशुद्धिं पादयोश्च निर्मलताम्। न ब्रूमः एकस्यो-भयं प्रयोजनमभिनिष्पादयितुं सामर्थ्यं नास्ति इति, किं तर्हि ? फले गुणभूतं दधि होमे च इत्येकं वाक्यं वदितुमसमर्थमिति ; यदि फलं दध्ना कुर्यादिति ब्रूयात्, न दध्ना होमम् इति, अथ दध्ना होमं साधयेत् इति ब्रूयात्, न फलमिति ; उभयवचने

---

किमिति वा दध्ना होमो निर्वर्त्यते यदि न होमार्थं दधि स्यात्। तस्मात् पदद्वयान्वित एवायमर्थः फलेन संबध्यत इति कर्मान्तरत्वम्। अन्यथा ह्याश्रितत्वात्प्रयोगस्येत्ययुक्तिः स्यात् यदि केवलस्यापि फलेन संबन्धः स्यात्। अतो(धातु)विशिष्टभावानुप्रवेशितैव फलसंबन्धे हेतुः। कम्बल-निर्णेजनोपन्यासस्तु न कार्यतः कर्मापत्तिरिति प्रकटयति। कथं तर्हि ? विनियोगात् कार्यमिति।

---

विशिष्टं फले विधीयते तत्राह—**किमिति वा दध्नाहोमो निर्वर्त्यते यदि न होमार्थं दधि स्यात्।** न क्रियाकारकसंबन्धमात्रावगमेनैदमर्थ्यम्। न चेदमर्थव्यतिरेकेण दध्न उपादानं अनङ्गत्वात्। अङ्गे हि कर्मतः व्यापन्ने वैगुण्यमैदमर्थ्यं च विधिगम्यम्। यदि होमस्य प्रकृतस्य फलसंबन्धः तस्य च होमस्य दधिसंबन्ध इत्याश्रीयते ततो वाक्यभेदः **तस्मात् पदद्वयान्वित एवायमर्थः फलेन संबध्यत इति कर्मान्तरम्। अन्यथा ह्याश्रि-तत्वात् प्रयोगस्येति।** येयं भावार्थानां नियोगविषयत्वे युक्तिः सा **अयुक्तिः स्यात्। यदि केवलस्यापि** द्रव्यस्य **फलेन संबन्धः स्यात्। अतो विशिष्टभावानुप्रवेशितैव** द्रव्यस्य **फलसंबन्धे हेतुः।** ननु कम्बलनिर्णेजनवदुभयार्थताशङ्का न युक्ता, यस्माच्छब्दैकसमाधि-गम्यमेतत्। न चोभयं शब्दोऽवगमयितुमलम् इत्यत्राह—**कम्बलनिर्णेजनोपन्यासस्तु न कार्यतः कर्मापत्तिरिति प्रकटयति।** कार्यतः कर्मापत्तिर्नास्ति, किन्तु नियोगत इति यदुक्तं तदेवानेन चोद्यपुरस्सरं स्पष्टीकृतम्।

भिद्येत वाक्यम्, अभिन्नश्चेदमुपलभ्यते; तस्मात् न गुणात्फलमिति अग्निहोत्रहोमाद्दधिहोमः कर्मान्तरमिति।

अतुल्यत्वात्तु वाक्ययोर्गुणे तस्य प्रतीयेत ॥ २६ ॥

तुशब्दात्पक्षो विपरिवर्तते, न कर्मान्तरं, किन्तु गुणात्फलमिति। कथं?। अतुल्ये ह्येते वाक्ये। 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यत्र कर्मसमभिव्याहृतं फलं स्वर्गकामो होमेन कुर्यात् इति, 'दध्नेन्द्रियकामस्य जुहुयात्' इति गुणसमभिव्याहृतं; न हि अत्र होम इन्द्रियाय कर्तव्यः इति प्रतीयते, किं तर्हि दध्ना होम इन्द्रियकामस्य इति। होमस्य दधिसम्बन्ध इन्द्रियाय, न होमस्योत्पत्तिः, य इन्द्रियकामः स्यात् स दध्ना होमं कुर्यात् इति। कतमोऽत्र शब्दः पुरुषप्रयत्नस्य वक्तेति? जुहुयात् इति ब्रूमः।

---

अतुल्यत्वात्तु वाक्ययोर्गुणे। अत्राभिधीयते—सत्यं कर्मतामापन्नस्य गुणस्य विधानम्। न पुनः कर्मार्थतयैवेति। कस्मात्? क्रियाकारक-

---

अतुल्यत्वात्। अत्राभिधीयते। सत्यम्। कर्मतामापन्नस्य गुणस्य विधानं न पुनः कर्मार्थतयैवेति। अस्यार्थः—दधिसाध्यो होम एव फले विधीयते [1]स च होमः प्रकृत एव। न च वाक्यभेदः दध्नो विधानाभावात्। लौकिकेन हि क्रियाकारकसंबन्धेन दधिहोमौ परस्परसंबद्धौ, नैदमर्थ्येन। यद्यपि च होमं प्रति न दध्नो विधानं तथापि फलार्थिना दध्ना होमः कर्तव्यः। दध्यनुरागस्य होमगतस्य अन्यथा संपत्त्यभावात्। तस्मान्न कर्मार्थतया दध्नो विधानम्। अविधाने वा कथं कर्मापत्तिः? उत्तरम्—क्रियाकारक-

(1) G. न च होमः

ननु श्रुत्या होमसम्बद्धमेष पुरुषप्रयत्नं वदति, वाक्येन दधिसम्बन्धम्, न च वाक्यं श्रुतिमपबाधितुमर्हति। न च युगपदुभयसम्बन्धो न विरुध्यते, वाक्यं हि तथा भिद्येतेति। अत्रोच्यते, ये भवदीयं पक्षमाश्रयेरन्, ते श्रुतिमपबाधेरंस्तराम्, अस्मदीये तु पुनः पक्षे जुहुयादिति धात्वर्थः केवलो-

---

लक्षणं हि संबन्धमाश्रित्य द्रव्याणां तदापत्तिः। न पुनः तादर्थ्यं, अकर्मणः अकारकत्वप्रसङ्गात्। अतः फलार्थतैव कारकभूतस्य दध्नः प्रतीयते। होमार्थत्वे वाक्यभेदस्त्वयैवोक्तः। विशिष्टविधानं किमिति नाश्रीयते? अग्निहोत्रं जुहोतीति होमावच्छिन्नस्य कर्मणः प्राप्तत्वात् दध्यनुबन्धस्य चाप्राप्तत्वात् तावता इन्द्रियकामाधिकारनिर्वृत्तेः न शक्यते प्राप्तिर्बाधितुम्। ननु चापृथगवगमादनुबन्धद्वयस्य न पृथक्त्वेनावच्छेदः शक्यतेऽवगन्तुम्।

---

लक्षणं हि संबन्धमाश्रित्य द्रव्याणां तदापत्तिः कर्मणि संबन्धः न पुनः तादर्थ्यमाश्रित्य। यदि हि तथा स्यात् तदा [1]अकर्मणः क्रियानुप्रवेशो न स्यात्। तस्य क्रियां प्रति तादर्थ्याभावात्। तदनुप्रवेशाभावे चाकारकत्वप्रसङ्गात् तदाह—अकर्मणोऽकारकत्वप्रसङ्गात् इति। अतो होमार्थत्वेन विधानाभावात् फलार्थतैव होमे कारकभूतस्य दध्नः प्रतीयते ननु स्यात् फलार्थता, होमार्थत्वमप्यपरं भवतु इत्यत्राह—होमार्थत्वेपि वाक्यभेदस्त्वयैवोक्तः। विशिष्टविधानं किमिति नाश्रीयते? उत्तरम्—विशिष्टविधानं नाश्रीयते अग्निहोत्रं जुहोतीति होमावच्छिन्नस्य कर्मणः पुरुषप्रयत्नस्य प्राप्तत्वात्। अनुबन्धस्य चाप्राप्तत्वात् तावता चेन्द्रियकामाधिकारनिर्वृत्तौ न शक्यते प्राप्तिर्बाधितुम्। ननु चापृथगवगमादनुबन्धद्वयस्य न पृथक्त्वेनावच्छेदः शक्यतेऽवगन्तुम्। होमस्य दध्नश्च परस्परसबन्धाच्च

---

(1) G. कर्मणः

ऽपबाधितो भवति, युष्मदीये तु कृत्स्न एव 'दध्ना' इति शब्दः; तं चाप्रमाद्यन्तः समामनन्ति इति गम्यते; नचैतत्प्रमत्तगीतमित्युक्तं, 'तुल्यं हि साम्प्रदायिकम्' इति। तस्मान्न कर्मसमभिव्याहृतं फलं, गुणसमभिव्याहृते तु न कश्चित् प्रमादपाठः, अवश्यं हि जुहुयात् इति दधीन्द्रियकामयोः सम्बन्धविधानार्थं वक्तव्यं भवति। ननु उच्यमानेऽपि न केवलः करोत्यर्थोऽवगम्यते, केवले न वचःप्रयोजनं, स च होमसम्बद्धः, तस्मात् असमञ्जसमिति। नेति ब्रूमः, होमसम्बद्धोऽप्यसौ करोत्यर्थ एव, केवलं तु अस्य होमसम्बन्धे विशेषः, न तु करोत्यर्थतां बाधते, इन्द्रियकामस्य होमसम्बद्धं प्रयत्नं दधिसम्बद्धं कुर्यात् इति। नन्वेवं सति स एव दोषः, होमसमभिव्याहृतं फलम् इति। उच्यते। जुहुयादिति शब्दस्यै— तत्सामर्थ्यं, यत् होमविशिष्टं प्रयत्नमाह, नत्वत्र होमः

---

उच्यते। किमत्र पृथक्त्वेनावच्छेदः करिष्यति यावदप्राप्तं हि नियोगस्य विषय इत्युक्तम्। कर्मापत्तेश्च जुहोतिर्विषयः। तस्माज्जुहोत्यवच्छिन्नव्यापाराश्रितो दधिव्यापारः फलया चोद्यते।

---

शक्यः पृथक्त्वेनावच्छेदः प्रत्येतुम्। पृथक्त्वेन चानवगमे कथमेतद्दधिमात्रं विधीयते होमश्च प्राप्तत्वान्न विधीयत इति। उच्यते। किमत्र पृथक्त्वेनावच्छेदः करिष्यति यावदप्राप्तं हि नियोगस्य विषय इत्युक्तम्। नन्वेवमपि दध्येवाप्राप्तमिति तदेव विषयो नियोगस्येत्यापतितम्। तत्राह—कर्मापत्तेश्च जुहोतिर्विषयः प्राप्ताप्राप्तविवेकेन दध्नो नियोगविषयत्वं, अवगतिदशायां तु होमस्यैव। तस्माज्जुहोत्यवच्छिन्नव्यापाराश्रितो दधिव्यापारः फलाय चोद्यते। ननु दधिव्यापारो दध्येवाश्रितः अतः कथं होमाश्रित

साधनत्वेन विधीयते, साध्यत्वेन विशिष्टस्तु प्रयत्नो वाक्येन दध्याश्रितोऽवगम्यते। अत एव च वृत्तिकारेणोक्तं, 'होम-माश्रितो गुणः फलं साधयिष्यति' इति, यथा राजपुरुषो राजानमाश्रितो राजकर्म करोति इति। तस्मात् दध्नः फलं, य इन्द्रियकामः, स दध्ना कुर्यात् इन्द्रियमिति।

---

किमिदं आश्रित इति? कारकतामापन्न इत्यर्थः। तस्मात् होमे कारकं फलाय चोद्यते। केन पुनः फले(न)विनियुक्तं तत्? कर्म-वाक्येन विनियुक्तम्। अधिकारानुपपत्त्येति चेत्। तुल्यमत्रापि। अत एवोचे वृत्तिकारेणेति। वृत्तिकारवचनं किंपरं भाष्यकारस्य? इदं-परम्। कारकापत्तिरेवाश्रयशब्देनोच्यते नार्थान्तरमिति प्रदर्शयितुम्। अत एवाश्रितत्वात्प्रयोगस्य इत्यत्रापि अयमेवार्थः।

---

इत्युच्यते इत्याशयेनाह—**किमिदमाश्रित इति कारकतामापन्न इत्यर्थः**। कारककोटि-निविष्टत्वात् कारकतामापन्न इत्युक्तम्। **तस्माद्धोमे कारकं फलाय चोद्यते। केन पुनः फले** दध्यादि **विनियुक्तम्** येन फलाय चोद्यत इत्युच्यते। उत्तरं—**कर्मवाक्येन**। अयमाशयः—येन कर्म विनियुज्यते तेन दध्याद्यपीति। **अधिकारानुपपत्त्येति चेत्**। कामिनोऽधिकारः फलसिद्धिं विनाऽनुपपद्यमानः फलसिद्धिमवगमयतीति चेत्। दूषयति—**तुल्यमत्रापि**। "**अत एवोचेवृत्तिकारेण**" इति भाष्यमाक्षिपति—**वृत्तिकारवचनं किंपरं भाष्यकारस्य?** समाधत्ते—**इदंपरम्। कारकापत्तिराश्रयशब्देनोच्यते नार्थान्तरमिति प्रदर्शयितुं** वृत्तिकारवचने आश्रितशब्दं व्याख्यातुं एतदुक्तम्। अन्यथा कश्चिद्वृत्ति-कारमतेन विरोधमाशङ्केत इति। इदं च वाक्यं लिङ्गेनापकृष्य व्युत्क्रमेण व्याख्यातम्। यत एव कारकतापत्तिराश्रितशब्दार्थः **अत एव आश्रितत्वात्प्रयोगस्येत्यत्राप्ययमेवार्थः**। भावार्थानां प्रयोगः द्रव्यगुणाभ्यामाश्रितः तत्र द्रव्यगुणौ कारकतामापन्नौ इति यावत्।

कथमिति । अनयाऽग्निहोत्रेतिकर्तव्यतयेति । कुत एतत् ?

---

बाध्यतेतरां श्रुतिरिति[1] । कः पुनरत्र तरबर्थः । एकत्र होमो विधीयते । अन्यत्र दध्यर्थः । न कश्चिदतिशयः पक्षद्वयेऽपि दृश्यते । उच्यते । अयमस्ति विशेषः दधिपदे हि बाध्यमाने होमपदमपि बाधितं भवति । अतः तत्संबन्धेन हि तद्विधेयमित्युक्तम् । आश्रितत्वात्प्रयोगस्येति । तस्मात् सम्बन्धिबाधे संबन्ध्यन्तरबाधः । सोऽयं तरबर्थः होममात्रबाधे तु न किञ्चिद्बाधितम् । केवलस्यानवगमात् । प्राप्तिमात्रतया हि केवलावगतिः । कथमिति ? अनयाऽग्निहोत्रेति-कर्तव्यतयैवेति ।

---

अत्र भाष्यं [1]"ये भवदीयं पक्षमाश्रीयेरन् ते श्रुतिमपबाधेरंस्तराम्" इति । कः पुनरत्र तरबर्थः ? एकग्रन्थेनाह—एकत्र होमो विधीयते । अन्यत्र दध्यर्थः न कश्चिदतिशयः पक्षद्वयेऽपि दृश्यते । उच्यते ; अयमस्ति विशेषः-दधिपदे हि बाध्यमाने होमपदमपि बाधितं भवति । अतस्तत्संबन्धेन हि तद्विधेयमित्युक्तम्—आश्रितत्वात्प्रयोगस्येति । यस्य हि मते दध्नेति बाधितं तस्य मते जुहोतीत्यपि बाधितमेव होममात्रस्य प्राप्तत्वेनाविधेयत्वात् दध्यनुबन्धस्य चाप्राप्तत्वात तदनुरक्त एव होमो विधीयते । यदि होमः प्राप्तः दधिवा अप्राप्तं तदेव किमिति न विधीयत इत्यत्राह—आश्रितत्वात्प्रयोगस्येति। तस्मात् संबन्धिबाधे संबन्ध्यन्तरबाधः सोऽयमतिशयः तरबर्थः। होममात्रबाधे तु न किञ्चिद्बाधितम्। केवलस्यानवगमात्। होममात्रशब्देन दध्यनवच्छिन्नो होमोऽभिमतः तस्मिन् बाधितेऽपि न कश्चिद्बाधितः केवलस्यानवगमात्। अवगतत्यागो हि बाधः। न च केवलावगतिः तेन केवलत्यागे न किञ्चित्त्यक्तम्। कथं तर्हि केवलोऽवगम्यत इत्यत्राह—प्राप्तिमात्रतया हि केवलावगतिः न विधेयतया। प्राप्तिचिन्तायां केवलं प्राप्तमित्युच्यते विधेयस्तु दध्यनुबन्ध एव। कथमिति अनया अग्निहोत्रेतिकर्तव्यतयेति भाष्यमनुभाषितम्।

---

(1) P. 515

फलसाधनस्य दध्नः इतिकर्तव्यताकाङ्क्षत्वात्, अस्याश्चेतिकर्तव्यतायाः सन्निधानात् चोदनालिङ्गस्य च जुहोत्यर्थस्य दर्शनात्

---

ननु चोपरितनषट्कचिन्तेयम् । किमित्यत्रोपन्यस्यते ? अस्त्यत्रोपन्यासकारणम् । किं तत् ? इदं तत् ? गुणफलसंबन्धे हि इतिकर्तव्यतासंबन्धो न शक्यते अवधारयितुम् । न चेतिकर्तव्यता-शून्योऽधिकारविधिः । कुत एतत् ? अधिकारनिष्ठो हि विधिः नियोगार्थ-साध्यतयाऽवगम्यते । न च साध्यमनितिकर्तव्यताकमस्ति, अननु-गृहीतस्य करणत्वानुपपत्तेः । सर्वदा हि करणं करणं स्यात् । कथं पुनः न शक्यतेऽवधारयितुम् । उपदेशतस्तावन्न संभवति । नित्यानित्यसंयोग-विरोधात् । अतिदेशस्तर्हि भवतु ? सोऽपि नोपपद्यत इत्यभिप्रायः । कथं नोपपद्यते ? धात्वर्थस्यान्यप्रयुक्तत्वात् ।

---

आक्षिपति—ननु चोपरितनषट्कचिन्तेयम् किमित्यत्रोपन्यस्यते । अस्त्यत्रो-पन्यासकारणम् । किं तत् ? इदं तत् । गुणफलसम्बन्धे हि इतिकर्तव्यतासंबन्धो न शक्यते-ऽवधारयितुम् । माऽवधारि तथापि किमित्याह—न चेतिकर्तव्यताशून्योऽधिकारविधिः । कुत एतत् ? उत्तरम्—अधिकारनिष्ठो हि विधिः नियोगार्थसाध्यतयाऽवगम्यते । नियो-गार्थः साध्यो यस्मिन्नसौ नियोगार्थसाध्यः तस्य भावः तत्ता तयाऽवगम्यते । इत्थंभूतलक्षणे तृतीया । न च साध्यमनितिकर्तव्यताकमस्ति । अननुगृहीतस्य करणतानुपपत्तेः । सर्वदा हि करणं करणं स्यात् यद्यननुगृहीतमपि करणं करणं भवेत् । कथ पुनरिति-कर्तव्यताऽवधारयितुं न शक्यते । उत्तरं—उपदेशतस्तावन्न संभवति नित्यानित्य-संयोगविरोधादिति दर्शितम् तृतीये । अतिदेशतस्तर्हि भवतु । परिहरति—सोऽपि नैवोपपद्यते इत्यभिप्रायः । कथं नोपपद्यते ? इत्थं नोपपद्यते, धात्वर्थस्यान्यप्रयुक्तत्वात् ।

यस्मादेव चायं जुहोत्यर्थोऽनुवादः, तस्मात् अविधायकः। न च अन्यद्धोमस्य विधायकं नास्ति इति, तस्मान्न कर्मान्तरं,

---

तत्प्रयोगाश्रितत्वाच्च गुणफलसंबन्धस्य। अन्यप्रयोगप्रयुक्तस्यान्येन संबन्धो न घटते उक्तं यदातिथ्याया इत्यत्र। अतिदेशोऽपि नैवाप्रयोजकस्य। तस्माद्दुर्भणेयं गुणाधिकारचोदना। न चात्र प्रसङ्गः शक्यते वक्तुम् प्राप्त्यभावात्। प्राप्तस्य हि धर्मजातस्यान्यदीयेन धर्मजातेन कार्य-सिद्धिः प्रसङ्गः। न चात्र प्राप्तिरस्तीति दर्शितमुपदेशातिदेशयोर—

---

**तत्प्रयोगाश्रितत्वाच्च गुणफलसंबन्धस्य।** दध्नेन्द्रियकामस्य जुहुयादिति योऽयं होमरूपो धात्वर्थः स स्वाधिकारप्रयुक्तः तत्प्रयुक्तिमाश्रित्य गुणेन फलं क्रियते। तथापि किमित्याह—**अन्यप्रयोगप्रयुक्तस्य च धर्मजातस्यान्येन संबन्धो नोपपद्यत** (यदातिथ्याया इत्यत्र) यन्नाम धर्मजातं अन्यदीययागप्रयुक्त्या तत्प्रयुक्तं तस्यान्येन संबन्धो नोपपद्यते। —**उक्तमेतत् यदातिथ्याया इत्यत्र।** आतिथ्याप्रयुक्तस्य बर्हिषो नोपसद्भिः अग्नीषोमीयेण वा संबन्धो घटते। तेन साधारणोपदेश इति। इदं च धर्मजातं नित्याधिकारप्रयुक्तं न साधारणं नित्यानित्यसंयोगविरोधप्रसङ्गात्। अतो न गुणफलाधिकारेण संबध्यते। ननु उपदेशेन मा संबध्यताम्, अतिदेशेन संबध्यतां इत्यत्राह—**अतिदेशोऽपि नैवाप्रयोजकस्य।** अस्यार्थः—इह हि धर्मजातं प्रति प्रकृतिविकारनियोगस्यैव प्रयोजकत्वं तत्रैव विनियोगात् न गुणफलाधिकारस्य यश्चाप्रयोजकः न तस्यातिदेशो युक्तः अन्यसंबन्धस्य अन्यसंबन्धप्रतीतिविरोधात् यदातिथ्यायामिव। **तस्मादितिकर्तव्यताशून्यतया दुर्भणैवेयं गुणफलाधिकारचोदना।** ननु अन्यप्रयुक्तैवेतिकर्तव्यता प्रसङ्गेनोपकारिका स्यात् इत्यत्राह—**नात्र प्रसङ्गः शक्यते वक्तुम् प्राप्त्यभावात्।** **प्राप्तस्य धर्मजातस्य** यत्कार्यं तस्यान्य**दीयेन धर्मजातेन सिद्धिः प्रसङ्गः** न चात्र प्राप्तिरस्तीति प्रदर्शितं उपदेशातिदेशयोर-

भावात् । अतः किमत्र सन्निधिः चोदनालिङ्गं वा करोति । अत्रोच्यते । भवत्वतिदेशात्संबन्धः । ननु च परप्रयोगाश्रयी गुणप्रयोगविधिरित्युक्तम् । नायं दोषः । अन्यप्रयुक्तस्यान्येन संबन्धोपदेशो नोपपद्यत इति । अतिदेशे पुनः [कार्यतः संबन्धमतिदेशविदो मन्यन्ते । ततः किं ? कार्यतः संबन्धे हि विनियोगावगतेर्न विरोधः । यत्र हि कारणपुरस्सरा कार्यावगतिः स विनियोगस्य विषयः यत्र पुनः] कार्यतः कारणावगतिः सोऽतिदेशस्य ।

---

संभवात् । अतः किमत्राग्निहोत्रेतिकर्तव्यता सन्निधिः चोदनालिङ्गं वा करिष्यति प्राप्तिविरहात् । **अत्रोच्यते** – **भवत्वतिदेशात्** कार्यतः **संबन्धः** इतिकर्तव्यतायाः । **ननु च परप्रयोगाश्रयी गुणप्रयोगविधिरित्युक्तम्** । परिहरति– **नायं दोषः अन्यप्रयुक्तस्यान्येन** सहोपदेशो **नोपपद्यते । अतिदेशे पुनः कार्यतः संबन्धमतिदेशविदो मन्यन्ते** । अतिदेशात्संबन्धे को विशेषः इति पृच्छति—**ततः किं ?** उत्तरं– **कार्यतः संबन्धे हि विनियोगावगतेर्न विरोधः** । तद्भद्भावेन प्राप्तात् करणोपकारलक्षणात् कार्यात पदार्थानां संबन्धे नास्ति(वि)नियोगः प्रकृत्यर्थस्यैव विकृतौ कार्यतः प्राप्तिः तस्माद्विरोधो नास्तीत्याह —**यत्र हि कारणपुरस्सरा कार्यावगतिः स विनियोगस्य विषयः । यत्र पुनः कार्यतः कारणावगतिः सोऽतिदेशस्य** । यत्र कारणभूतपदार्थपुरस्सरा कार्यस्य करणोपकारस्यावगतिः स विनियोगस्य विषयः ।

प्रकृतौ हि पदार्था एव प्रथममवगम्यन्ते । तेषु गृहीतेषु पश्चात् करणोपकारः तेषां द्वारभूतोऽधिकारविधिना कल्प्यते । विकृतौ तु करणोपकारापेक्षायां प्राकृते करणोपकारे गृहीते पुनस्तज्जनकापेक्षा जायते । ननु निर्ज्ञातजनकस्य करणोपकारस्य जनकापेक्षैव नास्ति । उच्यते । स्यादेतदेवं यदि करणोपकारमात्रपर्यवसायिनो धर्मा भवेयुः । ते त्वपूर्वगृहीताः पूर्वं पश्चात् तेषां द्वारमात्रतया करणोपकारसंबन्धः । तेन प्रकृत्यपूर्ववर्तिनमेव तं उपकारं ते जनयन्ति इत्युपदेशेनावगतम् । अतोऽपूर्वान्तरम् । प्राप्ते तस्मिन्नुपकारे अनिर्ज्ञातजनके

तस्मान्न विनियोगवैषम्यात् विघातो यदातिथ्यायां इतिवत्। तस्मात् सूक्तं 'अनया अग्निहोत्रेतिकर्तव्यतया' इति। अथ कस्मादग्निहोत्र-मेवेतिकर्तव्यता न भवति ? आश्रय एवानुग्राहको द्रव्याणाम् कार्यं साधयताम्, आश्रितत्वात् प्रयोगस्येति दर्शनम्। बालिशभाषितमेतत्। अग्निहोत्रमेव करणं दध्यनुरक्तमित्युक्तम्। केवलस्यानवग-मात्। प्रयुक्तिस्तु केवलाश्रयप्राप्त्यनुसारेणेति गुणफलमित्युच्यते।

---

तस्मिन् युक्तैव जनकापेक्षा। ततश्च तस्योपकारस्यान्यत्र पदार्थैः संबन्धः प्रतिपन्नः ते च पदार्थास्तदुपकारप्राप्त्या स्मृतिपथमुपयान्ति। तैश्च सन्निहितैः योग्यैः अपेक्षितैश्चान्वितो वैकृत-वाक्यवर्तिना लिङादिशब्देनैव स्वार्थोऽभिधीयते। सोऽयं पदार्थानामतिदेशः करणोपकारलक्षण-पुरस्सरा कारणभूतपदार्थावगतिरुच्यते। येषां तु निर्ज्ञातजनकतया पदार्थानां प्राकृतानां विकृतौ करणोपकारसिध्यर्थमनुष्ठानमेव केवलं न पुनः संबन्धान्तरावगम इति मतं तेषामुपदेश एव केवलं धर्माणां, विकृतावप्युपदेशे चोहाद्यभावः इति वक्ष्यामः सप्तमे भागित्वविध्यन्तयो-र्विशेषं कथयन्तः। प्रपञ्चितश्चायमर्थः पदार्थातिदेशे। **तस्माद्विनियोगवैषम्यात्** इति-कर्तव्यतासम्बन्धिविघातो यदातिथ्यायामितिवदिह नास्ति। **तस्मात् सूक्तमनयाऽग्निहोत्रेति-कर्तव्यतया** कार्यतः प्राप्तया सेतिकर्तव्यताको गुणफलाधिकारः इति सक्षेपार्थः। **अथ कस्मादग्निहोत्रमेवेतिकर्तव्यता** अग्निहोत्रेतिकर्तव्यतेति भाष्यार्थो **न भवति**। कथमयमर्थः स्यादिति तत्राह—**आश्रय एवानुग्राहको द्रव्याणाम् कार्यं साधयताम्। आश्रितत्वात् प्रयोगस्येति दर्शितम्।** होममाश्रित्य फलं साधयतो दध्नः होमस्वरूपमेवानुग्राहकम्। दूषयति—**बालिशभाषितमेतत्। अग्निहोत्रं दध्यनुरक्तमेव करणमित्युक्तम्। केवलस्या-नवगमात्।** न च स्वात्मैव स्वानुग्राहको युक्तः यद्यग्निहोत्रादेव फलं कथं तर्हि गुणात्फल-मिति व्यपदेशः तत्राह—**प्रयुक्तिस्तु केवलाश्रयप्राप्त्यनुसारेण इति गुणफलमित्युच्यते।** केवलो होमो नित्याधिकारप्रयुक्तः आश्रयभूतो गुणस्य। गुणमात्रं तु गुणाधिकारप्रयुक्तमिति

तस्मात् दध्नः फलमिति । अथ वा दधिशब्दस्य विवक्षितार्थत्वात्

---

तस्मात् षष्ठीसमास एवायं अग्निहोत्रेतिकर्तव्यतयेति । अतिदेशप्राप्तस्य च धर्मजातस्य प्रसङ्गात् कार्यसिद्धिरिति सिद्धमनावृत्त्यैव अनुष्ठानम् । "अथ वा दधिशब्दस्य विवक्षितार्थत्वात्" इति । किमिदं पक्षान्तरमिवोपन्यस्यते । किमिति वा न पक्षान्तरं ? तदेव हि दध्यनुरक्तं होमरूपं फलायेत्युपसंहृतम् । युक्तं चैतत् । संबन्धस्यानुरागा(भा)वगम्यत्वात् । उच्यते । पक्षान्तरशङ्कानिराकरणार्थैतद्भाष्यम् । न पक्षान्तरप्रदर्शनार्थम् ।

---

गुणस्यानन्यप्रयोजनत्वात् तदुपनिपातेन च होमात् फलसिद्धेः गुणस्यैव फलं प्रति जनकत्वं व्यपदिश्यते । **तस्मात् षष्ठीसमास एवायं अग्निहोत्रेतिकर्तव्यतयेति ।** नन्वग्निहोत्रस्यैकत्वे कथमतिदेश उच्यते । अधिकारभेदादेव अधिकारार्थत्वाद्धर्माणां एकत्वेपि च युक्तोऽतिदेशः ज्योतिष्टोमवत् । यथा नित्यसंस्थज्योतिष्टोमस्य काम्यसंस्थे धर्मातिदेशः तथेहापि । ननु यदि धर्माणां उपदेशातिदेशाभ्यां प्राप्तिभेदः तदा अनुष्ठानभेदोऽपि स्यात् इत्यत्राह—**अतिदेशप्राप्तस्य च धर्मजातस्य प्रसङ्गात् कार्यसिद्धिरिति सिद्धमनावृत्त्यैवानुष्ठानम् ।** "अथ वा दधिशब्दस्य विवक्षितार्थत्वात्" इति भाष्यमनुभाष्याक्षिपति—**किमिदं पक्षान्तरमिवोपन्यस्यते ?** पृच्छति—**किमिति वा न पक्षान्तरम् ?** उत्तरं—**तदेव हि दध्यनुरक्तं होमरूपं फलायेत्युपसंहृतं** अत्रापि । एतच्च पूर्वमप्युक्तम् । तस्मान्नेदं पक्षान्तरम् । ननु दधिहोमसंबन्धस्य फलाय विधानमनेन भाष्येणोच्यते न होमरूपस्येत्यत्राह—**युक्तं चैतत्** होमस्वरूपं फलाय चोद्यत इति **संबन्धस्यानुरागावगम्यत्वात् ।** दध्यनुरक्तेति होमेऽवगते संबन्धो नान्तरीयकोऽवगम्यते । तेन परोपश्लिष्टसंबन्धः फलेन संबन्धयितुमेव न शक्यते । होम एव दध्यनुरक्तः फलाय चोद्यत इति युक्तम् । **अत्रोच्यते । पक्षान्तरशङ्कानिराकरणायैतत् न पक्षान्तरप्रदर्शनार्थं भाष्यम् ।** तत्राथवाशब्दः आशङ्कितपक्षनिरा–

दधिहोमसंबन्धोऽयं वाक्येन विधीयते, तेन दध्नो होमेन संबध्यमानात् फलं भविष्यति इति ॥

रेवत्यधिकरणम् ॥

समेषु कर्मयुक्तं स्यात् ॥ २७ ॥

'त्रिवृदग्निष्टुदग्निष्टोमस्तस्य वायव्यासु एकविंशमग्निष्टोमसाम

---

का पुनरत्र पक्षान्तरशङ्का ? दध्ना जुहोतीति केवलगुणविधानात् । अवगतस्य संबन्धस्य विधानमस्त्विति केचित् । तेषामिदमुत्तरम् । दधिशब्दस्य विवक्षितत्वान्न संबन्धस्येत्यर्थः । अतः सिद्धो गुणविधि-फलाधिकारसंबन्धः ।

**समेषु कर्मयुक्तं स्यात् ।** उक्तं गुणानुबन्धात् कर्मणः फलमिति । तदिदानीं कीदृशे विषय इति (निरूप्यते ।) विषय—निरूपणायैतदधिकरणद्वयम् । ननु च भेदाभेदचिन्ता अत्र लक्षणे

---

करणाय यथा "अर्थवद्धर्मं प्रति प्रतिपन्ना" इति । **का पुनरत्र पक्षान्तराशङ्का या निरा-क्रियते ?** उच्यते । दध्ना जुहोतीत्यनेन यो दधिसंबन्धोऽवगतः स फलायानेन चोद्यताम् । कथं होमादेव फलमिति **केचित् तेषामिदमुत्तरम्**—"अथ वा दधिशब्दस्य विवक्षितत्वात्" इति भाष्यं कथमुत्तरं इत्याशङ्क्य व्याचष्टे—**दधिशब्दस्य विवक्षितत्वात् ।** दध्यनुरक्ताद्धोमात् फलसंबन्धस्य विवक्षितत्वात् न संबन्धात् फलं, दध्नेन्द्रियकामस्येत्यत्र दध्यनुरक्तं होमरूपमेव प्रतीयते, न संबन्धः । तस्माद्धोमादेव दध्यनुरक्तात् फलं न होमसंबन्धात् । **अतस्सिद्धो गुणफलाधिकारः ।**

**समेषु कर्मयुक्तं स्यात् ।** उक्तं गुणानुबन्धात् कर्मणः फलमिति । तदिदानीं कीदृशे विषये इति निरूपणायैतदधिकरणद्वयम् । **ननु शास्त्रभेदाभेदचिन्ता अत्र**

कृत्वा ब्रह्मवर्चसकामो यजेत' इति, 'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत' इति। अत्रायमर्थः सांशयिकः, किं तस्यैवाग्निष्टुतोऽग्निष्टोमस्य गुणात् वारवन्तीयात् पशवः फलं, 'एतेन यजेत' इति अनुवादः, अथ किम् 'एतेन यजेत' इति कर्मान्तरम् इति। किं प्राप्तम्? न कर्मान्तरं गुणात्फलम् इति। कुतः? एतेन यजेत इति

---

प्रकृता। सैवेयं विषयतो निरूप्यते। ननु च विपरीतमत्रेदं शास्त्रभेदो हि गुणफलसंबन्धेऽपि विद्यत एव। कथमत्र तन्निराकरणाद्भेदः। शास्त्रभेदकथा चेयमिति भाष्यविदः। तस्मादसमञ्जसमिदं भेदाभेदनिरूपणम्। अत्रोच्यते—सत्यं गुणविशेषतः शास्त्रभेदः अप्रयोजकस्त्वाश्रयस्येति न भेदेन व्यपदिश्यते। धात्वर्थानुबन्धभेदे पुनः

---

प्रकृता। तेनानेनाप्यधिकरणद्वयेन शास्त्रभेदाभेदनिरूपणैव कर्तव्या। किं विषयनिरूपणया। परिहरति—सैवेयं शास्त्रभेदाभेदचिन्ता [1]विषयतो निरूप्यते। ननु च विपरीतमत्रेदम्। कस्मादित्याह—शास्त्रभेदो हि गुणफलसंबन्धेऽपि विद्यत एव। कथमत्र तन्निराकरणाद्भेदः। अस्यार्थः—यदि पूर्वपक्षसिद्धान्तयोः शास्त्रभेदाभेदे [2]विशेषः स्यात् तदा इदमधिकरणमत्र चिन्तयितुमुचितम्। इह पुनः पूर्वपक्षे गुणफलसंबन्धेपि शास्त्रान्तरत्वमस्त्येव। साध्यभेदात्। राद्धान्तेपि विद्यत एव साध्यभेदादनुबन्धभेदाच्च। अथोच्येत पूर्वपक्षे गुणफलसंबन्धे कर्मभेदो नास्ति राद्धान्ते कर्मभेद इति युक्ताचिन्ता इति। तत्राह—शास्त्रभेदाभेदकथा चेयं इति भाष्यविदः। तस्मादसमञ्जसमिदं कर्मभेदाभेदनिरूपणम्। अत्रोच्यते। सत्यं गुणेऽपि फलाय चोद्यमाने शास्त्रभेदोऽस्त्येव। अप्रयोजकस्त्वाश्रयस्य गुणफलाधिकार इति न भेदेन व्यपदिश्यते। धात्वर्थानुबन्धभेदे पुनः

---

(1) G. विषयतया (2) G. विरोधः

विदिनस्यैतद्वचनं, नाविदितस्य, अतो न विध्यन्तरं, पशुकाम एवं यजेत इत्युच्यते, न यजेत इति, कथं कृत्वा ? वारवन्तीयं कृत्वेति। अपि च, एतस्यैव इति विस्पष्टमकर्मान्तरवचनम्। तस्माद्गुणात्फलमित्येवं प्राप्तम्।

एवं प्राप्ते ब्रूमः,—समेष्वेवंजातीयकेषु भिन्नवाक्येषु कर्मयुक्तं फलं भवेत्, एतस्यैव रेवतीषु वारवन्तीयं कृत्वेति, न ह्येतस्य रेवत्यः सन्ति, यासु अस्य वारवन्तीयं भवेत्, तत्र रेवत्यो भवन्ति, तासु च वारवन्तीयं विधीयेत इति वाक्यं भिद्येत।

---

सह प्रयोक्तृतया शास्त्रं भिद्यत इति भेदेन व्यपदेशः। अत एव च अथातो धर्मजिज्ञासेति शास्त्रेण प्रयोक्तृत्वाभेदादभेदं मन्वानस्य इद-मुत्तरम्। अतो धात्वर्थानुबन्धभेदे गुणानुबन्धभेदे च विशेषोऽस्तीति विषयविरूपणम्। कथं पुनः अग्निष्टोमसाम कृत्वा यजेत इति

---

सह प्रयोक्तृतया शास्त्रं भिद्यत इति भेदो व्यपदिश्यते। अनुष्ठानपर्यन्तं हि शास्त्रम्। तेन यत्रानुष्ठानभेदः तत्र शास्त्रभेदबुद्धिः स्फुटतरा। यत्र पुनरनुष्ठानभेदो नास्ति तत्र सन्नपि शास्त्रभेदोऽसन्निव प्रतीयते। यत एव प्रयोक्तृत्वभेदाभेदाभ्यां शास्त्रभेद-बुद्धिः स्फुटा स्फुटतरा अत एव च 'अथातो धर्मजिज्ञासा" इत्यनेन सूत्रेण प्रयोक्तृत्वाभेदेन अध्ययनशास्त्राध्यापनशास्त्रयोरभेदं मन्वानस्येदमुक्तमुत्तरम्। अतो धात्वर्थानुबन्धभेदे गुणानुबन्धभेदे च विशेषोऽस्तीति विषयनिरूपणम्। किं स्फुटतर-मिदं शास्त्रं उतास्फुटतरमिति चिन्त्यते। पूर्वपक्षे गुणफलसंबन्धात प्रयोक्तृत्वाभेदात अस्फुटतरम्। सिद्धान्ते तु धात्वर्थानुबन्धभेदात् प्रयोक्तृत्वाभेदाच्च तद्भेदात् स्फुटतरं इति विशेष इति युक्तं वक्तुं विषयनिरूपणम्। कथं पुनः अग्निष्टोमसाम कृत्वा यजेत इति

पूर्वापरीभावः ? कथं वा नास्ति ?। सवनद्वये ह्यतीते अग्निष्टोमसाम-प्रयोगः। एकश्चायं यज्यर्थः। तस्मादनुपपत्तिः।

ननु च ग्रहयजावपि स एवायमग्निष्टुत्संज्ञको याग इत्युपपद्यते पूर्वापरीभावः। अभ्यासो हि सकलस्य धात्वर्थस्य नैकदेशस्य। अत एव नोपपद्यते। सकलस्यानुष्ठानात्। परस्तादस्तीत्युपपद्यते इति चेन्न। अयथाभूतत्वादर्थस्य। यत्र हि यथा प्रतीयमान एवार्थः शब्दात् स्वभावतोऽपि तथैव तत्राविप्रतिपत्तिः अन्यथाभावे तु नौत्पत्तिकत्वं स्यात्। औत्पत्तिकस्तु शब्दस्यार्थेन संबन्ध इति गदितम्। अतो नाभ्यासवशात्

---

पूर्वापरीभावः ? कथं वा नास्ति ? उत्तरम्—सवनद्वये ह्यतीते अग्निष्टोमसामप्रयोगः तेन यागः पूर्वकालस्सन् अग्निष्टोमसामा चापरकालः। ननु तृतीयसवनगतयागापेक्षया भविष्यति पूर्वापरीभावः इत्यत्राह—एकश्चायं यज्यर्थः सवनत्रयेपि। तेनासौ न पूर्वतया नापि परतया व्यपदेष्टुं युक्त इति भावः। तस्मादनुपपत्तिः पूर्वापरीभावस्य। एतदेवं चोद्यपरिहारद्वारेण विवरीतुमुपक्रमते—ननु च ग्रहयजावपि स एवायमग्निष्टुत्संज्ञको यागः इत्युपपद्यते पूर्वापरीभावः। योऽसौ तार्तीयसवनिको ग्रहयजिः तत्रापि स एवाग्निष्टुत्संज्ञको ग्रहयजिः ततोऽग्निष्टुत्सामापेक्षं परत्वमुपपन्नं तस्मात्स एवेत्याह—अभ्यासो हि सकलस्य धात्वर्थस्य नैकदेशस्य। परिहरति—अत एव च नोपपद्यते पूर्वापरीभावः। यत एवाभ्यासः सकलस्य पूर्वमपि सकलस्यानुष्ठानात्। पुनश्चोदयति—परस्तादप्यस्ति सोऽग्निष्टुत्संज्ञको यागः इत्युपपद्यत इति चेत्। दूषयति—न अयथाभूतत्वादस्यार्थस्य। यथाभूतः शब्दात् प्रतीयते एकान्तेन परस्तात्त्वेन तथाभूतस्वभावः अर्थो नास्ति पूर्वापरकालवर्तित्वात्। तेन शब्दावगता पूर्वापरता नोपपद्यते। यत्र हि यथाभूतः प्रतीयमान एवार्थः शब्दात् स्वभावतोऽपि तथैव तत्राविप्रतिपत्तिः शब्दार्थयोर्भवति। अन्यथाभावे तु नौत्पत्तिकत्वं स्यात्। औत्पत्तिकश्च शब्दार्थयोस्संबन्ध इति गदितम्। अतो नाभ्यासवशात् अग्निष्टोमसाम

कृत्वा यजेतेति शब्दादर्थ उपपद्यते। साभ्यासस्य हि धात्वर्थस्य उत्तरकालीनताऽवधार्यते। न चैतद्भाष्यकारेणावमृष्टम्। उच्यते। अनवमर्शनीयमेवैतत्। समानकर्तृकत्वापेक्षो ह्यत्र पूर्वापरीभावः। स च प्रतीतावेवोपपद्यते नानुष्ठाने। समानकर्तृकत्वव्याघातात्। एकार्थानामनेकधात्वर्थानामनुपरत्याऽनुष्ठानं समानकर्तृत्वमुच्यते। न च तत्र पूर्वमिदं कृत्वा पश्चादिदं कर्तव्यमिति शक्यते वक्तुम्। व्यवच्छेद-प्रसङ्गात्।

---

**कृत्वा यजेतेत्युपपद्यते। साभ्यासस्य यज्यर्थस्य उत्तरकालीनताऽवधार्यते।** न च सा वास्तवी विद्यते। **न चैतत् भाष्यकारेणावमृष्टं** येन तद्वचनाद्विनिर्णयः स्यात। तस्मादसंबद्ध-मिदं वाक्यं कथमुदाहरणतां प्रतिपद्यते। परिहरति—**उच्यते। अनवमर्शनीयमेवैतत्** यतः काचिदप्यनुपपत्तिर्नास्ति। यत एवानवमर्शनीयमेवेदं अत एव भाष्यकारेणानवमृष्टम्। कुतः? उत्तरम्—**समानकर्तृकत्वापेक्षत्वात् पूर्वापरीभावस्य।** समानकर्तृकयोः पूर्व-काल इति स्मरणात। समानकर्तृकत्वापरित्यागेन पूर्वापरीभावो वर्णनीयः। तथापि किं इत्यत आह—**स च प्रतीतावेवोपपद्यते। नानुष्ठाने। समानकर्तृकताव्याघातात्** यद्य-नुष्ठानगतः पूर्वापरीभावो[1]ऽवगम्यते समानकर्तृकता व्याहन्येत। तेन प्रतीतावेवाश्रयणीयम्। तेन समानकर्तृकयोः धात्वर्थयोर्मध्ये यः पूर्वं प्रतीयते तत्र वर्तमानाद्धातोः क्त्वाप्रत्ययो भवतीति सूत्रार्थः। तस्मादनुष्ठानगताश्रयणे समानकर्तृकताव्याघात इत्याह—**एकार्थानां धात्वर्था-नामनुपरत्या(नुपूर्व्या)ऽनुष्ठानं समानकर्तृकत्वमुच्यते।** समानो हि कर्ता एकः कर्तोच्यते क्रियावच्छेदेन हि कर्तृत्वम्। तत्र यदि क्रियाभेदः आश्रीयेत तदा कर्तृभेदः स्यात्। नानाभूतानां च धात्वर्थानामेकप्रयोजनवशीकारनिबन्धनमेकत्वं, अत एकप्रयोजनावच्छिन्नानां धात्वर्थानां एकया प्रवृत्त्या अनुपरत्याऽनुष्ठीयमानानां समानकर्तृकत्वम्। **तत्र पूर्वमिदं कृत्वा पश्चात् कर्तव्यमिति न शक्यते वक्तुं व्यवच्छेदप्रसङ्गात्।** भेदप्रसङ्गादित्यर्थः भेद-

---

(1) गृह्यते

कथं तर्हि 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इति। अधिकारमात्रं तदिति वक्ष्यामः। तस्मादवगतौ पूर्वकालता 'मुखं व्यादाय स्वपिति' इतिवत् प्रयोगसिद्धेः। कथं पुनरत्र गुणफलाशङ्का? गुणाश्रवणात्, वारवन्तीयं कृत्वेति सन्निधानाच्च कर्मणः। सन्निहिते हि कर्मणि गुणश्रुतिः तदनुबन्धपरतां विधेर्ज्ञापयतीत्युक्तम्। अतो दध्नेन्द्रियकामवत् गुणानुबन्धात्। एवं चैतस्येति मुख्यार्थं पदमन्वयि भवति। ननु वारवन्तीयं रेवतीषु

---

निबन्धनो हि पूर्वापरीभावः नैकस्मिन्नेवोपपद्यते। तेनानुष्ठाने पौर्वापर्यासंभवात् प्रतीतावेव पौर्वापर्यमाश्रयणीयम्। तच्चात्रापि संभवति।

यद्येकार्थानां समानकर्तृकाणां पौर्वापर्यं **कथं तर्हि दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति**। तत्रैकार्थता नास्ति। न च समानकर्तृकतैव नास्तीति वाच्यम्। [1]क्त्वाप्रत्ययप्रत्ययाभावप्रसङ्गात्। उत्तरं—**अधिकारमात्रं तदिति वक्ष्यामः**। नात्र समानकर्तृकता विवक्षिता। किन्तु पूर्वकालता, प्रयोगसिद्धेयं पूर्वकालताऽनुष्ठानेप्याश्रीयते। सा चाधिकारवशेन भवति तेन कृतदर्शपूर्णमासः सोमे अधिकारी इत्येतावन्मात्रमत्र विवक्षितम्। क्त्वाप्रत्ययस्तु तावन्मात्रपरत्वेनायथार्थ एव प्रयुक्तः। **तस्मादत्रावगतौ पूर्वकालता मुखं व्यादाय स्वपिति इतिवत्प्रयोगसिद्धेः**। यथा चेयं प्रतीतिगता पूर्वकालता अनुष्ठानेऽप्याश्रीयते तथा पञ्चमे वक्ष्यामः। पूर्वपक्षमाक्षिपति—**कथमत्र गुणफलाशङ्का। गुणाश्रवणात् वारवन्तीयं साम कृत्वेति सन्निधानाच्च कर्मणः। सन्निहिते च कर्मणि गुणश्रुतिः तदनुबन्धपरतां विधेः ज्ञापयति** न कर्मस्वरूपपरतां इति गदितम्। **अतो दध्नेन्द्रियकामवत् गुणानुबन्धात्** भावार्थाद्विहितात् फलं न केवलं धात्वर्थानुबन्धात्। **एवं च एतस्यैवेति मुख्यार्थं पदमन्वयि भवति**। अन्यथा धर्मलक्षणया वर्णनीयं स्यात्। **ननु वारवन्तीयं रेवतीषु**

---

(1) G. प्रत्ययान्तराभाव

कृत्वेति अप्राप्ता रेवत्यो विधातव्याः वारवन्तीयसम्बन्धिता च। विशिष्टयागवादिनोऽप्ययं तुल्यो दोषः। अतः संबन्धविधानाक्षेपात् भवतां विधानसिद्धिः। अत्राभिधीयते—नान्यप्रयुक्तात् भावार्थाच्छास्त्रान्तरमिदम्। किं तर्हि? तथैव सहैव प्रयुक्त्या भिद्यते शास्त्रम्। एतदुक्तं भवति। कर्मणः सकाशात् फलमिति कुतः? अप्राप्तत्वात् रेवतीनाम्। न गुणात् फलमिति शक्यते वक्तुम्। ननु चोक्तं संबन्धिविधानाक्षेपात् रेवतीनां विधानसिद्धिरिति। सत्यं सिद्ध्यति न यागानुबन्धतया। गुणानुबन्धाच्च भावार्थात् फलं गुणफलमित्युच्यते न केवलाद्गुणात् फलनामत्वाद्गुणफलानाम्। भावार्थ-

---

कृत्वेत्यप्राप्ता रेवत्यो विधातव्याः वारवन्तीयसंबन्धिता च। प्रकृतं हि कर्म वायव्यानुबन्धं, न रैवतम्। रेवत्यनुबन्धस्तावद्विधातव्यः तासां च वारवन्तीयसंबन्ध इति वाक्यभेदः तेन कर्मान्तरविधिरेव युक्तः। उत्तरं—विशिष्टयागवादिनोऽप्ययं तुल्यो दोषः अनेकविधिलक्षणः। अतः संबन्धविधानाक्षेपात्[1] रेवतीविधानसिद्धिः। रेवत्याधारे वारवन्तीये विहिते आक्षेपेण रेवत्यो विहिता भवन्ति। अतो न भविष्यति वाक्यभेदः विश्वजित् सर्वपृष्ठो भवतीतिवत्। राद्धान्तमुपक्रमते—अत्राभिधीयते। नान्यप्रयुक्तात् भावार्थात् शास्त्रान्तरमिदम्। अन्यप्रयुक्तं भावार्थमाश्रित्य न शास्त्रान्तरमिदम्। किं तर्हि? तथैव सहैव प्रयुक्त्या शास्त्रं भिद्यते। प्रयुक्तिरपि भिन्ना। शास्त्रमपि भिन्नम्। न पुनः शास्त्रमेव भिन्नम् प्रयुक्तिर्न भिद्यत इति। एतदुक्तं भवति। कर्मणः सकाशात् फलमिति कुतः? उत्तरं—अप्राप्तत्वाद्रेवतीनां न गुणात् फलमिति शक्यते वक्तुम्। ननु चोक्तं [2]संबन्धविधानाक्षेपात् रेवतीविधानसिद्धिरिति। परिहरति—सत्यं सिद्ध्यति रेवतीविधानं न तु यागानुबन्धतया। तथापि किमित्याह—गुणानुबन्धात् भावार्थात् फलं गुणात् फलमित्युच्यते न केवलात् गुणात्। फलनामत्वात् गुणफलानां भावार्थ-

---

(1) R. विधानादाक्षेपात् (2) R. विधानादाक्षेपात्

**अथोच्येत, अस्यापूर्वा रेवतीरुपादाय तासु च वारवन्तीयं कृत्वा, एतेन यजेत इत्यनुवदतीति। तथा अग्निष्टोमसामेति**

---

विषयभावाच्च नियोगस्य। **अथोच्येत—अस्या पूर्वा रेवतीरुपादाय तासु च वारवन्तीयं कृत्वा यज्ञेन यजेतेति।** अनेन पूर्वस्मात् को विशेष उपन्यस्तः ? अप्राप्ता रेवत्यः कथमुपादीयन्ते ? अयमभिप्रायः—रेवतीविशिष्टं वारवन्तीयं यागानुबन्धतया प्रतीयमानं रेवतीः एकत्ववत् उपादानशेषीकरोति। सत्यमेवैतत्। (अ)तथाप्यग्निष्टोम सामेति नावकल्पते। किमिति नावकल्पते ? यागानुबन्धतया हि वारवन्तीयं (प्रती)विधीयमानं स्तोत्रविशेषसंबन्धितया शक्यतेऽवगन्तुम्।

---

**विषयत्वाच्च नियोगस्य,** नियोगविषयत्वाच्च फलसिद्धेः। तेन यद्यपि रेवतीनामाक्षेपः तथापि गुणात् फलं न शक्यते वक्तुं यागानुबन्धत्वेनानवगमात्। भावार्थात् फलं न गुणात्।

"अथोच्येत अस्य अपूर्वा रेवतीरुपादाय तासु च वारवन्तीयं कृत्वा तेन यजेतेत्यनुवाद" इति भाष्यमाक्षिपति—**अनेन पूर्वस्मात् को विशेष उपन्यस्तः ?** पूर्वस्मात् रेवतीनामाक्षेपविधानात् को विशेष उपन्यस्तः ? चोद्यान्तरमाह—**अप्राप्ता रेवत्यः कथमुपादीयन्ते** परिहरति—**अयमभिप्रायः—रेवतीविशिष्टं वारवन्तीयं यागानुबन्धतया प्रतीयमानं रेवतीः एकत्ववत् उपादानशेषीकरोति।** तेन यागानुबन्धता रेवत्याधारस्य फलार्थस्य वारवन्तीयस्य भविष्यति रेवतीनां चाक्षेपतः प्राप्तेरुपादानसिद्धिः। राद्धान्ती वदति—**सत्यमेतत् तथाप्यग्निष्टोम सामेति नावकल्पते।** कस्मादित्याह—**यागानुबन्धतया हि वारवन्तीयं विधीयमानं स्तोत्रविशेषसंबन्धितया अवगन्तुं शक्यते।** तेनाग्निष्टोमसामेति न संबध्यते।

**नावकल्प्येत । अथाग्निष्टोमसामकार्यं भवति इत्युच्यते । एतस्यैवेत्येतदविवक्षितं स्यात् । उभयस्मिन् विवक्ष्यमाणे भिद्येत वाक्यम्, तस्मात् कर्मान्तरम् ।**

---

**अथाग्निष्टोमसाम्नः कार्यं भवतीत्युच्यत इति ।** किमिदमग्निष्टोमसाम्नः कार्यं भवतीत्युच्यत इति । अयमभिप्रायः—यागानुबन्धितया प्रतीयमानं वारवन्तीयं न कार्यान्तरशून्यमनुबन्धि भवतीति । कार्यविशेषापेक्षायामग्निष्टोमसामशब्दः कार्यसमर्पको भवतीति न वाक्यभेदः । **एतस्यैवेत्येतदविवक्षितं स्यात् ।** किमित्यविवक्षितं स्यात् ? यद्ययं शब्दलभ्योऽर्थः स्यात् अविवक्षितम् । अत्र पुनः प्रकृत एवायमग्निष्टुत प्रतीयते तस्यायं एतस्येत्यनुवादः । अतश्चाविवक्षायामप्यदोषः । तस्मात् कर्मान्तरतयोपन्यासो न घटते, रेवत्याधारवारवन्तीयानुबन्धतया हि न प्रकृतो यागः शक्यतेऽवगन्तुं, ऋगन्तराधार-

---

"अथाग्निष्टोमसाम्नः कार्यं भवतीत्युच्यते" इति भाष्यमाक्षिपति—**किमिदं अग्निष्टोमसाम्नः कार्यं भवतीत्युच्यते** यावता यागानुबन्धतया प्रतीयमानस्य स्तोत्रविशेषसंबन्धो नोपपद्यते इत्युक्तम्। परिहरति—**यागाद्यनुबन्धतया हि रेवतीविशिष्टं वारवन्तीयसाम प्रतीयमानं न कार्यशून्यमनुबन्धीभवितुमर्हति** द्रव्यदेवतादिवदिति । **कार्यविशेषापेक्षायां चाग्निष्टोमसामशब्दः कार्यविशेषसमर्पको भवतीति न वाक्यभेदः** राद्धान्तभाष्यं "एतस्यैवेत्यविवक्षितं स्यात" इति तदाक्षिपति—**किमित्यविवक्षितं ? यद्ययं** प्रकृतयागसम्बन्धलक्षणोऽर्थः **शब्दलभ्यः** स्यात तदा वाक्यभेदप्रसङ्गो न स्यात् एतस्येत्यविवक्षितम् । **अत्र पुनः प्रकृत एवायमग्निष्टुत् प्रतीयते तस्यायं एतस्येत्यनुवादः ।** यतश्चायं प्रकृततयैव संबन्धः **अतश्चायमविवक्षायामप्यदोषः । तस्मात् कर्मान्तरतयोपसंहारो न घटते रेवत्याधारवारवन्तीयानुबन्धतया हि न प्रकृतयागः शक्यतेऽवगन्तुम् ।** कस्मादित्याह—**ऋगन्तरा-**

अथ कर्मान्तरे कथमवाक्यभेदः ?। रेवतीषु ऋक्षु वारवन्तीयं साम कृत्वा पशुकामो यजेत इति अपूर्वो यागः सर्वैर्विशेषणै-र्विशिष्टो विधीयते, तेनैकार्थत्वं, विभागे च साकाङ्क्षत्वमिति एकवाक्यत्वमुपपद्यते। ननु अर्थभेदो यागश्चैवं ह्यपूर्वः कर्तव्यः, रेवतीषु वारवन्तीयं अपूर्वमिति। नेति ब्रूमः, निर्वृत्त-

---

तयावगतेः। ननु फलार्थत्वे गुणस्य नायं दोषः गोदोहनवत्। तत्र हि चमसानुबन्धं प्रणयनं प्रतीयमानमपि गोदोहनानुबन्धतया फलार्थत्वे गुणानुबन्धस्य न विरुद्ध्यते। एवमत्रापि को विरोधः, वक्तव्यो वा विशेषः। अयमभिधीयते—तत्र हि अप्प्रणयनार्थकार्यतया गोदोहनस्य केवलप्रणयनाभिनिर्वृत्त्या न विरोधः शक्यते वक्तुम्। इह पुनः यागानुबन्धतया प्रतीयते अयागार्थं च निर्वर्तयति न प्रकृतानुबन्धितया

---

धारतयाऽवगतेः। प्रकृतस्य कर्मणो वायव्याधारत्वेनावगतत्वात्। ननुफलार्थत्वे गुणस्य नायं दोषः गोदोहनवत् भिन्नविषयत्वेन विरोधो नास्ति। क्रत्वर्था वायव्याः फलार्था रेवत्यः गोदोहनवत्। तत्र चमसानुबन्धं प्रणयनं प्रतीयमानमपि गोदोहनानुबन्धतया फलार्थत्वे गुणानुबन्धस्य अविरुद्धम्। एवमत्रापि को विरोधः। वक्तव्यो वा गोदोहनेन विशेषः। अयमभिधीयते विशेषः। अप्प्रणयनार्थकार्यतया गोदोहनस्य केवलप्रणयनाभिनिर्वृत्त्या न विरोधः शक्यते वक्तुम्। गोदोहनेन पशुकामस्य प्रणयेदिति गोदोहन-साध्यात् प्रणयनात् फलमवसीयते गोदोहनस्यापि प्रणयनरूपोऽर्थः कार्यतयाऽवगम्यते तेन तत्र केवलप्रणयनाभिनिर्वृत्या न विरोधः शक्यते वक्तुम्। इह पुनर्यागानुबन्धतया वारवन्तीयं प्रतीयते पशुकामो ह्येतेन यजेतेति। यागसंबन्धितया फलश्रवणात् यागानुबन्धिता वारवन्तीयस्याश्रयणीया। अयागार्थं च स्तोत्रमभिनिर्वर्तयतीति न प्रकृतानुबन्धितया

**वारवन्तीयरेवतीगुणको यागो विधीयते, न वारवन्तीयनिर्वृत्तिः, अर्थात् रेवतीषु वारवन्तीयमभिनिर्वर्तयिष्यति, शक्यते च तत् निर्वर्तयितुम्। उच्यते, रेवतीनां वारवन्तीयस्य च सम्बन्धो न विहितः स्यात्, तत्र च रेवतीष्वन्यान्यपि सामानि भवेयुः। वारवन्तीयं चान्यास्वपि ऋक्षु। नैष दोषः, कृत्वेत्यभिनिर्वृत्तः सम्बन्धो यागायोच्यते, तेन सम्बन्धो गम्यते, द्वावप्येतावर्थौ**

---

शक्यतेऽवगन्तुम्। प्रकृतं ह्यग्निष्टोमसाम वायव्यानुबन्धम्। तस्मात् कार्यानुबन्धयोः विरोधः। अकार्यानुबन्धत्वात् वारवन्तीयस्य रेवत्याधारस्य। तस्मादेतस्येति विवक्षितमित्युक्तम्। अनुवादानुपपत्तेः। कर्मान्तरत्वे

---

**शक्यतेऽवगन्तुम्।** रेवत्याधारं वारवन्तीयं **प्रकृतं ह्यग्निष्टोमसाम वायव्यानुबन्धम्।** अस्यार्थः—यतः फलं श्रूयते तदनुबन्धितया विधीयमानं पुरुषार्थं भवति। ततश्च क्रत्वर्थेन सह भिन्नविषयत्वान्न विरुध्यत इति युक्तः प्रकृतसंबन्धः रेवत्याधारं तु वारवन्तीयं पुरुषार्थभूतयागानुबन्धितया न प्रतीयते यागं प्रत्यसाधकत्वादिति पुरुषार्थत्वाभावात्। क्रत्वर्थत्वे सति समानविषयतया विरोधः। प्रकृतं ह्यग्निष्टोमसाम कार्यं वायव्यानुबन्धं तद्रेवत्याधारवारवन्तीयानुबन्धं भवति। अतो न प्रकृतानुबन्धितया शक्यतेऽवगन्तुं इति कर्मभेदमापादयति। **यस्मात् प्रकृतं ह्यग्निष्टोमसाम कार्यं वायव्यानुबन्धं तस्मात् कार्यानुबन्धयोर्विरोधः** वारवन्तीयस्य यत्कार्यं प्रकृतयागसंबन्धि वायव्यानुबन्धाग्निष्टोमसामकार्यं याश्चानुबन्धभूता रेवत्यः तयोर्विरोधः न हि रेवत्याधारं वारवन्तीयं वायव्यानुबन्धाग्निष्टोमकार्यकं भवति। ननु क्रत्वर्थपुरुषार्थतया भिन्नविषयतया न विरोधोऽस्तीत्याह—**अकार्यानुबन्धत्वात् वारवन्तीयस्य** रेवत्याधारं वारवन्तीयं यत्कार्यं यागं प्रत्यनुबन्धत्वेन वक्तव्यं, न च तद्वक्तुं शक्यं अकारकत्वात् अकारकं च न क्रियानुबन्धि भवति न चाननुबन्धस्य पुरुषार्थता इति नास्ति भिन्नविषयत्वम्। **तस्मात्** प्रकृतयागसंबन्धाभावादे**तस्येत्यविवक्षितमित्युक्तम्। अनुवादानुपपत्तेः। कर्मान्तरत्वे**

**कृत्वेत्येष शब्दः शक्नोति वदितुम्, अभिनिर्वृत्तिं पूर्वकालताञ्च, यथा शोणमानय इति रक्तगुणसंबद्धोऽश्वः शब्देनैवानयतौ**

---

पुनः सह प्रयुक्त्या शास्त्रभेदात् न दोषो भवतीति। उभयस्मिन् विवक्ष्यमाण इत्यर्थः। न कश्चिदेको विनियोग उभयानुबन्धितामापादयितुं क्षमः। कथं तर्हि साधारणगुणविधानम्? ऐकरूप्ये हि तत् न गुणप्रधानव्यवस्थितानाम्। कथं तर्हि अङ्गप्रधानार्थता बर्हिरादीनाम्? केवलप्रयोगशेषतया नावच्छेदानुबन्धितया। इह चानुबन्धावच्छेदानुबन्धत्वे विरोध उक्तः।

---

**पुनः सह प्रयुक्त्या शास्त्रभेदान्नायं दोषोभविष्यति इति** तदीयस्याग्निष्टोमसामकार्यस्य औपदेशिकरेवत्याधारवारवन्तीयानुबन्धसाध्यत्वाविरोधात्। इति शब्दः परिसमाप्तौ। संप्रति भाष्यं व्याख्यातुमुपक्रमते। "उभयस्मिन् विवक्ष्यमाणे" इति भाष्यं व्याचष्टे—**उभयानुबन्धितया विवक्ष्यमाणे इत्यर्थः।** यागे स्तोत्रे चानुबन्धितया विवक्ष्यमाण इत्यर्थः। प्रकृतस्याग्निष्टोमसाम्नः कार्ये स्तोत्राख्ये रेवत्याधारवारवन्तीयस्यानुबन्धत्वं स्तोत्रनिर्वृत्तिद्वारेण यागानुबन्धितेति। **न चैको विनियोगः उभयानुबन्धितामापादयितुं क्षमः।** यद्येको विनियोगोऽनेकानुबन्धितां नापादयति **कथं तर्हि साधारणगुणानां** प्रयाजादीनां **विधानम्।** उत्तरम्—**ऐकरूप्ये हि तत्** सर्वाण्याग्नेयादीनि कर्माण्येकरूपाणि न गुणप्रधानभूतानि तत्र तन्त्रेण संबन्धो युक्तः। **कथं तर्हि अङ्गप्रधानार्थता बर्हिरादीनामैक**[1]रूप्याभावेऽपि। उत्तरम् **केवलप्रयोगशेषतया नावच्छेदानुबन्धतया।** प्रयोगशेषतैव केवला तेषाम्। तेन युक्तमङ्गप्रधानार्थत्वम्। यथा च बर्हिरादीनां प्रयोगशेषता तथाऽनन्तरं वक्ष्यामः। अवच्छेदो येनापूर्वभावनाऽवच्छिद्यते तदनुबन्धतया तेषां नाङ्गप्रधानार्थता। **इह चानुबन्धावच्छेदानुबन्धत्वे विरोध उक्तः।** अनुबन्धः स्तोत्रं अवच्छेदो यागः तदनु-

---

(1) G. एकत्वाभावेपि

विधीयते इति, न वाक्यभेदो भवति, एवमत्रापि द्रष्टव्यम्। नन्वेवमपि बहवोऽर्थाः, रैवत्यः, वारवन्तीयं, तत्सम्बन्धः, यागः, पशुकामश्च इति। नैष दोषः, बहवः श्रूयन्ते, एकोऽत्र विधीयते, यागो विशिष्टः। ननु रैवत्योऽपि विधीयन्ते, वारवन्तीयमपि, यदि न विधीयेरन्, नैव तद्विशिष्टो यागः प्रतीयेत, न ह्यविधाय विशेषणं शक्यते विशिष्टो विधातुम्,

---

कथं पुनरत्रापि प्रयोगानुबन्धितयैव न वारवन्तीयं परिगृह्यते। न, वाक्येन यागावच्छिन्नावगतेः। प्रकरणावगम्या हि प्रयोगानुबन्धता। अनुपादेयगम्या वा वाक्यादिभिरपि, सामर्थ्यावगम्या वा। प्रधानसम्बन्धो दक्षिणावत्। इह पुनः वाक्येन यागानुबन्धतैवेति एतस्येत्यविवक्षा।

---

बन्धत्वे विरोध उक्तः। **कथं पुनरत्रापि प्रयोगानुबन्धतयैव वारवन्तीयं न परिगृह्यते।** उत्तरं—न परिगृह्यते वाक्येन यागावच्छिन्नावगतेः। यागेनावच्छिन्नस्य विशिष्टस्य यागसंबन्धस्यावगतेरिति यावत्। **प्रकरणगम्या हि प्रयोगानुबन्धता।** यौ हि द्रव्यगुणौ प्रकरणे पठ्येते केवलं कार्यं च तयोर्विशिष्टं न निर्दिश्यते तयोरङ्गप्रधानार्थता अगृह्यमाणविशेषतया यथा पूर्वपक्षे आरुण्यादीनामग्न्यादीनां च। **अनुपादेयगम्या वा, वाक्यादिभिरपि।** अनुपादेयं उद्दिश्य[1] तद्गम्बापि प्रयोगशेषता वाक्यादिभिरपि भवति। यथा बर्हिरादीनां 'बर्हिषि हवींष्यासादयति' इति हविश्शब्देन उद्दिश्यमानानां अङ्गप्रधानहविषामपि बर्हिरादिसंबन्धः। **सामर्थ्यावगम्या वा** प्रयोगशेषता **प्रधानसंबन्धो** वाक्येन दक्षिणादिषु 'दीक्षाः सोमस्य' 'दक्षिणाः सोमस्य' इति वाक्येन प्रधानमात्रसंबन्धो दक्षिणायाः। दक्षिणासामर्थ्येन [2]प्रयोगशेषता, दक्षिणायाः कर्त्रानतिकारित्वात् कर्तुश्च साङ्गप्रधानार्थत्वात्। **इह पुनर्वाक्येन यागानुबन्धतैव न** स्तोत्रानुबन्धतेति **एतस्येत्यविवक्षाप्रकारः।** यदि

---

(1) G. उद्देश्यं (2) यागशेषता

तस्मात् बहुषु विधीयमानेषु नैकार्थ्यम् । अत्रोच्यते,

---

[1]"अथ कर्मान्तरे कथमवाक्यभेद" इति विशिष्टविधानसिद्धेः प्रश्नो-नोपपद्यते । अवान्तरस्तोत्रसंबन्धः ऋक्सामयोर्नोपपद्यत इत्यभिप्रायः । राद्धान्तवादिनस्तर्हि कोऽभिप्रायः ? अयमभिप्रायः—रेवतीवारवन्तीय-संबन्धः स्तोत्रे न स्यात् । यद्येकभावविशेषणं ऋग्द्रव्यं साम वा स्यात् । अत्र पुनः रेवतीवारवन्तीयसंबन्धाभिनिर्वृत्तो भावो भावान्तरस्य विशेषणम् । स च भावविशिष्टो भावो विधीयमानो यजिना विशेष्यत इत्यदोष इत्यभिप्रायः ।

---

हि स्तोत्रानुबन्धता [2]पुरुषार्थतापि स्यात् तदा क्रत्वर्थपुरुषार्थयोः भिन्नविषयत्वेनाविरोधात् युज्येत प्रकृतसंबन्ध इति एतस्येति विवक्षितं स्यात् । यागानुबन्धत्वे हीष्यमाणे यागं प्रत्यकारक-त्वात् पुरुषार्थत्वे असति विरोधात् प्रकृतसंबन्धाभाव एव एतस्येत्यविवक्षितं स्यात् "अथ कर्मा-न्तरे कथमवाक्यभेद" इति भाष्यमाक्षिपति—**विशिष्टविधानसिद्धेः प्रश्नो नोपपद्यते** तद्गु-णाधिकरणे हि विशिष्टविधानं व्युत्पन्नम् । उच्यते । **अवान्तरस्तोत्रसंबन्ध ऋक्सा-मयोर्नोपपद्यते इत्यभिप्रायः** । एकैव हि क्रिया अनेकविशेषणविशिष्टा विधीयत इति व्युत्प-न्नम् , इह तु क्रियान्तरनिवेशिनोः ऋक्सामयोः संबन्धोऽपि विधातुमिष्यते न स लभ्यत इति । यद्येष पूर्वपक्षवादिनोऽभिप्रायः **राद्धान्तवादिनस्तर्हि कोऽभिप्रायः** । उत्तरं—**अयमभिप्रायः रेवतीवारवन्तीययोः संबन्धः स्तोत्रे न स्यात्** । **यद्येकभावविशेषणं ऋक् द्रव्यं साम-वा स्यात्** यदि यागविशेषणे ऋक्सामे स्यातामित्यर्थः । **अत्र पुनः रेवती वारवन्तीयसंबन्धाभिनिर्वृत्तो भावः** स्तोत्राख्यो **भावान्तरस्य** विशेषणम् । रेवतीषु हि वारवन्तीयसम्बन्धे स्तोत्रं संपद्येत तेनोच्यते रेवतीवारवन्तीयसम्बन्धाभिनिर्वृत्तो भाव इति । **स च** स्तोत्राख्य**भावविशिष्टो भावः** क्त्वाप्रत्ययसामर्थ्येनाक्षिप्तो **विधीयमानो** यजिना विशेष्यत इत्यभिप्रायो राद्धान्तिनः । अत्र भाष्यं "द्वावप्येतौ अर्थौ

---

(1) p. 533 (2) पुरुषार्थतया

अर्थः इति प्रयोजनमभिधीयते, यावन्ति पदानि एकं प्रयोजनमभि- निर्वर्तयन्ति, तावन्ति एकं वाक्यं, न चात्र बहूनि प्रयोजनानि, न ह्यत्रानेकस्याभिप्रेतस्यानेकं पदं विधायकमस्ति, रेवतीष्विति नैतत्केवलं रेवतीनां विधायकम्, रेवतीषु वार-

---

युक्तं तावत् अभिनिर्वृत्तिं वदतीति, पूर्वकालतां चेत्ययुक्तम्। न रेवतीवारवन्तीयसंबन्धोत्तरकालता यजेः। उच्यते—प्रतिपत्तावेव तादि- त्युक्तमस्माभिः। समानकर्तृकत्वं तु एकप्रयोगतामापादयतीति सिद्धं विशिष्टविधानम्। अर्थ इति प्रयोजनमभिधीयत इति नियोगार्थाभिप्रायमेतत्। कथं पुनः एकनियोगविधानमिति तद्दर्शयाति—रेवतीषु वारवन्तीयमिति। नाद्यापि च समाप्तिः।

---

क्त्वेत्येष शब्दः शक्नोत्येव वदितुं अभिनिर्वृत्तिं पूर्वकालताञ्च" इति तदाक्षिपति—युक्तं तावत् अभिनिर्वृत्तिं वदतीति। पूर्वकालतां चेत्ययुक्तम्। एकग्रन्थेनाह—न रेवतीवारवन्तीय- संबन्धोत्तरकालता यजेः। उच्यते। प्रतिपत्तावेव पूर्वकालत्वमित्युक्तमस्माभिः। कथं पुन- रत्र भावद्वयस्य संबन्धः येन विशिष्टविधिः इत्यत्राह—समानकर्तृकत्वं तु एकप्रयोगतामापाद- यतीति सिद्धं विशिष्टविधानम्। रेवतीवारवन्तीयसंबन्धाभिनिर्वृत्तिभावसमानकर्तृक[1]यागविधा- नात् [2]विशिष्टविधिः। "अर्थ इति प्रयोजनमभिधीयत" इति भाष्यम्। तद्व्याचष्टे—नियो- गार्थाभिप्रायमेतत् न यागाभिप्रायम् नियोग एव हि प्रधानभूतः सर्वपदानां प्रयोजनम्। कथं पुनः एकनियोगसंबन्ध इति तद्दर्शयति—रेवतीषु वारवन्तीयमिति। नाद्यापि परिसमाप्तिः

---

(1) G. R. यागाभिधानात् (2) G. विशिष्टविधानसिद्धिः

वन्तीयमित्यत्रापि पदद्वये वारवन्तीयशब्दो द्वितीयान्तः, नास्मात् सम्बन्धोऽभिप्रेतो गम्यते, प्रातिपदिकार्थस्याव्यतिरेकात्, कृत्वेत्यपि करोतिर्न सम्बन्धमात्रे पर्यवसितः परप्रयोजनसम्बन्ध-

---

क्रियापेक्षिण्यो हि विना क्रियां न परिसमाप्यन्ते ततः कृत्वेति क्रियासंबन्धः। अयमपि च करोतिः कृत्वेति क्त्वान्तः सन् नैव स्वकारकसंबन्धपर्यवसायी। किं तर्हि? भावार्थान्तरापेक्ष-स्तत्कारकैः संबन्धमनुभवति। भावान्तरं यज्यर्थविशिष्टं प्रतीयत इत्युपपत्त्या एकप्रयोजनसंबन्ध इति न वाक्यभेदः। गुण-फलसंबन्धे पुनः विपरीतमेतत। अथ पुनः एतस्येति श्रुत्यनुरोधात रेवतीवारवन्तीयविशिष्टो यागः प्रकृताग्निष्टुदङ्गतयैव चोद्यते को दोषः?

---

क्रियापेक्षिण्यो हि द्वितीयाद्या विभक्तयः [1]क्रियां विना न परिसमाप्यन्ते अतः कृत्वेति क्रिया-संबन्धः। अयमपि च करोतिः कृत्वेति क्त्वान्तः सन् नैव स्वकारकसंबन्धपर्यवसायी। किं तर्हि? भावार्थान्तरापेक्षः तत्कारकैः संबन्धमनुभवति। समानकर्तृकत्वे क्त्वाप्रत्ययस्योत्पत्तेः भावान्तरव्यतिरेकेण च समानकर्तृकत्वासंभवात्। भावार्थान्तरं च क्त्वाप्रत्ययेनाक्षिप्तं यत्तत् यज्यर्थविशिष्टं प्रतीयत इत्युपपत्त्या एकप्रयोजनसंबन्धः इति न वाक्यभेदः गुणफलसंबन्धे पुनर्विपरीतमेतत्। तत्र याग एव प्रकृतः सन् न विधीयते। यत्तु तदाश्रितं रेवतीवारवन्तीयसंबन्धमभिनिर्वृत्तं भावान्तरं तदपि चाग्निष्टोमस्तोत्रात्मकं प्राप्तमिति न विधीयते। किन्तु तत्र रेवत्यो वारवन्तीयं च विधेयम्। ततश्च वाक्यभेदः। अथ पुन-रेतस्येति प्रकृतवचनस्य श्रुत्यनुरोधात् रेवतीवारवन्तीयविशिष्टो यागः प्रकृताग्निष्टुदङ्ग-तयैव चोद्यते को दोषः?

---

(1) G. तेन क्रियाविधानान्न परिसमाप्तिः

माह; एवं विशिष्टस्तु यजतिर्न परार्थः, तदेकमेषां पदार्थानां प्रयोजनं, तस्मादेकवाक्यत्वं; गुणे पुनः फले प्रकल्प्यमाने अग्निष्टोमसाम्नः कार्यं वारवन्तीयं, एतस्य च यदग्निष्टोमसाम इति वाक्यभेदः स्यात्।

अथोच्येत, रेवत्यादिसर्वविशेषणविशिष्टो याग एतस्याग्निष्टुतो विधीयेत। तथापि पशुकामसम्बन्धात् भिद्येत वाक्यम्। अथैवमुच्येत, रेवतीषु कृतेन वारवन्तीयेन पशुकामो यजेत इति। नैवं शक्यम्, ऋगन्तरप्रगाणाद्विशेषहानाद्वैगुण्यं स्यात्।

---

न खलु कश्चिद्दोषः। अधिकारान्तरानर्थक्यं तु भवति। अथैवमुच्यते रेवतीषु कृतेन वारवन्तीयेन पशुकामो यजेतेति। किमिदमर्थान्तरमुपन्यस्तम्? इदम्। भाव एवायं भावान्तरमाश्रितः कस्मान्न फल साधयति? यथैव हि रेवतीवारवन्तीयविशिष्टः करोत्यर्थो यजतेर्विशेषणम्। एवं फलार्थः किमिति न भवति। राद्धान्तवादी तु वचनादृते न गोदोहनवत् प्रणयनस्य अविहितं साधनं साधनं भवति। विहितं हि साधनं भवि-

---

उत्तरं—न खलु कश्चिन्महापातकादिदोषः अधिकारान्तरानर्थक्यं तु भवति। 'पशुकामो ह्येतेन यजेत' इति। तस्मिन् हि सार्थके अङ्गत्वमेव नोपपद्यते। "अथैवमुच्येत रेवतीषु कृतेन वारवन्तीयेन पशुकामो यजेत" इति भाष्यमाक्षिपति—किमिदमर्थान्तरमुपन्यस्तम्? उत्तरं—इदं अर्थान्तरमनेनोपन्यस्तम्। भाव-एवायं भावान्तरमाश्रितः कस्मान्न फलं साधयतीति। एकग्रन्थेनाह—यथैव हि रेवतीवारवन्तीयविशिष्टः करोत्यर्थो यजतेः सिद्धान्तपक्षे विशेषणं एवं फलार्थः किमिति न भवति राद्धान्तवादी तु वदति वचनादृते न गोदोहनवत् प्रणयनस्याविहितं साधनं साधनं भवि-

ननु इदानीमेवोक्तं, शक्यते हि रेवतीषु वारवन्तीयं कर्तुमिति। सति वचने शक्यम्, असति वचने न वारवन्तीयग्रहणेन गृह्यन्ते। वचनं तर्हि भविष्यति, पशुकामो रेवतीषु वारवन्तीयमभिनिर्वर्तयेत्, ततो यजेत इति यजतिरनुवादः। यदि वचनं रेवतीषु वारवन्तीयसम्बन्धस्य, सिद्धं कर्मान्तरं,

---

तुमर्हति। कुतः? रेवतीस्थवारवन्तीयस्य कार्यान्तराश्रयणादिति प्रागप्युक्तमेव तत्। तदिदमुक्तं ऋगन्तरप्रगाणात् स्तोत्रसाधनविशेषहानं स्यात्। ततश्च क्रतोर्वैगुण्यं भवेत्। अयं चार्थो यावत् प्रकरणादङ्गभावः इत्येतेन भाष्येण प्रदर्शितः। प्रकरणं हि वाक्येनाविनियुक्तस्य ऐदमर्थ्यायालं भवितुमर्हति। तस्मान्न गोदोहनवत् क्रतुसाधनस्य सतः फलार्थता उपपद्यते कृत्वेति भावस्य।

---

तुमर्हति यथा गोदोहनमविहितं प्रणयनसाधनं भवति न तथा यागस्य रेवतीवारवन्तीयविशिष्टः करोत्यर्थः। अतः सोऽपि विधातव्यः। विधीयमाने च वाक्यभेदः। कुतः? उत्तरं–रेवतीस्थवारवन्तीयस्य [1]कार्यान्तराश्रयणात् इति प्रागप्युक्तम्। यदि रेवतीस्थवारवन्तीयस्य याग एव कार्यं स्यात् तदा गोदोहनन्यायो भवेत् तस्य तु स्तोत्रं कार्यं; न च यागस्य स्तोत्रस्य च संबन्धो विहितो लभ्यते। तदिदमुक्तं ऋगन्तर[2]प्रगाणात् स्तोत्रसाधनविशेषहानं स्यात् अतश्च क्रतोर्वैगुण्यं स्यात्। अयं चार्थो अयं चार्थो यावत्प्रकरणादङ्गभाव इत्येतेन भाष्येण दर्शितः। प्रकरणं हि वाक्येनाविनियुक्तस्यैदमर्थ्यायालं भवति। वाक्येन च रेवतीवारवन्तीयविशिष्टः करोत्यर्थः फलार्थतया चोदित इति न यागं प्रति प्रकरणेनाङ्गं स्यात्। ततश्च यागसंबन्धावगमो बाध्येत। तस्मान्न गोदोहनवत् कर्मसाधनस्य सतः फलार्थता उपपद्यते कृत्वेतिभावस्य।

---

(1) कार्यान्तरश्रवणात् (2) श्रवणात्

नाग्निष्टुतो गुणविधिः। ननु ततो यजेत इति यागानुवादात् यागेनास्याङ्गप्रयोजनसम्बन्धो भविष्यति। नैवं शक्यम्, यागं प्रत्यङ्गभावे विधीयमाने पशुकामं प्रत्यसम्बन्धः, उभयसम्बन्धे वाक्यं भिद्येत। अथ यागसम्बन्धोऽनुवादः, प्रकरणेन चाङ्गता। नेदमुपपन्नं; प्रकरणाद्धि वाक्यं बलवत्तरं, तस्मात कर्मान्तरं, यागगुणकं वा रेवतीषु वारवन्तीयं, तद्गुणको वा यागः, तत्र यागपशुकामयोः सम्बन्धस्य विधात्रीं यजतेरुपरितनीं विभक्तिमुपलभामहे लिङ्गं, न तु रेवतीवारवन्तीयसम्बन्धस्य विधायकं साक्षात्किञ्चित् उपलभ्यते। तस्मात् सर्वविशेषणविशिष्टो यागः, पशुकामस्य विधीयते इति सिद्धम्। अथ पुनर्विशिष्टे यागे विधीयमाने, तत् रेवतीषु वारवन्तीयं कथं अग्निष्टोमसाम भवति? इति। उच्यते, वचनात् अग्नि-

---

अतः प्रयोक्तृशास्त्रस्य भेदः "यागगुणकं रेवतीषु वारवन्तीयं तद्गुणको वा याग" इति तावत भावद्वयस्यास्यैककर्तृकतालक्षणः संबन्धः। अङ्गाङ्गिभावस्तु अन्यतो मृग्य इति दर्शयति। कुतोऽन्यतः प्रत्ययसन्निकर्षादिति प्रदर्शितम्। अथ पुनः विशिष्टेयागे विधीयमाने तद्रेवतीषु वारवन्तीयं कथ-

---

अधिकरणार्थमुपसंहरति—अतः प्रयोक्तृशास्त्रस्य भेदः। "यागगुणकं वारवन्तीयं तद्गुणको वा यागः" इति भाष्यं व्याचष्टे—भावद्वयस्यास्य स्तोत्रयागात्मकस्य एककर्तृकतालक्षणः संबन्धः। अङ्गाङ्गिभावस्त्वन्यतो मृग्य इति दर्शयति। समानकर्तृकत्वेन एकप्रयोगावगमो वरं न पुनरिदमङ्गं इदमङ्गीति विशेषावगमः अतोऽसौ अन्यतो मृग्यः। कुतोऽन्यतः? उत्तरं—प्रत्ययसन्निकर्षादिति दर्शितं भाष्ये। यजेः सन्निकृष्टः प्रत्यय इति स एव नियोगविषयः स च करणमङ्गभूतं स्तोत्रम्! "अथ पुनर्विशिष्टे यागे विधीयमाने तत्र रेवतीषु वारन्तीयं कथ-

ष्टोमसाम्नः कार्ये भविष्यतीति, किमिव हि वचनं न कुर्यात्, नास्ति वचनस्यातिभारः। अथ यदुक्तमेतस्यैवेति अनन्तरापेक्षं वचनमिति तत्राऽध्यविरोधादेतद्धर्मकस्येति लक्षणाशब्दो भविष्यति। तस्मात् न गुणात्फलं, कर्मान्तरमेवन्धर्मकमिति, सिद्धम् समेष्वेवंजातीयकेषु कर्मयुक्तं फलम् इति ॥

सौभराधिकरणम् ॥

सौभरे पुरुषश्रुतेर्निधने कामसंयोगः ॥ २८ ॥

'यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः, स सौभरेण

---

मग्निष्टोम साम भवतीति। यागे हि विशिष्टे अग्निष्टोमसामविशेषणत्वं नोपपद्यत इत्यर्थः। कार्यसमर्पणादग्निष्टोमसाम्नो न दोष इति परिहारः। अथेदानीमेतस्येति का कथा स्पष्टेऽत्र शास्त्रभेदे ? एतद्धर्मकस्येति मन्तव्यम्।

सौभरे पुरुषश्रुतेः। उक्तो गुणाधिकारसंबन्धः। यदाश्रितो गुणः तत्संबन्धिन्यधिकारे गुणाधिकार इति सिद्धं अन्याश्रिते गुणे

---

मग्निष्टोमसाम भवति" इति भाष्यं व्याचष्टे—**यागे हि विशिष्टे अग्निष्टोमसामविशे**[1]**षणत्वं नोपपद्यते इत्यर्थः। कार्यसमर्पणादग्निष्टोमसाम्नो न दोष इति परिहारो** भाष्यकारीयः। **अथेदानीं एतस्येति का कथा।** यदा कर्मान्तरं विधीयत इत्युक्तं तदा कथमेतस्येति वचनीयम्[2] ? उत्तरं—इत्थम्। **स्पष्टे हि शास्त्रभेदे एतद्धर्मकस्येति मन्तव्यम्।** एतच्छब्दोऽयं तावत् आञ्जस्येन प्रकृतवर्ती। तत्र यदा कर्मान्तरत्वं निश्चितं तदा धर्मलक्षणार्थो भवति यत्र पुनर्धर्मलक्षणार्थो न भविष्यति अव्यक्तत्वेन सौमिकविध्यन्तप्राप्तेः तत्र वक्ष्यमाणाभिप्रायेण वर्ण्यते अथैष ज्योतिरित्यादौ। इह तु अग्निष्टुनो धर्मा अन्यथा न लभ्यन्त इति धर्मलक्षणार्थ एवायं एतच्छब्दः।

**सौभरे। उक्तो गुणाधिकारसंबन्धः। यदाश्रितो गुणः तत्संबन्धिन्यधिकारे** यथा 'दध्नेन्द्रियकामस्य जुहुयात्' इति **गुणाधिकार इति सिद्धम्। अन्याश्रिते गुणे**

---

(1) विशेषणं (2) G. वर्णनीयम्

स्तुवीत 'सर्वे वै कामाः सौभरे' इति समाम्नाय ततः समामनन्ति, 'हीषिति वृष्टिकामाय निधनं कुर्यात्, ऊर्गित्यन्नाद्यकामाय, ऊ इति स्वर्गकामाय' इति। तत्र विचार्यते, किं सौभरम्, वृष्टेर्निमित्तं, हीषित्येतदपरं वृष्टेर्निमित्तम्, अथ सौभरमेव वृष्टेर्निमित्तं ? यदा तत वृष्टेर्निमित्तं, तदा हीषिति सौभरस्य निधनं कर्तव्यम् इति। एवं ऊर्गित्यन्नाद्यकामस्य, ऊ इति स्वर्गकामस्य च तुल्यो विचारः। कथं निधनादपरं फलं ? कथं वा निधनव्यवस्थार्थं श्रवणमिति, यद्येवमभिसम्बन्धः क्रियते, हीषिति वृष्टिकामाय कुर्यात् इति, ततो निधनादपरं फलं, अथैवमभिसम्बन्धः, हीषिति निधनं कुर्यात् इति, तदा निधनव्यवस्थार्थं श्रवणम्, तदा वृष्टिकामायेति सौभरविशेषणं क्रियते, न हीषा सम्बन्धः।

---

अन्यस्य चाऽधिकारसंबन्धे भावादेव फलं इत्येतदपि स्थितम्। इहेदानीं यदाश्रितो गुणः तत्रैवाधिकारः। कस्मादधिकारान्तरमिदमिति मन्यते ?। विशेषमपश्यन् सर्वस्य चोक्तहेतुत्वात्। तस्मिन् कामाभिधानार्था पुनः श्रुतिः। सत्यमेवं यदाश्रितो गुणः स इति,

---

अन्यस्य चाधिकारसंबन्धे भावादेव फलमित्यपि स्थितम्। तथा स्तोत्राश्रिते गुणे(यागाश्रित) यागस्य चाधिकारसंबन्धे यागादेव फलम् यथा एतस्यैव रेवतीषु इत्यत्र। इदानीं यदाश्रितो गुणः तत्रैवाधिकारः निधनाश्रितं हीषादि तत्रैव चाधिकारः 'हीषिति वृष्टिकामस्य निधनं कुर्यात्' इति। [1]कस्मादधिकारान्तरमिति मन्यते ? [2]विशेषमपश्यन् यथा यो वृष्टिकामो. योऽन्नाद्यकामोयः स्वर्गकामः स सौभरेण स्तुवीतेति सौभराधिकारः तथा निधनादप्यधिकारान्तरमिति पूर्वपक्षवादी मन्यते विशेषमपश्यन् सर्वस्य। सत्यमेवं यदाश्रितो गुणस्तदधिकार(रान्तर)संबन्धे गुणाधिकारः

(1) तस्मात् (2) विशेषण

किं तावत्प्राप्तम्? सौभरे निधने अपरः कामो विधीयत इति। कुतः? पुरुषश्रुतेः, पुरुषप्रयत्नस्यात्र श्रवणं भवति, कुर्यात् इति, तत्र वृष्टिकामस्य हीषश्च सम्बन्धे कर्तव्ये वक्तव्यं भवति, न तु सौभरनिधनसम्बन्धे, तत्र हि साङ्गं सौभरं कुर्यात् इति प्रयोगवचनसामर्थ्यादेव सिद्धम्। तस्मात् कुर्यात् इति पुरुषप्रयत्नवचनादवगच्छामः यतरस्मिन्पक्षे पुरुषप्रयत्नवचनमर्थवत्तरोऽयं पक्षः इति, तत्र अस्मिन्पक्षे अर्थवत्, निधनादपरं फलमिति। तस्मात् सौभरे एकः कामः, भेदेन निधनादपि द्वितीयः कामः इति।

अथ वा वृष्टिकामाय इति पुरुषश्रुतिः, वृष्टिं यः कामयते, स पुरुषो वृष्टिकामशब्देनोच्यते, तदस्मिन् पक्षे श्रुतिर्विनियोक्त्री। इतरस्मिन् पक्षे पुनः वृष्टिकामशब्देन पुरुषवचनेन सता सौभरं लक्ष्येत, तथा लक्षणाशब्दः स्यात्। श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या, न लक्षणा। तस्मात् पश्यामो निधने

---

सत्यां चाप्राप्तौ। प्राप्तौ पुनरभिधेयप्रत्यभिज्ञानं नाधिकारान्तरावगतिः।

---

किं तु सत्यां अप्राप्तौ यत्र प्रकृतोऽधिकारो न प्राप्तः। प्राप्तौ पुनः अभिधेये प्रत्यभिज्ञानं नाधिकारान्तरावगतिः।

अस्यार्थः-हीषिति वृष्टिकामस्य निधनं कुर्यात् इति वृष्टिकामशब्देन सौभरसंबन्ध्येव वृष्टिकामः प्रत्यभिज्ञायते तस्यैव हीषिति विधीयते स च निधनत्वेनैव प्राप्तः। अत्र निधनमप्यनुवाद एव। ननु भाष्यकारो लक्षणेत्याह। तत्र चायमर्थः प्रतीयते वृष्टिकामादिशब्देन सौभरमेव लक्ष्यत इति। न च यथोक्तेन प्रकारेण सौभरं लक्ष्यते कथमेतद्भाष्यमित्याह

द्वितीयः कामः इति। एवं च फलभूयस्त्वं भविष्यति, तस्मात् निधने अपरः कामः।

सर्वस्य वा उक्तकामत्वात् तस्मिन् कामश्रुतिः स्यात, निधनार्था पुनः श्रुतिः ॥ २६ ॥

वाशब्दः पक्षं व्यावर्तयति। न चैतदस्ति, यदुक्तम्, निधने अपरः कामः इति, नैवं सम्बन्धः क्रियते, वृष्टिकामाय हीषिति कुर्यादिति। कथं तर्हि? हीषिति निधनं सौभरस्य इति। कथं? हीषो वृष्टिकामसम्बन्धे क्रियमाणे, निधनं कुर्यात् इति सम्बन्धो न कृतः स्यात्, तत्र हीषिति निधनम्—इति नावकल्प्येत, ततोभयसम्बन्धे वाक्यभेदः, तत्र निधन-

---

लक्षणाशब्देन चास्मिन्नधिकरणे अभिधेयप्रत्यभिज्ञानमेवोच्यते। न पदार्थान्तरसमर्पणम्। कर्मान्तरानवगतिरिव दध्ना जुहोतीति। किमर्थं-स्तर्हि पुनः श्रुतिः? विधानार्थेति ब्रूमः।

---

लक्षणाशब्देन चास्मिन्नधिकरणे अभिधेयप्रत्यभिज्ञानमेवोच्यते। न पदार्थान्तरसमर्पणं गङ्गायां घोष इत्यादिवत्।

अयमर्थः यदा वृष्टिकामशब्देन प्रकृतो वृष्टिकामोऽभिधीयते तदा तस्य हीषिति निधने विधीयमाने तदीयसौभरसंबन्धः तस्य भवतीति पुरुषेण सौभरं लक्ष्यते प्रतिपाद्यत इत्यर्थः। न पुनर्वृष्टिकामशब्देन स्वपदार्थं परित्यज्य सौभरं समर्प्यते। प्रकृताद्वृष्टिकामात् वृष्टिकामान्तरानव[1]गतौ दृष्टान्तमाह—कर्मान्तरानवगतिरिव दध्ना जुहोतीति। यदि प्रकृत एवायं वृष्टिकामः किमर्थस्तर्हि पुनः श्रुतिः। उत्तरं—निधनार्थेति ब्रूमः निधनीभूतहीष्विधानार्थेत्यर्थः।

---

(1) G. रावगतौ

शब्दः प्रमादसमाम्नातः इति गम्येत। नचैवंजातीयकः प्रमादसमाम्नातः इत्युक्तं, तस्मात् न हीषो वृष्टिकामेन सम्बन्धः, तेन न निधनादपरं फलम्।

अथ हीषो निधनसंबन्धे कथम् अवाक्यभेदः इति। उच्यते, वृष्टिकामाय सौभरमस्त्येव, सौभरस्य नियतप्राप्तिः अस्त्येव, तत्र हीषिति कुर्यादित्येष एवार्थो विधीयते। तस्मात् अवाक्यभेदः इति, अतो निधनव्यवस्थेति गम्यते। एवमेव ऊर्गिति, ऊ इति च वदितव्यम्, सर्वस्य सौभरस्य ऊर्ग्वृष्टिस्वर्गकामत्वात् शक्यते कामवचनैः सौभरं लक्षयितुम्। किमर्थं लक्ष्यत इति। निधनार्था पुनः श्रुतिः निधनव्यवस्थां करिष्यतीत्यर्थः।

इति श्रीभट्टशबरस्वामिनः कृतौ मीमांसाभाष्ये
द्वितीयस्याध्यायस्य द्वितीयः पादः ॥

---

ननु अधिकारश्रुतिरिव निधनश्रुतिरपि प्रकृताभिधायिन्येव। सत्यमेवं यद्येकनिधनमेव सौभरं स्यात्। वृष्टिकामाधिकारोऽयुगपत्प्रयोज्यानेकनिधानं तु तत्। अतः पक्षेऽप्रत्यभिज्ञानात् सिद्धं निधनार्थो पुनः श्रुतिरिति।

इति प्रभाकरमिश्रकृतौ मीमांसाभाष्यविवरणे
द्वितीयाध्यायस्य द्वितीयः पादः

---

नन्वधिकारश्रुतिरिव निधनश्रुतिरपि प्रकृताभिधायिन्येव। हीषादयोऽपि प्रकृता एव तेन तेऽपि प्राप्ता एव न विधेयाः। उत्तरं—सत्यं निधनश्रुतिरपि प्रकृताभिधायिन्येव भवेत यद्येकनिधनमेव सौभरं स्यात् वृष्टिकामनिधने अयुगपत्प्रयोज्यानेकनिधनं तु तत्। अतः पक्षे अप्राप्तत्वात् अप्रत्यभिज्ञानात् सिद्धं निधनार्था पुनः श्रुतिरिति।

॥ इति पञ्चिकायां द्वितीयस्य
द्वितीयः पादः ॥

---

# तृतीयः पादः ॥

रथन्तराधिकरणम् ॥

गुणस्तु क्रतुसंयोगात् कर्मान्तरं प्रयोजयेत्संयोगस्याशेषभूतत्वात् ॥

अस्ति ज्योतिष्टोमः, 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति, तं प्रकृत्य श्रूयते, 'यदि रथन्तरसामा सोमः स्यात्, ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान्, यदि जगत्सामा, आग्रयणाग्रान्' इति। तत्र सन्दिह्यते,

---

बृहती

अथ द्वितीयाध्यायस्य

तृतीयः पादः

गुणस्तु क्रतुसंयोगात्। किं पुनरत्राप्रत्यभिज्ञाकारणं ? क्रत्वभिधानं रथन्तरसामाख्यः क्रतुः नास्ति प्रकृतः। कथं तर्हि संशयः ?

---

द्वितीयाध्यायस्य तृतीयः पादः

गुणस्तु। किं पुनरत्राप्रत्यभिज्ञाकारणं इत्यनेन पूर्वपक्षमाक्षिपति। उत्तरं-क्रत्वभिधानम्। रथन्तरसामशब्देन क्रतुरभिधीयते यस्य च रथन्तमेव साम स रथन्तरसामा। ज्योतिष्टोमस्य च न रथन्तरमेव साम, अन्यानि च, अनेकसामगुणयोगित्वात् तदाह—रथरन्तरसामाख्यः क्रतुर्नास्ति प्रकृतः। यदिश्रुत्या हि रथन्तरसामशब्देन पृष्ठमेवोच्येत तदा भवेदवयवप्रयोगापेक्षया प्रकृताभिधायिनो[1] रथन्तरसामशब्दस्य प्रकृतगामिता। पृष्ठस्य विकल्पितसामसाधनत्वात् क्रत्वभिधायित्वं तेन संभवति। क्रत्वभिधानश्चायं सोमशब्दसामानाधिकरण्यात्। सोमेन सोमयागोऽत्र लक्ष्यते यदि रथन्तरसामशब्दः प्रकृते क्रतौ नोपपद्यते कथं तर्हि संशयो राद्धान्तस्यासंभवात्।

---

(1) R. भिधायिता

किं ग्रहाग्रताविशेषो ज्योतिष्टोमस्य विधीयते, उत कर्मान्तरस्य रथन्तरसाम्नो बृहत्साम्नश्च इति; यदि रथन्तरसामग्रहणेन बृहत्सामग्रहणेन च ज्योतिष्टोमोऽभिधीयते, ततस्तस्य ग्रहाग्रताविशेषः, अथ नाभिधीयते, ततः कर्मान्तरस्येति।

किं तावत्प्राप्तम्? प्रकरणात् ज्योतिष्टोमस्येति प्राप्ते उच्यते, गुणस्तु क्रतुसंयोगात् इति, तुशब्दः पक्षं व्यावर्तयति, नैतदस्ति, ज्योतिष्टोमस्येति। कुतः? क्रतुसंयोगात्। कथं तर्हि कर्मान्तरस्येति। ननु ज्योतिष्टोमक्रतोरेवैष एवंजातीयको वादः, रथन्तरसामा बृहत्सामा इति। नेति ब्रूमः, यदि न कृत्स्नक्रतुसंयोगो भवेत्, ज्योतिष्टोमस्य वादः, कृत्स्नक्रतुसंयोगस्तु एषः। कथं कृत्स्नक्रतुसंयोगो भवति? कथं वा न कृत्स्नक्रतुसंयोगः इति। यदि रथन्तरसत्ता वा, बृहत्सत्ता वा निमित्तं ग्रहाग्रताविशेषस्य, ततो न कृत्स्नक्रतुसंयोगः, रथन्तरं बृहद्वा यदि सामास्ति, ततः ऐन्द्रवायवाग्रता शुक्राग्रता चेति, ततो ज्योतिष्टोमस्य गुणविधिः,। अथ रथन्तरसामसत्ता बृहत्सामसत्ता वा न निमित्तं, ततः कृत्स्नक्रतुसंयोगः। यदि रथन्तरसामा इति

---

यदिशब्दश्रवणात्। यदिशब्दो हि प्रसिद्धार्थतामापादयति अतो भवति संशयः। किं यदिश्रवणादुपसर्जनपरमिदमभिधानं, उताभिधानसामर्थ्यात्

---

उत्तरं—यदिशब्दश्रवणात्। यदिशब्दो हि प्रसिद्धार्थतां रथन्तरसामशब्दस्यापादयति। यच्च प्रसिद्धं तन्न विधेयम्। अतो भवति संशयः। किं यदिशब्दश्रवणात् उपसर्जनपरमिदं अभिधानं रथन्तरस्य साम्नो निमित्तत्वेनाभिधानात् उत स्वक्रियाभिधानसामर्थ्यात्

कोऽर्थः ? अयमर्थः,—यदि रथन्तरसाम अस्य विशेषणं क्रतोः इति। कुत एतत् ? समासपदसामर्थ्यात्, समर्थानां हि पदानां समासो भवति, सामर्थ्यञ्च भवति विशेषणविशेष्यभावे, असाधारणं च भवति विशेषणं, तत्रायमर्थो, यदि रथन्तरमेव साम, बृहदेव वा नान्यत् इति; ज्योतिष्टोमस्य च बहूनि सामानि गायत्रादीनि; तस्मात् न ज्योतिष्टोमस्य वाचकावेतौ शब्दाविति। तेन यद्यपि प्रकरणात् ज्योतिष्टोमस्य गुणविधिः इति गम्यते, तथापि तत् बाधित्वा वाक्येन रथन्तरसाम्नो बृहत्साम्नश्च भवितुमर्हति।

ननु यथा ज्योतिष्टोमो न रथन्तरसामा, एवमन्योऽपि न रथन्तरसामा कश्चिदस्ति। उच्यते, कर्मान्तरं रथन्तरसामकं कल्पयिष्यत्येतद्वाक्यं,—'यदि रथन्तरसामा सोमः स्यात्' इति। ननु नास्त्यत्र विधायकः शब्दः। उच्यते,—अस्ति य एषः 'स्यात्' इति। आह नैष विधातुं शक्नोति, यदि-शब्दसम्बन्धात् विद्यमानस्य निमित्तार्थेनैवंजातीयकः शब्दो भवति, न विधानार्थेनेति। अत्र ब्रूमः, यदेतत् सयदिकं वाक्यं, 'यदि रथन्तरसामा सोमः स्यात्' इति, अत्रावान्तर-

---

क्रत्वन्तराभिधानमस्त्विवति। किं युक्तं ? अभिधानसामर्थ्यमन्तरङ्गं अन्तरङ्गं च बहिरङ्गाद्बलीयः। परिपूर्णं हि पदं पदान्तरमाकाङ्क्षति। अन्वयानुरोधी च

---

क्रत्वन्तराभिधानमस्त्विवति। किं युक्तमस्मिन् संशये। उत्तरं—अभिधानसामर्थ्यमन्तरङ्गं (न)बहिरङ्गभूतो यदिशब्दः। अन्तरङ्गं च बहिरङ्गात् बलीयः। कुतोऽन्तरङ्गमित्यत्र आह—परिपूर्णं हि पदं पदान्तरमाकाङ्क्षति। युक्त्यन्तरं चाह—अन्वयानुरोधी च

वाक्यम् अस्ति, रथन्तरसामा सोमः स्यात् इति, यदवान्तर-वाक्यम् तस्यान्योऽर्थः, अन्यश्च सयदिकस्य, सयदिको न शक्नोति विधातुम्, यत्तु अवान्तरवाक्यम्, तद्विधास्यति। न च रथन्तर-साम्नो बृहत्साम्नो वा भावो निमित्तत्वेन श्रूयमाणोऽप्यर्थवान् भवति। तस्मात् अविवक्षितो यदिसम्बन्धः, तस्मिंश्चाविवक्षिते पदद्वयमिदं रथन्तरसामा सोमः स्यादिति शक्नोति रथन्तर-सामानं क्रतुं विधातुम्, यदीत्यनर्थकम्।

अथ वा यदि रोचेतेत्यध्याहारः। अथ वा यथैतद्भवति, पयसा षाष्टिकं भुञ्जीत, यदि शालिं भुञ्जीत, तत्र दध्युपसिञ्चेत् इति। एवञ्जातीयकेन वाक्येन शालिभोजनं विहितं भवति, एवमत्रापि विहितं द्रष्टव्यम्, यदि रथन्तरसामा सोमः स्यात्, ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् इति। कथं पुनः शालि-भोजनम् तेन वाक्येन विहितं भवति इति। उच्यते,

---

यदिशब्दो न स्वतन्त्रः। तस्मात् यथा क्रत्वन्तराभिधानमुपपद्यते तथातस्यार्थो वर्णनीयः। प्रदर्शिताश्च प्रकाराः।

---

यदिशब्दार्थः न स्वतन्त्रः [1]अव्ययानामन्वयानुवादित्वात्। तस्मान् पदान्तरान्वयलभ्यं यथा क्रत्वभिधानमुपपद्यते तथा तस्यार्थो वर्णनीयः। प्रदर्शिताश्च प्रकाराः यदिशब्दार्थ-वर्णनोपायभूताः।

यदिशब्दपरित्यागः, रुच्यध्याहारकल्पना।
व्यवधानेन संबन्धः, हेतुहेतुमतोश्च लिङ्॥

इति पक्षविकल्पसंग्रहश्लोकश्च तन्त्रवार्तिके।

---

(1) G. प्रत्ययानां

व्यत्यासेन सम्बन्धः कल्प्येत, यदि दध्युपसेचनमिच्छेत्, शालिं भुञ्जीत इति।

ननु न खल्विच्छतेः परां लिङ्विभक्तिमुपलभामहे, सिञ्चतेर्हि तांपरां समामनन्ति इति। सिञ्चतेः खलु सा परा समुच्चरन्ती कर्मेरर्थं गमयति, कामप्रवेदने हि तां मन्यामहे इति, एवमिहापि यद्यैन्द्रवायवाग्रान् ग्रहान् गृह्णीयादिति ग्रहीतुमिच्छेत् इत्यर्थः, ततो रथन्तरसामानं क्रतुं कुर्यात् इति। नन्वेवं सति इच्छामात्रं भवेत्, न ग्रहाग्रताविशेषविधानम्। उच्यते, यथा अस्मिन् लौकिके वाक्ये, यदि दध्युपसेचनमिच्छेत्, शालिं भुञ्जीत इति दध्युपसेचनसङ्कीर्तनात् दध्युपसिक्तं शालिं भुञ्जीत इति तेनैकवाक्यत्वात् गम्यते, एवमत्रापि ग्रहाग्रताविशेषसङ्कीर्तनात् तेनैकवाक्यत्वात् ग्रहाग्रताविशिष्टो रथन्तरसामा गम्यते। अथ वा अत्र हेतुहेतुमतोर्लिङ्, रथन्तरसामा सोम ऐन्द्रवायवाग्राणां ग्रहाणां हेतुः कर्तव्यः इति। तस्मात् कृत्स्नक्रतुसंयोगात् गुणः कर्मान्तरं प्रयोजयेत्, एवं कृत्स्नक्रतुसंयोगोऽर्थवान् भविष्यति।

अपि च पूर्वेण निमित्तेन भवितव्यं, परेण नैमित्तिकेन। कथं? सति हि निमित्ते नैमित्तिकं भवितुमर्हति, न असति, यच्च भविष्यत् तत्, न सत्, भविष्यच्च रथन्तरसाम, तत् कथं पूर्वकालस्य ग्रहाग्रताविशेषस्य निमित्तं भविष्यति? इति। अपिच निःसन्दिग्धं जगत्सामा कर्मान्तरं, तत्सामान्यादितरदपि कर्मान्तरम् इति गम्यते। तस्मात् न ज्योतिष्टोमस्य गुणविधानम् इति॥

एकस्य तु लिङ्गभेदात्प्रयोजनार्थमुच्येतैकत्वं गुणवाक्यत्वात् ॥ २ ॥

तुशब्दात् पक्षोऽन्यथा भवति, नैतदस्ति, यदुक्तं, क्रत्वन्तरमिति। कथं तर्हि ?। ज्योतिष्टोमस्यैव ग्रहाग्रताविशेषः इति। कुतः ?। प्रकरणसामर्थ्यात्। नन्वेतदुक्तं, वाक्यसामर्थ्यात् क्रत्वन्तरस्य रथन्तरसाम्नो बृहत्साम्नश्चेति। परिहृत-

---

एकस्य तु लिङ्गभेदात्। अत्रोच्यते—यद्यभिधानविरोधः स्यात् यद्यर्थो न विवक्ष्येत न त्वत्र अभिधानविरोध उपपद्यते। तर्ह्युपसर्जनार्थे चापि निमित्ततया परिगृह्यमाणे क्रतोरेवाभिधानम्। ननु सामान्तरसंबन्धे सति क्रतोरभिधानं न प्राप्नोति। मैवम्—विरोधापेक्षं हि सामर्थ्यम्। बृहता च रथन्तरस्य क्रतुसंबन्धे विरोधः न साममात्रेण।

---

एकस्य तु लिङ्गभेदात्। अत्रोच्यते—यद्यभिधानविरोधः स्यात् स्यादेतदेवं यदिशब्दार्थो न विवक्ष्येत यथा कथंचिद्वर्ण्येत (कल्प्येत) यदिशब्दः, न त्वत्राभिधानविरोध उपपद्यते उपसर्जनार्थे हि निमित्ततया परिगृह्यमाणे क्रतोरेवाभिधानम्। रथन्तरसामशब्देन यदिशब्दे विवक्षितेऽपि उपसर्जनार्थो निमित्ततया समर्प्यते तत्रापि तु क्रतोरेवाभिधानम्।[1] यदि परं प्रकृतः क्रतुरुच्यते प्रकृतत्वादेव यदिशब्दस्य च प्रसिद्धार्थापादकत्वात्। ननु सामान्तरसंबन्धे सति ज्योतिष्टोमस्य क्रतोरभिधानं न प्राप्नोति। परिहरति-मैवं मंस्थाः; विरोधापेक्षं हि सामर्थ्यम्। अस्यार्थः— रथन्तरं साम यस्येति विग्रहे रथन्तरस्य विशेषणत्वे विशेषणं च व्यवच्छेदकतया भवति। सर्वत्र च विरोधिनोऽर्थस्य व्यवच्छेदो नाविरोधिनः इह तावत् विरोधिबृहता च रथन्तरस्य क्रतुसंबन्धे विरोधः एककार्यत्वात् न साममात्रेण। तेन रथन्तरेण तदेव व्यवच्छिद्यते। तद्व्यवच्छेदमात्रेणैव घटते विशेषणत्वमिति प्रकृताभिधाने-

---

(1) G. अभिधानमेव

मेतत ज्योतिष्टोम एव रथन्तरसामा बृहत्सामा चेति। पुनर्दूषितमनेकसामत्वात् ज्योतिष्टोमस्य, विशेषणं रथन्तरेण बृहता वा न प्रकल्पते इति। तदुच्यते, प्रकल्पते विशेषणं बृहद्रथन्तरयोर्वैकल्पिकत्वात, भवति स प्रयोगः, यत्र रथन्तरं नास्ति; भवति च स प्रयोगः, विद्यमानरथन्तरसामकः, तदेतत् रथन्तरं सत्तयैवासाधारणत्वात् विशेषकम्। तस्मात् ज्योतिष्टोम एव रथन्तरसामा बृहत्सामा चेति।

अथ यदुक्तं, पूर्वेण निमित्तेन भवितव्यम्, उत्तरेण नैमित्ति-केनेति। नैतत्, नियोगतो भवति हि भविष्यदपि निमित्तं, यथा वर्षिष्यति इति कृषिगृहकर्मानुष्ठानम्, अपि च तत् दृष्टम्, इदञ्च वाचनिकं निमित्तं, तत् यथावचनं भवितुमर्हति। 'स्यात्'

---

तस्मादनित्यः शब्द इतिवदुपपन्नमभिधानम्। तद्योगाच्च निमित्तत्वं क्रतोः। कथं तर्हि उपसर्जनार्थे निमित्तमित्युच्यते तदनुबन्धानुसारिणी हि भेदावगतिः क्रतोः। तस्मात्तन्निमित्तमित्युच्यते गुणफलोपबन्धवत्।

---

ऽप्यविरोधः। तस्मादनित्यः शब्द इतिवदुपपन्नमभिधानम् यथा अनित्यशब्देन नित्यतैव केवलं व्यवच्छिद्यते न [1]पुनरक्रियात्वादिकमपि तथा रथन्तरेणापि बृहदेव व्यवच्छिद्यते न सामान्तरम्। तद्योगाच्च रथन्तरयोगाच्च क्रतोरेव च निमित्तत्वं तेन रूपेण कादाचित्कत्वात। यदि क्रतोरेव निमित्तत्वं, कथं तर्हि उपसर्जनार्थो निमित्तमित्युच्यते। उत्तरं—[2]बृहद्रथन्तरानुबन्धानुसा-रिणी हि भेदावगतिः क्रतोः तेन रथन्तरादिनानुबन्धेन तद्भेदावगतिः क्रतोः [3]तस्मात्तन्निमित्त-मित्युच्यते गुणफलोपबन्धवत्। यथा गुणफलोपबन्धे गुणस्य फलसाधकत्वमित्युच्यते तद्वशेन

---

(1) G. न पुनः कृतकत्वादिकमपि (2) G. तदनुबन्ध (3) G. तस्मान्न

इति चेयं लिङ् त्रिष्वपि कालेषु भवति। तस्मात् भविष्यदपि निमित्तम्। यत्तु जगत्सामेति कर्मान्तरम्, तत्सामान्यात् रथन्तरसामापि कर्मान्तरमिति। जगत्साम असम्भवात् कर्मान्तरम् सम्भवति, रथन्तरसाम्नो बृहत्साम्नश्च ज्योतिष्टोमस्याभिधानं, तस्मात् न कर्मान्तरमिति ॥

अथ अवेष्ट्यधिकरणम् ॥

अवेष्टौ यज्ञसंयोगात् क्रतुप्रधानमुच्यते ॥ ३ ॥

अस्ति राजसूयः, 'राजा राजसूयेन स्वाराज्यकामो यजेत' इति। तं प्रकृत्यामनन्ति अवेष्टिं नामेष्टिम्, 'आग्नेयोऽष्टा-

---

क्रतोरेव हि निमित्तत्वं न तदनुबन्धस्य।

अवेष्टौ यज्ञसंयोगात्। अत्र ब्राह्मणादिश्रवणं यद्यर्थयोगश्च संशयहेतुः।

---

क्रतोर्भेद इति तथेहापि। एतदुक्तं भवति। निमित्तभूतस्यापि क्रतोः यन्निमित्तं निमित्तत्वं भवति तदनुबन्धवशेनावस्थाभेदादनुबन्धस्य निमित्ततोच्यते। कस्मादेवं वर्ण्यते इत्यत्राह— क्रतोरेव हि निमित्तत्वं न तदनुबन्धस्य 'यदि रथन्तरसामा सोमः स्यात्' इति क्रतोरेव निमित्तत्वेन श्रवणात्।

अवेष्टौ यज्ञसंयोगात्। राजसूयाधिकारादधिकारान्तमन्नाद्यादिकमवेष्टेर्नास्तीति कृत्वा-चिन्तेयम्। यद्यधिकारान्तरं स्यात् तदा निमित्तार्थतैव ब्राह्मणादित्वश्रवणानां स्यात्। अत्र ब्राह्म-णादिश्रवणं यद्यर्थयोगश्च संशयहेतुः। राजसूये ब्राह्मणवैश्ययोः असंबन्धात्। क्षत्रियस्य च निमि-त्तत्वात् निमित्तार्थता तावन्नास्तीति प्रापकता प्रतिभाति। यदिशब्दश्रवणाच्च निमित्तार्थतेति संशयः

कपालो हिरण्यं दक्षिणा' इत्येवमादि। तां प्रकृत्य विधीयते, 'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वाऽभिघारयेत्, यदि राजन्य ऐन्द्रं, यदि वैश्यो वैश्वदेवम्' इति। तत्र सन्दिह्यते, किं ब्राह्मणादीनां प्राप्तानां निमित्तार्थेन श्रवणम्, उत ब्राह्मणादीनामयं यागो विधीयते इति। कथं निमित्तार्थता भवेत्? कथं वा यागविधानमिति। यदि राजशब्दो ब्राह्मणादिष्वपि केनचित् प्रकारेण, ततो निमित्तार्थता; अथ क्षत्रिय एव, ततः प्रापकाणि एवंजातीयकानि श्रवणानि।

किं तावत्प्राप्तम्? निमित्तार्थता इति,। ततः एवं तावदुपवर्ण्यते, यौगिको राजशब्दः इति, राज्यं यस्य कर्म, स

---

यदि राजसूये ब्राह्मणानां प्राप्तिः तदा पूर्वाधिकरणवत् अभिधानाविरोधात् निमित्तार्थानि श्रवणानि। अथ तु न प्राप्तिः तदा कर्मान्तरविधानं तदनुरोधेन च यद्यर्थो व्याख्येयः पूर्वाधिकरणपूर्वपक्षवत्। कथं पुनः प्राप्त्यप्राप्ती अवगम्येते? राजशब्दस्याभिधेयनिरूपणात्। यदि हि राजशब्दः कर्मयोगात् कर्तरि वर्तते तदा

---

यदि राजसूये ब्राह्मणादीनां प्राप्तिः तदा पूर्वाधिकरणवत् अभिधानाविरोधान्निमित्तार्थानि श्रवणानि। अथ तु न प्राप्तिः तदा कर्मान्तरविधानं पूर्ववत्। तदनुरोधेन च यद्यर्थो व्याख्येयः पूर्वाधिकरणपूर्वपक्षवत्। कथं पुनः प्राप्त्यप्राप्ती ब्राह्मणादीनां त्रयाणां राजसूये ऽवगम्येते। उत्तरं—राजशब्दस्याभिधेयनिरूपणात्। यदि हि राजशब्दः कर्मयोगात् राज्यरक्षणजनपदपुरुषपरिपालनकर्मयोगात् कर्तरि वर्तते तदा त्रयाणामपि कर्मयोगात् ब्राह्मणादीनां

राजा। किं पुना राजकर्म ? जनपदपुरपरिरक्षणे, ततश्चो-द्धरणे राज्यशब्दमार्यावर्तनिवासिनः प्रयुञ्जते ; राज्ञः कर्म राज्यम् इति चाभियुक्ता उपदिशन्ति ; तेन मन्यामहे, यस्यैतत् कर्म स राजा इति, यथा ये उदमेधं नाम कश्चित् पुरुषं नावेदिषुः, तस्य तु पुत्रमौदमेघिः इत्येवं विदुः, शक्नुयुस्ते यः तस्य पिता, स उदमेघः इति कल्पयितुम्, उदमेघपुत्रस्यैवं

---

प्राप्तिः। अथ कर्तृ(रि)योगात् कर्माभिधीयते तदा न प्राप्तिः तदा पिक-नेमसततामरसादीनामिव म्लेच्छव्यवहारादेव अभिधानावगतिः कः पुनरत्र निर्णायकहेतुः ? पूर्वपक्षवादीतु मन्यते कर्मयोगात् कर्तर्यभिधानम्, आर्य-व्यवहारात्। म्लेच्छानां पुनरार्यविरोधे ह्युक्तमप्रामाण्यं यववराहादिषु। ननु चार्याणां मूर्धाभिषिक्ताः शब्दविदः कर्तृयोगात् कर्मशब्दं स्मरन्ति ;

---

प्राप्तिः। अथ कर्तृयोगात् कर्म जनपदपरिपालनादि राज्यशब्देनाभिधीयते तदा पूर्वसिद्धो राजाऽन्वेषणीयः। शक्यते च निर्णेतुं क्षत्रियोऽन्ध्राणां प्रसिद्धः इति न प्राप्तिः ब्राह्मणादीनां राजकर्तृके राजसूये। तदा पिकनेमसततामरसादिशब्दानामिव म्लेच्छ-व्यवहारादिवदेव अभिधानाभिधेयावगतिः। कः पुनरत्र निर्णयहेतुः। तत्र पूर्वपक्ष-माह-पूर्वपक्षवादी तावन्मन्यते कर्मयोगात् कर्तर्यभिधानं आर्यव्यवहारात्। आर्या हि जन-पदपालनादिकर्तरि ब्राह्मणादावपि राजशब्दं प्रयुञ्जते। ननु कर्मानपेक्षं क्षत्रियमात्रे म्लेच्छानां[1] प्रयोगोऽस्तीति कथं कर्मनिमित्तत्वनिर्णयः इत्यत्राह—म्लेच्छानां पुनः आर्यव्यहारविरोधे ह्युक्त-मप्रामाण्यं यववराहादिषु तेन तद्व्यवहारो दुर्बलः आर्यव्यवहारो बलीयान्। नन्वार्याणां मूर्धा-भिषिक्ताः शब्दविदः कर्तृयोगात् कर्मशब्दं स्मरन्ति राज्ञः कर्म राज्यमिति स्मरणात्। परिहरति

---

(1) अन्ध्राणां

समभिव्याहारो भवति इति। एवं राज्ययोगात् राजशब्दः इति विज्ञायते।

ननु जनपदपुरपरिरक्षणवृत्तिमनुपजीवत्यपि क्षत्रिये राजशब्दमान्ध्राः प्रयुञ्जते प्रयोक्तारः। न ब्रूमः, न प्रयुञ्जते इति, किं तर्हि कर्मविशेषनिमित्तत्वात् राजशब्दस्य, तद्योगादपि राजशब्दो भवति इत्येतदुपपादयामः; प्रयुञ्जते च तद्युक्ते

---

सत्यं, व्यवहारमूलत्वात् स्मृतेः प्रकृतिप्रत्ययविभागार्थमेतद्भविष्यति। प्रकरणानुग्रहात् यदिशब्दोपबन्धाच्च निमित्तार्थानि श्रवणानि। किञ्च म्लेच्छैरपि कर्मयोगात् कर्तरि प्रयुज्यत एव। ततः किम्? अविप्रतिपत्तिः अविप्रतिपत्तेश्च न प्रतिपक्षतां कर्तृपूर्वकः प्रयोगः भजत इत्यभिप्रायः।

---

—सत्यं व्यवहारमूलत्वात्तु स्मृतेः प्रकृतिप्रत्ययविभागार्थमेतत् भविष्यति—अस्यार्थः। व्यवहारमूलिका व्याकरणस्मृतिः व्यवहारश्चार्याणां बलीयान् म्लेच्छानां दुर्बल इति स्थितम्। तेन म्लेच्छप्रयोगस्तावन्न मूलं स्मृतेः। आर्यप्रयोगस्तु कर्मयोगात् कर्तरि तेन तन्मूलैवेयं स्मृतिः तन्मूला चेत्तदानुगुण्येन [1]राज्यशब्दानुसारेण वर्णनीया 'राज्ञः कर्म राज्यमित्युक्ते ज्ञायत एवैतत् यो राज्यं करोति स राजेति। ननु यद्यपि राजसूये ब्राह्मणादीनां संभवः तथापि कथं निमित्तार्थतेत्यत्राह—प्रकरणानुग्रहात् यदिशब्दोपबन्धाच्च निमित्तार्थानि श्रवणानि। राजशब्दस्य राज्यनिमित्तत्वे युक्त्यन्तरं चाह—किञ्च म्लेच्छैरपि कर्मयोगात् कर्तरि प्रयुज्यत एवाक्षत्रिये राजशब्दः। ततः किं? उत्तरं—अविप्रतिपत्तिः सर्वलोकानां कर्मनिमित्तके राजशब्दे, जातिनिमित्तके तु विप्रतिपन्ना आर्या एव विप्रतिपद्यन्ते। तेन तत्प्रतिपक्षतां कर्तृपूर्वकः प्रयोगो न भजत इत्यभिप्रायः।

---

(1) राजसूयानुशासनपरा लक्ष्यते

राजशब्दम् अक्षत्रियेऽपि, तदस्मिन् उपपन्ने प्रकरणवशात्, यदि-शब्दसमभिव्याहाराच्च राजसूयस्यैव गुणविधानं भविष्यति, न ब्राह्मणस्य वैश्यस्य च कर्मान्तरं विधायिष्यति इति ।

अथ वा असार्वलौकिकस्य प्रयोगस्य सार्वलौकिकेन प्रयोगेण विरुध्यमानस्य अप्रामाण्यं स्यात्, अभ्युपगच्छन्ति हि ते जन-पदिनः, सार्वभौमं प्रयोगम् । अपिचाविप्रगीता लौकिका अर्था विप्रगीतेभ्यः प्रत्ययिततरा भवन्ति, तथा आर्यावर्तनिवासिनां शब्दार्थोपायेष्वभियुक्तानामभिव्याहरतां कर्माणि चानुतिष्ठतां अन्त्यजनपदवासिभ्यो म्लेच्छेभ्यः समीचीनतर आचारो भवति । तस्मात् यौगिको राजशब्दः, निमित्तार्थानि श्रवणानि, राज-सूयस्य गुणविधिर्न कर्मान्तरमिति ।

---

अत्राभिधीयते—प्रापकाण्येवैतानि । कुतः ? स्मृतेः । विप्रतिपत्तौ हि प्रयोगस्य स्मृतिः प्रमाणं गवादिष्विव । स्मृतिश्च कर्तृयोगात् कर्मशब्द इति । ननु चाप्रतिपक्षः सार्वभौमः प्रयोग इत्युक्तम् । सति च प्रतिपक्षे स्मृतितो निर्णयः ।

---

अत्राभिधीयते । प्रापकाण्येवैतानि वचनानि । कुतः ? स्मृतेः । कथं स्मृतेः प्राप-कतावगम इत्यत्राह—विप्रतिपत्तौ हि प्रयोगस्य स्मृतिः प्रमाणं गवादिष्विव । म्लेच्छप्रयो-गार्यप्रयोगयोर्विप्रतिपत्तौ यः प्रयोगः स्मृत्याऽनुगृह्यते सोऽनादिः यथा गोगाव्यादीनां विप्रतिपत्तौ स्मरणम् । स्मृतिश्च कर्तृयोगात् कर्मशब्दं स्मरति इति स्मृत्या म्लेच्छप्रयोगोऽनुगृह्यते । अतः स एव बलीयान् इति क्षत्रियमात्रवचनो राजशब्दः । ननु चाप्रतिपक्षः सार्वभौमप्रयोग (प्रधान) इत्युक्तम् । सति च प्रतिपक्षे स्मृतितो निर्णयः तेनायं स्मृतेर्विषय एव न भवति ।

एवं प्राप्ते ब्रूमः—अवेष्टौ तु खलु क्रतुप्रधानं ब्राह्मणादिश्रवणं, ब्राह्मणादीनामवेष्टियागं विधातुम्, न निमित्तार्थम्। कुतः?। अप्राप्तत्वात् ब्राह्मणवैश्ययोः। कथमप्राप्तिः?। क्षत्रियस्य राजसूयविधानात्, राजा राजसूयेन यजेत इति। ननूक्तम् यौगिको राजशब्दः इति। एतदप्ययुक्तम्, यतः जातिवचनः इति। ननूभयाभिधाने यदिशब्दसम्बन्धात्, प्रकरणाच्च न कर्मान्तरविधानं न्याय्यम् इत्युक्तम्। अत्रोच्यते, नोभयाभिधानमवकल्पते। कुतः? यदि तावत् जातिशब्दो राजेति, ततः तत्कर्मत्वात जनपदपरिपालने राज्यशब्दो भविष्यति, तेनार्यावर्तनिवासिनां प्रयोगो न विरोत्स्यते।

---

आर्यप्रयोगमूलत्वाच्च व्याकरणस्मृतेः प्रयोगदपि विरोधः। अतश्च विरोधे त्वनपेक्षमिति बाध एव न्याय्यः। प्रातिपदिकार्थविभागार्थतयोपपद्यत इत्युक्तम्। उच्यते। न स्मृतिरवबाधितुं शक्यते। मूलाभावाद्धि स्मृतेर्बाधः। अस्ति चेदं मूलं मन्त्राणां प्रयोगः। ननु च सार्वभौमप्रयोगः आर्यव्यवहारश्च विरुध्यते। न विरुद्ध्यते। अन्ध्र—प्रयोगमूलायामपि स्मृतावुपपद्यत एवार्यव्यवहारः, सार्वभौमत्वं च।

---

युक्त्यन्तरं चाह—आर्यप्रयोगविरोधेन म्लेच्छप्रयोगे निरस्ते आर्यप्रयोगमूलत्वाच्च व्याकरणस्मृतेः प्रयोगादपि विरोधः। अतश्च 'विरोधे त्वनपेक्षं' इत्यनेन न्यायेन बाध एव न्याय्यः स्मृतेः। प्रातिपदिकार्थविभागेन प्रातिपदिकार्थविवरणेन स्मृतिरुपपद्यत इत्युक्तम्। उच्यते। न स्मृतिरवबाधितुं शक्यते। मूलाभावाद्धि स्मृतेर्बाधः। अस्ति चेदं मूलं मन्त्राणां प्रयोगः स्मृतिः [तिः] ननु सार्वभौमप्रयोगः आर्यव्यवहारश्च विरुध्यते। न विरुध्यते। कस्मादित्याह—अन्ध्रप्रयोगमूलायामपि स्मृतावुपपद्यत एवार्यव्यवहारः सार्वभौमत्वं च गौण्या

अथ यदि राज्यशब्दः परिपालने नित्यसम्बद्धो भविष्यति, ततः तस्य कर्तेति राजशब्दः क्षत्रियजातौ तन्निमित्तो भविष्यति, तत्र आन्ध्राणां प्रयोगो न विरोत्स्यते। तस्मात् न प्रयोगदर्शनादुभावपि राजराज्यशब्दौ जातिपरिपालनाभ्यां नित्यसम्बद्धावित्यभ्युपगन्तव्यम्। को नु खलु निर्णयः? राजजातीयस्य कर्मेत्यतः परिपालनं राज्यशब्देन उच्यते, एवं हि स्मरन्तोऽभियुक्ताः तस्य कर्म इति ष्यञ्प्रत्ययं विदधति, न तु तस्य कर्तेति प्रत्ययलोपं वा, प्रातिपदिकप्रत्यापत्तिं वा समामनन्ति। तस्मात् राज्ञा कर्म राज्यं, न राज्यस्य कर्ता राजा।

ननु यो यो जनपदपुरपरिरक्षणं करोति, तं तु लोको राजशब्देन अभिवदति। उच्यते, योगात् लोकः प्रयुङ्क्ते, परिपालने राज्यशब्दः प्रसिद्धः इति, स तु परिपालने राज्यशब्दो राजयोगात् इत्यस्माभिरुक्तं, तस्मात् राजशब्दः प्रसिद्धेर्मूलं,

---

तस्माद्विरोधे त्वनपेक्षमित्येतदप्युक्तमयुक्तम्। अप्रत्यक्षता सिद्धैव। नैवं सति सार्वभौमस्य प्रत्यक्षतोपपद्यते। कार्यकरत्वात् प्रयोगोपपत्तेः।

---

वृत्त्या। कर्मयोगनिमित्तकः शब्दो घटत एवेति भावः। तस्माद्विरोधे त्वनपेक्षमित्ययुक्तं म्लेच्छप्रयोगमूलत्वात्स्मृतेः तेन च सह विरोधाभावात्। ननु सार्वभौमप्रयोगविरोधात् म्लेच्छप्रयोग एवात्मानं न लभते कथमसौ मूलमुच्यते। स्मृत्यनुगृहीतत्वात् म्लेच्छप्रयोग एवानादिः आदिमानार्यप्रयोगः। न च अनादेरादिमान् प्रतिपक्षो भवति स्वयमविद्यमानत्वात् तदाह—अप्रतिपक्षता च सिद्धैव म्लेच्छप्रयोगस्य। एतदेव दर्शयति—नैवं सति सार्वभौमस्य प्रतिपक्षता उपपद्यते। कार्यकरत्वात् प्रयोगोपपत्तेः गौणत्वादित्यर्थः। मुख्यपूर्वकश्च गौण इति न मुख्य-

तद्योगात् राज्यशब्दः, तद्योगादपि ब्राह्मणवैश्ययोः राजशब्दः प्रयुज्यते ; न त्वेवं स्मरन्ति, राज्ययोगात् राजा इति ।

यत्तूक्तम्, अनुमानात् राज्यस्य कर्ता यः स राजा, यथा औदमेघेः पिता उदमेघः इति । उच्यते, अनुमानात्प्रयोगो बलवान्, राज्यस्य कर्तारं राजा इत्यनुमिमीमहे, क्षत्रिये तु प्रत्यक्षं प्रयुञ्जानान् उपलभामहे । तथा योगमप्यनुमिमीमहे, राज्यस्य कर्ता राजा इति ; राज्ञः कर्म राज्यमिति तु स्मरन्ति ; अनुमिमानाश्च स्मार्तं अनुमिमते स्म, स्मरन्तस्तु प्रत्यक्षमुपलभन्ते, तेन तत्र स्मृतिर्बलीयसी इति । आह, यो यो राज्यं करोति, तत्र राजशब्दं प्रयुञ्जते, न यत् राज्ञः कर्म तद्राज्यमिति, तेन मन्यामहे, राज्ययोगो राजशब्दप्रवृत्तौ निमित्तं, न तु राजयोगो राज्यशब्दप्रवृत्तौ इति । न ब्रूमः, प्रयोगात् वयं राजयोगं राज्यशब्दप्रवृत्तौ निमित्तमवगच्छामः

---

तस्मात् प्रापकाण्येतानि वचनानि क्षत्रियाभिधानाद्राजशब्दस्य । यदुक्तं प्रातिपदिकार्थविभागार्था स्मृतिरिति ; न मूले संभवत्यन्यार्थता सूत्रस्य शक्यते वक्तुम् । अतः प्रापकाण्येतानि ।

---

प्रतिपक्षता । यदुक्तं प्रातिपदिकार्थविभागार्था स्मृतिरिति, न मूले संभवति अन्यार्थता सूत्रस्य शक्यते वक्तुम् ।

अधिकरणार्थमुपसंहरति—अतः प्रापकाण्येतानि क्षत्रियाभिधेयत्वाद्राजशब्दस्य क्षत्रिय एवाभिधेयो यस्य सः क्षत्रियाभिधेयः तस्य भावस्तत्त्वम् । तस्माद्राजसूये क्षत्रियस्यैवाधिकारात् ब्राह्मणवैश्ययोरसंभवात् क्षत्रियस्याव्यभिचारान्न निमित्तार्थानि श्रवणानि किन्तु प्रापकाणीति ।

इति, कथं तर्हि ? स्मरणात्, प्रयोगाच्च स्मृतिर्बलीयसी, प्रयोगाद्धि स्मृतिरनुमीयेत।

अपि च राज्ययोगस्य निमित्तता व्यभिचरति, जनपदपरिपालनमकुर्वत्यपि राजेत्यान्ध्रा वदन्ति इत्युक्तम्। ननु राजयोगात् राज्यम् इत्येतदपि व्यभिचरति, न हि राज्ञः स्पन्दितं निमिषितञ्च सर्वं राज्यम् इत्युच्यते। यदि वयं प्रयोगान्निमित्तभावं ब्रूयाम, तत एवमुपालभ्येमहि; स्मृत्या तु वयं निमित्तभावं ब्रूमः, तेन यद्यत् राजजातीयस्य कर्म ज्ञात्या विशेष्यते, तत् राज्यमित्यभ्युपगच्छामः। यत्तूक्तम्, आन्ध्रा अपि राज्ययोगात् राजानमभ्युपगच्छन्ति इति, परिहृतमेतत्, प्रयोगो दुर्बलः स्मृतेः इति। यदुक्तम्, आर्यावर्तनिवासिनः, प्रमाणमितरेभ्य आचारेभ्यः इति। तुल्यः शब्दप्रयोग आचारेषु इत्युक्तम्। तस्मात् जातिनिमित्तो राजशब्दः, एवञ्चेत् 'यज्ञसंयोगात्' क्षत्रियस्य राजसूयेन, यागविधिरवेष्टिः इति।

### आधानाधिकरणम्।

आधानेऽसर्वशेषत्वात् ॥ ४ ॥

इदं समामनन्ति, 'वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः' इति; तत्र सन्दिह्यते, किं ब्राह्मणादिश्रवणं निमित्तार्थं, ब्राह्मणादय आदधाना वसन्तादिष्वादधीरन् इति, उत ब्राह्मणादीनामाधानं विधीयते? इति। कथं निमित्तार्थता स्यात्? कथं चाधानविधानम्? इति। यदि ब्राह्मणो वसन्ते इतिपदद्वयं परस्परं सम्बद्धं,

ततो निमित्तार्थं श्रवणम्। अथ ब्राह्मण आदधीत इति, आधानविधानं ब्राह्मणस्य। एवं राजन्यादिष्वपि।

किं तावत्प्राप्तम्? निमित्तार्थं श्रवणम् इति। कुतः? निमित्तसरूपा एते शब्दाः। किं निमित्तसारूप्यम्? ब्राह्मणादीनां वसन्तादिभिः समुच्चारणम्, तच्चाविदितं वेद्यते इति।

---

आधानेऽसर्वशेषत्वात्। किमत्र चिन्त्यते? आधानगतो भेदः।

---

आधाने। ननु शास्त्रभेदलक्षणमध्यायेऽस्मिन्नारब्धम्। न चात्र शास्त्रभेदो विद्यते नियोगशून्यत्वादाधानस्य। कुतस्तच्छून्यता? गुणकर्मणां नियोगविषयत्वासंभवात्। साध्यद्वयस्यैकवाक्यसमवायविरोधात् अग्नयः साध्याः नियोगश्च इत्यनुपपन्नम्। कथं तर्हि नियोगेऽपि साध्ये स्वर्गादेः साध्यत्वोपगमः? यथा तत् तथा श्रूयताम्। नियोगानुगुणतयैव अधिकारिविशेषणभूतस्वर्गः साध्योऽभ्युपगम्यते। शब्दो हि स्वर्गस्याधिकारिविशेषणतयैवान्वयः अर्थात्तु साध्यता। इहापि तथैवेति चेत्। न। तथा फलस्य काम्यमानतया अधिकारिविशेषणत्वानुपपत्तेः। यदेव हि नियोगसाध्यं फलं तत्कामनाविशिष्ट एव नियोगे नियोज्यतया संबध्यते नान्यसाध्यफलकामनाविशिष्टः। न चानियोगसाध्यः कर्मत्वेन श्रवण[श्रूयमाण] क्रियासंबन्धनिबन्धनत्वाच्च कर्मभावस्य। एतच्च तृतीये निपुणतरमुपपादयिष्यामः। यत्र च नियोगो नास्ति तत्र तावदनुबन्धभेदेन शास्त्रभेदो न शक्यते वक्तुम् अनुबन्धाभावात्। नियोगविषयो हि अनुबन्धशब्देनोच्यते। साध्यभेदादपि शास्त्रभेदो न शक्यते वक्तुं आहवनीयादीनामेव सर्वाधाने साध्यत्वात्।

अनेनाशयेन पृच्छति—किमत्र चिन्त्यत इति। उत्तरं—आधानगतो भेदश्चिन्त्यते अस्यार्थः—शास्त्रभेदेऽपि चिन्त्यमाने तद्धेतुतया अनुबन्धीभूतभावार्थभेदोऽप्यत्र चिन्तनीयः। तत्प्रसङ्गेन भावार्थमात्रगतोऽपि भेदोऽत्र चिन्त्यते 'प्राजापत्यानालभते' इतिवत्। आधानगत-

ननु ब्राह्मणादीनां आदधतिनाप्यस्ति समुच्चारणम्। बाढ-मस्ति समुच्चारणम् नत्वमीषाम् आधानसम्बन्धो न विदितः। केन प्राप्तो विदितः इति। कामश्रुतिभिः। काः काम-श्रुतयः? 'अग्निहोत्रं जुहुयात् स्वर्गकामः,' 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्येवमादयः। कथमाभिः श्रुतिभिराधानं

---

किं भिन्नमाधानं उताभिन्नमिति। ननु च षष्ठेऽप्यधिकारार्थतया भेद एव चिन्तितः। य एवं विद्वानाग्निमाधत्ते इति इदमेव प्रतिपक्ष-तयोपन्यस्तम्। अर्थाक्षेपश्च। तस्माद्धेदं नारब्धव्यम्। एकस्यैव न्यायस्य फलद्वयमिदम्। तस्मादत्रोच्यते। (भेदा)भेदे ह्यनुबन्धभेदो हेतुः।

---

भेदचिन्तामेवाह—किं भिन्नमाधानमुतैकमिति। ननु षष्ठेऽपि अधिकारार्थतया भेद-एव चिन्तितः। नचोभयत्रापि पूर्वपक्षे हेतुभेदः येन तन्निराकारणायाधिकरणद्वयमारभ्यते। तदाह—य एवं विद्वानग्निमाधत्ते इतीदमेव भेदप्रतिपक्षतया उपन्यस्तम्। अर्थाक्षेपश्च उभयत्र। य एवं विद्वान् इति सामान्येन सर्वेषामाधानं विहितम्। तदेवानुसृत्य निमित्तार्था-न्येतानि श्रवणानि। वसन्ते ब्राह्मणोऽग्नीनादधीतेति। ब्राह्मण आदधानो वसन्त आदधीत इति। तेनाधानस्याविधेयत्वात् ब्राह्मणाद्यनुबन्धभेदेपि न भेदः। तथा कामश्रुतयो ह्याह-वनीयादिसाध्याः। आहवनीयादिभिर्विनाऽनुपपन्नाः आधानमात्रैकसाध्यत्वादाहवनीयादीनां आधानमाक्षिपन्तीति तत्रैवायं ब्राह्मणादीनां वसन्तादिनियम इति। तस्मात् व्युत्पाद्यभेदाभा-वात् तत् षाष्ठिकमिदमधिकरणं वा नारब्धव्यम्। एकस्यैव न्यायस्य फलद्वयमिदम्। यस्मात् एको न्यायः सिद्धान्ते य एवं विद्वानग्निमाधत्ते इति संभारशेषभूतः अतो नाधानविधायक-मिति। तथा अलौकिकत्वादाहवनीयादिशब्दवाच्यस्यार्थस्य तत्साधनत्वेनाधानस्यापरिज्ञानात् नार्थादाक्षेपः क्रमते इति तस्यैव न्यायस्य फलद्वयमेतत् यदाधानस्य भिन्नत्वं शूद्रादीनां चानधि-कारः—अत्रोच्यते। भेदे ह्याधानस्यानुबन्धभेदो हेतुः भावार्थस्यापि यो भेदः अत्रापि कारकानु-

**प्राप्तमिति। उच्यते, सामर्थ्यात्, यथा अग्निहोत्रमभि-**

---

अतो ब्राह्मणाद्यनुबन्धभेदो अभेदे न युक्तः। तत्र अधिकृतस्याग्नयः उत साग्निकस्याधिकार इत्यन्यैव चिन्ता। स चायं विशेषः तत्रैव निपुणतरं वर्ण्यते। इह तु केवलविधानाभावात् ब्राह्मणाद्यनुबन्धभेदाद्भेद इत्युक्तम्। कः पुनरत्र भेदाभेदयोः कर्मणि विशेषः? यस्य हि यस्मिन् काले आधानं विहितं तस्य हि तदैवाधानम्।

---

बन्धभेद एव हेतुः। **अतो ब्राह्मणाद्यनुबन्धभेदः अभेदे न युक्तः।** विधीयमानमेवाधानं यदा ब्राह्मणाद्यनुबन्धं विधीयते तदा भिन्नं भवति। तेन विधीयमान आधाने ब्राह्मणादीनां अनुबन्धसाधनत्वादाधानस्य भेदः साध्यते। **तत्र** पुनरधिकृतस्य **अग्नयः उत साग्निकस्याधिकारः इत्यन्यैव चिन्ता।** यदा अधिकृतानां सतां अग्नयः तदा प्रापकेष्वग्निश्रवणेषु येषामधिकृतानामग्नयः संभवन्ति तेषामाहवनीयादिषु कर्माणि भविष्यन्ति। अन्येषां तु तैरपि विनाऽधिकारबलेन कर्माणि भविष्यन्ति। यदा तु साग्निकस्याधिकारः तदा ब्राह्मणादीनामेवाग्नेरधिकारस्य विद्यमानत्वात्तेषामेवाधिकारो भविष्यति नान्येषामित्येषा षाष्ठी चिन्ता। **स चायं विशेषः तत्रैव निपुणतरं वर्ण्यते। इह तु केवलविधानाभावात् ब्राह्मणाद्यनुबन्धभेदाद्भेद इत्युक्तम्।** केवलस्य ब्राह्मणानुबन्धरहितस्याधानस्य विधानाभावात् ब्राह्मणाद्यनुबन्धस्यैव विधानात् आधानस्यैव भेद इत्युक्तम्।

**कः पुनरत्र भेदाभेदयोः कर्मणि विशेषः?** उत्तरं—अयमेव विशेषः **यस्य हि यस्मिन् काले आधानं विहितं तस्य** वर्णस्य **तदैवाधानम्।** ब्राह्मणस्य वसन्ते आधानं विहितमिति ब्राह्मण एव वसन्ते आधत्ते। नान्यः, तथा अब्राह्मणः अवसन्त एव नान्यस्मिन् इति। निमित्तार्थायां तु श्रुतौ ब्राह्मणादयो वसन्तादिष्वेव इत्यनियमात् वसन्तादिष्वन्योऽप्यादधीत। विधानपक्षे तु वसन्तकालिकं ब्राह्मणादिकर्तृकं चाधानमाहवनीयादीनामुत्पत्त्यादिकमिति यत्काले यस्य विहितं तत्कालमेव स आधातुमर्हति।

**निर्वर्त्यते, तथा कुर्यात्; यथा दर्शपूर्णमासावभिनिर्वर्त्येते, तथा कुर्यात्; न च, गार्हपत्याहवनीयान्वाहार्यपचनादिभ्यो विना, एतानि कर्माणि सिद्ध्यन्ति, समामनन्ति हि, 'यदाहवनीये जुहोति, तेन सोऽस्याभीष्टः प्रीतो भवति' इत्येवमादि; तेन सामर्थ्यादेतदुक्तं भवति, आहवनीयादि कर्तव्यम् इति तच्चाधानेन विना न सिद्ध्यति इत्याधानमपि कर्तव्यम् इत्यवगम्यते। तत् केन कर्तव्यम्?। यस्य कामश्रुतयः। ताश्चा-**

---

निमित्तार्थायामपि श्रुतौ तुल्यमेतत्। उभयनियमात्। एवं तर्हि नक्षत्राद्याधानमेतत्कालीनमेव त्रयाणामपि कथं स्यादिति विशेषः। अधिकारे पुनर्विशेषं दर्शयिष्यामः। ननु चात्मनेपदोपन्यासो-ऽधिकार एवोपयुज्यते कृत्रिमादिनिवृत्त्यर्थं न पुनः भेदचिन्तायां,

---

पुनश्चोदयति—**निमित्तार्थायामपि श्रुतौ तुल्यमेतत् उभयनियमात्** अगृह्यमाणविशेष-तयोभयं नियम्यत इति भावः। **एवं तर्हि नक्षत्राद्याधानम**ाहवनीयादीनां एतत्कालीनमेव त्रयाणामपि **वर्णानां कथं स्यादिति विशेषः** कृत्तिकास्वग्निमादधीत अमावास्यायामग्निमादधीत इत्येवमादि यन्नक्षत्राद्याधानं तत्कालीनमेव (तत्) त्रयाणामपि वर्णानां संभवादिति वसन्तादि-कालीनमेव यथा स्यात् भावार्थाश्रितत्वात् गुणविधेः वसन्तादिकालीनश्च भावार्थ इति तत्रैव नक्षत्रादिनियमः निमित्तार्थपक्षे तु अनियमः अनिमित्तत्वादस्य। **अधिकारे च पुनर्विशेषं दर्शयिष्यामः**। यदा हि निमित्तार्थाः श्रुतयः तदाऽनियतकालं शूद्रादीनामपि आधानं स्यात् इति अग्निमत्तया च तेषामप्यधिकारः स्यात् इति। अन्यथा तु ब्राह्मणादीनामेवाधिकारः। **अत्र भाष्यकारेणोक्तं**[1] "यदा आधानं विधीयते तदा आत्मनेपदार्थो विवक्षितः ततश्चात्मार्थ-मेवाहिताग्नयः आहवनीयादयो भवन्ति ततश्च कृत्रिमादिनिवृत्तिः" इति। तदाक्षिपति **—नन्वात्मनेपदोपन्यासोऽधिकार एवोपयुज्यते कृत्रिमादिनिवृत्त्यर्थं न पुनर्भेदचिन्ताया-**

(1) P. 569.

विशेषेण ब्राह्मणादीनाम्। तस्मात् अग्नीनामाधानसम्बन्धो विदितः इति। अपि च, उभाभ्यां ब्राह्मणादीनां सम्बन्धे विधीयमाने वाक्यं भिद्येत। न हि तदानीमेकोऽर्थः विधीयते। अतो निमित्तार्थाः श्रुतयः इत्येवं प्राप्तम्।

एवं प्राप्ते ब्रूमः, 'आधानेऽसर्वशेषत्वात्'। प्रापकाण्याधानस्यैतानि श्रवणानि। कुतः? सर्वकर्मणां शेषभूतं आधानमिति न श्रुतिलिङ्गादीनामन्यतमेनोच्यते, किं तर्हि, अग्नीनां सर्वकर्मशेषत्वात्, तच्छेषत्वाच्च आधानस्य। किमतः यद्येवम्? अग्नयः कामश्रुतिभिः प्राप्नुवन्ति, नाधानम् इति। ननु अग्नीनामभ्युपाय आधानम् इति। उच्यते, नैतेषामर्जने आधानमेवैकोऽभ्युपायः, किं तर्हि यथान्येषां द्रव्याणाम् उत्पादने

---

पारार्थ्येऽपि हि आधानस्यानुबन्धभेदात सिद्ध्यत्येव भेदः तस्मिन्निमित्तत्वात। उच्यते—एवं चाधिकारविरोधो न भविष्यतीत्यभ्युच्चयो द्रष्टव्यः।

---

मुपयुज्यते। पारार्थ्येऽपि हि आधानस्य अनुबन्धभेदात् सिध्यत्येव भेदः। तन्निमित्तत्वात् अनुबन्धभेदनिमित्तत्वात् आधानभेदस्य। यद्यप्यात्मनेपदार्थो न विवक्षितस्तथापि विधेयत्वे सति सिध्यत्येव भेदः आत्मनेपदार्थे तु विवक्षितेऽधिकार एव विशेषः कृत्रिमादीनामनाहवनीयत्वात् आहिताग्नीनामधिकारावधारणात् अनाहिताग्नीनामधिकाराभावात् तेनात्मनेपदार्थोपन्यास इहासङ्गत इत्यर्थः। उच्यते। एवञ्चाधिकारविरोधो न भविष्यतीत्यभ्युच्चयो द्रष्टव्यः। यदा विधेयमाधानं तदा आत्मनेपदार्थस्य विवक्षितत्वात आहिताग्नीनामेवाधिकार इति यदुच्यते तदस्मत्पक्ष एवोपपन्नं भवतीत्यभ्युच्चयोऽयं भाष्यकारेणोक्तः।

ऋयणादयश्चाभ्युपायाः, एवमग्नीनामपि इति न नियोगतः उत्पादनमेव, तेन पक्षे आधानं प्राप्नोति, पक्षे न; यतरस्मिन् पक्षे अप्राप्तिः, ततरः पक्ष उत्पत्तिं प्रयोजयिष्यति ब्राह्मणादीनामाधानस्य, ब्राह्मण आत्मार्थमादधीत इति यदा एतद्वचनं, तदा आत्मार्थमेवाहिता आहवनीयादयो भवन्ति, नान्यथा। एवं च सति, न कृत्रिमेण याचितेन वा कर्माण्यग्निहोत्रादीन्यनुष्ठातव्यानीति गम्यते; तेन अकृत्रिम एव केवलोऽग्निस्तेषां साधकः इति निश्चीयते। कथञ्च आत्मार्थता आधानस्य गम्यते? इति कर्त्रभिप्राये हि क्रियाफले आदधीत इत्येतदात्मनेपदं सम्भवति। असत्यस्मिन् वचने कामश्रुतिपरिग्रहे नाधानस्यात्मार्थता भवेत्।

अपि च सतीषु एतास्वाधानश्रुतिषु न कामश्रुतयः शक्नुवन्ति अपराम् आधानश्रुतिं कल्पयितुम्, यथाप्राप्तस्य आधानस्य पुनःश्रुतयः एता भवेयुः, असतीषु एतासु आधानश्रुतिमपरिगृह्णन्त्यः कामश्रुतयोऽशक्यान् अग्निहोत्रादीन् वदन्ति इति परिगृह्णीयुराधानश्रुतिं; सतीष्वेतासु येषामाधानमुक्तम्, तान् अधिकृत्योत्तरकालाः कामश्रुतयो भवन्ति इति गम्यते।

अत्राह, अस्ति केवलस्य आधानस्य विधायिका श्रुतिः, 'एवं सपत्नं भ्रातृव्यमवर्त्ति सहते, य एवं विद्वानग्निमाधत्ते' इति, तया प्राप्तस्य निमित्तार्थानि ब्राह्मणादीनां श्रवणानि भविष्यन्ति। उच्यते, सम्भारविधानार्था पुनः श्रुतिरेषा। नेति ब्रूमः, भिन्नं हि इदं वाक्यम् सम्भारविधानवाक्यात, अन्यो हि अर्थ आधत्ते इति, अन्यः अन्यः 'अप उपसृजति' इति,

एकार्थविधाने हि एकं वाक्यम् भवति, भिन्नौ चेमावर्थौ, तस्मात् अत्र वाक्यभेदः इति।

उच्यते, वसन्ते ब्राह्मणोऽग्नीनादधीतेत्यस्यां श्रुतौ सत्यां पुनःश्रुतिः केवलस्याधानस्य अविधायिका, अपाम्नुपसर्जनन्तु विधीयते, तदेकस्मिन्नर्थे विधीयमाने नानेकार्थं भवति। ननु आधानस्यैतद्विधानं, गुणार्था सा पुनःश्रुतिः। नेति ब्रूमः, सा ब्राह्मणादिसम्बद्धा प्रथमा श्रुतिः, इयं केवला पुनःश्रुतिः। कुतः? सा हि शब्देन विदधाति, तत्र लिङमुचरन्तीं पश्यामः, इयं प्रशस्तमाधानम् इत्याह; ततः प्रशस्तता-माधानस्यानुमन्यामहे। एवं च, वसन्ते ब्राह्मणोऽग्नीनादधीत इत्येषा विधायिका श्रुतिः इति ब्रूमहे, नैतत्प्रशंसा-वचनमस्मत्पक्षं बाधते, शक्यते हि अन्येन विहितं अन्येन प्रशस्तमिति वदितुम्। यदि त्वेतत विधायकमित्युच्येत, ततोऽस्मत्पक्षं विरुद्ध्येत। कथम्?। अज्ञातस्य ज्ञापनं विधानमे-तत्, यदि प्रशंसावचनेन अपूर्वं विज्ञाप्येत, तदा लिङा नापूर्वं ज्ञापितं भवेत्, तत्रापूर्वज्ञापनवचनः शब्दः उपरुध्येत। न तु लिङा विहिते प्रशंसावचनमुपरुध्यते, विहितेऽपि हि वाक्या-न्तरेण प्रशंसावचनमवकल्पते। अपि च यत् लिङा विधानं, तत् श्रुत्या, वाक्येन तु प्रशंसा गम्यते, श्रुतिश्च वाक्याद्बलीयसी।

ननु इदमपि वाक्यम् ब्राह्मणोऽग्नीनादधीत इति। उच्यते, स्वपदार्थमत्र श्रुतिः विदधात्याधानं, ब्राह्मणादि-सम्बन्धेन परपदार्थं प्रशंसति, य एवं सपत्नं भ्रातृव्यमवर्त्ति सहते इति। ननु अनेकगुणविधानं त्वया वाक्यनाध्यवसितं

भवति। नैष दोषः, अगुणविधिपरे हि वाक्ये भवत्यनेक-गुणविधानम्, इत्युक्तं, "तद्गुणास्तु विधीयेरन् अविभागात् विधार्थे न चेदन्येन शिष्टाः" इति। तस्मात् ब्राह्मणादिसंयुक्ता विधायिका श्रुतिः, इयमपि केवलस्याधानस्य पुनःश्रुतिः सम्भार-विधानमुपक्रमयितुमिति सिद्धम्।

यदुक्तम्, अनेकगुणविधाने वाक्यं भिद्येत इति, यदीमौ गुणावाधानविशिष्टौ विधीयेयातां, भवेत् वाक्यभेदः, द्वाभ्यान्तु विशेषणाभ्यां विशिष्टमेकमाधानं विधायिष्यते, तेन न भविष्यति वाक्यभेदः। तस्मात् ब्राह्मणादीनामाधानस्य प्रापकानि श्रवणानि इति सिद्धम्।

अथ दाक्षायणाधिकरणम्॥

अयनेषु चोदनान्तरं संज्ञोपबन्धात्॥ ५॥

दर्शपूर्णमासौ प्रकृत्यामनन्ति, 'दाक्षायणयज्ञेन यजेत प्रजा-कामः, साकंप्रस्थायीयेन यजेत पशुकामः, संक्रमयज्ञेन यजे-तान्नाद्यकामः' इति। तत्र सन्देहः, किं दर्शपूर्णमासयोरेव गुणात्फलम्, उत कर्मान्तरमेवञ्जातीयकमिति?। किं प्राप्तं? कर्मान्तरम्, इति। कुतः?। संज्ञोपबन्धात्, यद्यपि प्रकरणात्

---

अयनेषु चोदनान्तरम्। संज्ञा चोत्पत्तिसंयोगादिति संज्ञा भेत्त्रीति पूर्वः पक्षः।

---

अयनेषु। संज्ञा चोत्पत्तिसंयोगादित्यनेन न्यायेन दाक्षायणसंज्ञा दर्शपूर्णमासाख्यात् कर्मणो भेत्त्रीतिपूर्वः पक्षः।

यजतिशब्दाच्च स एव पूर्वप्रकृतो यागः इति गम्यते, तथापि नासावेवं संज्ञकः इति यागान्तरं विधेयं गम्यते ।

अगुणाच्च कर्मचोदना ॥ ६ ॥

न चात्र गुण उपरुध्यते कश्चित्, यद्विधानार्था चोदना भवेत्, यदि च न यागान्तरम्, आनर्थक्यमेव । अपि च, यदि गुण उपबध्येत, ततो यागगुणसम्बन्धो गम्यते इति तदनुष्ठानं विधीयेत इति अननुबध्यमाने यागमात्रं गम्यते इति तदनुष्ठानं विहितं गम्यते ।

समाप्तं च फले वाक्यम् ॥ ७ ॥

इतश्च कर्मान्तरम् । कथं ? । फले समाप्तं वाक्यं, प्रजाकामो यजेत इति, प्रजाकामस्य याग उपायो विधीयते; विधीयते चेत्, कर्मान्तरम् ।

विकारो वा प्रकरणात् ॥ ८ ॥

दर्शपूर्णमासयोरेवाधिकार एवञ्जातीयकः स्यात् दाक्षायणयज्ञादिः, एवं प्रकरणमनुगृहीतं भवति ।

---

विकारो वा प्रकरणात् । सत्यं संज्ञा भेत्त्री यत्र प्रकृते कर्मणि गुणान्तरानुरक्ते सति गुणान्तरानुरक्ताः साधिकाराश्चोदनाः श्रूयन्ते ।

---

विकारोवा । उच्यते—सत्यं संज्ञाभेत्त्री यत्र प्रकृते कर्मणि गुणान्तरविशिष्टे गुणान्तरविशिष्टाः साधिकाराः चोदनाः श्रूयन्ते

लिङ्गदर्शनाच्च ॥ ९ ॥

लिङ्गमपि एतमर्थं दर्शयति, 'त्रिंशतं वर्षाणि दर्शपूर्णमासाभ्यां यजेत, यदि दाक्षायणयाजी स्यात्, अथो अपि पञ्चदशैव वर्षाणि यजेत, अत्र ह्येव सा सम्पद्यते, द्वे हि पौर्णमास्यौ यजेत द्वे अमावास्ये, अत्र ह्येव खलु सा सम्पत् भवति' इति। यदि दाक्षायणयज्ञो दर्शपूर्णमासावेव, एवं तर्हि त्रिंशत्संपदा प्रयोजनं, ततः तस्य त्रिंशत्सम्पदनुग्रहो युज्यते, तस्मादपि न कर्मान्तरम्।

गुणात्संज्ञोपबन्धः ॥ १० ॥

यदुक्तं संज्ञोपबन्धात् कर्मान्तरमिति, यदि दाक्षायणशब्दो

---

तत्र संज्ञान्यत्वतः कर्मान्यत्वमाख्यातसामानाधिकरण्यं प्रदर्शयद्भिः प्रदर्शितमस्माभिः।

---

तत्र संज्ञान्यत्वतः कर्मान्यत्वं आख्यातसामानाधिकरण्यं प्रदर्शयद्भिः प्रदर्शितमस्माभिः। अस्यार्थः—संज्ञा हि भिन्नोपलभ्यमाना भिन्नं संज्ञिनमुपस्थापयति। संज्ञिवाचिना च तस्याः सामानाधिकरण्यमिति संज्ञिनोऽपि भेदो भवति। अनेन च प्रकारेण तस्य संज्ञायाः कर्मभेदापादकत्वं यत्र प्रकृतं गुणान्तरयुक्तं यथा ज्योतिष्टोमो द्वादशशतदक्षिणान्वितः। गुणान्तरयुक्ताश्चोदनाः श्रूयन्ते एतेन सहस्रदक्षिणेन यजेतेति। तत्र च संज्ञोपकल्पितभेदनिर्वाहकगुणान्तरमस्ति तथा यद्यत्राधिकारोऽपि न श्रूयते अधिकारकल्पनाभयात् प्रकृत एव गुणान्तरमपि विधीयेत। साधिकारत्वे तु एतन्न संभवति। इह च दाक्षायणादिसंज्ञा यद्यपि भेदमापादयति तथापि भेदनिर्वाहकं गुणान्तरं नास्ति। तेन प्रकृतस्यैव कर्मणो नामधेयमिदमपीति निश्चयः।

न केनचिदपि प्रकारेण दर्शपूर्णमासवचनः शक्यते कल्पयितुम्, ततः उच्येत कर्मान्तरमिति; शक्नोति तु आवृत्तिगुणसंबन्धाद्वदितुं, अयनम् इत्यावृत्तिः उच्येत, दक्षस्य इमे दाक्षाः, तेषामयनं दाक्षायणः। कः पुनर्दक्षः?। उत्साही। तथा साकंप्रस्थाय्येऽपि, सहप्रस्थानगुणसंबन्धः, एवं सर्वत्र। शक्यते चेत् दर्शपूर्णमासयोर्गुणसंबन्धो वदितुम्, किमिति स एव यागः प्रतीयमानोऽन्यः इत्युच्यते? किमिति वा प्रकरणं बाध्यते?

समाप्तिरविशिष्टा ॥ ११ ॥

यदुक्तम, फले वाक्यं समाप्तं, प्रजाकामादेर्यागानुष्ठानं विधीयते इति; नैवम्, अविशिष्टा फले समाप्तिः, यानि

---

यच्च समाप्तं च फले वाक्यमिति न फलचोदना कर्मान्तरत्वमापादयितुं क्षमा अननुबन्धत्वात् फलानाम्। कथं तर्हि 'फलं चाकर्मसन्निधौ' इति? असन्निधानमेव हि तत्र कारणं न फलम्। न ह्यसन्निहितं कर्म यजिना विशेषतः प्रतिपादयितुं शक्यते। तस्मा-

---

यच्च समाप्तं च फले वाक्यमिति तस्यायमर्थः—न फलचोदना कर्मान्तरत्वमापादयितुं क्षमा [1]अननुबन्धत्वात् फलानां, अकारकभूतानि फलानि न क्रियाभेदमापादयितुं क्षमाणीत्यर्थः। यदि फलं कर्मभेदापादकं न भवति कथं तर्हि "फलं चाकर्मसन्निधौ" इति भेदकारणमुपन्यस्तम्। परिहरति—असन्निधानमेव तत्र कारणमुपन्यस्तं न फलम्। कथं तर्हि असन्निधानं भेदकारणं इत्यत्राह—न ह्यसन्निहितं कर्म यजिना विशेषतः प्रतिपादयितुं शक्यते। यजेर्यागमात्रवचनत्वात्। यतो विहितं प्रत्य-

(1) G. अनुब

अन्यानि मुक्तसंशयानि गुणे फलस्य विधायकानि वाक्यानि गुणस्य फलवचनानि पर्यवसितानि यथा दध्ना इन्द्रियकामस्य जुहुयात्, इत्येवमादीनि तैरेतदविशिष्टम्, अत्रापि हि गुणात्फलमुच्यते। कथं? नैतदेवं सम्बध्यते, प्रजाकामस्य यज्ञमनुतिष्ठेत् इति। कथं तर्हि? प्रजाकामस्य आवृत्तियज्ञमनुतिष्ठेत् इति, आवृत्तियज्ञः इति यज्ञावृत्तिसम्बन्धोऽनुष्ठातव्यो निर्दिश्यते, न यज्ञः। तस्मात् प्रकृतयोर्दर्शपूर्णमासयोर्गुणात्फलमुच्यते, न यागान्तरं विधीयते इति। एवं साकंप्रस्थाय्ये संक्रमयज्ञे च द्रष्टव्यम् इति॥

---

द्विधानत एव तत्र विशेषोऽवगन्तव्यः। इह पुनः सन्निहितमस्तीति न फलं भेदकमित्युच्यते। संज्ञान्तरोपलब्धस्य प्रयोजनं तत्प्रवृत्तिनिमित्तगुणयुक्तस्य कथं नाम विधानमिति।

---

भिज्ञातुमशक्यं तस्माद्विधान एव विशेषोऽवगन्तव्यः। विधानवशेन चापूर्वयागविशेषो विधीयत इति निश्चीयते। किमर्थं तर्हि तत्र फलं चेति फलग्रहणम्। उच्यते। दूरस्थमपि कर्म तत्र द्रव्यदेवताविशेषावगमेन प्रत्यभिज्ञास्यते इति यो मन्यते तं प्रति फलं चेत्युक्तम्। फलश्रवणे [2]हि कर्मणो विधेयत्वं तत्र च द्रव्यं देवता च न शक्नुतः प्रत्यभिज्ञामापादयितुं दूरस्थत्वादिति। इह पुनः सन्निहितं कर्मास्तीति न फलं भेदकमुच्यते संज्ञान्तरोपलब्धस्य च प्रयोजनं कथं नाम तत्प्रवृत्तिनिमित्तगुणयुक्तस्य विधानमिति दाक्षायणशब्दस्यावृत्तिलक्षणगुणयोगो निमित्तम्। तत्रः फलं प्रजादिकं प्रकृतादधिकं यथा स्यादित्येवमर्थं संज्ञान्तरोपादानम्।

---

(1) G. पुनराक्षेपो हि

अथ द्रव्यदेवतायुक्तानाम् यागान्तरताधिकरणम् ॥

संस्कारश्चाप्रकरणेऽकर्मशब्दत्वात् ॥ १२ ॥

अनारभ्याधीयते किञ्चित्, 'वायव्यं श्वेतमालभेत भूतिकामः, सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः'; दर्शपूर्णमासयोरप्यामनन्ति, 'ईषामालभेत,' 'चतुरो मुष्टीन्निर्वपति' इति। तत्र अयमर्थः सांशयिकः, किं दार्शपूर्णमासिके आलम्भे आलम्भो गुणविधिर्दार्शपूर्णमासिके च निर्वापे निर्वापो गुणविधिरुत न प्रकृतिमपेक्षते इतरश्चेतरश्चेति ? यदा न प्रकृतिमपेक्षते, तदापि किं यावदुक्ते, उत यजिमती एते कर्मणी इति ?

किं तावत् प्राप्तं ? प्रकृतयोरालम्भनिर्वापयोर्गुणविधी-

---

संस्कारश्चाप्रकरणे। 'वायव्यं श्वेतमालभेत' इत्यस्मिन् वाक्ये परस्परस्वरूपानन्वितमेव पदार्थजातं लक्ष्यते। कथं ? अयमालभतिर्न द्रव्यदेवतान्वयि। तस्मादालभतेर्विधानं द्रव्यदेवतापदसंबन्धनिरपेक्षस्य। अनुवादो वा, प्रथमपूर्वपक्षवादी अनुवादं मन्यते। श्वेतपदान्वयलाभात्। अतो यदालभेत तच्छ्वेतं इति वाक्यार्थः।

---

संस्कारश्चाप्रकरणे। ननु एकशास्त्रत्वेऽवगम्यमाने कथमत्र पूर्वपक्षितमित्याशङ्क्याह— 'वायव्यं श्वेतमालभेत' इत्यस्मिन् वाक्ये परस्परानन्वितमेव पदार्थजातं लक्ष्यते तेन युक्ता पूर्वपक्षाशङ्का। कथमनन्वितम् ? उत्तरं—अयमालभतिर्न द्रव्यदेवतान्वयि। द्रव्यदेवतयोरालभतौ संबन्धाभावात्। तस्मात् परस्परान्वयो न घटते। तस्मादालभतेर्विधानं द्रव्यदेवतासंबन्धनिरपेक्षस्य। अनुवादो वा। तत्र प्रथमपूर्वपक्षवादी अनुवादं मन्यते श्वेतपदान्वयलाभात्। अतो यदालभेत तत् श्वेतं इति वाक्यार्थः।

इति। कुतः? अकर्मशब्दत्वात्, नात्र कर्मणो विधायकः शब्दोऽस्ति। ननु आलभेत निर्वपेत् इति च नैतौ विधातारौ अविदितस्यार्थस्य वक्ता विधायको भवति, न चैतयोरविदितोऽर्थः, आलम्भः कर्तव्यः, निर्वापः कर्तव्यः—

---

वायव्यब्रह्मवर्चसकामपदयोः का वार्ता? परस्परासङ्गतेर्वाक्यान्तरं अरुणा-दिवदिति मन्यते। यावदुक्तं वेति ब्रह्मवर्चसकामपदान्वयोऽपि लभ्यत इत्यपरः पक्षः। श्वेतमालभेत ब्रह्मवर्चसकाम इति परं वायव्य-पदस्यैकस्यैवोद्धारः। एतदेव युक्तं ईषालम्भस्याप्रकृतत्वात्। अथ लिङ्गर्थो विहितोपलक्षणार्थः परिगृह्यते विधानं न प्राप्नोति।

---

तेनैषा आलम्भेः श्वेताख्यगुणविधिः। **वायव्यब्रह्मवर्चसकामपदयोः का वार्ता?** ब्रह्मवर्चस-कामपदं कामिपदोपलक्षणार्थं तेन भूतिकामो द्रष्टव्यः। उत्तरं— आलभतिना सह **परस्परा-सङ्गतेः वाक्यान्तरमिति मन्यते** पूर्वपक्षवादी। 'श्वेतमालभेत' इत्येकं वाक्यं 'वायव्यं कुर्यात् भूतिकाम' इत्यपरम्, **अरुणावत्** यथा अरुणाधिकरणपूर्वपक्षे अरुणयेति वाक्यान्तरं तथाऽत्रापीत्यर्थः। **यावदुक्तं वेति ब्रह्मवर्चसकामपदान्वयोऽपि लभ्यते** इत्यने-नाभिप्रायेण **अपरः पक्षः**। **श्वेतमालभेत ब्रह्मवर्चसकाम इति** वाक्यार्थः। **परं वायव्य-पदस्यैकस्यैवोद्धारः** यावत्संभवं एकवाक्यताऽनुग्रहीतुं न्याय्येत्यर्थः। युक्त्यन्तरं चाह— **एतदेव च युक्तं ईषालम्भस्याप्रकृतत्वात्**। तत्र गुणविधानासंभवात्। सन्निहिते हि भावार्थे गुणानुरागमात्रे विधेर्व्यापारो विज्ञायते। असन्निहिते पुनः (गुण)भावार्थविधेरन्यत्र[1] को विधिं व्यापारयितुं क्षमः। **अथ लिङ्गर्थो विहितोपलक्षणार्थः परिगृह्यते** तेन विहिते दूरस्थेपि ईषालम्भे गुणविधिरिति। दूषयति—**गुणस्यापि विधानं न प्राप्नोति**। **विधेरुपल-क्षणपरत्वात्**।

---

(1) G. विधानात्

इति। तस्मात अनुवदितारौ। किमर्थम् अनुवदतः? आलम्भने श्वेतं विधातु, निर्वापे च चरुम्। तस्मात न आलम्भान्तरं निर्वापान्तरं च ; प्राकृतयोरेव गुणविधी इति।

यावदुक्तं वा, कर्मणः श्रुतिमूलत्वात ॥ १२ ॥

न चैतदस्ति, प्राकृतयोर्गुणविधी इति, किं तर्हि ? आलम्भान्तरं विधीयते इति निर्वापान्तरञ्च, यदि आलम्भनिर्वापौ विधीयेते, ततो न प्राकृतौ तौ विहितौ। यदि न विधीयेते, ततः प्राकृतौ लक्ष्येते, यावालम्भनिर्वापौ कर्तव्यौ इति, ततः तौ लक्षयित्वा श्वेतो विधातव्यो भवति, चरुश्च। तौ च भूतिकामस्य ब्रह्मवर्चसकामस्य चेति द्वावप्यर्थौ विधेयौ स्यातां, तत्र वाक्यमभिद्येत। अथ वा योऽसौ विधायकः शब्दः, स लक्षयितव्योपयुक्तः इति विधायकाभावादेकोऽप्यर्थो न शक्यते विधातुम्। अथ स एव लक्षयिष्यति, तेनैव च विधायिष्यते गुणः इति। न मिथो विधानलक्षणसम्बन्धोऽवकल्पते। अथ धात्वर्थोऽनुवादः, प्रत्ययो विधातुमिष्यते इत्युच्यते, य आलम्भः स एतद्गुणः कर्तव्यः इति। तथापि न प्राकृतो लक्ष्येत, लौकिकोऽपि हि आलम्भोऽस्ति, प्रत्ययार्थेऽनूद्यमाने प्राकृतोऽनूद्येत इति, स हि कर्तव्यो निर्ज्ञातो न लौकिकः, अतो न प्राकृतानुवादो घटते इति यावदुक्तं आलम्भमात्रं निर्वापमात्रं च अपूर्वं कर्तव्यं, कर्मणः श्रुतिमूलत्वात्, श्रुतिमूलं हि कर्मेत्युक्तं, चोदनालक्षणोऽर्थो धर्मः इति ; तस्मात कर्मान्तरे ॥

**यजतिस्तु द्रव्यफलभोक्तृसंयोगादेतेषां कर्मसम्बन्धात् ॥ १४ ॥**

**यदुक्तं, न प्राकृतयोर्गुणविधी इति, एतत् गृह्णीमः। यत्तूक्तम्, आलम्भमात्रं विधीयते, निर्वापमात्रं इति, एतदपजानीमहे, यजिमती एते कर्मणी इति। कुतः? द्रव्य-**

---

यजतिस्तु द्रव्यफलभोक्तृसंयोगात्। अत्रोच्यते। स्यादेवं यदि समस्तपदान्वयो न भवति। भवति त्वसौ। कथं? वायव्यं श्वेतमालभेत भूतिकाम इति वाक्यार्थो विधीयते। कथं तर्ह्यालभतिः? अनुवादोऽयं अन्यतः प्राप्तेः। अप्राप्तस्यान्वयो न संभवति। नाविधीयमानस्य स्वर्गकामवत्। अतोऽयमालभतिरित्येकं शास्त्रम्। असंभवत्यन्वये शास्त्रभेदः प्रविश पिण्डीमितिवत्।

---

यजतिस्तु। उच्यते—स्यादेतदेवं यदि समस्तपदान्वयो न संभवति संभवति त्वसौ। उत्तरं—वायव्यं श्वेतमालभेत भूतिकाम इति। वायुदेवत्यश्वेतगुणद्रव्यकयागं कुर्याद्भूतिकाम इति आलभेतेत्यनया लिङा विधीयते। यद्येवं विधीयते कथं तर्ह्यालभतिरन्वयी भविष्यति उत्तरं—अनुवादोऽयमालभतिः अन्यतः प्राप्तेरालम्भस्य। नन्वेवमपि अविधीयमानत्वाद्विधावनन्वितमेवेत्यत्राह—अप्राप्तस्य ह्यन्वयो न संभवति न पुनरविधीयमानस्यापि। अप्राप्तस्यह्यन्वयमात्रमपि न संभवति न पुनः प्राप्तस्य, प्राप्तमविधीयमानमपि विधिनान्वितमेव स्वर्गकामपदवत्। अतो द्रव्यदेवतासंबन्धविधानात् तस्य च यागमन्तरेणानुपपत्तेः यागाक्षेपात् यजिमान् आलभतिरिति ऐकशास्त्र्यम्। न च संभवत्यन्वये शास्त्रभेदो भवति "प्रविश पिण्डीं" इतिवत् 'प्रविशगृहं' इत्येकं शास्त्रं, प्रविश्य च 'भक्षय पिण्डीं' इति द्वितीयम्। इह तु पूर्वोक्तया नीत्या संभवति परस्परसंबन्ध[1] इति न शास्त्रभेद इति

---

(1) परस्परान्वय

फलभोक्तृसंयोगात् द्रव्यदेवतासंयोगात्, द्रव्यदेवतासंयोगोऽत्र विधीयते, भूतिकामस्य ब्रह्मवर्चसकामस्य च। कथं? न हि, इदमेवोच्यते, श्वेतमालभेत इति, यदि ह्येतावदेव उच्यते, ततः श्वेतालम्भसम्बन्धः अवगम्यते, इह हि श्वेतं वायव्यमालभेतेत्युच्यते, तेन श्वेतवायव्यसम्बन्धो विधीयते, यथा पटं वयेति पटवयनसम्बन्धो विधेयोऽवगम्यते, पटं दीर्घं वयेति पटस्य दीर्घता विधीयते, दीर्घशब्दप्रयोगात्, एवमिहापि सौर्यवायव्यशब्दप्रयोगात् द्रव्यदेवताभिसम्बन्धो विधेयः

---

ननु गुणविधिदूषणपक्षेऽनेकगुणविधानं दर्शयति। उक्तं च न वायव्यब्रह्मवर्चसकामौ संबध्येते इति। उच्यते—नायमभिप्रायः ईषालम्भे पदद्वयविधानमिति। कथं तर्हि? यदि प्राप्तानुवादेन ईषालम्भे श्वेतो गुणो विधीयते[किं न]प्राकृतेपि। अथ कस्मादालम्भो वायव्ये ब्रह्मवर्चस-

---

शास्त्रभेदापादकतया च पूर्वपक्षे लक्षणसङ्गतिः। अत्र भाष्यकार एवमाह [1]"आलम्भनिर्वापौ प्राकृतौ लक्षयित्वा श्वेतो गुणो विधातव्यः चरुश्च। तौ चालम्भनिर्वापौ भूतिकामस्य ब्रह्मवर्चसकामस्य च। तत्र वाक्यं भिद्येत" इति। तदाक्षिपति—ननु च गुणविधिपक्षदूषणे अनेकगुणविधानं दर्शयति भाष्यकारः उक्तं च भवद्भिः न वायव्यब्रह्मवर्चसकामौ संबध्येते इति। तेन किमित्यसदध्यारोपेण भाष्यकारो वाक्यभेदमापादयति—उच्यते। नायमभिप्रायो भाष्यकारस्य ईषालंभे पदद्वयविधानमिति। अस्यार्थः-ईषालम्भे पदद्वयसंबन्धः पूर्वपक्षेऽभिमत इत्यनेनाभिप्रायेण न भाष्यकारेणैतदुक्तम्। कथं तर्ह्येतदुक्तं? उत्तरं–[2]आपाद्येदमुक्तम्। यदि प्राप्तानुवादेन ईषालम्भे श्वेतो गुणो विधीयेत[किं न] प्राकृतेऽपि। अथ कस्मादालम्भो वायव्ये क्वापि स्थिते अप्रकृतेपि न विधीयते ब्रह्मवचस-

---

(1) p. 578 (2) G. अप्राप्त्येद

इति गम्यते, इतरथा देवताशब्दः प्रमादसमाम्नातः इति गम्येत।

ननु अत्रापि श्वेतं वायव्यं कुर्यात्, तं चालभेत इत्यर्थद्वयविधानात् भिद्येतैव वाक्यम्। नेति ब्रूमः, न ह्यालभेतेत्यस्यायमतिभारो, यत् द्रव्यदेवतासंबन्धेन पुरुषप्रयत्नं ब्रूयात तं चालभेतेत्यर्थविशिष्टं; श्रुत्यैव हि पुरुषप्रयत्नो विशिष्टो गम्यते, वाक्येन च द्रव्यदेवताश्रयः इति। नात्र द्वाभ्यां वाक्याभ्यां प्रयोजनं, यथा रक्तमश्वं योजयेति यदा गुणविधिपरं भवति वाक्यम्, तदा द्वाभ्यं वाक्याभ्यां प्रयोजनं, गुणद्वयविधाने; अथ शोणमानयेत्युच्येत, तत्र गुणविधिपरेऽपि वाक्ये पर्यवसित एव गुणद्वयविधानं, श्रुत्यैव विशिष्टगुणद्रव्यस्य प्रतीतत्वात् न भवत्येकस्य वाक्यस्य अतिभारः, एवमिहापीति। संबन्धश्च

---

कामे वा अप्रकृतेऽपि न विधीयते? को नु खलु निर्णयः ईषालम्भे श्वेतगुणविधानमित्यत्र? न चालम्भप्राप्तौ प्रमाणमस्तीत्युक्तम्। इदं चापर; कथं आलभतेः अनन्वयमाशङ्क्य तच्चालभत्यर्थविशिष्टमिति।

---

कामे वा? को नु खलु निर्णयः? ईषालम्भे श्वेतगुणविधानमित्यत्र यावता नास्त्येव निर्णयः। नन्वालम्भः प्राप्तः तेनासौ न विधीयत इत्यत्राह—न चालम्भप्राप्तौ प्रमाणमस्ति। असन्निहितत्वात्तस्येत्युक्तम्। इदं चापरम्। कथं श्वेतं वायव्यं कुर्यात् भूतिकाम इति विधावाश्रीयमाणे आलभतेरनन्वयमाशङ्क्य भाष्यकारेणोक्तम्—तच्चालभत्यर्थविशिष्टमिति। तदयुक्तम्। यावता आलभत्यर्थोऽर्थप्राप्तोऽनूद्यत इत्युक्तम्। न पुनस्तद्विशिष्टस्य

बहुभिः पदैर्विशिष्ट एक एवोच्यत इत्येकार्थत्वं, विभज्यमानानि चात्र पदानि साकाङ्क्षाणीत्युपपन्नमेकवाक्यत्वम्। न च, यागमन्तरेण देवतायै द्रव्यं सङ्कल्पितव्यम्, इत्येष सम्बन्धोऽवकल्पते। तस्मात् यजिमती एते कर्मणी इति।

लिङ्गदर्शनाच्च ॥ १५ ॥

लिङ्गं खल्वप्येतमर्थं दर्शयति, सौम्यारौद्रं चरुं निर्वपेदिति प्रकृत्य, परिश्रिते याजयेत् इति परिश्रयणविधिः, एतस्य वाक्ये यजतिशब्देन सङ्कीर्तनमवकल्पते, यदि यजिमती एते कर्मणी; अथ प्रकृतौ गुणविधानं यावदुक्तं वा, यजतिशब्देनानुवादो नावकल्पेत। तस्मात् अवगच्छामो यजिमती इति ॥

---

कथं तर्हि? इदन्तदुक्तम्। नायमेकस्य वाक्यस्यातिभारः यदुत क्रियाद्वयसम्बन्धिनमर्थं विधिर्विदधातीति। अङ्गाङ्गिभावस्यान्यतः सिद्धेः। तस्मादालभत्यर्थविशिष्टमित्यन्वयाभिप्रायमेतत्।

---

विधानमुक्तम्। उत्तरम्—इदं तदुक्तं नायमेकस्य वाक्यस्यातिभारः यदुत क्रियाद्वयसंबन्धिनमर्थं विधिर्विदधातीति। एका यागक्रिया ताभ्यामन्वितमप्यर्थं शक्नोत्येकमपि वाक्यं बोधयितुम्। अङ्गाङ्गिभावस्यान्यतः सिद्धेः अर्थादेवालम्भोऽङ्गतया प्राप्तः सन्ननूद्यते। तस्मादालभत्यर्थविशिष्टमित्यन्वयाभिप्रायमेतत् भाष्यकारीयं वचनं अर्थप्राप्तालभत्यर्थान्वितो विधीयत इत्यर्थः। अनूद्यमानस्य भवत्येवान्वय इति निरवद्यम्।

अथ वत्सालम्भादीनां संस्कारताधिकरणम् ॥

विशये प्रायदर्शनात् ॥ १६ ॥

किमिह उदाहरणं ? न तावत् सूत्रेणैव परिगृहीतं, यथा, 'अवेष्टौ यज्ञसंयोगात् क्रतुप्रधानमुच्यते' इति। नापि च साध्यं प्रतिज्ञातं, यथा, 'अयनेषु चोदनान्तरम्' इति। केवलं विशये संशये प्रायदर्शनं हेतुः इति निर्दिश्यते। कस्यायं हेतु-रिति न विजानीमः। प्रकृतं यजिमदेतत्कर्म इति, तदपि न सम्बध्यमानमिव पश्यामः, तदेतदगमकं सूत्रमेव तावदनर्थकम्। अथ काऽत्र प्रतिज्ञा ? कश्च सन्देह इति वक्तव्यम्। वृत्ति-कारवचनात् प्रतिज्ञां संशयश्चावगच्छामः। अत्र भगवानाचार्य इदमुदाहृत्य 'वत्समालभेत' 'वत्सनिकान्ता हि पशवः' इति, इमं संशयमुपन्यस्यति स्म, 'किं यजिमदभिधान एष आलभतिः, उतालम्भमात्रवचनः इति ?' उपपद्यते चैतदुदाहरणम्, संशयश्च। तत्र च पूर्वपक्षं प्रतिजानीते स्म, 'यजिमदभिधानः' इति। इदं तु प्रत्युदाहरणसूत्रं पूर्वस्याधिकरणस्य, नात्र पूर्वपक्षेण अतीव प्रयोजनं, तथापि पुरुषाणामुच्चावचबुद्धि-विशेषानालोच्य भवति मन्दानां सामान्यतो दृष्टेनाप्याशङ्का, सापि निवर्तनीया, न हि मन्दविषेण वृश्चिकेनापि दष्टो

---

विशये प्रायदर्शनात्। किमिदं विशये प्रायदर्शना-दिति ? सूत्रस्यानाक्षिप्तविषयतां दर्शयति। आगमगम्योऽत्र–

---

विशये प्रायदर्शनात्। "किमिदं विशये प्रायदर्शनं" इत्यनेन भाष्येण सूत्रस्या-नाक्षिप्तविषयतां दर्शयति भाष्यकारः। नेदं सूत्रं विषयमाक्षेप्तुं समर्थम्। आगमगम्योऽत्र

म्रियेत न जातुचित् कदापि तत्र चिकित्सा नादरेण कर्तव्या भवेत्। अतस्तां निवर्तयितुम् पूर्वपक्षमुपन्यस्यति स्म। आलभतिरस्माभिः प्राणिसंयुक्तो यजिमदभिधानो दृष्टः, अयमप्यालभतिः प्राणिसंयुक्तः एव, तेनायमपि यजिमद्वचन एव इति भवति कस्यचिदाशङ्का। अथ वा यजिमदभिधानो दृष्टः आलभतिः प्राणिसंयुक्तः, तस्यायमनुवादो वत्सविधानार्थः, तथा च फलं न कल्पयितव्यं भविष्यतीति।

एवं प्राप्ते ब्रूमः, अस्मिन् संशये आलम्भमात्रं संस्कारः। कुतः? प्रायदर्शनात्, यत्र अन्यान्यपि संस्कारकर्माणि प्रायभूतानि इत्युच्यन्ते, तत्रैतदपि श्रूयते। प्रायादपि चार्थनिश्चयो भवति, यथा, अग्र्यप्राये लिखितोऽग्र्यः इति गम्यते। ननु लिङ्गं प्रायदर्शनं, कथमनेन सिद्धिः? इति। उच्यते, यथा प्रायदर्शनेन सिध्यति, तथा वर्णयितव्यम्। कथं च प्रायदर्शनं हेतुः न्यायतः प्राप्तौ सत्याम्। कः पुनर्न्यायः? देवतासम्बन्धाभावात् न यागवचनः दृष्टार्थत्वाच्च वत्स आलभ्यमानो गां प्रस्नावयिष्यतीति। तस्मादेवं न्यायप्राप्ते प्रायदर्शनं द्योतकं भवति। तस्मात् आलम्भमात्रं संस्कारः।

---

विषयो न सूत्रात् गम्यत इत्यर्थः। तथा च दर्शितं वृत्तिकारवचनात् विषयमवगच्छामः उपपद्यते चैतदिति। कः पुनरत्र पूर्वः पक्षः

---

विषयः। आप्तोपदेशगम्योऽत्र विषयः न सूत्रगम्य इत्यर्थो भाष्यस्य। तथा चागमगम्यत्वमेव प्रदर्शितं वृत्तिकारवचनात् विषयमवगच्छामः उपपद्यते चैत्यनेन। कः पुनरत्र पूर्वः पक्षः यावता द्रव्यदेवतासंबन्धाश्रवणात् यावदुक्तचोदनैव न्याय्या। उत्तरं

अर्थवादोपपत्तेश्च ॥ १७ ॥

अर्थवादश्च भवति, 'वत्सनिकान्ता हि पशवः' इति, यस्मात् वत्सप्रियाः पशवः, तस्मात् वत्स आलब्धव्यः इति। यदि गां प्रस्नावयितुमालभ्यते तत्रैतद्वचनमवकल्पते। अथ सञ्ज्ञपयितुं तत्र एवञ्जातीयकं वचनं नोपपद्येत। तस्मादप्यालम्भमात्रं संस्कारः इति सिद्धम्।

नैवारचरोरुपधानार्थताधिकरणम्।

संयुक्तस्त्वर्थशब्देन तदर्थः श्रुतिसंयोगात् ॥ १८ ॥

अस्ति अग्निः, तत्र नैवारश्चरुर्भवति, इत्युक्त्वा, यदेनश्चरु-मुपदधाति इति समामनन्ति। तत्र सन्दिह्यते, किं चरुर्यागा-

---

आलभतिसामान्यात् यजिमता भवितव्यमिति पूर्वः पक्षः। द्रव्य-देवतासम्बन्धाश्रवणात् न यजिमानिति राद्धान्तः।

संयुक्तस्त्वर्थशब्देन। किमित्यधिकरणान्तरमिदं कृतम्? अर्थवादात् देवतासम्बन्धनिराकरणार्थम्।

---

—आलभतिसामान्यात् आलभतिः प्राणिद्रव्यसंयुक्तो यजिमान् दृष्टः एषोऽपि तथाविधः। तेनानेनापि यजिमतैव भवितव्यमिति पूर्वः पक्षः द्रव्यदेवतासंबन्धाश्रवणात् न यजिमानिति राद्धान्तः। यजिमत्त्वे देवतासंबन्ध एव प्रयोजकः प्राणिद्रव्यसंयोगश्चाप्रयोजकः अन्यथापि घटमानत्वात् इति यावदुक्तचोदनैवेति राद्धान्तः।

संयुक्तस्तु। किमित्यधिकरणान्तरमिदमिति। यावताऽत्रापि द्रव्यदेवतासंबन्धा-श्रवणाच्च(आलम्भ)मात्रमेवेदं न यजिमती चोदनेति। उत्तरं—अर्थवादात् देवता-संबन्धाशङ्कानिराकरणार्थं बृहस्पतेर्वा एतदन्नं यन्नीवाराः इत्यर्थवादे देवतासंबन्धो नीवा-

र्थो यागं कृत्वा अवशिष्ट उपधातव्यः, उत उपधानार्थ एवेति। यागार्थः इति ब्रूमः, चरोर्हि प्रसिद्धं कार्यं यागो नोपधानम्। उच्यते, यद्यपि यागार्थता चरोः प्रसिद्धा, तथापि देवतावचनसम्बन्धाभावात् यजतिशब्दासम्बन्धाच्च न यागार्थता इति गम्यते। तदुच्यते, तस्यैव वाक्यशेषे श्रूयते, 'बृहस्पतेर्वा एतदन्नं यन्नीवाराः' इति, तेन देवतावचनेन सन्निहितेनैकवाक्यता भविष्यति इति बृहस्पतिदेवताक उपधातव्यः इति। तस्मात् यागार्थश्चरुः इत्येवं प्राप्तम्।

एवं प्राप्ते ब्रूमः, 'संयुक्तस्त्वर्थशब्देन' कार्यशब्देन उपदधातीति 'तदर्थः एव स्यात् उपधानार्थः। उपदधातिना चास्य प्रत्यक्षमेकवाक्यत्वम्, परोक्षं देवतावचनेनानुमेयम्, चरुमुपदधाति इति हि प्रत्यक्षं वाक्यम्। बार्हस्पत्यमुपदधाति इत्यानुमानिकम्। तस्मात् कृत्स्नश्चरुरुपधातव्यः,

---

विशेषाकाङ्क्षायां हि अर्थवादान्निर्णयः। इह तूपधाने विनियुक्तत्वात् द्रव्यस्तुतिपरैव देवताश्रुतिरिति।

---

राणामवगम्यते। तस्यातिपरोक्षावृत्तिः मामूदिति रात्रिसत्रन्यायेन यजिमत्येवेयं चोदना आश्रीयते। इमामाशङ्कां निराकर्तुमिदमधिकरणम्। कथं पुनरस्या निराकरणमित्यत्राह—विशेषाकाङ्क्षायां हि अर्थवादान्निर्णयः इह तु उपधाने विनियुक्तत्वात् द्रव्यस्तुतिपरैव देवताश्रुतिः। यदि हि यागमात्रमत्र चोदितं स्यात् तत्र देवताकाङ्क्षायां अर्थवादान्निर्णयः स्यात् यथा रात्रिसत्रेऽधिकारिविशेषणाकाङ्क्षायाम्। इह तु चरोरुपधाने विनियुक्तत्वात् प्रयोजनाकाङ्क्षा नास्ति। तस्यां चासत्यां अर्थवादानुगुण्येन न शक्यते यागः प्रयोजनतया कल्पयितुम्। उपधानं चोदासीनभूतस्य स्थापनमात्रमुच्यते। न पुनः कार्यान्तरोपयोगितया

ततश्चेत् किञ्चित् इज्यायां विनियुज्येत, तदन्यत्र श्रुतमन्यत्र कृतं भवेत्। यत्तु बार्हस्पत्या नीवाराः इति, अर्थवादः सः इति। यत्तूक्तं, प्रसिद्धा चरोर्यागार्थता इति, प्रसिद्धिर्वाक्येन बाध्यते। तस्मात् उपधानार्थः इति सिद्धम्।

पात्नीवताधिकरणम्।

पात्नीवते तु पूर्ववत्वादवच्छेदः ॥ १९ ॥

त्वाष्ट्रं पात्नीवतं विधायेदमुच्यते, यत् 'पर्यग्निकृतं पात्नवतमुत्सृजन्ति' इति। तत्र सन्देहः, किं त्वाष्ट्रस्य पर्यग्निकृतस्यैष

---

इदमपि पूर्वेण तुल्यम्।

पात्नीवते तु। उक्तं द्रव्यदेवतासंयुक्तं संस्कारकर्मवद्वाक्यं यागस्य चोदकमिति तदिदानीं सन्दिह्यते। प्रकृते यागे द्रव्यदेवतासंस्कारकर्मवद्वाक्यं किं संस्कारमात्रस्य विधायकं उत एतदपि यागस्य विधायकमिति। कथं पुनः स्पष्टे प्रकृतयागवचनत्वे संशयः ?

---

समीपस्थापनम्। यदि हि तथा स्यात् स्यादपि प्रयोजनाकाङ्क्षा। अतो देवताश्रुतिरार्थवादिकी द्रव्यस्तुतिपरैव इति हेतोः इदमप्युदाहरणं पूर्वेण तुल्यम्। अत्रापि यावदुक्तचोदनैव।

**पात्नीवते तु पूर्ववत्वादवच्छेदः।** उक्तं द्रव्यदेवतासंयुक्तं संस्कार[1]कर्मवद्वाक्यं यागस्य चोदकमिति। इहेदानीं संशय्यते। प्रकृते यागे सति किं द्रव्यदेवता संयुक्तं संस्कारकर्मवद्वाक्यं संस्कारमात्रस्यैव विधायकं[2] उत इदमपि यागस्यैव विधायकमिति त्वाष्ट्रे पात्नीवते यागे अथ वा यागान्तरमेव विदध्यादिति सन्देहः। कथं पुनः स्पष्टे प्रकृतयागवचनत्वे संशयः पात्नीवतशब्दस्य स्पष्टं प्रकृतयागवचनत्वं प्रकृतस्यापि पत्नी-

---

(1) G. कर्मवाचकं (2) G. प्रकृते पुनः पात्नीवतं पर्यग्निकृतमुत्सृजति इति पर्यग्निकरणलक्षणसंस्कारयुक्तं वाक्यं श्रूयमाणं किं प्रकृते यागे संस्कारमात्रस्यैव विधायकमस्तु अथ वा

उत्सर्गो विधीयते, उत तस्मात् यागान्तरमिति। यदि पर्यग्निकृतं उत्सृजन्ति इति पदद्वयं परस्परेण सम्बद्धं, ततः त्वाष्ट्रस्योत्सर्गः, अथ पात्नीवतशब्द उत्सृजतिना सम्बध्येत, ततो यागान्तरम् ।

किं तावत् प्राप्तम्? यागान्तरमिति। कुतः? पूर्वः त्वाष्ट्रः पात्नीवतश्च, उभयविशेषणविशिष्टः कथं पात्नीवतशब्देन

---

सगुणनिर्गुणश्रवणात्। सगुणं हि प्रकृतं कर्म निर्गुणं चेह श्रूयते। तस्मात् कर्मान्तरे उत्सृजतिः। उत्सृजतिपर्यग्निकृतशब्दौ च कार्यतः प्राप्तावनूद्येते। किमिदमुक्तं भाष्यकारेण "अपि च त्वाष्ट्रस्योत्सर्गे विधीयमाने पर्यग्निकृतस्येति विशेषणं नावकल्पत" इति। इदमुक्तं विशिष्टानुवादलक्षणो वाक्यभेद इति। ननु च प्रकृतः पर्यग्निकृत

---

वद्देवताकत्वादिति कथं संशयः? उत्तरं—**सगुणनिर्गुणश्रवणात्**। पूर्वत्र सगुणा देवता त्वाष्ट्रं पात्नीवतमिति श्रवणात्। उत्तरत्र निर्गुणं श्रवणं पात्नीवतं पर्यग्निकृतं इत्येतावन्मात्रम्। अतो न प्रकृताभिधानं स्पष्टम्। एतदेव विवृणोति—**सगुणं हि प्रकृतं निर्गुणं चेह श्रूयते-पात्नीवतमिति। तस्मादप्रत्यभिज्ञानात् कर्मान्तरमेतत्। उत्सृजतिपर्यग्निकृतशब्दौ च कार्यतः प्राप्तावनूद्येते** उत्सृजतिपर्यग्निकृतशब्दौ ययोरुत्सर्गपर्यग्निकरणयोस्तौ कार्यतः प्राप्तावनूद्येते उत्सर्गस्त्यागः स देवतासंबन्धान्यथानुपपत्त्या प्राप्तः पर्यग्निकरणमपि चोदकप्राप्तम्। **किमिदमुक्तं भाष्यकारेण—अपि च त्वाष्ट्रे विधीयमाने पर्यग्निकृतस्येति विशेषणं नावकल्पत इति।** उत्तरं—**विशिष्टानुवादलक्षणो वाक्यभेद इति।** पर्यग्निकृतं त्वाष्ट्रमुत्सृजतीति विधीयमाने विशिष्टानुवादलक्षणो वाक्यभेदः। तेन पर्यग्निकृतमिति विशेषणं नावकल्प्यत इति। आक्षेप्ता आह—**ननु प्रकृतः पर्यग्निकृत एव**। तेन नेदं विशेषणं,

अनूद्येत। अपि च त्वाष्ट्रस्योत्सर्गे विधीयमाने पर्यग्निकृतं इति विशेषणं नावकल्पेत। अतो ब्रूमः, पर्यग्निकृतस्य पात्नीवतता विधीयते, स एव यागः इति।

एवं प्राप्ते ब्रूमः, न कर्मान्तरं, पूर्वस्यैव उत्सृजतिशब्देन अवच्छेदो विधीयते। किमेवं भविष्यति ? यजिमत्ता तावत् कल्पयितव्या न भविष्यति, उत्सृजतिशब्दश्च श्रुत्या उत्सर्गं विदधत् वाक्येन न बाधितो भविष्यति, कर्मान्तरपक्षे वाक्येन पात्नीवततायां विधीयमानायामर्थात् प्राप्त उत्सर्गो धातुना

---

एव, कोऽत्र वाक्यभेद इति। प्रकृतत्वेन हि अविवक्षितान्वयो लभ्यते। न पुनर्विवक्षाप्युत्सर्गे। इदमपरं—किं पर्यग्निकृत एव पात्नीवतता विधीयत इति पात्नीवतत्वमेव विधीयते। पर्यग्निकृतता प्राप्तैव। सैवेयमनेन प्रकारेण दर्शिता भाष्यकारेण।

---

केवलं नित्यानुवादोऽयं, कस्तत्र वाक्यभेदः। समाधा आह— **प्रकृतत्वेन ह्यविवक्षितान्वयो लभ्यते न पुनर्विवक्षाप्युत्सर्गे।** यदि पर्यग्निकृतस्य सतः उत्सर्गो विधीयते तदा पर्यग्निकृतविशेषणं विवक्षितव्यम्। तच्च प्रकृतत्वेन [न]लभ्यते। अविवक्षितस्यान्वयमात्रं प्रकृतत्वेन लभ्यते तेनास्ति वाक्यभेदः। **इदमपरं किं** भाष्यकारेणोक्तं **"पर्यग्निकृतस्य पात्नीवतता विधीयत"** इति यावता **पात्नीवतमेव केवलं विधीयते** पात्नीवतं कुर्यादिति तत्र वाक्यान्तरगतः पशुशब्दोऽनुषङ्गेण संबध्यते। तस्य च पशोः पत्नीवद्देवताकस्य **पर्यग्निकृतता प्राप्तैवानूद्यते।** उत्तरं—**सैवेयं** पर्यग्निकृतता प्राप्ता **अनेन प्रकारेण दर्शिता भाष्यकारेण** यस्य पशोः पात्नीवतता विधीयते तस्य पर्यग्निकरणेन भवितव्यमिति मत्वोक्तं पर्यग्निकृतस्य पात्नीवतता विधीयत इति।

अनूद्येत। अपि च पर्यग्निकृतस्य पात्नीवतता पूर्वस्य विहितैव, सा विधातुम् न शक्यते ; तस्मात् पूर्वस्य कर्मणोऽवच्छेदः। यत्तूक्तं त्वाष्ट्रस्य उत्सर्गे विधीयमाने पर्यग्निकृतम् इति विशेषणं तावत् नावकल्पेत इति, नैष दोषः, अतन्त्रमेवात्र पात्नीवत-शब्दो नासौ विशेष्यते, अत एव त्वाष्ट्रः पात्नीवत उभयविशेषण-

---

अत्रोच्यते—पर्यग्निकृतस्यायमुत्सर्गश्चोद्यते प्रकृतस्य। ननु च त्वाष्ट्रं पात्नीवतं इति श्रवणात् न पात्नीवतशब्देन प्रकृताभिधानमुपपद्यते। उच्यते न नोपपद्यते। यस्य हि समासेनाभिधानं तत्र व्यस्तस्याभिधानानुपपत्तिः। ऐन्द्राग्न आग्नेयवत्। यत्र पुनः व्यस्तयोरभिधान सिद्धं प्रकृतेऽपि तत्र नार्थान्तरे बुद्धिरुपपद्यते। तस्मात् संस्कारविधानमेवेदमवच्छेद-फलम्। ननु पर्यग्निकृतविवक्षा उत्सर्गे नोपपद्येतेत्युक्तम्।

---

अत्रोच्यते—पर्यग्निकृतस्यायमुत्सर्गश्चोद्यते प्रकृतस्य। अस्यार्थः—पर्यग्निकृतशब्द एवोद्देश्यसमर्पकः स च यौगिकत्वात् प्रकृतगामी। तेन प्रकृतस्यैवोत्सर्गविधिः। ननु च त्वाष्ट्रं पात्नीवतमिति पूर्वत्र श्रवणात् न पात्नीवतशब्देन प्रकृताभिधानमुपपद्यते। तेन यद्यपि पर्यग्निकृतशब्दः प्रकृते वर्तितुं क्षमः तथापि पात्नीवतशब्दान्वयान्न प्रकृताभिधानमुपपद्यते। उच्यते न नोपपद्यते प्रकृताभिधानं अपि तूपपद्यत एव। कस्मादित्यत्राह—यत्र हि समासे-नाभिधानं तत्र व्यस्तस्याभिधानानुपपत्तिः ऐन्द्राग्ने आग्नेयवत्। यत्र पुनः व्यस्तयोर-भिधानं प्रकृतेपि प्रसिद्धं न तत्रार्थान्तरे[1]बुद्धिरुपपद्यते तस्मात संस्कारविधान-मेवेदम्। ननूत्सर्गपर्यग्निकरणयोः प्राप्तत्वात् न विधानमर्थवदित्यत्राह—अवच्छेदफलं अपूर्वोपदेशोऽयं इति नवमे वक्ष्यामः। ननु पर्यग्निकृतविवक्षा उत्सर्गे नोपपद्यते इत्युक्तं

---

(1) R. वृत्तिः

विशिष्टः केवलेन पात्नीवतशब्देन लक्षणयाऽनूद्येतेति न दोषः। तस्मात् अवच्छेदः इति सिद्धम्।

अदाभ्यादीनां ग्रहनामताधिकरणम।

अद्रव्यत्वात् केवले कर्मशेषः स्यात ॥ २० ॥

न कस्यचिदपि प्रकरणे श्रूयते, 'एष वै हविषा हविर्यजते योऽदाभ्यं गृहीत्वा सोमाय यजते' इति, तथा 'परा वा एतस्यायुः प्राण एति योऽशुं गृह्णाति' इति। तत्र सन्देहः, किं यागान्तरमेतद्ग्रहणकम् उत ज्योतिष्टोमयागे ग्रहविधिः ? इति।

---

सत्यं नोपपद्यते यदि पात्नीवतशब्दो विवक्ष्येत। स तु प्रकृताभिधानात् प्राप्तान्वयवचन एवेत्यदोषः।

अद्रव्यत्वात्केवले। स एवायं विचारोऽनुवर्तते। किं यजिमत् तत्संस्कारकर्म उत केवलसंस्कारविधानमिति। तदिह चिन्त्यते। किं

---

वाक्यभेदप्रसङ्गादिति। अत्रोच्यते—सत्यं नोपपद्यते यदि पात्नीवतशब्दो विवक्ष्येत स तु प्रकृताभिधानात् प्राप्तान्वयवचन एवेत्यदोषः। उक्तमेतत् पर्यग्निकृतशब्द एवोद्देश्य-समर्पकः स च प्रकृतपरः यश्चासौ प्रकृतः तस्य पात्नीवतता नित्यप्राप्तैवानूद्यत इति न वाक्य-भेदलक्षणादोषः।

अद्रव्यत्वात्। स एवायं विचारोऽनुवर्तत इति। किं यजिमत् संस्कारकर्म उत केवलसंस्कारकर्मविधानमिति। अनेनावान्तरसङ्गतिमाह। तदिदं चिन्त्यते—किं

किं प्राप्तम् ? यागान्तरमिति। कुतः ? अपूर्वनामधेयसंयोगात्, न प्रकृतावेतन्नामधेयको यागोऽस्ति, न ग्रहः कश्चित योऽभ्यस्येत। तस्मात् यागान्तरम्। ननु द्रव्यदेवतं न श्रूयते। माभूत द्रव्यदेवतं, साक्षादेव यजतिशब्दो विद्यते। तस्मात कर्मान्तरम् अदाभ्यसंज्ञकम्, अंशुसंज्ञकं च यागं करोति इत्येवं प्राप्तम्।

एवं प्राप्ते ब्रूमः—अद्रव्यदेवताके केवले नामधेये श्रूयमाणे ब्रूमः, ज्योतिष्टोमे एव ग्रहाभ्यासविशेषविधानमिति। कुतः ?

---

ग्रहणमात्रचोदने एते उत यजिती इति। किं युक्तम् ? यजिमती इति। कथं ? अप्रयोजनवतः संस्कारभावात। यागशब्दश्रवणाच्च सामयुक्तात यजिमती एते चोदने। ग्रहणादिशब्दश्चालभतिवत प्राप्त एवानूद्यते ससोमशब्दकः। ननु चांशौ न सोमयुक्तो यजिः श्रूयते। उक्तं निष्प्रयोजनस्य संस्काराभावात अदाभ्यसाहचर्याच्च तद्भद्भविष्यति इति। ननु च ज्योतिष्टोमस्यैवायं यजिरनुवादः

---

[1]ग्रहणमात्रचोदने एते उत यजिमती इति। कि युक्तम् ? अप्रयोजनवतः संस्काराभावात् यागशब्दश्रवणाच्च[2] सोमयुक्तात् यजिमती चोदने प्रयोजनशून्यस्य संस्कारानुपपत्तेः प्रयोजनाकाङ्क्षायां 'योऽदाभ्यं गृहीत्वा सोमाय यजते' इति सोमयुक्तयागश्रवणात यागार्थसोमाख्यद्रव्यसंस्कारत्वमेवावसीयते। तेन यजिमती चोदने इति। चोदनैव चोदनमिति द्रष्टव्यम्। गृह्णातिश्चालभतिवत् प्राप्त एवानूद्यते ससोमशब्द.। अव्यक्तत्वेन सौमिकविध्यन्तप्राप्तेः। ननु च अंशौ सोमयुक्तो यजिर्न श्रूयते। परिहरति—उक्तं निष्प्रयोजनस्य संस्काराभावात् अदाभ्यसाहचर्याच्च तद्वद्भविष्यतीति। ननु ज्योतिष्टोमस्यैवायं यजिरनुवादः

---

(1) G. ग्रहणवती अत्र (2) G. सा नयुक्ता

एतत् तावत ग्रहस्य नाधेयं न यागस्य, ग्रहणेन साक्षात् सम्बन्धात्, व्यवहितत्वात् यागस्य। अंशुः इति च मुक्तसंशयमेव ग्रहनामधेयं, न च ग्रहभेदे यागभेदो भवति, न च, द्रव्यदेवतं श्रूयते। यतो गृह्णातिर्यजिमद्वचनो भवेत्। यदप्युक्तं, साक्षादत्र यजतिशब्दो विधायकः इति, नैवं शक्यं

---

कस्मान्न भविष्यति। अप्रकृतत्वात्। प्रकृते हि विशेषे सामान्यशब्दो विशेषवचनो भविष्यति नाप्रकृते। तस्माद्यजिमती एते चोदने।

अत्रोच्यते—संस्कारमात्रचोदने एते। कस्मात ? तावन्मात्रश्रवणात। ननु च सोमवान् यजिरत्र श्रूयत इत्युक्तं; सत्यं श्रूयते। अन्यपरस्तु सः। ननु च केवलसंस्कारचोदने अनर्थके भवतः, प्रयोजनवतोऽश्रवणात, सन्निधानाभावाच्च। अत्राभिधीयते। सोमयुक्तो

---

कस्मान्न भविष्यति येन कर्मान्तरं विधत्ते। उत्तरं—अप्रकृतत्वात्। प्रकृते हि विशेषे सामान्यवचनो विशेषवचनः शब्दो भविष्यति नाप्रकृते। तस्माद्यजिमती एते चोदने उच्यते। संस्कारमात्रचोदने एते। कस्मात् ?। उत्तरं—तावन्मात्रश्रवणात् ग्रहणाख्यसंस्कारविधिरेवायं न यागविधिः। ननु च सोमवान् यजिरत्र श्रूयत इत्युक्तम। परिहरति—सत्यं श्रूयते अन्यपरस्तु सः। एष ह वै हविषा हविर्यजते योऽदाभ्यं गृहीत्वा सोमाय यजते इत्यर्थवादार्थो यजिः न विधेयार्थः तेन ग्रहणमात्रमेव विधीयते। ननु च केवलसंस्कारचोदने अनर्थके भवतः प्रयोजनवतोऽश्रवणात् सन्निधानाभावाच्च। तेन [1]प्रयोजनवत्संस्कार्यापेक्षायां अर्थवादगतो यजतिः ससोमकः सोमं यागद्रव्यभूतं संस्कार्यं समर्पयिष्यति। तेन यजतिचोदने एते संपत्स्येते इति। अत्राभिधीयते—सोमयुक्तो

---

(1) प्रयोजनवत्संस्कार्यद्रव्यपरेण अर्थवशेन तावत् जातिसोमशब्दवत्सोमयागद्रव्यभूतं संस्कार्यं। G.

कर्मान्तरं विधातुम्, विहितयागवचनो हि सः, विशेषाभावात्। तस्मात् यजतिना ज्योतिष्टोम एवोच्यते, अंश्वदाभ्यशब्दाभ्यामपि अपरौ ग्रहाभ्यासौ विधीयेते इति सिद्धम्।

अग्निचयनस्य संस्कारताधिकरणम् ॥

अग्निस्तु लिङ्गदर्शनात् क्रतुशब्दः प्रतीयेत ॥ २१ ॥

अस्त्यग्निः, 'य एवं विद्वानग्निश्चिनुते' इति, एवं विधाय श्रूयते, 'अथातोऽग्निमष्टोमेनैवानुयजति, तमुक्थ्येन, तमति-

---

यजिः नान्यार्थतां प्रतिपत्तुं शक्नोति यदि न ज्योतिष्टोममनुवदति। स ह्युपदेशात् सोमवान्। तस्मात्तत्सम्बन्धात्तत्संस्कारः। तत्साहचर्याच्चांशावपीत्युक्तम्।

अग्निस्तु लिङ्गदर्शनात्। य एवं विद्वानग्निं चिनुत इति किमयं संस्कारचोदना वा उत यजिमत्कर्मेति। यजिमत्कर्मेति ब्रूमः

---

यजिः नान्यार्थतां प्रतिपत्तुं शक्नोति यदि न ज्योतिष्टोममनुवदति। अस्यार्थः—सोमशब्दयुक्तस्तावद्यजिः अनुवादभूतोऽर्थवादे प्रतीयते। यदि ज्योतिष्टोमपरस्तदाऽनुवादोऽवकल्पते। अन्यथा हि विधेयार्थः स्यात्। ननु सोमवन्तमपि यागमनुवदति किमिति ज्योतिष्टोममेवानुवदति यावता विकृतयोऽपि सोमवत्य एवेति तत्राह—स ह्युपदेशात् सोमवान्। तेन स एव प्रतीयते निरपेक्षत्वात् सोमसंबन्धस्य। तस्मात् तस्य ज्योतिष्टोमस्य संस्कार एवायम्। तत्साहचर्याचांशावपीत्युक्तं ग्रहणमात्रचोदना।

अग्निस्तु। 'य एवं विद्वानग्निं चिनुत' इति किमियं संस्कारचोदना उत यजिमत्कर्मेति संशयः। अनेनावान्तरसङ्गतिमाह— यजिमत्कर्मेति ब्रूमः। कुत इत्याह

रात्रेण, तं षोडशिना' इत्येवमादि। तत्र सन्देहः, किमयमग्निशब्दो यागवचनो ज्योतिष्टोमादिभ्यः कर्मान्तरं चिनुते इत्याख्यातेन विधीयते, उत द्रव्यवचनो ज्योतिष्टोमादिषु गुणविधानमिति ।

किं प्राप्तम्? यागवचनः इति। कुतः?। 'लिङ्गदर्शनात्' लिङ्गं हि दृश्यते, अग्नेः स्तोत्रमग्नेः शस्त्रम् इति 'तथा, षडुपसदोऽग्नेश्चित्यस्य भवन्ति' इति, यस्य स्तोत्रं शस्त्रमुपसदश्च तस्याग्निशब्दो वाचकः इति गम्यते, यागस्यैतत सर्वं, तस्मात् यागवचनः इति। ननु लिङ्गमसाधकं, प्राप्तिरुच्यतामिति । अत्रोच्यते, अथातोऽग्निमग्निष्टोमेनैवानुयजति

---

यजिशब्दसामानाधिकरण्यात्। अग्निं चिनुत इति प्राप्तेः। चिनोतिरिदानीं किमर्थः। आलभतीतिवद्भविष्यतीति चेत् तत नोपपद्यते। तत्र हि कार्यतः प्राप्तिरालभतेः। इह पुनर्न चिनोतेः अन्यतः कार्यतावगतिः।

---

यजिसामानाधिकरण्यादग्निशब्दस्य "अथातोऽग्निमग्निष्टोमेनानुयजन्ति" इत्यग्निशब्दो यजिसमानाधिकरणःअन्यथा द्वितीयाद्वयानुपपत्तेः। न चाग्निं चयनेन संस्कुर्यादित्ययमस्यार्थः अध्याहारप्रसङ्गात्। यागवचनत्वे तु 'उपांशुयाजमन्तरा यजति' इतिवत् उपपन्नैव द्वितीया। तस्यापि भावनाकर्मत्वात् तेनायमर्थः। अग्निं अनुयजति अग्निसंज्ञकं यागं करोतीत्यर्थः। अग्निष्टोमाख्यस्तोत्रगुणविधिश्चायं, अग्निं चिनुत इति यागस्योत्पत्तेः अनुशब्दश्च ज्योतिष्टोमापेक्षः तद्विकाराणां तदुत्तरकालभावित्वात्। यद्ययं अग्निंचिनुत इति यागविधिः चिनोतिरिदानीं किमर्थः। आलभतिवद्भविष्यति। अर्थप्राप्तानुवाद इति चेत्। दूषयति—तन्नोपपद्यते। तत्र हि कार्यतः प्राप्तिरालभतेः। इह पुनः न चिनोतेः अन्यतः कार्यावगतिः अनुष्ठानावगतिः।

इति यागमभिनिवर्तयतीत्युच्यते, तमग्निमिति विशिनष्टि। तस्मात् अग्निसंज्ञकः इति गम्यते। अनुशब्दोऽप्युपसर्गो यजते-र्विशेषक एवमुपपद्यते, यद्यग्निर्यागः; तस्मात् क्रतुशब्दः प्रतीयेत।

द्रव्यं वा स्यात् चोदनायास्तदर्थत्वात् ॥ २२ ॥

**द्रव्यं वा अग्निशब्देनोच्यते। कतमत् द्रव्यम्? यदेतत् ज्वलनः, अत्र हि एष प्रसिद्धः। चिनुते इत्येषा हि चोदना**

---

उपदेशादिति चेन्न, वाक्यभेदप्रसङ्गात्। प्रकरणमपीति वाक्यभेदसव्य-पेक्षमेव। एवं तर्हीयं कश्चित्सङ्घातं कार्यप्राप्तमङ्गीकृत्यानुवादो भविष्यति। अथ वा इष्टकाभिरग्निं चिनुत इति प्राप्तस्यायमनुवादः। तथा च लिङ्ग-दर्शनमुक्तम्।

द्रव्यं वा स्याच्चोदनायाः। अत्रोच्यते—संस्कारचोदनैवैषा। कुतः? संस्कारशब्दश्रवणात्। अग्निशब्दस्य च ज्वलने रूढत्वात्।

---

उपदेशात् कार्यावगतिश्चिनोतेरिति चेत्, न, वाक्यभेदप्रसङ्गात्, यागश्च विधेयः चयनं च। ननु चयनविशिष्टो यागो विधास्यते। न, विशेषणविशेष्यभावस्यान्यतोऽसिद्धेः। प्रकरणाद्भविष्यतीति चेत्। प्रकरणमपि हि वाक्यभेदसव्यपेक्षमेव उत्पन्नस्य प्रकरणेन विनियोगात्। तेन चयनोत्पत्त्यर्थं पृथग्वाक्यमङ्गीकरणीयम्। परिहरति—एवं तर्हि यं कश्चित्सङ्घातं कार्यतः प्राप्तमङ्गीकृत्यानुवादो भविष्यति। ग्रहणसङ्घातं वा अनुवदती-त्यर्थः। अथ वा 'इष्टकाभिरग्निं चिनुते' इति प्राप्तस्य अयमनुवादो भविष्यति। तथा च लिङ्गदर्शनम्। 'अग्नेः स्तोत्रं' 'अग्नेः शस्त्रं' इति।

द्रव्यं वा स्याच्चोदनायाः। अत्रोच्यते—संस्कारचोदनैवैषा। कुतः? संस्कार-शब्दश्रवणात् अग्निशब्दस्य च ज्वलने रूढत्वात्। तेन ज्वलनसंस्कारोऽयं प्रतीयते।

चयनार्थो न यजत्यर्थं शक्नोति वदितुम्, चयनेनैनं संस्कुरुते चितौ स्थापयति इति। अनुशब्दश्च पश्चादर्थो भविष्यति, चयने निर्वृत्ते पश्चादग्निष्टोमेन यागेन यजतीति।

तत्संयोगात् क्रतुस्तदाख्यः स्यात्तेन धर्मविधानानि ॥ २३ ॥

यत्तु लिङ्गदर्शनमुक्तम्, यागवचनोऽग्निशब्दः इति, तत् तेष्वेव लिङ्गसंयुक्तेषु वचनेषु, न सर्वत्र, तेषु चित्याग्नि-संयोगात्, यागे लक्षणशब्दः, तेन क्रतुवचनानि तद्धर्मविधानानीत्य-दोषः ॥

---

कथं तर्हि अग्निं अनुयजतीति ? चयनसंस्कृतेऽग्नौ पश्चाद्यजतीत्यर्थः । चयनमभिनिर्वृत्येति यावत्। अथ यल्लिङ्गमुक्तं तत् चयन—संस्कृताग्नियुक्ते द्रष्टव्यं तास्वेव चोदनासु ।

---

कथं तर्हि अग्निमनुयजतीति ? परिहरति—चयनसंस्कृतेऽग्नौ[1]सति पश्चाद्यजती—त्यर्थः । एतदेव स्फुटयति—चयनमभिनिर्वृत्येति यावत्। एतदुक्तं भवति—रूढ्या अग्निशब्दश्रवणे सति अग्निंचित्वेत्यध्याहारोऽपि न्याय्य एव, न पुनः क्लृप्तशक्तिपरित्यागेन शक्त्यन्तराश्रयणमिति । अथ यल्लिङ्गमुक्तं तच्चयनसंस्कृताग्नियुक्ते यागे द्रष्टव्यम् । गत्यन्तराभावात् । तत्र लक्षणयाऽग्निशब्देन यागोऽवगम्यते । तास्वेव चोदनासु नान्यासु प्रमाणाभावात् ।

---

(1) G. चयनसंस्काराहिते

प्रकरणान्तराधिकरणम् ॥

प्रकरणान्तरे प्रयोजनान्यत्वम् ॥ २४ ॥

कुण्डपायिनामयने श्रूयते, 'मासमग्निहोत्रं जुहोति, मासं दर्शपूर्णमासाभ्यां यजते' इत्येवमादि। तत्र सन्दिह्यते, किं नियते अग्निहोत्रे नियतयोश्च दर्शपूर्णमासयोर्मासो विधीयते कालः, अथ किं नियताग्निहोत्रात् नियताभ्याश्च दर्शपूर्णमासाभ्यां कर्मान्तरविधानमिति।

किं तावत् प्राप्तं? नियतेषु कालविधिः इति। कुतः? कालविधिसरूप एष शब्दो मासमिति। कथं कालविधि-

---

प्रकरणान्तरे प्रयोजनान्यत्वम्। मासमग्निहोत्रं जुहोतीति श्रूयते। तत्र शास्त्रान्तरमिदं अग्निहोत्रशास्त्रात उत नेति चिन्त्यते। ननु च मासविधानेऽपि शास्त्रान्तरमेवैतत। वाक्यान्तरमेवेदं न शास्त्रान्तरम्। तुल्यकार्यगुणान्तरविधानापेक्षं भवति शास्त्रान्तरं न केवलभावविधानापेक्षम्

---

प्रकरणान्तरे। मासमग्निहोत्रं जुहोतीति श्रूयते तत्र शास्त्रान्तरमिदमग्निहोत्रशास्त्रा-दुत नेति चिन्त्यते। अनेनाध्यायसङ्गतिरुक्ता। ननु च मासविधानेऽपि शास्त्रान्त-रमेवैतत्। अतः पक्षद्वयेपि शास्त्रभेदान्नेदमधिकरणमारब्धव्यमस्मिन् लक्षणे। परिहरति —वाक्यान्तरमेवेदं न शास्त्रान्तरम्। अनुबन्धभेदाभावात तदनपेक्षसाध्यान्तराभावाच्च। तुल्यकार्यगुणान्तरविधानापेक्षं तु भवति शास्त्रान्तरम् न केवलभावविधानापेक्षम्। गुणाभिधानपक्षेऽपि गुणान्तरविधानापेक्षया भवति शास्त्रान्तरं अन्योन्यनिरपेक्षतुल्यसाध्यान्तर-योगात्। एतच्चाद्ये प्रपञ्चितम्। तेन गुणविधिपक्षे अग्निहोत्रशास्त्रेणाभेदः कर्मविधि-पक्षे त्वनुबन्धभेदाद्भेद इति युक्ता चिन्ता।

सरूपता? यत् अग्निहोत्रं जुहोति इति विदितं, मासमित्य-विदितम्। एवं च अग्निहोत्रशब्दो दर्शपूर्णमासशब्दश्च न अर्थान्तरवृत्तौ भविष्यतः, तस्मात् कालविधिः। ननु कुण्ड-पायिनामयनप्रकरणं बाध्येतैवम्। कामं बाध्यतां, वाक्यं हि बलवत्तरम्।

एवं प्राप्ते ब्रूमः, प्रकरणान्तरे श्रूयमाणं वाक्यं यस्य प्रकरणे, तस्य वाचकं भवितुमर्हति। ननु प्रत्यक्षोऽग्निहोत्रस्य दर्शपूर्ण-मासयोश्च गुणविधिः। नेत्युच्यते। कथम्? उपसद्भि-श्चरित्वेति ह्युक्त्वा इदमभिधीयते, न च, उपसदोऽग्निहोत्रस्य दर्शपूर्णमासयोश्च सन्ति। तस्मात् अशक्यः तत्र मासविधिः। अथोच्यते, उपसदोऽपि विधीयन्ते इति। तथा गुण-विधानार्थेऽस्मिन् वाक्ये अनेकगुणविधानात् वाक्यं भिद्येत।

---

किं युक्तम्? न शास्त्रान्तरमिदं नैयमिक एवायं गुणविधिः। कुतः? अग्निहोत्रशब्दप्रत्यभिज्ञानात्।

---

किं युक्तम्? उत्तरं— न शास्त्रान्तरमिदं नैयमिक एवायं गुणविधिः। कुतः? अग्निहोत्रशब्दाभिधानेन प्रत्यभिज्ञानात्। अस्यार्थः— अग्निहोत्रशब्दाभिधानं तावत् प्रत्यभिज्ञायते। अभिधानाभेदे च नाभिधेयस्य भेदो युक्तः। तेन नैयमिक एवायं गुण-विधिः। ननूपसद्भिश्चरित्वेति गुणान्तरमपि श्रूयते। कथं तत्र गुणविधिः, वाक्यभेद-प्रसङ्गात्। उच्यते। भवतु वाक्यभेदः न पुनराभिधानिकी प्रत्यभिज्ञा बाधितुं शक्यते। तेनात्र वाक्यभेदलक्षणयोः कस्य बलीयस्त्वमिति चिन्त्यते। तत्र पूर्वपक्षी श्रौतवृत्तिबलेन वाक्यभेदमेव न्याय्यं मन्यते। श्रुतसिध्यर्थमश्रुतस्यापि वाक्यभेदादेराश्रयणीयत्वात्।

अस्मिन्पक्षे पुनरतन्त्रमग्निहोत्रशब्दो न कर्म विशेक्ष्यति, तेन वाक्यभेदो न भविष्यति। तस्मात् कर्मान्तरमिति सिद्धम् ॥

---

अत्रोच्यते—प्रकरणान्तरे प्रयोजनान्यत्वम्। किमिदं प्रकरणान्तर इति? अप्रकृताभिधान इत्यर्थः। नात्र प्रकृताभिधायकोऽयं जुहोतिशब्दः दध्ना जुहोति इतिवत्। ननु चाग्निहोत्राभिधानात्, नैयमिक एव गुणवचनताऽवगम्यते। न, जुहोतेरर्थान्तरावगतेः। कथं पुनरन्यार्थावगतिः। उपसद्भिश्चरित्वेति श्रवणात्। अतो जुहोत्यर्थानुसार्ययं अग्निहोत्रशब्दः न विपरीतः। तस्मात् सिद्धं प्रकरणान्तरत्वम्। प्रकरणान्तरं च शास्त्रान्तरत्वम्।

---

अत्रोच्यते—प्रकरणान्तरे प्रयोजनान्यत्वम्। किमिदं प्रकरणान्तर इति। उत्तरं—अप्रकृताभिधान इति। नायं जुहोतीति प्रकृताभिधायी तेन कर्मान्तरं तदाह—नात्र प्रकृतस्याभिधायको जुहोतीति शब्दः दध्ना जुहोतीतिवत्। वैधर्म्यदृष्टान्तोऽयम्। ननु चाग्निहोत्रशब्दाभिधानान्नैयमिक एवावगम्यते। परिहरति—न जुहोतेरन्यार्थावगतेः। कथं पुनरन्यार्थावगतिः? उपसद्भिश्चरित्वेति श्रवणात्। प्राप्तक्रियानुवादेनानेकगुणविधानानुपपत्तेः वाक्यभेदप्रसङ्गात्। भवतु वाक्यभेद इति चेत्। न परस्परान्वयावगतेः। यावन्ति पदानि परस्परान्वयं प्रतिपत्तुमलं तावदेकं वाक्यमिति लोके व्युत्पत्तिः तेन लौकिकव्युत्पत्त्यनुसारेण एकवाक्यत्वाद्धोमान्तरविधिरेवायं गम्यते। जुहोत्यर्थानुसार्ययमग्निहोत्रशब्दः न विपरीतः। होमान्तर एवायं धर्मलक्षणया अग्निहोत्रशब्दः न तु नैयमिक एव जुहोतिर्वर्तते। तस्मात् सिद्धं प्रकरणान्तरत्वम्। प्रकरणान्तरे च प्रयोजनान्तरत्वात् शास्त्रान्तरत्वम्। अनेकगुणश्रवणं चाप्रकृताभिधानसिध्यर्थं न पुनस्तत एव भेद इति। तेन न गुणाद्भेदः।

फलसंस्कार्ययोः कर्मभेदकत्वाधिकरणम् ॥

फलं चाकर्मसन्निधौ ॥ २५ ॥

अनारभ्य किञ्चिच्छ्रूयते 'आग्नेयमष्टाकपालं निर्वपेत् रुक्कामः, अग्नीषोमीयमेकादशकपालं निर्वपेद्ब्रह्मवर्चसकामः, ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः' इति। अत्र सन्दिह्यते, किं प्राकृतेष्वाग्नेयादिषु फलं विधीयते, उत प्राकृतेभ्यः कर्मान्तराण्येतानि ? किं प्राप्तं ? प्राकृतेषु फलविधिः इति। कुतः ? विदिता आग्नेयादयः प्रत्यभिज्ञायन्ते, तस्मात् तेषामनुवादः फलसम्बन्धार्थः इति।

---

फलं चाकर्मसन्निधौ। किमिदमन्यदेव भेदकारणम् ? नेति ब्रूमः। अत्राप्यप्रकृताभिधानतैव प्रतिपाद्यते। कथं ? पूर्वत्र उपसद्भिश्चरित्वा इति अप्रकृताभिधानता उक्ता। इदानीं पुनः फलसंबन्धेनाप्रकृताभिधानं प्रतीयत इति पूर्वपक्षवादिनोऽभिप्रायः। कर्मणो विधेयत्वात।

---

फलं च। किमिदमन्यदेव भेदकारणं फलमिति[1]। अनेन प्रतिज्ञाविरोधमाशङ्कते। अभिधानान्तरादयो हि षडेव भावार्थस्य भेदकारणत्वेन प्रतिज्ञाताः न फलम्। नेदं भेदकान्तरमिति ब्रूमः। अत्रापि [2]अप्रकृताभिधानतैव प्रतिपाद्यते। कथं ? तेन प्रकारेण कः पूर्वपक्षः कश्चोत्तर इत्यर्थः। तत्र पूर्वपक्षमाह—पूर्वत्र उपसद्भिश्चरित्वेति गुणान्तरश्रवणादप्रकृताभिधानतोक्ता। इदानीं पुनः फलसंबन्धेनाप्रकृताभिधानं प्रतीयत इति पूर्वपक्षवादिनोऽभिप्रायः कर्मणो विधेयत्वात्। अस्यार्थः—द्रव्यदेवताभ्यां कर्म प्रकृतमेव प्रत्यभिज्ञायते। तच्च विहितमिति तत्र विधेयम् किन्तु तत्र फलमेव विधीयताम् अप्राप्तांश-

---

(1) G. फलरूपं भेदकान्तरं (2) अधिकृताभि

एवं प्राप्ते ब्रूमः, फलं च भेदकं अकर्मसन्निधौ श्रूयमाणम्। कथम्? अनुवादे सति न शक्येत फलं विधातुम्, विधायकस्य अभावात्, न ह्यविधीयमानो हि उपायो रूपो भवति इति गम्यते। अपि च रुक्कामे अत्र विधीयमाने कामस्य अनित्यत्वात्, आग्नेयादीनां नित्यत्वात्सम्बन्धो नावकल्पेत। एवं सर्वत्र। तस्मात् कर्मान्तराणि।

---

राद्धान्ती तु मन्यते। अन्यार्थे भवत्यपि प्रकृताभिधानम्। स्वार्थे पुनः न प्रकृताभिधानं प्रतीयते। फलसंबन्धे च स्वार्थो भावशब्दः। नह्यभावार्थस्य विधानं संभवतीत्युक्तम्। न च दध्यादिवत् भावानु-प्रवेशोऽधिकारस्य संभवतीति वक्ष्यामः। अन्यथापि अप्रकृताभिधानं सिद्धम्।

---

स्य विधेयत्वात् तेन नाप्रकृताभिधानम्। **राद्धान्ती तु मन्यते। अन्यार्थे भवत्यपि** [1]**प्रकृताभिधानम्** यथा सोमाय यजत इति। **स्वार्थे प्रकृते पुनः न प्रकृताभिधानं प्रती-यते।** विधेये भावार्थे न द्रव्यदेवते प्रकृताभिधानमापादयितुं शक्नुतः विधेयस्य भिन्न-त्वात्। **फलसंबन्धे च स्वार्थो भावशब्दः।** कस्मादित्याह—**न ह्यभावार्थस्य विधानं संभवतीत्युक्तम्।** यत्रापि गुणविधानं तत्रापि भाव एव तदनुरक्तो विधीयते। ननु च फलानुरक्तो भावार्थो विधातुं शक्यते इत्यत्राह—**न च दध्यादिवत् भावानुप्रवेशि-ताऽधिकारपदस्य संभवतीति वक्ष्यामः** षष्ठाद्ये। तेन न तदनुरक्तो भावार्थो विधीयते तेन भावार्थसंबन्धाभावात् नियोगमात्रसंबन्धित्वान्नियोज्यस्य। अतोऽत्रापि कर्मैव फलं प्रति विधेयम्। विधीयमानत्वे चाप्रकृताभिधानमिति सिद्धम्।

---

(1) G. प्रत्यभिज्ञानं

अवेष्टेरन्नाद्यफलकत्वाधिकरणम् ॥

सन्निधौ त्वविभागात् फलार्थेन पुनः श्रुतिः ॥ २९ ॥

अस्त्यवेष्टिः, 'आग्नेयोऽष्टाकपालः पुरोडाशो भवति' इत्येवमादिः, तां प्रकृत्योच्यते, 'एतयाऽन्नाद्यकामं याजयेत्' इति। तत्र सन्देहः, किं कर्मान्तरमवेष्टेः, उतावेष्टिरेवेति ? किं प्राप्तं ? कर्मान्तरमिति, उक्तेन न्यायेन। एवं प्राप्ते ब्रूमः, सन्निधौ फलार्थेन पुनः श्रुतिः अवेष्टेरेव, न कर्मान्तमिति। कुतः ? अविभागात्, एतयेत्येष शब्दो न शक्नोति अवेष्ट्या

---

सन्निधौ त्वविभागात्। उक्तं फलं चाकर्मसन्निधाविति। तस्येदं प्रत्युदाहरणम्। कर्मसन्निधौ फलयोगो न शास्त्रान्तरत्वमापादयति। ननु च विधेयपरत्वाद्भावार्थस्य किं सन्निधिः करिष्यति ? सत्यं विधेयो भावार्थः। न पुनः सन्निधानमतिक्रामति। ननु अतत्परत्वादभिधानस्य किं सन्निधिः करिष्यति ? इदं करिष्यति।

---

सन्निधौ। उक्तं फलं चाकर्मसन्निधौ इति। तस्यैवेदं प्रत्युदाहरणम्। एतदेव दर्शयति—कर्मसन्निधौ फलयोगो न शास्त्रभेदमापादयति शास्त्रसाध्यभेदाभावात् उत्पत्त्यधिकारयोरेको[1]ऽधिकारविधिः साध्यो यतः। ननु च विधेयपरत्वात् भावार्थस्य किं सन्निधिः करिष्यति। अस्यार्थः। यद्यपि भावार्थः सन्निहितोऽस्ति तथापि[2] फलस्याविधेयत्वात् भावार्थस्य विधेयत्वादन्यत्वं युक्तम्। परिहरति—सत्यं विधेयो भावार्थः न पुनः सन्निधानमतिक्रामति सन्निहित एव वर्तत इत्यर्थः। ननु अतत्परत्वादभिधानस्य किं सन्निधिः करिष्यति। [सन्निहितस्य] विधानानुपपत्तेः न प्रकृतपरो भावार्थशब्द इति नास्ति सन्निधानस्योपयोगः। परिहरति—इदं करिष्यति सन्निधिः

---

(1) G. एक एव (2) फलं प्रतिविधेयत्वात्

विभक्तं यागमन्यं वक्तुम्, सन्निहितस्य प्रतिनिर्देशक एष शब्दः। तस्मात् अवेष्टिरेवान्नाद्यकामस्य विधीयत इति। किं प्रयोजनम्? यदि अवेष्टिः, आग्नेयादीनि हवींषि; अथ कर्मान्तरम्, अन्यहविष्को यागः इति।

आग्नेयद्विरुक्तेः स्तुत्यर्थताधिकरणम्।

आग्नेयस्तूक्तहेतुत्वादभ्यासेन प्रतीयेत ॥ २७ ॥

**दर्शपूर्णमासयोः 'आग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति विधाय पुनरुच्यते, 'आग्नेयोऽष्टा-**

---

अतत्परेऽप्यभिधानेऽन्यतो बुद्धिं निरुणद्धि। उपदेशपरमप्यभिधानं सन्निधौ सति न विशेषान्तरमाक्षेप्तुं क्षमः। तस्माद्युक्तं सन्निधौ त्वविभागादिति।

आग्नेयस्तूक्तहेतुत्वात्। अविशेषात् कर्मान्तरमित्याशङ्कितं पूर्वपक्षिणा। आग्नेयमात्रश्रवणात्। अविभागस्तु कर्मणोऽभ्यासो द्विरुक्तेन प्रतीयेत।

---

अन्यपरेऽभिधाने अन्यतो बुद्धिं निरुणद्धि। तदेतत् प्रकृतयागस्वरूपं फले विधीयते तस्यैव प्रकृतत्वेन यजिनाऽभिधानात्। एतदेव दर्शयति—उपदेशपरमप्यभिधानं सन्निधौ सति न विशेषान्तरं आक्षेप्तुं क्षमः। अधिकारेण उत्पत्तिराक्षेप्तव्या। तत्र सन्निहितायामुत्पत्तौ सैव सन्निहिते सम्बध्यने तस्मिन्नेव यागे यजिर्वर्तत इत्यर्थः। तस्मात् सन्निधौ त्वविभागादिति युक्तम्।

आग्नेयस्तु। अविशेषात् कर्मान्तरमित्याशङ्कितं पूर्वपक्षवादिना आग्नेयमात्र श्रवणात्। समिधो यजति तनूनपातं यजति इतिवदविभागात्।

कपालोऽमावास्यायां भवति' इति। तत्र सन्देहः, किम् अमावास्यायां द्विराग्नेयेन यष्टव्यं, उत सकृत्? इति। किं प्राप्तम्? 'आग्नेयस्तूक्तहेतुत्वादभ्यासेन प्रतीयेत', एकस्यैवं पुनः श्रुतिः अविशेषात अनर्थकं हि स्यात् इति।

अविभागात्तु कर्मणो द्विरुक्तेर्न विधीयते ॥ २८ ॥

नैतदस्ति, पुनरभ्यसितव्यः आग्नेयः इति। कुतः? नाभ्यासस्य वाचकः शब्दोऽस्ति इति। ननु आग्नेयः पुनरुच्चरितः परं कर्म विधास्यति। नेति ब्रूमः, शब्दः पुनरुच्चरितो न पुनरर्थः कर्तव्यः इति शक्नोति वदितुम्, योऽस्य प्रथममुच्चरितस्यार्थः, शतकृत्वोऽप्युच्चरितस्य स एवार्थो भविष्यति, नान्यः। ननु विहितमेव पुनरविशिष्टं विदधत अनर्थको भवति। भवतु कामम् अनर्थकत्वं, न त्वन्यं शक्नोति वदितुम्, भवेदुपपन्नमनर्थकत्वं, न त्वर्थान्तरवचनता। तस्मात न द्विरभ्यस्येत इति।

---

अत्रोच्यते—राद्धान्तवादी तु पौर्णमासीसंयुक्तं विधायकं मन्यते। अप्रतिपक्षत्वात। विहितस्य च पुनर्वचनं न शक्यतेऽर्थान्तरतया प्रतिपत्तुम्। अभ्या-

---

अत्रोच्यते—राद्धान्तवादी तु पौर्णमासीयुक्तं विधायकं मन्यते अप्रतिपक्षत्वात। अमावास्यामात्रयोगिना वाक्येन विधानं उभयकालयोगिना चानुवाद इति न शक्यते वक्तुं पौर्णमासी वचनस्याप्राप्तत्वात् उभयसंबन्धिनः तावद्विधानं केवलामावास्यासंबन्धिनोऽनुवादकतोपपद्यते। तेन गृह्यमाणविशेषत्वात पौर्णमासीयुक्तं तावद्विधायकम्। विहितस्य च पुनर्वचनं न शक्यतेऽर्थान्तरतया प्रतिपत्तुम्। ननु अभ्यासाधिकरणेप्येवमेव कस्मान्न भवतीत्याशङ्क्याह--अभ्या-

अन्यार्था वा पुनःश्रुतिः ॥ २९ ॥

अथ वा, न अनर्थिका पुनःश्रुतिः, अर्थवादार्था भविष्यतीत्युच्यते। किमर्थवादेन प्रयोजनं? यदा पूर्वेणैव वाक्येन सार्थवादकेन विहितः आग्नेयः, कमन्यमर्थं विधातुं स्तुतिः प्रयुज्येत? स्तुतिमात्रं यत् न कस्यचिद्विधानार्थं, तदनर्थकमित्युक्तम्, 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' इति, स्तुतश्चास्तुतश्च तावानेव सोऽर्थः, यथा स्तुता च अस्तुता च देवता अङ्गभावं साधयति, एवमेतदिति। तदुच्यते 'अन्यार्था वा पुनः श्रुतिः', नाग्नेयं विधातुम्, ऐन्द्राग्नविधानार्था, आग्नेयोऽष्टाकपालोऽमावास्यायां भवत्येव, न केवलेनाग्निना स साधुर्भवति इति इन्द्रसहितोऽग्निः समीचीनतरः, तस्मात् ऐन्द्राग्नः कर्तव्यः इति।

इति आचार्यशबरस्वामिनः कृतौ मीमांसाभाष्ये द्वितीयाध्यायस्य
तृतीयः पादः॥

---

साधिकरणे पुनर्विधानाविशेषादित्युक्तम्। ननु च निष्प्रयोजनं पुनर्वचनमित्युक्तम्। न प्रयोजनवशादर्थान्तरप्रतिपत्तिः अवगमो हि तत्वान्यत्वे हेतुः न चानर्थक्यम्। ऐन्द्राग्नविधानं प्रयोजनमित्युक्तम्।

इति बृहत्यां द्वितीयाध्यायस्य
तृतीयः पादः

---

**साधिकरणे पुनः** विधानाविशेषात् सर्वेषां विधानमित्युक्तं इह तु गृह्यते विशेष इत्युक्तम्। **ननु च निष्प्रयोजनं पुनर्वचनमित्युक्तं** तेन विधानमेव भवतु नानुवादः। परिहरति—**न प्रयोजनवशादर्थान्तरप्रतिपत्तिः। अवगम एव हि तत्वान्यत्वे हेतुः।** अत्र चान्यत्वे हेतुर्न शक्यतेऽवगन्तुम्। किन्तु तत्त्वमेव तेनाप्रयोजनत्वेपि नानुवादनिवारणम्। एवं तावदानर्थक्यमङ्गीकृत्योक्तम्। संप्रत्यानर्थक्यं नास्तीत्याह—**न चानर्थक्यं ऐन्द्राग्नविधानं प्रयोजनमित्युक्तं** भाष्ये। ऐन्द्राग्नविधानार्थोऽयमर्थ इति।

**इति ऋजुविमलायां पञ्चिकायां द्वितीयाध्यायस्य**
**तृतीयः पादः**

# चतुर्थः पादः ॥

### अथ यावज्जीवाधिकरणम् ॥

यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात् ॥ १ ॥

बह्वृचब्राह्मणे श्रूयते, 'यावज्जीवमग्निहोत्रं जुहोति' इति, 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति। अत्र सन्देहः, किं कर्मधर्मोऽभ्यासो यावज्जीविकता, उत कर्तृधर्मो नियमः चोद्यते यावज्जीविकता इति। कथं कर्मधर्मोऽभ्यासः, कथं वा कर्तृधर्मो नियमः इति। यदि जुहोतिः अनुवादः, यावज्जीवम्

---

### अथ चतुर्थः पादः

यावज्जीविकोऽभ्यासः। यावज्जीवमग्निहोत्रं जुहोतीत्यत्र चिन्त्यते किं काम्याच्छास्त्रान्तरं उत एकमिति। किं प्राप्तं ? कर्मणः प्राप्तत्वात् गुणविधिः। ततश्चैकं शास्त्रम्। कः पुनरत्र गुणो विधीयते ? जीवनं तावत् प्राप्तत्वादविधेयम्। एवं तर्हि जीवनेन

---

### अथ द्वितीयाध्यायस्य
### चतुर्थः पादः

यावज्जीविकोऽभ्यासः। यावज्जीवमग्निहोत्रं जुहोतीत्यत्र चिन्त्यते। किं काम्याच्छास्त्रान्तरमुतैकं शास्त्रमिति। अनेनाध्यायसङ्गतिमाह। कालविधौ न शास्त्रान्तरम् पृथगधिकारे तु कार्यभेदाच्छास्त्रान्तरम्। किं प्राप्तम् ? कर्मणः प्राप्तत्वात् उपपदार्थस्य कालस्याप्राप्तत्वात्। गुणविधिः ततश्च एकं शास्त्रम्। कः पुनरत्र गुणो विधीयते। एकग्रन्थेनाह—जीवनं तावत्। अजीवतो होमासंभवात् नित्यप्राप्तं न विधेयम्। यदि जीवनस्य श्रौतस्य विधानं न संभवति एवं तर्हि तल्लक्षितो जीवन-

इति विधिः ; ततः कर्मधर्मोऽभ्यासः, यदि विपरीतं, ततः कर्तृधर्मो नियमः इति। किं तावत् प्राप्तम् ? कर्मधर्मोऽभ्यासः। कुतः ?। प्रकरणात्, यदि इयं वचनव्यक्तिः, जुहोतियजतिशब्दावनुवादौ, यावज्जीवम् इति च विधिः, ततः प्रकरणमनुगृह्यते, तस्मात् अभ्यासः। एवं कृत्वा सत्रसंस्तवो युक्तो भविष्यति, 'जरामर्यं वा एतत् सत्रं, यदग्निहोत्रं, दर्शपूर्णमासौ च' इति दीर्घकालसामान्यात्। तस्मात् अभ्यासः।

---

लक्षितः कालः। ननु चासावपि नित्यप्राप्त एव ; न, यावदनुबन्धतयाऽप्राप्तेः। तस्मात् कालविधिः। कोऽयं कालो नाम ? यः कालविद्भिरुक्तः। के ते कालविदः ? ये ज्योतिर्विदः। तथा च लिङ्गदर्शनम्। तस्मादेकं शास्त्रमिति।

---

लक्षितः कालो विधीयताम्। ननु चासावपि जीवनकालो नित्यप्राप्त एव जीवनयुगपद्भूतोऽपि कालो नित्यप्राप्त एव। सर्वे हि जीवनकाल एव जुह्वति। परिहरति—न नित्यप्राप्तः यावदनुबन्धतयाऽप्राप्तेः। यावज्जीवनकालः तावति होतव्यमित्यर्थः। स च कालो होमेनानभ्यस्तेन न शक्यतेऽवाप्तुमित्यर्थात् अभ्यासः कार्यः। अथ कोऽयं कालो नाम यदि तावद्वैशेषिकाभिमतः स नित्य एकरूपः प्राप्त एव। उत्तरं—यः कालविद्भिरुक्तः स कालो विधीयते के कालविदः ? किं वैशेषिका इति भावः। उत्तरं—ज्योतिर्विदः कालविदः। आदित्यादिगति[1]प्रचय एव काल इति ज्योतिर्विदः। स विधीयते तथा च लिङ्गदर्शनम्।

---

(1) प्रमेय

कर्तुर्वा श्रुतिसंयोगात् ॥ २ ॥

अत्र ब्रूमो, यावज्जीविकोऽभ्यासो न स्यात्, कर्तुर्धर्मो नियमश्चोद्यते इति। कुतः? श्रुतिसंयोगात्। एवं श्रुतिपरिच्छिन्नोऽर्थो भविष्यति, इतरथा लक्षणा स्यात्। कथं? यावज्जीवनं, तावता कालेन कुर्यात् इति, तदेतत्प्रदोषपरिसमाप्तमग्निहोत्रमनभ्यस्य, न शक्यते यावज्जीवनकालेन कर्तुम्। पौर्णमास्यमावास्यापरिसमाप्तौ च दर्शपूर्णमासौ। यच्चुच्यते जीवनकालस्यैकदेशेऽपि कृतं तेन कालेन कृतं भवति इति। नैतदेवम्, अर्थप्राप्तं हि तत् न विधातव्यम् शब्देन, जीवनपरिमितः कालो यः, तेन परिसमापयितव्यम् इत्यर्थादभ्यासः, स हि कर्तव्यतया श्रूयते, न चासौ जुहोतियजतिभ्यामुच्यते, लक्षणया तु गम्यते। यावज्जीवं जुहुयात्, यावज्जीवमभ्यस्येत इति, श्रुतिश्च प्रकरणाद्बलीयसी। यदि इयं वचनव्यक्तिरस्य वाक्यस्य, यावज्जीवम् इत्यनुवादो जुहोति यजति इति च विधानम्, इत्येवं यजतिजुहोतिशब्दौ स्वार्थावेव भविष्यतः, यावज्जीवशब्दोऽपि जीवनवचन एव, नाभ्यासलक्षणो भविष्यति इति जीवने निमित्ते कर्म विधीयते, जीवंश्चेत् होतव्यमिति जीवनं

---

कर्तुर्वा श्रुतिसंयोगात्। अत्रोच्यते—अधिकारचोदनैषा न कालविधिः। अतश्च काम्यात शास्त्रान्तरत्वम्। किं पुनः कारणं अधिकारचोदनैषा न कालविधिरिति? कालविधौ हि पदद्वयमपि लक्षण—

---

कर्तुर्वा। अत्रोच्यते-अधिकारचोदनैषा न कालविधिः। अतश्च काम्याच्छास्त्रान्तरम्। किं पुनः कारणं अधिकारचोदनैषा न कालविधिः? उत्तरं—कालविधौ हि पदद्वयमपि लक्षण-

निमित्तं, न कालः, नियतनिमित्तत्वात् नियतं कर्म तेनोच्यते, कर्तुर्धर्मो नियमश्चोच्यते इति ।

लिङ्गदर्शनाच्च, कर्मधर्मे हि प्रक्रमेण नियम्येत, तत्रानर्थकमन्यत स्यात् ॥ ३ ॥

लिङ्गं च भवति 'अपि ह वा एष स्वर्गाल्लोकाच्छिद्यते यो दर्शपूर्णमासयाजी पौर्णमासीममावास्यां वाऽतिपातयेत्' इति । कथं लिङ्गं ? कर्मधर्मे हि प्रक्रान्तं सत् यावज्जीवनकालेन परिसमाप्येत, न तत्र कालातिपातः स्यात् । तत्र चानर्थकमन्यत् स्यात प्रायश्चित्तादि विधीयमानम् ।

व्यपवर्गं च दर्शयति, कालश्चेत्कर्मभेदः स्यात् ॥ ४ ॥

व्यपवर्गस्य समापनस्य दर्शनं भवति, 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इति; यदि दर्शपूर्णमासाभ्यामिष्ट्वा सोमस्य कालोऽस्ति, व्यक्तं न यावज्जीवनकालेन तौ परि-

---

याऽन्वपि भवति । अधिकारोपदेशो तु श्रुत्या । न च संभवन्त्यां

---

याऽन्वयि भवति । जीवनेन कालो लक्षणीयः । जुहोतीत्यनेन होमाभ्यासः न हि तल्लक्षणया विना यावज्जीवनकालेन सहान्वयः संभवति । अधिकारोपदेशो पुनः श्रुत्या पदद्वयमन्वयि भवति ।

यावज्जीवमिति होमेन जीवनस्य व्याप्तिः प्रतीयते । कथं च होमेन जीवनं व्याप्यते यदि जीवनमधिकारिविशेषणं भवति । एतच्च षष्ठे वक्ष्यामः । न च संभवन्त्यां

समाप्येते। अथ जीवनं निमित्तम्, उपपद्यते कर्मभेदः, दर्शपूर्ण-मासौ परिसमाप्य सोमं कर्मान्तरं कुर्यादिति।

अपि च 'आहिताग्निर्वा एष योऽग्निहोत्रं जुहोति न दर्शपूर्ण-मासौ यजेत, या आहुतिभाजो देवतास्ता अनुध्यायिनीः करोति' इति अनुध्यायिनीवचनं भवति, नियतः य आहुतिभागः, तस्मिन् अदीयमाने अनुध्यायिनीवचनं भवति। यस्त्वनियत आहुतिभागः न तमनुध्यायन्ति, इदं नो भविष्यति इति, निय-तश्च भागो नियमपक्षे भवति, न काम्यपक्षे, कर्मधर्मे च काम्य-मग्निहोत्रं च दर्शपूर्णमासौ च, तस्मात् नियमपक्षः। अपि च श्रूयते, 'जरामर्यं वा एतत् सत्रं यदग्निहोत्रं दर्शपूर्णमासौ च, जरया ह वा एताभ्यां निर्मुच्यते मृत्युना च' इति जरामरण-निर्मोचनावधारणवचनं च नियमपक्षे उपपद्यते। काम्यपक्षे हि अप्रयोगादपि मुच्येत।

अनित्यत्वात् तु नैवं स्यात् ॥ ५ ॥

तुशब्दोऽन्वाचये, इतश्च पश्यामः क्रतुधर्मो नियमश्चोद्यते इति। यदि पूर्वस्य होमस्य गुणविधिर्भवेत स एवैकः पूर्वोऽ-ग्निहोत्रहोमोऽनित्यः स्यात्, कामसंयोगेन श्रुतो नान्यः कश्चित् नित्यः, तत्र लिङ्गं विरुध्येत, 'जरामर्यं वा एतत सत्रं यदग्नि-होत्रं दर्शपूर्णमासौ, जरया वा एताभ्यां निर्मुच्यते मृत्युना च'

---

श्रुतौ लक्षणाश्रयणे कारणमस्ति। तस्मादधिकारचोदनैवैषा। अधिकारचोदनायां

---

श्रुतौ लक्षणाश्रयणे कारणमस्ति। तस्मादधिकारचोदनैषा। अधिकारचोदनायां

इति। कथं विरुध्यते ?। जरामरणनिर्मोचनावधारणवचनं नियमपक्षे उपपद्यते, काम्यपक्षे अप्रयोगादपि मुच्येत।

विरोधश्चापि पूर्ववत् ॥ ६ ॥

इतश्च पश्यामो न पूर्वाभ्यासो गुणश्चोद्यते इति। कुतः ?। विरोधात्, विरोधो भवति, दर्शपूर्णमासविकाराः सौर्यादयोऽपि यावज्जीवमभ्यसितव्या भवेयुः। सोऽनारभ्यार्थः प्रतिज्ञातः स्यात्। अतोऽपि पश्यामो नियमः इति। सत्रसंस्तवश्च सन्ततभावमुपपत्स्यते।

कर्तुस्तु धर्मनियमात्कालशास्त्रं निमित्तं स्यात् ॥ ७ ॥

यदि कर्तुर्धर्मो नियमश्चोद्येत, ततो जीवनं निमित्तं, जीवने निमित्ते कर्म विधीयते। तत्र प्रयोगे परिसमाप्तं कर्म, तथा व्यपवर्गस्य दर्शनमवक्लृप्तं भवति, तस्मात् कर्तृधर्मो नियमश्चोद्यते इति सिद्धं भवति।

---

च प्रयोगान्तरसिद्धिः। एवं च कृत्वा लिङ्गदर्शनानि घटन्ते। जरामर्यवादोऽप्युपपद्यत इत्युक्तम्।

---

च प्रयोगान्तरसिद्धिः। एवं च कृत्वा लिङ्गदर्शनानि घटन्ते। अपि वा एष स्वर्गाल्लोकाच्छिद्यते इत्येवमादीनि। जरामरणं च यत्पूर्वपक्षिणा सत्रतुल्यदर्शनमुपन्यस्तं तत् सत्रवत् सन्ततभावादप्युपपद्यते इत्युक्तम्।

अथ शाखान्तराधिकरणम्।

नामरूपधर्मविशेषपुनरुक्तिनिन्दाऽशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनात् शाखान्तरेषु कर्मभेदः स्यात् ॥ ८ ॥

इह शाखान्तराण्युदाहरणं, काठकं कालापकं पैप्पलादकम् इत्येवमादीनि। तत्र सन्देहः, किमेकस्यां शाखायां यत् कर्म अग्निहोत्रादि श्रूयते, तच्छाखान्तरे पुनः श्रूयमाणम्भिद्येत तस्मात्, उत न भिद्येत ?। भिद्येत इति पश्यामः। कुतः ?। नामभेदात् एकं काठकं नाम, अन्यत्कालापकं नाम, एवं नामभेदाद्भेदः। ननु ग्रन्थनामैतत्। सत्यं, कर्मणामपि इति ब्रूमः, कर्मभिरप्येवमादीनां सामानाधिकरण्यम्, एकविभक्तित्वं च इति।

रूपभेदाच्च, एकस्यां शाखायाम् अग्नीषोमीयमेकादशकपालमामनन्ति, एकस्यां द्वादशकपालं, एवं भिन्नं रूपं, कथमिव न कर्मान्तरं भविष्यति।

---

नामरूपधर्मविशेषपुनरुक्ति। अत्र भेदप्रमाणाभासानि पूर्वपक्षे उपन्यस्य राद्धान्ते केचित् ग्रन्थसंबन्धितया, केचित् स्वाध्यायसंबन्धितया, केचित् कर्मान्तराश्रयतया, केचित् यदेति कालयोगादित्येवमादिभिः परिहारैः परिहृतानि।

---

नामरूप। अत्र भेदप्रमाणाभासानि पूर्वपक्षे उपन्यस्य राद्धान्ते केचित् ग्रन्थसम्बन्धितया केचित् स्वाध्यायधर्मतया केचित् विकल्पाश्रयणेन केचित् क्रत्वन्तराश्रयणेन केचिद्यदेति कालयोगात् इत्येवमादिभिः परिहारैः परिहृतानि। अत्र भेद-

धर्मविशेषाच, कारीरीवाक्यान्यधीयानास्तैत्तिरीया भूमौ भोजनमाचरन्ति, अपरे शाखिनो नाचरन्ति, तथा अग्निमधी-

---

तस्माद्वाक्यान्तराण्येवैतानि न शास्त्रान्तराणीति सिद्धम् ।

इति वृहत्यां द्वितीयाध्यायस्य
चतुर्थः पादः

---

प्रमाणाभासानि पूर्वपक्षे उपन्यस्येत्यादि भाष्योदितैः परिहारैः परिहृतानि निराकृतानि । अतः क्वचित् परिहारग्रन्थसंबन्धितया काठकं कालापकं इति समाख्याभेदेन यः कर्मभेद उक्तः सः काठकादिसमाख्यानां ग्रन्थसंबन्धितया परिहृतः । तथा केचित्परिहाराः स्वाध्यायसंबन्धितया भूमौभोजनादिधर्मभेदेन यः कर्मभेदः आशङ्कितः स भूमौ भोजनादीनां स्वाध्यायाध्ययनमात्र-संबन्धितया परिहृतः । तथा केचित्परिहाराः विकल्पाश्रयणेन यः कपालभेदादिना कर्मभेद आशङ्कितः स विकल्पाश्रयणेन परिहृतः । एकस्मिन् कर्मणि विकल्पेन नानासंख्यासंबन्धोपपत्तेः । केचित्परिहाराः क्रत्वन्तराश्रयणेन दीक्षितत्वमदीक्षितत्वं च । यदुक्तं पुरोडाशिनां सान्नायिनां च सारस्वते दर्शनं भेदकारणतया, तद्यदा पुरोडाशिनो यागा न सान्नायिनः इति कालभेदयोगेन परिहृतम् । (यद्द्वादशाहदर्शनं भेदसाधनायोपन्यस्तं न द्वादशाहाश्रयणेन परिहृतम्) तथा केचित्परिहाराः यदेतिकालयोगात् । अत्र हि एतद्वक्तव्यम् । यथा समिदादीनां अभ्यासाद्भेदो भवति तथाऽत्रापि किमिति न भवति । उच्यते । एकस्यां शाखायां विधिभेदेन विधेयभेदो न युक्तः । अतोऽज्ञातज्ञापनं अप्रवृत्तप्रवर्तनं च विधिव्यापारः यद्येकमेव कर्म स्यात् तदिदं द्वयमपि नोपपद्यते शाखान्तरेषु तु भिन्नेषु प्रमातृषु तद्भेदेनैव अज्ञातज्ञापनं अप्रवृत्तप्रवर्तनं च विधेरुपपन्नमिति न शक्नोति भेदमापादयितुम् ।

इति महामहोपाध्यायशालिकनाथमिश्रकृतायां ऋजुविमलायां पञ्चिकायां
द्वितीयस्याध्यायस्य
चतुर्थः पादः
समाप्तश्चाध्यायः

---

याना: केचिदुपाध्यायस्योदकुम्भानाहरन्ति, अपरे न, अश्वमेध-मधीयाना: केचित् अश्वस्य घासमाहरन्ति, अपरे न, परेऽन्यं धर्ममाचरन्ति, अश्वघासादेरेकेषामुपकारमाकाङ्क्षत्यश्वमेधादिः, एके-षां नाकाङ्क्षति, स एवैकः कथं नाकाङ्क्षेत कथं वा अन्यत् आकाङ्क्षितुमर्हति, अतो गम्यते अन्यदिति।

पुनरुक्तिप्रसङ्गाच्च, यदि सर्वशाखाप्रत्ययमेकं कर्म, एकस्यां शाखायां विहितस्य कर्मणः शाखान्तरे वचनं पुनरुक्तमनर्थकं स्यात्। न तु भेदपक्षे एष दोषोऽस्ति, तस्मादपि कर्मभेदः।

निन्दावचनाच्च, "प्रातः प्रातरनृतं ते वदन्ति पुरोदयाजू जुह्वति येऽग्निहोत्रं दिवाकीर्त्यमदिवा कीर्तयन्तः सूर्यो ज्योतिर्न तदा ज्योतिरेषाम्" इति केचित शाखिनोऽनुदितहोमं निन्दन्ति, अपरे पुनरुदितहोमं निन्दन्ति, 'यथाऽतिथये प्रद्रु-तायान्नमाहरेयुस्तादृक् तत् यदि उदिते जुह्वति' इति, सर्व-शाखाप्रत्यये विरुद्धं, न तु कर्मभेदे, तस्मात् अपि भेदः इति।

अशक्तेश्च, न शक्नुयुः खल्वपि सर्वशाखाप्रत्ययमुपसंहर्तुम्, तत्रानारभ्योऽर्थो विधीयते इति प्रतिज्ञातं भवेत्, शक्यं तु कर्मभेदे, अतः कर्मभेदः इति।

समाप्तिवचनाच्च, असमाप्तेऽपि समाप्तेर्वचनं भवति, केचिदाहुः, अत्रास्माकमग्निः परिसमाप्यते इति, अपरेऽन्यपरिसमाप्तिं व्यपदिशन्ति, तदेककर्मत्वे नोपपद्यते, न हि तदेव तत्र परिसमा-प्येत, अन्यत्र न; भेदे तु युक्तं, तस्मात् भेदः इति।

प्रायश्चित्तविधानाच्च, केचित् अनुदितहोमव्यतिक्रमे प्रायश्चित्तमामनन्ति, केचित् उदितहोमव्यतिक्रमे व्यृद्धे च प्रायश्चित्तं, न च कर्मैकत्वे उभयथा व्यृद्धिः सम्भवति, कर्मभेदे तु यदनुदिते होमकर्म, तदुदिते व्यृद्धम् , इतरदप्यनुदिते, तस्मादपि भेदः ।

अन्यार्थदर्शनाच्च, इदं श्रूयते, 'यदि पुरा दिदीक्षाणाः स्युः यदि वैषां गृहपतिः गृहपतेर्वाऽनुसत्रिणः इति, त एनमेव बृहत् सामानं क्रतुमुपेयुरुपेतं ह्येषां रथन्तरं, अथ यदि अदिदीक्षाणाः' इति इष्टवतामनिष्टपूर्वाणां च द्वादशाहे दर्शनमुपपद्यते यदि कर्मभेदः, एककर्मत्वे नावकल्पते । कथं ? । ताण्ड्यके श्रूयते, 'एष वाव प्रथमो यज्ञो यज्ञानां, यज्ज्योतिष्टोमो, य एतेनानिष्ट्वाऽथान्येन यजेत गर्तपत्यमेव तज्जायेत प्रवामीयते' इति, तत् सर्वत्र स्यात् , तत्रादिदीक्षाणां द्वादशाहे दर्शनं नोपपद्यते, तस्मात अपि कर्मभेदः ।

अथापरं लिङ्गदर्शनं, 'यत्पक्षसम्मितां मिनुयात् कनीयांसं यज्ञक्रतुमुपेयात कनीयसीं प्रजां कनीयसः पशून् कनीयोऽन्नाद्यं पापीयान् स्यात , अथ यदि वेदिसम्मित्या मिनोति' इति पक्षसंमाने प्रतिषिद्धे वेदिसम्मानस्य दर्शनं भवति, तत्तु कर्मभेदे उपपद्यते, पाक्षिकस्य वेदिसम्मानस्य दर्शनं एककर्मत्वे नोपपद्यते । कथम् ? एके हि समामनन्ति, 'रथाक्षमात्राणि यूपान्तरालानि भवन्ति' इति, तत् सर्वत्र स्यात , तत्र च नो पक्षसम्मानं नो वेदिसम्मानं स्यात , वेदिसम्मानदर्शनं नोपपद्यते, तस्मादपि कर्मभेदः ।

अपरञ्च लिङ्गदर्शनं—केषाञ्चित् ज्योतिष्टोमे श्रूयते, द्वे संस्तुतानां विराजमतिरिच्येते इति, परेषां तिस्रः संस्तुतानां विराजमतिरिच्यन्ते इति एककर्मत्वे विरोधः, नानाकर्मत्वे कस्मिंश्चित् ज्योतिष्टोमे द्वे, कस्मिंश्चित् तिस्रः, तस्मात् कर्मभेदः इति।

अपि च सारस्वते श्रूयते, 'ये पुरोडाशिनस्ते उपवसन्ति ये सान्नायिनस्ते वत्सान् वारयन्ति'। सान्नायिन इष्टप्रथमयज्ञाः, पुरोडाशिनो विपरीताः, उभयेषां सारस्वते दर्शनमवकल्पते कर्मभेदे, एककर्मत्वे सर्वेषां ज्योतिष्टोमपूर्वत्वं स्यात्, तत्र दर्शनं नोपपद्यते।

अपि च श्रूयते, 'उपहव्योऽनिरुक्तः, अग्निष्टोमो यज्ञः रथन्तरसामा, अश्वः श्यावो दक्षिणा,' परेषां श्रूयते, 'उपहव्योऽनिरुक्तः, उक्थ्यो यज्ञो बृहत्सामा, अश्वः श्वेतो रुक्मललाटो दक्षिणा' इति, कर्मैकत्वे रथन्तरवचनं बृहद्वचनं चानर्थकं, शाखाद्वयप्रत्ययत्वात् बृहत्सामा रथन्तरसामा वा स्यात्, स चायं प्रकृतित एवंलक्षणकः प्राप्तः। नानाकर्मत्वे तु अन्यो बृहत्सामाऽन्यो रथन्तरसामा इति युक्तं भवति, तस्मात् शाखान्तरे कर्मभेदो भवितुमर्हति।

एकं वा संयोगरूपचोदनाख्याविशेषात् ॥ ९॥

नचैतदस्ति, यदुक्तं शाखान्तरेषु कर्मभेदः इति, सर्वशाखाप्रत्ययं सर्वब्राह्मणप्रत्ययञ्चैकं कर्म, अर्थसंयोगस्याविशेषात्, तदेव प्रयोजनमुद्दिश्य तदेव विधीयमानं प्रत्यभिजानीमः।

रूपमप्यस्य तदेव द्रव्यदेवतं, पुरुषप्रयत्नश्च तादृश एव चोद्यते, नामधेयं चाविशिष्टं, तेन तदेव कर्म सर्वशाखादिषु इति प्रत्ययः।

न नाम्नो स्यादचोदनाभिधानत्वात् ॥ १० ॥

यदुक्तं नामभेदः इति, परिहृतं तत् ग्रन्थनामतः इति। अथ यदुक्तं, कर्मणोऽपि नामसामानाधिकरण्यदर्शनात् इति। नैष दोषः, ग्रन्थसंयोगात् कर्म काठकादि, न कर्मसंयोगात् ग्रन्थः काठकः। कथं गम्यते ? यत् कर्म काठकादिसंयुक्तं, तत् काठकादिशब्देनोच्यते। किमतोऽपि ? यत् ग्रन्थसंयोगात् काठकं कालापकं कर्मोच्यते। एकत्वेऽपि काठकग्रन्थसंयोगात् काठकं कालापकग्रन्थसंयोगात् तु कालापकं भविष्यति।

सर्वेषाञ्चैककर्म्यं स्यात् ॥ ११ ॥

यदि शब्दभेदाद्भेदो भवेत्, शब्दैक्यात् तर्हि कर्मैक्यं भवेत् तत्र काठकशब्दाभिधानादैक्यं भवेत् अग्निहोत्रस्य दर्शपूर्णमासयोः ज्योतिष्टोमस्य च, तच्छब्दत्वात्, नचैतदेवम्। तस्मादप्य-भेदः।

कृतकं चाभिधानम् ॥ १२ ॥

इदानीन्तनश्चैतदभिधानं भवेत, अस्य न पूर्वमासीत, यतः प्रभृति कठस्य प्रकृष्टं वचनं, ततः प्रभृति प्रवृत्तं, पूर्वं नासीद्भेदः, इदानीं भेदः इति विरुद्धम्।

एकत्वेऽपि परम् ॥ १३ ॥

एककर्मत्वेऽपि रूपभेदो भवति वचनात्, न च वाचनिके रूपभेदे, असत्यामपि भेदबुद्धौ कर्मणो भेदोऽध्यवसीयेत।

विद्यायां धर्मशास्त्रम् ॥ १४ ॥

अथ यो धर्मविशेष उक्तः विद्याग्रहणार्थः सः, न कर्मण उपकारकः। कथं गम्यते? श्रुत्यादीनामभावात्, विद्यासंयोगाच्च न कर्मप्रयुक्तः इति।

आग्नेयवत्पुनर्वचनम् ॥ १५ ॥

अथ यदुक्तं, यथा अमावास्यायामाग्नेयस्य पुनरुक्तदोषात् मध्यमः पक्षो निरस्तः, एवमयमपि तस्मादेव दोषात् कर्मैकत्वपक्षो निरसितव्यः, इति, एतत्परिहर्तव्यम्। इत्याभाषान्तं सूत्रम्।

अद्विर्वचनं वा श्रुतिसंयोगाविशेषात् ॥ १६ ॥

नैव खल्वेतत् द्विर्वचनं, स एवायमर्थः पुनः श्रावितोऽग्निहोत्रादिर्बहुकृत्वो बहुभिस्तु पुरुषैः, नचैकोऽर्थो बहुभिरुच्यमानः पुनरुक्तो भवति। यदि भवेत्, एकस्मिन्नेव वेदे बहुभिरुच्यमाने भवेत्, तस्मात् न बहुकर्मसमवायोऽयम्, एकमेवेदं कर्म इति।

वाक्यासमवायात् ॥ १७ ॥

अर्थासन्निधेश्च ॥ १८ ॥

अर्थासन्निधेश्च शाखाशब्द उपपन्नो भविष्यति, शाखा इव हीमाः शाखाः, तद्यथा वृक्षस्य शाखाः, एवमिहापि वृक्ष-

स्थानीयस्य वेदस्य शाखाः। किं शाखासारूप्यं ? यथा नानावस्थानं, नचैकैकस्यां कृत्स्नं पुष्पं फलं सन्निहितम्, एवमिहापि, नैकैकस्यां कृत्स्नं गुणकाण्डं सन्निहितम्, इत्यर्थासन्निधेः शाखाशब्दोपपत्तिः। तस्मादप्येकं कर्मेति।

न चैकं प्रति शिष्यते ॥ १९ ॥

न च, यत काठकेऽग्निहोत्रं, तत् काठकमेवैकं पुरुषं प्रति विधीयते। तैत्तिरीयस्यापि तद्विहितमेव, पुरुषविशेषवचनाभावात्, यच्चाग्निहोत्रस्य किञ्चित् अङ्गं विधीयते, सर्वावस्थस्य तत् अग्निहोत्रस्य, यच्च काठकस्याग्निहोत्रस्य, तच्च तैत्तिरीयकस्येति, विशेषवचनाभावात्, तस्मात् सर्वशाखाभिरेकं समाप्तं कर्मोच्यते इति।

समाप्तिवच्च संप्रेक्षा ॥ २० ॥

अत्र अस्माकम् अग्निः परिसमाप्यते इति उत्प्रेक्षितारो भवन्ति, अन्वारोहे तु मैत्रायणीयानामग्निः परिसमाप्यते, अस्माकं तेषु न परिसमाप्यते इति, यदि अन्यदेव मैत्रायणीयानां, अन्यच्च तेषां कथं ते ब्रूयुरेष्वस्माकं न परिसमाप्यते इति, एकत्वमुपपन्नं, तेषामपि हि ते सन्ति।

एकत्वेऽपि पराणि निन्दाशक्तिसमाप्तिवचनानि ॥ २१ ॥

न हि निन्दा निन्द्यं निन्दितुं प्रयुज्यते। किं तर्हि निन्दितादितरत्प्रशंसितुम्, तत्र न निन्दितस्य प्रतिषेधो गम्यते। किन्तु इतरस्य विधिः, तत्र एकस्मिन् अग्निहोत्रे द्वौ कालौ विहितौ विकल्प्येते, अतो न कश्चिद्विरोधः।

तथा असमर्थानां एकस्मिन्नपि वेदे विहितकृत्स्नमङ्गजातमुपसंहर्तुमशक्तिः, समर्थानान्तु सर्वशाखाभ्योऽप्यागमितमधिकं विधिमुपसंहर्तुं शक्तिरस्ति इति तेनैककर्मत्वेऽपि न विरुद्धमिति।

तथा एकस्मिन्नपि कर्मणि किञ्चित् वस्तु समाप्तम्, इति कृत्वा समाप्तिशब्दः प्रयुज्यते, यथा, आध्वर्यवे समाप्ते ज्योतिष्टोमस्य समाप्तो ज्योतिष्टोमः इति भवति।

प्रायश्चित्तं निमित्तेन ॥ २२ ॥

यदुक्तं, उदितहोमस्यापि प्रायश्चित्ताम्नानाद्व्यूढ्ता गम्यते, अनुदितहोमस्यापि, तदेकत्वे विरुध्यते, अविरुद्धं नानात्व इति, तत परिहर्तव्यम्। आभाषान्तं सूत्रम्।

प्रक्रमाद्वा नियोगेन ॥ २३ ॥

वाशब्दः पक्षं व्यावर्तयति। नैष दोषः, उदिते होष्यामीति प्रक्रान्ते अन्यथा क्रियमाणे भवति दोषः, तत्र प्रायश्चित्तस्य विषयो भविष्यतीति कर्मैकत्वेऽपि न दोषः।

समाप्तिः पूर्ववत्त्वात् यथाज्ञाते प्रतीयेत ॥ २४ ॥

पूर्ववति समाप्तिवचनं भवति, यत्प्रारब्धं तत् परिसमाप्यते, तत्रास्माकं परिसमाप्तोऽग्निरिति योऽस्माभिर्ज्ञायते, परिसमाप्यते प्रारब्धश्च इत्यभिप्रायः।

लिङ्गमविशिष्टं सर्वशेषत्वान्नहि तत्र कर्मचोदना तस्मात् द्वादशाहस्याहारव्यपदेशः स्यात् ॥ २५ ॥

यदुक्तं, यदि पुरा दिदीक्षाणा इति द्वादशाहे इष्टप्रथमयज्ञानामनिष्टप्रथमयज्ञानां च दर्शनं कर्मभेदे उपपद्यते, न सर्वशाखाप्रत्ययैककर्मणि इति। नैष दोषः, यदि दिदीक्षाणा द्वादशाहेन, अदिदीक्षाणा द्वादशाहेनेत्येवं तत, न हि सामवेदे ज्योतिष्टोमस्य विधानम्। किमतोऽपि ? यत्र विहितस्तत्रानूद्यते तेन कर्मभेदेऽपि सर्वज्योतिष्टोमानामेष धर्मः प्राथम्यं नाम। अतो नानाकर्मपक्षेऽप्यवश्यं द्वादशाहस्याहारव्यपदेशः कल्पनीयस्तस्माददोषः।

द्रव्ये चाचोदितत्वात् विधीनामव्यवस्था स्यात् निर्देशाद्व्यवतिष्ठेत तस्मान्नित्यानुवादः स्यात् ॥ २६ ॥

द्रव्ये च अग्नौ अचोदितत्वात एकादशिन्याः सम्मानपरिमाणं प्रति नैषा व्यवस्था स्यात्, नैवाग्नावेकादशिनी चोद्यते, कुतः पक्षसम्मानं वेदिसम्मानं वा स्यात ? द्वयमप्येतत परार्थं कीर्त्यते, पश्वेकादशिनीविधानार्थं, यदि पक्षसम्मिता स्यादयं दोषः स्यात्, वेदिसम्माने न दोषो भवेत्, क एतत्सङ्कटमध्यवसातुमर्हति ? एकस्मिन् यूपे एकादश पशवो नियोक्तव्याः इति, वाचस्तोमादिषु तु यूपैकादशिन्यामस्य नित्यानुवादत्वात् रथाक्षमात्राण्येव यूपान्तरालानि भविष्यन्ति, नित्यानुवादत्वाचासत्यपि पक्षसंमाने वेदिसम्माने वा एकादशिनीविधानार्थं वचनमुपपद्यते एवेति न दोषः ॥

विहितप्रतिषेधात्पक्षेऽतिरेकः स्यात् ॥ २७ ॥

अतिरात्रे गृह्णाति षोडशिनमिति विहितः षोडशी, नातिरात्रे गृह्णाति षोडशिनमिति प्रतिषिद्धः, तेन पक्षे द्वयोः स्तोत्रीययोरतिरेकः, पक्षे तिसृणाम्, तस्माददोषः। कथं पुनरयं

द्वयोस्तिसृणां वा अतिरेकः? त्रिवृत् बहिष्पवमानं, तत तावत नवकं; पञ्चदशान्याज्यानि, तानि तावत् चत्वारि, तेन सा षष्टिः; पञ्चदशो माध्यन्दिनः पवमानः, तया पञ्चदशसंख्यया सह, पूर्वया च नवसंख्यया चतुरशीतिः। सप्तदशानि पृष्ठानि चत्वारि, सप्तदश-आर्भवः पवमानः, पञ्चसप्तदशकानि तानि इति पञ्चाशीतिः। पूर्वया चतुरशीत्या सहैकोनसप्ततिशतम्। एकविंशं यज्ञायज्ञियं, तयैक-विंशत्या सह तस्य नवतिशतं स्तोत्रियाः इति ब्राह्मणवादः। अग्निष्टोममात्रमभिप्रेत्य उच्यते, 'सा विराट् सम्पूर्णा विराट्' इति दशाकाख्याः, त्रय एकविंशका उक्थ्यपर्यायाः, सा त्रिषष्टिः; एकविंशः षोडशी, तया एकविंशत्या सह चतुरशीतिः; पञ्चदशका रात्रिपर्यायास्त्रयः, तत्रैकैकपर्यायः चतुः स्तोत्रः, तत अशीतिशतं सम्पूर्णा विराट्। त्रिवृद्रथन्तरं पञ्चसाम, तन्नवकं, ततश्च-तुरशीतेरेकं नवकमागच्छति, तथा तिस्रः संस्तुतानां विराजमतिरि-च्यन्ते, यदा षोडशी न गृह्यते, तदा एकविंशत्या विना द्वे संस्तुतानां विराजमतिरिच्येते, एवमेककर्मत्वेऽपि लिङ्गमुपपद्यते।

सारस्वते विप्रतिषेधात यदेति स्यात् ॥ २८ ॥

यदुक्तं, पुरोडाशिनां सान्नायिनां च सारस्वते दर्शनं भवति इति, ज्योतिष्टोमपूर्वकत्वात् सर्वकर्मणां विप्रतिषिद्धमेतदिति, तेन यदा सान्नायिनः पुरोडाशिनः इति कल्प्यते।

उपहव्येऽप्रतिप्रसवः ॥ २९ ॥

अथ यदुक्तं, उपहव्ये बृहद्रथन्थरविधानं प्रकृतिप्राप्तमेव, एककर्मत्वे प्रतिप्रसवतयापि असम्भवाद्विधीयमानमनर्थकं स्यात् इति, तत्परिहर्तव्यम्। आभाषान्तं सूत्रम्।

गुणार्था वा पुनः श्रुतिः ॥ ३० ॥

यदा रथन्तरसामा, तदा अश्वः श्वेतो दक्षिणा, यदा बृहत्सामा तदा रुक्मललाट इति ।

प्रत्ययं चापि दर्शयति ॥ ३१ ॥

यदा न सर्वशाखाप्रत्ययमेकं कर्मेति, कथमेकस्यां शाखायां समाम्नायतेऽन्यस्यां गुणो विधीयते । यथा मैत्रायणीयानां समिदादयः प्रयाजा न समाम्नायन्ते, अथच गुणाः श्रूयन्ते, 'ऋतवो वै प्रयाजाः समानीय होतव्याः' इति । तथा येषां शाखिनां कुटरुरसीति अश्मादानमन्त्रो नाम्नातः, तेषामपि हि दृश्यते, कुक्कुटोऽसीत्यश्मानमुपादत्ते, कुटरुरसीति वेति । तस्मादेकं कर्म इति प्रतीमः ।

अपि वा क्रमसंयोगाद्विधिपृथक्त्वमेकस्यां व्यवतिष्ठेत ॥ ३२ ॥

यो ह्यन्यशाखावस्थितान् विधीनुपसंहरति, स स्वशाखाविहितं क्रममुपरुणद्धीति, तेन शाखान्तरेषु कर्मभेदः इति ।

विरोधिनां त्वसंयोगादैककर्म्यैतत्संयोगाद्विधीनां सर्वकर्मप्रत्ययः स्यात् ॥ ३३ ॥

उच्यते, नैष शाखान्तरविहितानामैककर्म्ये सति विरोधिनां संयोगः । न हि क्रमो वाक्येन विरुध्यते, दुर्बलो हि क्रमः, बलवद्वाक्यं, वाक्येन च शाखान्तरीयाणामुपसंहारः । तस्मात् सर्वशाखाप्रत्ययं सर्वब्राह्मणप्रत्ययश्चैकं कर्म चोद्यत इति सिद्धं भवति ॥

इति श्री शबरस्वामिनः कृतौ मीमांसाभाष्ये द्वितीयाध्यायस्य चतुर्थः पादः ॥

समाप्तोऽयं द्वितीयाध्यायः ॥

---

# Index of Sutras

———

# Index of Citations

---

# शुद्धाशुद्धपत्रिका

| पु-पं | अशुद्धं | शुद्धं |
|---|---|---|
| 4—3 | अयं | इयं |
| 14—10 | कृत ङ्कथः | कृतवद्भथः |
| आ. 23—1 | प्रत्यज्ञ | प्रत्यक्ष. |
| ,,—8 | तत्सबढं | तत्संबद्ध |
| ,,—,, | कश्चिदर्थ | कश्चिदर्थं |
| 42—12 | नोपरन्यस्तं | नोपन्यस्तं |
| 52—13 | तदर्थशास्त्रविरोधादि | तदर्थशास्त्रादि |
| 57—17 | परप्रयोगेपि | प्रयोगेपि |
| 62—15 | लौकिको | लैङ्गिको |
| 66—12 | अक्षेप्राह | आक्षेप्ताऽऽह |
| 72—17 | कृत | कुत |
| 91—6 | मानविरोधे | माननिरोधे |
| ,,—11 | विरोधे | निरोधे |
| ,,—13 | ,, | ,, |
| 107—5 | करणं | कारणं |
| 139—4 | दुघटेन | दुर्घ टेन |
| 163—19 | यदि | यति |
| 196—17 | तयाऽतु | तया तु |
| 235—21 | प्रप्त | प्राप्त |
| 236—13 | इह | इह |
| 237—12 | श्रोतार्थ | श्रौतार्थ |
| 240—11 | सादयति | सादय इति |
| 259—10 | वदप्युक्तम् | तदप्ययुक्तम् |
| 262—20 | दर्तिशं | दर्शितं |
| 277—15 | प्रयाना | प्रधाना |
| 278—1 | भिद्यतेऽने नेति | नेनेति |
| ,,—6 | यरछब्द | यच्छब्द |

| | | |
|---|---|---|
| 283—9 | युज्यते | त्यज्यते |
| 298—13 | वियमात् | नियमात् |
| 310—14 | तदनर्वंकं | तदनर्थकं |
| 320—16 | एतश्च | एवश्च |
| ,,—21 | परं | वरं |
| 331—5 | बमः | ब्रूमः |
| ,,—9 | सर्वधर्मः | सधर्मः |
| 344—9 | यद्यव | यद्येवं |
| 377—14 | लोकेन | श्लोकेन |
| 409—13 | रूपयो | रूपो |
| 456—18 | लिट् | ल्युट् |
| ,, ,, | कार्यवत्तया | कार्यतया |
| 490—14 | धिकरणसं | धिकरणे सं |
| 493—16 | पशूनामुय | पशूनामुप |
| 555—17 | न्तमन्नाद्या | न्तरमन्ना |
| 601—Last | विधोयतां | विधीयतां |
| 606—16 | विथानं | विधानं |

———

